विशिष्टाद्वैतकोशः (द्वितीयसम्पुटः)
विशिष्टाद्वैतकोशनिगमः, संस्कृत-संशोधन-संसत्
यादवाद्रिः (मेलुकोटे)-५७१ ४३१

प्रधानसंपादकः
प्रा. एम्. ए. लक्ष्मीताताचार्यः, कुलसचिवः
संस्कृत-संशोधन-संसत्

संपादकः
एस्. एम्. एस्. वरदाचार्यः, निगमाध्यक्षः
संस्कृत-संशोधन-संसत्

प्रकाशनम्
संस्कृत-संशोधन-संसत्; यादवाद्रिः (मेलुकोटे)-५७१ ४३१

प्रथमसंस्करणम्-१९८७
प्रतयः—१००० 



मूल्यम्
साधारणप्रतिः रू. 85
उत्तमप्रतिः रू.

मुद्रणालयः
चित्रक मुद्रणालयः
नारायणशास्त्रि वीथी
मैसूर्-५७० ००४

The Academy of Sanskrit Research Series-5

# VIŚIṢṬĀDVAITA KOŚAḤ

(Volume II)

'Ā, I'

"Published with the financial assistance from
The Ministry of Human Resources Development, Government of India."

*Published by*
THE ACADEMY OF SANSKRIT RESEARCH
MELKOTE-571 431

1987

Visistadvaita Kosah Vol. II

A Project of the Academy of Sanskrit Research, Melkote


*Chief Editor*

**Prof. M. A. Lakshmi Thathachar**

Registrar, The Academy of Sanskrit Research

*Editor*

**Vidwan S M. S. Varadachar**, Project Leader

The Academy of Sanskrit Research



*Publisher*

The Academy of Sanskrit Research, Melkote-571 431

First Edition : 1987

1000 Copies





*Price :* Ordinary : Rs

Calico : Rs

*Printed at*

Vivek Printers

N. S. Road, Mysore-570 004

# कार्यनिर्वाहकमण्डली

प्रधानसम्पादकः

एम्. ए. लक्ष्मीताताचार्यः, एम्.ए.,सि.ए.ई.

न्यायविद्वान्, राष्ट्रभाषाप्रवीणः

सम्पादकः, निगमाध्यक्षश्च

विद्वन्मणिः, व्याकरणभूषणम्

एस्. एम्. एस्. वरदाचार्यः

वेदान्त-व्याकरणविद्वान्,

सहायकाः

१. एन्. वेङ्कटाचार्यः, वेद-वेदान्तविद्वान्।

२. एस्. नरसराजभट्टर्, बि.काम्, विशिष्टाद्वैतवेदान्त विद्वान्, आगमप्रवीणः।

३. एन्. के. श्रीनिवास अय्यङ्गार्यः, वेदान्तविद्वान्।

४. एस्. राजगोपालन्, वेदान्ताचार्यः, मीमांसाशिरोमणिः, शिक्षाशास्त्री।

५. के. श्रीनिवासः, एम्.ए., व्याकरणविद्वान्।

६. एम्. ए. रुक्मिणियम्मा, एम्.ए.

७. सि. पद्मावती, साहित्यविदुषी।

८. एम्. वि. सावित्री, राष्ट्रभाषाप्रवीणा, साहित्यविदुषी।

९. एम्. लीलावती, राष्ट्रभाषाविशारदा, शीघ्रलिपिकारिणी।

# FOREWORD

In 1983, the Academy of Sanskrit Research brought out the first volume of the Visistadvaitha Kosa and we now have the happiness of placing in the hands of the readers the SECOND VOLUME of the Kosa. The Academy was established by the Government of Karnataka in the year 1976. The main purpose of the Academy is to carry out research in the field of Vedantha for a comparative study of all systems of thought, East and West, in relation to Visistadvaitha Vedantha. The publication of Visistadvaitha Kosa in ten volumes is one of the several programmes launched by the Academy. This project, like the Academy itself, is being aided by both the State and Central Governments.

The Kosa has been compiled by collecting information from nearly 250 works pertaining to the philosophy of Visistadvaitha. In order to prepare the ground for comparative study with other systems of Vedantha, concepts from those systems are introduced wherever necessary. The aim is that the Kosa should be helpful to all research scholars, traditional pandits and also scholars in general by providing an encyclopaedia which is easy to refer.

A large number of scholars and workers have helped in the preparation of this volume, as in the case of the earlier volume. All of them have earned the deep gratitude of the Academy. In particular, the very distinguished services rendered by Vidwan Sri S. M. S. Varadacharya, Project Leader, needs to be applauded.

We are also extremely grateful to the Scrutiny Committee comprising of Prof. N. S. Ramanujatatachariar and Pandits Kari Ramanujacharya, S. N. C. Raghunathachariar and K. S. Varadacharya. In particular, the meticulous examination made by Panditaratnam K. S. Varadacharya of Mysore and the advice rendered by him have been invaluable.

It is the Academy's hope that this work will be of significant help to the students of Visistadvaitha as well as scholars interested in the comparative study of different systems of Indian philosophy. It provides ample information on all technical terms which occur in Visistadvaitha works and the reader is easily able to find out the different interpretations and explanations of these terms since they are all brought to one place. The reader is thus saved precious time and energy since one does not have to study many Visistadvaithic works to ascertain the different interpretations. To the researcher, this work will, we hope, prove helpful since he or she would be able to discern the development of Visistadvaithic thought through the many readings cited, apart from the particular interpretations and connotations given. The sources of information cited in the book are explicitly mentioned and this will enable scholars desirous of knowing more about the concerned technical terms to study the original and add to their knowledge. My colleagues and I fervently hope that the Kosa will win its way, the hearts of learned Sanskrit scholars and also help aspirants of knowledge to the greatest possible extent.

June 1986

*M. A. S. Rajan*
President

# PREFACE

The Academy takes pleasure in publishing the Second Volume of Visistadvaitha Kosa. Many scholars and wellwishers have tendered valuable advice for improving the quality of this series. The Academy offers its sincere thanks to all such friends. We have taken enough precautions to incorporate all such healthy suggestions in this volume. We depend upon the scholars' views in future also for effecting further improvements and therefore, welcome all comments from our esteemed readers.

We have been able to cover technical terms beginning with two more letters namely, आ and इ only in this volume of 500 pages. As already narrated in the introduction to the first volume, the Academy has stuck to its ideals of scholarly accuracy, comprehensiveness, clarity of concepts and interpretations and practical utility to the users, as far as possible.

The guidelines in preparing the Kosa have already been enunciated clearly in the introductory portion of the first volume, Hence, the same is not repeated here again. The Academy has referred to 74 more source-works in addition to the 172 source-works and 12 lexicons already enumerated in the first volume. It is our duty to thank all such institutions and individuals who have produced these source-works wherefrom we have drawn useful information for this volume.

We are ever grateful to the purposeful and timely guidance rendered by the President, Secretary and the other Members of the Managing Committee of the Academy.

Vidwan S. M. S. Varadacharya has been striving hard not only in publishing the present volume but the entire series as well. Press copy of Volume III is already taken up for publication. The team of research associates have been incessantly working on this project. We are indebted to their sincerity of purpose and we hope to complete the publication of this series early with their continued co-operation. We remain always indebted to the scholars of the Expert Committee viz., Dr. N. S. Ramanujatatachariar of Tirupati, Pandit S. N. C. Raghunathacharya of Warrangal, Pandit Kari Ramanujacharya of Simhachalam and Panditharatnam K. S. Varadacharya of Mysore for their very valuable contribution in improving the manuscripts with their rich experience in different Shastras. Our thanks are also due to those scholars who have lent their helping hand directly or indirectly in bringing out this volume. We are highly thankful to M/s. Vivek Printers of Mysore for their continued co-operation in printing this work neatly.

Further, we record our sincere thanks to the Government of Karnataka and the Government of India for their financial assistance for the implementation of this project. We hope that both the Governments will continue to finance this project till its completion.

August 1986

*M. A. Lakshmithathachar*
Registrar

॥ श्रीः ॥

# भूमिका

अयि भोः महाभागाः ! विशिष्टाद्वैतसिद्धान्तनिर्धारणविचक्षणाः यादवाद्रि (मेलुकोटे)-क्षेत्रस्थया अनया संस्कृत-संशोधन-संसदा प्रकाश्यमानेऽस्मिन् विशिष्टाद्वैतकोशे द्वितीयसम्पुटे, महत्तरमिदं जन्मसाफल्यप्रदं कैङ्कर्यं निर्व्यूढमस्माभिरिति महदिदं प्रमोदस्थानम् ।

प्रथमसम्पुटे एव भूमिकायां विशिष्टाद्वैतकोशरचनामधिकृत्य सुविस्तरं सर्वं प्रत्यपीपदाम । सांप्रतं सिद्धान्तेऽस्मिन् प्रधानांशमधिकृत्य विमर्शकानां कृते किञ्चिद्विमृश्यते ।

## विशिष्टाद्वैतपदविमर्शः

सविशेषाद्वैतमित्यस्यैव पर्यायः विशिष्टाद्वैतमिति । अत्र अद्वैतपदस्य व्युत्पत्तिभेदेन धर्मिपरतया एकमिति, धर्मपरतया ऐक्यम्—अभेद इति चार्थः विवक्षितः । अतः सविशेषाद्वैत-मित्यस्य विशेषत्रयविशिष्टम् एकमेव तत्त्वमिति—

द्वाभ्याम् इतं द्वीतम्—प्रकारवत्तया ज्ञातं (भिन्नं), तदेव द्वैतम्, न द्वैतम् अद्वैतम्—एकमित्यर्थो लभ्यते । न विद्यते द्वैतं (भेदः) यस्मिन्, इत्यद्वैतम्—भेदरहितम् एकमिति वा ।

द्वयोर्भावः द्विता, सैव द्वैतम्, न द्वैतम् अद्वैतम्—अभेदः ; तदा विशिष्टस्य अद्वैतम्, विशिष्टनिष्ठः अभेदः इत्यर्थः सम्भवति ।

कार्य-कारणयोः अभेदविवक्षया विशिष्टं च विशिष्टं च विशिष्टे, तयोरद्वैतमित्यपि विग्रहः विवक्षितः । अद्वैतपदस्य धर्मिपरत्वे विशिष्टमद्वैतम्—एकं तत्त्वम् । धर्मपरत्वे विशिष्टनिष्ठमद्वैतम् (अभेदः) । कार्य-कारणभावविवक्षायां तु विशिष्टयोः अद्वैतम् (अभेदः) इति निष्कर्षः ।

श्रीभाष्यकाराः स्वीयग्रन्थेषु निर्विशेषं सविशेषं वा ब्रह्म इत्येव बहुशः विकल्प्य, सविशेषपर-मेवेति प्रतिष्ठापयामासुः । परे तु एकमेव तत्त्वम्, तच्च निर्विशेषं सजातीय-विजातीय-स्वगतभेदरहितमित्याहुः । सिद्धान्ते तु स्वसजातीयचेतन-स्वविजातीयाचेतन-स्वगतभेद (कल्याण-गुण) रूपविशेषत्रयविशिष्टं ब्रह्म एकमेव तत्त्वम् । अत एव अशेषचिदचित्प्रकारं ब्रह्म एकमेव तत्त्वमिति न्यायसिद्धाञ्जने आचार्यपादैरभिहितम् । अत्र भेदपदं पदार्थविशेषवाचि ; न तु अन्योन्याभावपरम् । अतः त्रिविधोऽपि भेदः पारमार्थिक एव ।

माण्डूक्योपनिषदि 'शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' इति श्रूयते । अत्र रङ्गरामानुज-भाष्ये सजातीयद्वितीयरहितमिति व्याख्यानं तु जगत्कारणत्वेन सजातीयवस्तुनिषेधपरम् ; चेतनानां परमात्मनश्च साजात्यं ज्ञानानन्दरूपत्वेनैव इति बोध्यम् । व्यक्तेः जातिगुणाविव चिदचितावपि परमात्मनः अपृथक्सिद्धौ ।

सद्विद्यायां 'षड्विधतात्पर्यलिङ्गमद्वैतविषयमित्येतदभ्युपगतम् ; तत्तु न निर्विशेषाद्वैतविषयम् ; अपि तु विशिष्टाद्वैतविषयम्' इति वेदार्थसङ्ग्रहतात्पर्यदीपिकायां दृश्यते । अतः व्यासार्योपज्ञमेव विशिष्टाद्वैतव्यवहारः इति ज्ञायते । सद्विद्यायां 'सदेव एकमेव अद्वितीयम्' इत्युक्तेः सजातीय-विजातीय-स्वगतभेदशून्यता ब्रह्मणः प्रतीयत इति परेषामाशयः । सिद्धान्ते तु—सदेव इत्यनेन असत्कार्यव्यावृत्तिः, एकमेव इत्यनेन वक्ष्यमाणविभक्तनामरूपबहुत्वावस्थाव्यावृत्तिः, अद्वितीयपदेन निमित्तकारणान्तरव्यावृत्तिः इति श्रुतितात्पर्यात् विशिष्टमेव तत्त्वमिति निष्कर्षः । यथा—'नीलो घटः' इत्यादौ नीलगुणविशिष्टस्य, घटत्वविशिष्टस्य च ऐक्यं प्रतीयते ; न तु गुण-गुणिनोः । तत्र नीलपदन्तु नीलविशिष्टपरमेव । तथैव त्वंपदमपि जीवविशिष्टान्तर्यामिपरमेव इति विशिष्टनिष्ठमैक्यमेव 'तत्त्वमसि' इत्यनेन अभिधीयते ; न तु स्वरूपैक्यम् । अतः विशिष्ट-निष्ठमैक्यम् इत्यभिप्रायेण विशिष्टाद्वैतमिति व्यपदेशोऽपि भृशं शोभत एव । अत एव 'विशिष्टैक्यविवक्षया एकत्वव्यपदेशः तदितरनिषेधश्च' इति न्यायसिद्धाञ्जने उक्तम् ।

## भगवतः दिव्यमङ्गलविग्रहसाधनम्

भक्तिसिद्धान्तानुगुण्यतया परमात्मनः अप्राकृतविग्रहयोगं श्रुति-स्मृति-सूत्राद्यनुसारेण अनुभवानुरोधेन च निरधारयन् श्रीभाष्यकाराः ।

मायामयत्वोक्तेः उपासनार्थं रूपस्य कल्पितत्वमिति परे । सिद्धान्ते तु परमार्थतैव । तदुक्तं वेदार्थसङ्ग्रहे—वाक्यकारश्चैतत् सुस्पष्टमाह—'हिरण्मयः पुरुषो दृश्यते' इति, 'प्राज्ञः सर्वान्तरः स्यात्, लोककामेशोपदेशात् ; तथोदयात्पाप्मनाम्' इत्यादिना । तस्य च रूपस्य अनित्यतादि वाक्यकारेणैव प्रतिषिद्धम् 'स्याद्रूपं कृतकमनुग्रहार्थम्, तच्चेतसामैश्वर्यात्' इति, उपासितुरनुग्रहार्थः परमपुरुषस्य रूपसंग्रहः इति पूर्वपक्षं कृत्वा, 'रूपं वातीन्द्रियमन्तःकरण-प्रत्यक्षनिर्देशात्' इति । यथा ज्ञानादयः परस्य ब्रह्मणः स्वरूपतया निर्देशात् स्वरूपगुणभूता गुणाः, तथा इदमपि रूपं श्रुत्या स्वरूपतया निर्देशात् स्वरूपभूतमित्यर्थः । भाष्यकारेणैतत् व्याख्यातम्—'अञ्जसैव विश्वसृजो रूपम् ; तत्तु न चक्षुषा गृह्यते, नापि वाचा, मनसा तु विशुद्धेन' इति श्रुतेः । न हि अरूपाया देवताया रूपमुपदिश्यते । यथाभूतवादि हि शास्त्रम् इत्युक्तम् ।

तत्रैव तात्पर्यदीपिकायम्—'अन्तस्तद्धर्मोपदेशात्' इति सूत्रे वाक्यकारग्रन्थे—आदि-त्यान्तर्वर्तिनो रूपवत्त्वात् जीवत्वमाशंक्य, रूपस्य अप्राकृतत्वात् परमात्मत्वं सिद्धान्तितम् । रूपस्य अनित्यत्व-प्राकृतत्वशङ्काव्यावृत्त्यर्थं—तस्य चेत्याह । पूर्वपक्षवाक्यमिदं स्याद्रूपमित्यादि । उपासकानामनुग्रहार्थम् ऐश्वर्यात्—स्वतन्त्रशक्त्या, रूपं कृतकं स्यादित्यर्थः । 'रूपं वा' इत्यादि सिद्धान्तवाक्यम् । स्वरूपतया स्वरूपनिरूपकधर्मतया स्वाभाविकत्वेनेत्यर्थः । अञ्जसा (तत्त्वे

स्वद्धाञ्जसा द्वयम् इत्यमरः) अव्यवधानेन स्वाभाविकमित्यर्थः । ऐन्द्रजालिकवस्तुवत् मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह—तत्तु इति । मिथ्याभूतं दुष्टेन्द्रियग्राह्यमदुष्टकारणग्राह्यत्वश्रवणात् परमार्थभूतमित्यभिप्रायः—इत्युक्तम् ।

अत एव 'सम्भवाम्यात्ममायया' इति गीयते । मायाशब्दः 'माया वयुनं ज्ञानम्' इति निघण्ट्वनुसारेण सङ्कल्पवाची । सङ्कल्पः ज्ञानविशेषः । अनेन भक्तानुग्रहार्थं स्वसंकल्पेनैवावतारः, न तु कर्मणेति बोध्यते । अतः रूपस्य अपारमार्थिकतां 'सम्भवामि' इत्युक्तिरेव निरास्थत् । शुक्तिरूप्यं न हि सम्भवति ; किन्तु तथा ज्ञायते हि । अतः अप्राकृतविग्रहवैशिष्ट्यं सिद्धम् ।

## आत्मपदविचारः

'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति सूत्रानुरोधेन 'आत्म'शब्दस्य सिद्धान्ते जीव-परमात्मसाधारण्येऽपि परमात्मन्येवात्यन्तमुख्यता, जीवे तु मुख्यतुल्यता ; न तु लक्षणा आद्रियते । तथा हि आत्मशब्दः अन्तःप्रविश्य नियन्तृत्वपरः ? उत 'मृदात्मको घटः' इतिवत् स्वरूपपरो वा ? इति संशये, गवादिशब्दवत् प्रसिद्धिप्राचुर्येण शरीरप्रतिसम्बन्धिन्येव आत्मशब्दः प्रायेण प्रयुज्यते । 'आप्नोति इत्यात्मा' । तथा च स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिः तस्यैव सम्भवतीति परमात्मन्येव मुख्यवृत्तः आत्मशब्दः, जीवात्मनि तु तत्तच्छरीरमात्रनियमनरूपप्रवृत्तिनिमित्तैकदेशसद्भावेन व्यवहारः उपपद्यते । 'सिम्हो माणवकः', 'गङ्गायां घोषः' इत्यत्रेव प्रवृत्तिनिमित्तस्य कार्त्स्न्येनात्यागात् न लक्षणा । अत एवात्मशब्दः उभयसाधारण इति तत्र तत्र परमात्मा इति सविशेषणतया प्रयुज्यते ।

इदञ्च 'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्र प्राकृतनाम-रूपाभ्यां विनिर्मुक्तस्य ज्ञानैकाकारतया ब्रह्मप्रकारता उच्यते । प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव । यथा 'सेयं गौः' इति भाष्यव्याख्याने दृष्टान्ते प्रकारैक्येऽपि तत्ताव्यवहारो मुख्योऽप्यस्वरसः । पूर्वं दृष्टे गवि व्यक्त्यंशप्रहाणात् अस्वारस्यम्, जात्यंशस्य सौसादृश्यलक्षणैक्यात् मुख्यत्वम् । दार्ष्टान्तिके तु 'गङ्गायां घोषः' इति गङ्गापदवत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात्, परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटिरित्यभिप्रायेण मुख्य एवेत्युक्तम् । (जात्यंशे मुख्यत्वम्, व्यक्त्यंशे अमुख्यत्वम् ।) लाक्षणिकगङ्गापदवत् नात्यन्तामुख्य इत्यर्थः । न हि मुक्तस्यापरिछिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणबृहत्त्वं स्वरूपबृहत्त्वं चास्ति । आकारैक्येऽपि तत्ताव्यवहारस्य अत्यन्तामुख्यत्वाभावे 'सेयं गौः' इति दृष्टान्त इति । एतेनात्मशब्दः जीवात्मनि न लाक्षणिकः, नाप्यत्यन्तामुख्यः, मुख्यप्राय इति च व्यासार्यैः बोधितम् ।

किञ्च श्रीभाष्ये—'सर्वत्र बृहत्वगुणयोगेन हि ब्रह्मशब्दः, बृहत्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः। अतो ब्रह्मशब्दः तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगात्, भगवच्छब्दवत्'—इति भाषितम्।

अत्र व्यासार्याः—परस्मात् ब्रह्मणोऽन्यत्र प्रयोगस्य अन्यथासिद्धत्वात् न तत्र शक्तिकल्पना, 'अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयति' इति न्यायात् इत्यर्थः। तथा च अनेकशक्तिकल्पनं, गौणत्वं वा न स्यात्; बृहत्त्वगुणयोगिसर्वव्यक्तिषु एकयैव शक्त्या मुख्यत्वसम्भवात्—इत्यभ्यदधुः। अनेन अन्यत्र शक्तिरेवेति स्पष्टम्। तथा च ब्रह्मशब्दवदेव आत्मशब्दस्य परमात्मनि अत्यन्तमुख्यता; जीवात्मनि तु न लक्षणा; किन्तु शक्तिरेवेति सोऽसूच्यते।

'सिम्हो माणवकः' इत्यत्राप्युपचारात् गौणीलक्षणा इत्युच्यते। तत्र परं क्रौर्यगुण-निबन्धनो हि उपचारः। स च गुणः न सिम्हशब्दप्रवृत्तिनिमित्तम्। प्रवृत्तिनिमित्तं तु सिम्हत्वं संस्थानविशेष एवेति विवेकः। अत्र उपचार इत्युक्तिः तन्निष्ठगुणनिबन्धनैवेति लक्षणयैव। आत्मशब्दस्य अन्यत्रोपचारस्तु तत्प्रवृत्तिनिमित्तैकदेशस्य जीवे सद्भावमूलक एवेति विषयविभागः परिशीलनीयः। तथा च सर्वत्र बृहत्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपतो गुणतश्च सर्वेश्वर एव। अन्यत्र तद्गुणलेशयोगादौपचारिकः इति रीत्या, आत्म-शब्दोऽपि अन्तःप्रविश्य नियन्तृत्वमात्रेण उभयत्र (परमात्मनि जीवे च) वर्तते। सर्वान्तःप्रविश्य नियन्तृत्वन्तु पुष्कलतया परमात्मन्येव। जीवात्मनि तु पूर्वोक्त प्रवृत्तिनिमित्तघटकान्तःप्रविश्य नियन्तृत्वरूपगुणलेशात् प्रयोगः शक्तिमूल एव; न तु 'सिम्हो माणवकः' इत्यादाविव न गौणीलक्षणा इति विभावनीयम्।

## आत्म-शरीरभावः

'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा' इति हि श्रूयते। अत्र 'सर्वात्मा' इति पदं श्रुत्यैव विव्रियते 'अन्तःप्रविष्ट' इत्यादिना। अतः श्रुत्यनुरोधेन अन्तःप्रविश्य नियन्तृत्वं हि आत्मत्वम् इत्यभ्युपगन्तव्यम्। तथा च 'सर्वस्यायमात्मा' इत्यनेन एतच्छरीरत्वं सर्वस्य सिद्धम्। शरीरप्रतिसम्बन्धित्वं हि आत्मत्वम्। अत्र छान्दोग्यश्रुतिरपि अनुकूलैव।

तथा हि 'ऐतदात्म्यमिदं सर्वम्, तत्सत्यम्, स आत्मा, तत्त्वमसि श्वेतकेतो' इत्यत्र 'सदेवेदम्' इति उपक्रमोक्तं सामानाधिकरण्यम् 'ऐतदात्म्यमिदं सर्वम्' इति निष्कर्षयति। 'इदं सर्वम्' इति चेतनाचेतनात्मकं जगन्निर्दिश्य तस्य—जगतः, 'स आत्मा' इत्यनेन परमात्मनः आत्मत्वं प्रतिपाद्यते। अतः 'ऐतदात्म्यम्' इत्यत्र बहुव्रीहिरेव विवक्षितः। अन्यथा 'स आत्मा' इत्यत्र 'कस्य' इति नियताकांक्षायां पूर्वप्रस्तुतसर्वस्यैवात्मा इत्याश्रयितव्यम्। 'सर्वमेत-

दात्मकम्' इत्युक्त्या सर्वस्य सच्छब्दवाच्यः आत्मा इत्यर्थात्सिद्धेः 'स आत्मा' इति पुनरुक्तिः सर्वात्मकत्वं मुखभेदेन दृढीकरोति । तथा च सर्वस्य अन्तःप्रविश्य नियन्तृत्वं प्रतिष्ठितं भवति 'यस्यात्मा शरीरम्' इत्यादिना । बृहदारण्यकमप्येतत् द्वाविंशतिवारमभ्यासेन स्पष्टयत्येव ।

## भेदश्रुतीनां तात्पर्यवर्णनम्

'नेह नानास्ति किञ्चन' इत्यादिनिषेधवाक्यानां तात्पर्यनिर्णयाय 'तत्सत्यम्' (एतदात्मकं सर्वं सत्यम्) इति श्रुतिखण्डः अतदात्मकं वस्तु असत्यमित्येव निरणैषीत् । अत एव 'नेह नानास्ति किञ्चन' इति श्रुतिः व्यासार्यैः इत्थं व्याख्याता—इह जगति, नाना—अब्रह्मात्मकं भिन्नं वस्तु, किञ्चन नास्ति ; सर्वस्य ब्रह्मात्मकत्वात् । अत एव 'यत्र हि द्वैतमिव पश्यति' इत्यादिना द्वैतपदेन स्वतन्त्रभेदः निषिध्यते । अत एव गीयते—'न तदस्ति विना यत्स्यात् मया भूतं चराचरम्'—इति ।

अत्र पाणिनिसूत्रमपि अत्यन्तानुकूलम्—'विनञ्भ्यां नानाञौ न सह' (5–2–27) इति । अस्य सूत्रस्य पृथग्भावेऽर्थे वर्तमानाभ्यां विनञ्भ्यां स्वार्थे एतौ ना-नाञौ प्रत्ययौ भवतः इत्यर्थः । अनेन नानाशब्दस्य पृथग्भूतमित्यर्थः सूत्रारूढो भवति । तथा च नाना नास्ति इत्युक्त्या ब्रह्मपृथग्भूतं किमपि वस्तु नास्ति इत्येव पर्यवस्यति । स्वतन्त्रभेद-निषेधस्तु सिद्धान्तेऽपि सम्मत एव । एवं 'तत्त्वमसि' इति निगमनवाक्यमपि प्रतिज्ञावाक्यानुसार्येव भविता । नो चेत्, निगमनवाक्यत्वमेव भज्येत । अतः त्वम्—युष्मद्विशिष्ट इत्येव । 'नीलो घटः' इत्यादिवाक्यसमानतया इयं श्रुतिरपि विशिष्टैक्यमेव प्रतिपादयति ; न तु स्वरूपैक्यम् । 'नीलो घटः' इत्यादौ वैशिष्ट्यबोधकप्रत्ययः 'दण्डी पुरुषः' इत्यादाविव न दृष्टचरः । तत्र कारणन्तु अपृथक्सिद्धत्वादेवेति वक्तव्यम् । बोधस्तु नियमेन नीलगुणविशिष्ट घट इत्येव भवति । तेन नीलगुणस्य घटस्य च नैकता ; किन्तु नीलगुणविशिष्टस्य घटत्वविशिष्टस्य च ऐक्यम्, 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति शाब्दिकोक्तेः । 'अविभागेन दृष्टत्वात्' इति सूत्रमपि जीवब्रह्मणोरपि अपृथक्सिद्धिं प्रतिपादयति । अयमेव समाधिः 'तत्त्वमसि' इत्यादावपीति विशिष्टाद्वैतवेदान्तिनां हृदयम् ।

अत एव लोके 'देवोऽहं मनुष्योऽहम्' इत्येव प्रयोगाः दरीदृश्यन्ते । तत्र सामानाधि-करण्यं न देवशरीर-आत्मनोः स्वरूपैक्यनिबन्धनम् ; किन्तु शरीरात्मनोः अपृथग्भावात् आत्म-शरीरभावनिबन्धनमेव खलु । तद्वदेव 'अहं ब्रह्मास्मि, तत्त्वमसि' इत्यादावपि शरीरात्मभाव-निबन्धनमेव सामानाधिकरण्यमिति सूक्ष्मधियः परिशीलयन्तु । अनेन समानाधिकरणवाक्येनापि जीव-परयोः अर्थान्तरत्वमेव बोध्यते इति इदं मुख्यं वैशिष्ट्यं विशिष्टाद्वैते ।

इदमत्रावधेयम्—वेदान्तदर्शनस्य 'शारीरकमीमांसा' इति व्यपदेशः सर्वसम्मतः। अनेनापि जीवेश्वरयोः शरीरात्मभावः दृढीक्रियते। अस्मिन् व्यपदेशे तैत्तिरीयश्रुतिरेव निदानम्। तत्र तावत् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिना अन्नमयशरीरपर्यन्तमुत्पत्तिमभिधाय, 'तस्यैष एव शारीर आत्मा, यः पूर्वस्य' इति पूर्वस्य यः आत्मा स एव अस्यापि आत्मा इत्यादि-दिशा विज्ञानमयस्य जीवस्यापि एष एव शारीर आत्मा इति आनन्दमये सर्वशरीरप्रतिसम्बन्धित्वं प्रत्यपादि। आनन्दमयश्च आनन्दप्रचुरः परमात्मा इति सूत्रकारैरेव 'विकारशब्दान्नेति चेन्न, प्राचुर्यात्' इत्यनेन समाहितम्। अतः शारीरं (सर्वशरीरप्रतिसम्बन्धिनमात्मानं) प्रतिपादयत् शास्त्रमपि शारीरकम् इत्यभिधीयते इति भाषितं यत्, तत् श्रुत्यारूढमेवेति बोध्यम्।

शारीरः जीवः, तत्प्रतिपादकमपि जीव-ब्रह्मणोः अभेदात् तदभिन्नब्रह्मप्रतिपादकं भवत्येव। 'शारीरत्वमप्यानन्दमयस्य अन्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात् न पुनः साक्षादेव शारीरत्वं संसारिवत्' इति हि आनन्दमयाधिकरणशाङ्करभाष्यम्। यद्यपि 'न च स्मार्तमतद्धर्माभिलापात् शारीरश्च' इत्यादिना सूत्रकारैरेव जीवे शारीरपदं प्रयुज्यते, तथापि तत्र प्रवृत्तिनिमित्तस्य कार्त्स्न्येनाभावात् सः औपचारिकः इति प्रकृते सर्वशरीरप्रतिसम्बन्धित्वं परमात्मन्येवात्यन्तमुख्यमिति श्रुत्यनुसारेण श्रीभाष्यकाराः परमात्मपरतयैव शारीरपदं व्याचख्युः। न हि क्वचिदुपचरितमिति सर्वत्र तथैवेति राजाज्ञा?

अतः विशिष्टाद्वैतवेदान्ते तु जीवस्य शारीरत्वं सङ्कुचितमिति अत्र सङ्कोचकपदान्तर-समभिव्याहाराभावात् जगच्छरीरकः परमात्मैव शारीरशब्दार्थः। तथा च शरीरलक्षणन्तु लोकवेदप्रयोगानुसारेण श्रीभाष्यकारा एव निरधारयन्। तदयं संग्रहः—'यस्य चेतनस्य यदवस्थं द्रव्यमपृथक्सिद्धं तत्तस्य शरीरम्' इति।

## सम्भावितसंशयपरिहारः

१. विशिष्टाद्वैतकोशे एतावन्तः पारिभाषिकाः शब्दाः वर्तन्ते वा?

२. वेदान्तसम्बन्धमन्तरा सामान्यशब्दानां कथं वा प्रतिपादनम्?

३. कथन्तराममरकोशादीनां प्रमाणतयोदाहरणम्?

४. कथन्तमां लौकिकन्यायादीनां चात्र निरूपणं घटेत?

इति संशये अयमाशयः प्रकटीक्रियते।

विशिष्टाद्वैतवेदान्ते अद्वैतवेदान्तपरिभाषा, वैयाकरणपरिभाषा इत्यादिवत् पारिभाषिकाः नागनकुनुमायन्ते इति प्रथमं ब्रूमः।

यत्त्वत्र 'सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्' इति श्रुतिव्याख्याने एकमेव अविभक्तनामरूपावस्थं ब्रह्माह' इति व्यासार्याः प्राहुः। तदपि न पारिभाषिकम्। ब्रह्मगत एकत्वस्य प्रलयकालेऽपि अविशिष्टत्वात्, तदभिधाने प्रयोजनाभावात् विशेषणगतमेकत्वं विवक्षितम्। अतः 'बहु स्यां प्रजायेय' इति वक्ष्यमाण विभक्तनामरूपबहुत्वप्रतिकोटितया अविभक्तनामरूपसूक्ष्मावस्थां प्रतिपादयति—एकमेवेति। तादृशसूक्ष्म-अविभक्तनामरूपावस्था-विशिष्टं ब्रह्म एकमेव आसीत् इति हि तत्र विवक्षितम्। 'एको व्रीहिः' इत्यादौ व्रीहीणाम-नेकत्वेऽपि विशेषणजातिगत एकत्वसंख्यावत्; न हि तत् पारिभाषिकम्। प्रायेण विशेष्यगत-संख्यैव विभक्त्या उच्यते; क्वचित् विशेषणगतसंख्यापि इति शास्त्रीयसरणिरत्राप्याश्रिता।

सूक्ष्मावस्थाविशिष्टं ब्रह्मैव कारणम् इति हि सिद्धान्तः। अवस्था च ब्रह्मणि स्वशरीर-द्वारा, साक्षादपि इति आत्माधिकरणे भाष्ये स्पष्टम्। चेतनाचेतनगतसूक्ष्मावस्था तु सद्वारिका। तादृश अवस्थाविशिष्टचिदचिन्नियमनं तु ब्रह्मणः साक्षादेव। नियमनस्यापि आगन्तुकत्वात् अवस्थारूपत्वमक्षतम्। अतः केवलपारिभाषिकाः न सन्त्येव।

सामान्यशब्दानां क्रोडीकारेऽपि 'वेदान्तकोश' इति, 'भूयसा व्यपदेशः मल्लग्रामादिवत्' 'प्राधान्येन व्यपदेशा भवन्ति' इति च न्यायेन वेदान्तोपयोगिशब्दानां प्रमेयाणां च भूयस्त्वात्, प्राधान्याच्च तथा व्यपदेशः नितरां शोभत एव। अत एव न्यायकोशेऽपि प्रथमं तावत् 'अंहस्पतिः—क्षयमासः', 'अकर्मकः-धातुः' इत्यादि शास्त्रान्तरशब्दनिर्वचनं दरीदृश्यते। किं बहुना एषैव गतिः कोशान्तराणामपि। नैयायिकैरपि अपेक्षितत्वात् तेषां वर्णनं समीचीनमेवेति—यदि ब्रूयात्, स एव समाधिः अत्रापि आद्रियतां नाम।

एवमेव अमरकोशोद्धरणमपि प्राधान्येन निरूपितविषये संवादाय संगच्छत एव। न हि न केनापि संस्कृतज्ञेन उपजीव्यभूते अमरे प्रद्वेषः क्रियते।

एवमेव लौकिकशास्त्रीयन्याया अपि स्वरूपविवेचनपुरस्सरं वेदान्तेषु समन्वयात् निरुह्यन्ते। सहस्रनामभाष्ये तु अतिगम्भीरतया विशेषार्थान् भाष्यकाराः तत्र प्रकटयति स इति तदप्यत्र आयोजितमिति सर्वं समञ्जसमेव।

## सूत्रार्थवर्णनस्योपपत्तिः

सूत्रव्याख्यानं किमर्थं वात्र योजयितव्यम्, भाष्येणैव तत्सर्वं सुविदितम् इति यत् तदपि न साधु मन्यामहे। तथात्वे सर्वं ग्रन्थान्तरेणैव सुवेदनीयम्, किमर्थं कोशानामवतारः? इति प्रत्यवतिष्ठमाने सर्वेऽप्यत्र एवं प्रतिब्रूयुः—'कोशावतारस्तु बुभुत्सूनां विमर्शकाणां च सौकर्याय अकारादिक्रमेण सङ्कलय्य प्रकाशनायैव प्रवर्तते। क्लिष्टभागे सम्पादकीयविवरणमपि प्रदीयते

चेति । तदुक्तं जयन्तभट्टेन—

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः ।
वचोविन्यासवैचित्र्यमात्रमेतत् परीक्ष्यताम् ॥ इति ॥

अतः अस्माभिरपि परामर्शकसमितौ पर्यवेक्षकाणां सूचनामनुसृत्यैव विशिष्टाद्वैतकोशोऽपि सविस्तरं विरच्यते। अत्र उपनिषत्-सूत्र-भाष्य-तद्व्याख्यानादिग्रन्थस्थप्रमेयाणि-कतिपयवेदान्त-वाक्यानि-पदानि च सप्रमाणाकरं संगृह्य यथामति विव्रियन्ते। अत एवायं 'विशिष्टाद्वैत-विश्वकोशः' इति सुगृहीतनामाभूत् । तथैव निर्देष्टव्ये लाघवमनुसृत्य शाकप्रियादिवत् समासेन विशिष्टाद्वैतकोश इत्येव प्रथाम् अश्नुते ।

प्रथमसम्पुटे या या न्यूनताः सम्भाविताः, प्रायेण तद्विषये सावधानतयैवात्र पर्यशोधिषत। विमर्शकानामभिप्रायानुरोधेन अस्मिन् सम्पुटे सामान्यशब्दाः प्रायेण पर्यत्यक्षत; परन्तु सिद्धान्तोपयोगिप्रधानविषयाः विस्तरेणैव न्यरूपिषत । तुलनात्मकदृष्ट्या विवेचकानां कृते भाष्यान्तरं चोदाहारि ; सिद्धान्तचिन्तामणि-आनन्दतारतम्यविचार-श्रीभाष्यप्रकाशिकादि-ग्रन्थेभ्यश्च विषयाः उद्धृताः ।

## कृतज्ञतासमर्पणम्

कोशनिर्माणे अस्माकं साहाय्यं कृतवद्भ्यः कुलसचिवेभ्यः श्री. विद्वान् एम्.ए. लक्ष्मी-ताताचार्येभ्यः, तथा परामर्शकसमितौ विद्यमानेभ्यः श्रीमद्भ्यः विद्वद्भ्यः एन्.एस्. रामानुज-ताताचार्येभ्यः, एस.एन्.सि. रघुनाथाचार्येभ्यः, एन्.एस्. अनन्तरङ्गाचार्येभ्यः, करि रामानुजा-चार्येभ्यः, एवं विशेषतः मया सह प्रतिपदं विमृश्य निर्णयार्थं साहाय्यं कृतवद्भ्यः के.एस्. वरदाचार्येभ्यश्च कृतज्ञता समर्प्यते ।

## निगमनम्

अत्र दृश्यमानाः प्रमादात् सम्भावितदोषाः सन्ति चेत् परया कृपया पाठकाः सूचयन्तु इति विज्ञाप्यते । एवमेव अवशिष्टभागानामपि प्रकाशने अतिमात्रमुत्कण्ठितानामस्माकं मनोरथमचिरेण पूरयतात् अर्थितार्थपरिदानदीक्षितः यदुशैलदीपः श्रीमन्नारायणः इति चाभ्यर्थ्यते ।

S. M. S. वरदाचार्यः
निगमाध्यक्षः

# आकरग्रन्थसूची

| | ग्रन्थनाम | देशः | कालः |
|---|---|---|---|
| 1 | अधिकरणसारावलिः (चिन्तामणि-पदयोजना व्याख्यासमेता) | मद्रास् | 1940 |
| 2 | अभीतिस्तवः (व्याख्यासमेता) | शुण्डपाल्यम् | 1909 |
| 3 | अर्थसंग्रहः | वाराणसी | 1974 |
| 4 | अष्टश्लोकी (सव्याख्या) | मद्रास् | 1908 |
| 5 | आगमप्रामाण्यम् | बरोडा | 1976 |
| 6 | ईश-केन-कठ-प्रश्न मुण्डक-माण्डूक्य-तैत्तरीय-ऐतरेयोपनिषदः (आनन्दभाष्यम्) | अहमदाबाद् | 1969 |
| 7 | ईशादिदशोपनिषद्भाष्यम् (सुबोधिनीव्याख्या) | बांबे | 1932 |
| 8 | ईशावास्योपनिषत् (वेदान्तदेशिक-कूरनारायण-श्रीरंगाचार्यभाष्यसमेता) | मद्रास् | 1914 |
| 9 | केनाद्युपनिषत्, पुरुषसूक्त श्रीसूक्तभाष्यम् | मद्रास् | 1972 |
| 10 | गद्यत्रयम् (रहस्यरक्षाव्याख्या) | कांची | 1940 |
| 11 | गद्यत्रयम् (पेरियवाच्चान् पिळ्ळै व्याख्या, शरणागतिगद्यस्य श्रुतप्रकाशिकाचार्य व्याख्या च) | तिरुच्चि | 1976 |
| 12 | गीताभाष्यम् (तात्पर्यचन्द्रिकासमेतम्) | मद्रास् | 1972 |
| 13 | गीतार्थसंग्रहरक्षा | कांची | 1941 |
| 14 | गूढार्थसंग्रहः | मैसूर | 1959 |
| 15 | गौतमधर्मसूत्राणि | वाराणसी | 1966 |
| 16 | चतुःश्लोकी | कांची | 1940 |
| 17 | तत्त्वत्रयम् (वरवरमुनिव्याख्या) | मद्रास् | 1920 |
| 18 | तत्त्वदीपः | मद्रास् | 1909 |
| 19 | तत्त्वनिर्णयः | कांची | 1902 |
| 20 | तत्त्वमार्तण्डः | — | — |

| | ग्रन्थनाम | देशः | कालः |
|---|---|---|---|
| 21 | तत्त्वमुक्ताकलापः (सर्वार्थसिद्धिसमेतः) | मद्रास् | 1941 |
| 22 | तत्त्वसारः (रत्नसारिणीव्याख्यासमेतः) | मद्रास् | 1951 |
| 23 | तात्पर्यदीपिका (मुमुक्षुप्पडिव्याख्या) | तिरुच्चि | 1970 |
| 24 | तैत्तरीय-ऐतरेय-छन्दोग्योपनिषद्भाष्यम् | मद्रास् | 1973 |
| 25 | दर्शनोदयः | मैसूर् | 1933 |
| 26 | दिव्यसूरिचरितानि | मैसूर् | 1969 |
| 27 | नयद्युमणिः | मद्रास् | 1956 |
| 28 | निक्षेपरक्षा | मद्रास् | 1969 |
| 29 | न्यायकलापसंग्रहः | कुम्भकोणम् | 1940 |
| 30 | न्यायपरिशुद्धिः | मद्रास् | 1978 |
| 31 | न्यायसिद्धञ्जनम् (रं. रा. व्याख्या) | मद्रास् | 1934 |
| 32 | न्यायसिद्धाञ्जनं (र. पे. व्याख्या) | मद्रास् | 1976 |
| 33 | न्यासविंशतिः | कांची | 1940 |
| 34 | पञ्चस्तवः (सव्याख्या) | मद्रास् | 1875 |
| 35 | पाञ्चरात्ररक्षा | मद्रास् | 1967 |
| 36 | पादुकासहस्रम् (सव्याख्या) | मद्रास् | 1970 |
| 37 | पाराशर्यविजयः | कांची | 1912 |
| 38 | प्रपन्नपारिजातः | मद्रास् | 1971 |
| 39 | ब्रह्मसूत्रशांकरभाष्यम् | वाराणसी | 1929 |
| 40 | ब्रह्मसूत्रार्थपद्यमालिका | मधुरै | 1961 |
| 41 | बृहदारण्यकोपनिषत् (रं. रा. भाष्यम्) | तिरुपति | 1953 |
| 42 | भागवतम् (विरराघवीयम्) | चित्तूर् | 1976 |
| 43 | भावप्रकाशिका | तिरुपति | 1959 |
| 44 | महाभारतम् | बांबे | 1906 |
| 45 | महाभाष्यम् | वाराणसी | 1967 |
| 46 | मुमुक्षुप्पडि | तिरुच्चि | 1970 |
| 47 | यतिराजसप्ततिः | शुण्डपाल्यम् | 1909 |

| | ग्रन्थनाम | देशः | कालः |
|---|---|---|---|
| 48 | यतीन्द्रमतदीपिका | वृन्दावन् | 1976 |
| 49 | याज्ञवल्क्यस्मृतिः | मद्रास् | 1870 |
| 50 | रहस्यत्रयमीमांसाभाष्यम् | मद्रास् | 1911 |
| 51 | रहस्यत्रयसारः | मद्रास् | 1968 |
| 52 | रामायणम् (गोविन्दराजीयम्) | बांबे | 1911 |
| 53 | लक्ष्मीतन्त्रम् | मद्रास् | 1959 |
| 54 | विशिष्टाद्वैतकोशः | तिरुपति | 1951 |
| 55 | विष्णुपुराणम् (सव्याख्या) | देहली | 1985 |
| 56 | विष्णुसहस्रनाम (भाष्यनिर्वचननिरूक्तिसहितम्) | बांबे | 1872 |
| 57 | वेदान्तदीपः | कांची | 1956 |
| 58 | वेदान्तसारः | कांची | 1956 |
| 59 | वेदान्तविजयमंगलदीपिका | बांबे | 1943 |
| 60 | वेदार्थसंग्रहः (ता. दी. व्याख्या) | मद्रास् | 1882 |
| 61 | शतदूषणी | कांची | 1912 |
| 62 | श्रीभाष्यम् (श्रु. प्र. समेतम्) | मद्रास् | 1969 |
| 63 | श्रीभाष्यम् (तत्त्वटीकासहितम्) | कांची | 1941 |
| 64 | श्रीभाष्यप्रकाशिका | मद्रास् | 1956 |
| 65 | श्रीरंगराजस्तवः (सव्याख्या) | मद्रास् | 1876 |
| 66 | श्रीवचनभूषणस्य संस्कृतानुवादः (वरवरमुनिव्याख्या) | पुरी | 1926 |
| 67 | श्रीवचनभूषणव्याख्यानंगळ् | तिरुच्चि | 1870 |
| 68 | श्रुतप्रदीपिका | तञ्जावूर् | 1972 |
| 69 | सच्चरित्ररक्षा | कांची | 1941 |
| 70 | सद्विद्याविजयः | मद्रास् | 1937 |
| 71 | सिद्धान्ततूलिका | मैसूर् | 1975 |
| 72 | सिद्धित्रयम् | वृन्दावन् | 1980 |
| 73 | सेश्वरमीमांसा | कांची | 1940 |
| 74 | स्तोत्ररत्नम् (भाष्यसहितम्) | कांची | 1940 |

| | ग्रन्थनाम | देशः | कालः |
|---|---|---|---|
| 75 | संकल्पसूर्योदयः | मद्रास् | 1948 |
| 76 | संप्रदाय अकारादि | कांची | 1912 |
| 77 | संप्रदायविभागः (वे.दे. ग्रन्थमाला) | कांची | 1912 |
| 78 | हरिगुणदर्पणः | — | — |
| 79 | हंससंदेशः | मैसूर् | 1913 |

आधारग्रन्थाः

| | | | |
|---|---|---|---|
| 1 | अमरकोशः (सव्याख्या) | वाराणसी | 1982 |
| 2 | उपनिषद्वाक्यमहाकोशः | बांबे | 1940 |
| 3 | तन्त्राभिधानकोशः | वाराणसी | 1978 |
| 4 | न्यायकोशः | पूना | 1978 |
| 5 | मीमांसाकोशः | सतारा | 1875 |
| 6 | वाचस्पत्यम् | वाराणसी | 1969 |
| 7 | शब्दकल्पद्रुमः | वाराणसी | 1967 |
| 8 | सिद्धान्तकौमुदी | तिरुच्चि | 1910 |
| 9 | हलायुधकोशः | लक्नो | 1967 |

# सङ्केताक्षरविवरणम्

| आकरग्रन्थः | सङ्केताक्षराणि |
| --- | --- |
| अथर्वशिखोपनिषत् | अथर्व. |
| अद्वैतवेदान्तपरिभाषा | अ वे.प. |
| अधिकरणसारावलिः | अ सा. |
| अमरसुधा | अ.सु. |
| अर्थशास्त्रम् (कौटिलीयम्) | अर्थशा. |
| अर्थसङ्ग्रहः | अ.सं. |
| आत्मसिद्धिः | आ.सि. |
| आनन्दभाष्यम् (रमानन्दभाष्यम्) | आ.भा. |
| आपस्तम्बधर्मसूत्रम् | आ.ध.सू., आप.ध.सू. |
| ईशावास्योपनिषत् | ई.उ. |
| उणादिसूत्रम् | उ.सू. |
| ऐतरेयोपनिषत् | ऐ.उ. |
| कठोपनिषत् | क.उ. |
| कूरनारायणभाष्यम् | कू.भा. |
| केनोपनिषत् | के उ. |
| कौषीतक्युपनिषत् | कौ.उ. |
| गीता | गी. |
| गीताभाष्यम् | गी.भा. |
| गीतार्थसङ्ग्रहः | गी.सं. |
| गीतार्थसङ्ग्रहरक्षा | गी.सं.र., गी.सं.रक्षा. |
| गूढार्थसङ्ग्रहः | गू.सं. |
| गूढार्थसङ्ग्रह उपोद्घातः | गू.सं.उपो. |
| गोपालानन्दभाष्यम् | गो.भा. |

| आकारग्रन्थः | सङ्केताक्षराणि |
| --- | --- |
| गोविन्दराजीयव्याख्या (रा) | गो.रा., गो.व्या. |
| गौतमधर्मसूत्रम् | गौ.सू., गौ.ध.सू. |
| चिन्तामणिः (अ.सा.) | चिं.म. |
| छान्दोग्योपनिषत् | छां.उ. |
| टिप्पणी | टि. |
| टीका | टी. |
| तत्त्वटीका | त.टी. |
| तत्त्वत्रयम् | त.त्र. |
| तत्त्वत्रयव्याख्यानम् | त.त्र.व्या. |
| तत्त्वदीपः | त.दी. |
| तत्त्वमार्ताण्डः | त.मा. |
| तत्त्वमुक्ताकलापः | त मु. |
| तन्त्राभिधानकोशः | त को. |
| तात्पर्यचन्द्रिका (गी.) | ता.चं. |
| तात्पर्यदीपिका (वे.सं.) | ता.दी. |
| तैत्तिरीय आनन्दवल्ली | तै.आ,तै.आन. |
| तैत्तिरीय आरण्यकम् | तै.आर. |
| तैत्तिरीय नारायणोपनिषत् | तै.ना. |
| तैत्तिरीय भृगुवल्ली | तै.भृ. |
| तैत्तिरीय शिक्षावल्ली | तै.शि. |
| तैत्तिरीय संहिता | तै.सं. |
| दर्शनोदयः | द.उ. |
| दिव्यसूरिचरितानि | दि.सू.च. |
| नयद्युमणिः | न.द्यु. |
| नयसङ्गतिमालिका | न.सं.मा. |
| न्यायकलापसङ्ग्रहः | न्या.क.सं. |
| न्यायकोशः | न्या.को. |

| आकरग्रन्थः | सङ्केताक्षराणि |
|---|---|
| न्यायपरिशुद्धिः | न्या प. |
| न्यायसिद्धाञ्जनम् | न्या. सि. |
| न्यायसिद्धाञ्जनटीका | न्या. सि. टी. |
| न्यायसूत्रम् | न्या. सू. |
| न्यायप्रकाशिकाव्याख्या | न्या. प्र. व्या. |
| न्यासतिलकम् | न्या. ति. |
| न्यासविंशतिः | न्या. विं. |
| पदयोजना (अ.सा.) | प. यो. |
| परमतभङ्गव्याख्या | प. भं. व्या. |
| पाञ्चरात्ररक्षा | पां. र, श्रीपां. र. |
| पादुकासहस्रम् | पा. स. |
| पाणिनिसूत्रम् | पा. सू. |
| पुरुषसूक्तम् | पु. सू. |
| पूर्वमीमांसासूत्रम् | पू. मी. |
| पेरियवाच्चान्पिळ्ळै व्याख्यानम् (श.रा.) | पे. व्या. |
| प्रपन्नधर्मसमुच्चयः | प्र. ध. स. |
| प्रपन्नपारिजातः | प्र. पा. |
| प्रश्नोपनिषत् | प्र. उ. |
| बृहदारण्यकोपनिषत् | बृ. उ. |
| बृहदारण्यकोपनिषत् माध्यन्दिनपाठः | बृ. उ. मा. पा. |
| ब्रह्मसूत्रपद्यमालिका | ब्र. प. मा. |
| ब्रह्मसूत्राणि | ब्र. सू. |
| भागवतम् | भाग. |
| भागवतवीरराघवीयम् | भाग. वी., वी. रा. |
| भारते आदिपर्वः | भा. आदि. |
| भारते उद्योगपर्वः | भा. उ. |
| भारते कर्णपर्वः | भा. कर्ण. |

| आकरग्रन्थः | सङ्केताक्षराणि |
| --- | --- |
| भारते वनपर्वः | भा.वन. |
| भारते सभापर्वः | भा.सभा. |
| मनुस्मृतिः | म.स्मृ. |
| माण्डूक्योपनिषत् | मां.उ. |
| मीमांसाकोशः | मी.को. |
| मुण्डकोपनिषत् | मुं.उ. |
| यतीन्द्रमतदीपिका | य.दी. |
| यतीन्द्रमतदीपिकाव्याख्या (अभयङ्कर्) | य.दी.व्या. |
| याज्ञवल्क्यस्मृतिः | याज्ञ.स्मृ. |
| योगसूत्रम् | यो.सू. |
| रङ्गरामानुजभाष्यम् | रं.भा. |
| रत्नपेटिका (न्या.सि.) | र.पे. |
| रत्नप्रभा | र.प्र. |
| रहस्यत्रयसारः | र.त्र.सा. |
| रामायणे अयोध्याकाण्डम् | रा.अयो. |
| रामायणे किष्किन्धाकाण्डम् | रा.कि. |
| रामायणे सुन्दरकाण्डम् | रा.सुं. |
| लक्ष्मीतन्त्रम् | ल.तं. |
| लिङ्गपुराणम् | लिङ्ग.पु. |
| वरदराजपञ्चाशत् | व.पं. |
| वाचस्पत्यम् | वाच. |
| वार्तिकम् | वा. |
| विरोधपरिहारः | वि.प. |
| विशिष्टाद्वैतकोशः | वि.को. |
| विष्णुचित्तीयम् (वि.पु.) | वि.चि. |
| विष्णुपुराणम् | वि.पु. |
| विष्णुसहस्रनामावलिः | स.ना. |

| आकरग्रन्थः | सङ्केताक्षराणि |
|---|---|
| विष्णुसहस्रनामभाष्यम् | वि.स.भा. |
| विष्णुसहस्रनामनिर्वचनम् | वि.स.निर्व. |
| विष्णुसहस्रनामनिरुक्तिः | वि.स.नि. |
| वेदान्तकारिकावली उपोद्घातः | वे.का.उपो. |
| वेदान्तदीपः | वे.दी. |
| वेदान्तविजयमङ्गलदीपिका | वे.मं.दी. |
| वेदान्तसारः | वे.सा. |
| वेदान्ताचार्यभाष्यम् | वे.भा.,वे.ग.भा. |
| वेदार्थसङ्ग्रहः | वे.सं. |
| व्याख्यानम् | व्या. |
| शङ्करभाष्यम् | शं.भा. |
| शतदूषणी | श.दू. |
| शरणागतिगद्यम् | श.ग. |
| श्रीधरीयम् (वि.पु.) | श्रीध. |
| श्रीभाष्यम् | श्री.भा. |
| श्रीभाष्यप्रकाशिका | श्री.भा.प्र. |
| श्रीभाष्यभूमिका | श्री.भा.भू. |
| श्रीवचनभूषणम् | श्री.व.भू. |
| श्रीवचनभूषणटीका | श्री.व.भू.टी. |
| श्रीवचनभूषणव्याख्या | श्री.व.भू.व्या. |
| श्रीसूक्तम् | श्रीसू. |
| श्रुतप्रकाशिका | श्रु.प्र. |
| श्रुतप्रकाशिकाभाष्यम् (सु.उ.) | श्रु.भा. |
| श्वेताश्वतरोपनिषत् | श्वे.उ. |
| सङ्कल्पसूर्योदयः | सं.सू. |
| सम्प्रदाय अकारादिः | सं.अ. |
| सम्प्रदायविभागः (वे.ग्र.) | सं.वि. |

| आकरग्रन्थः | सङ्केताक्षराणि |
| --- | --- |
| सर्वार्थसिद्धिः | स.सि. |
| सांख्यकारिका | सां.का. |
| सारप्रकाशिका | सा.प्र. |
| सारार्थविवरणी | सा.वि. |
| सारास्वादिनी | सा.स्वा. |
| सिद्धान्तकौमुदी | सि.कौ. |
| सिद्धान्तचिन्तामणिः | सि.चिं. |
| सुबालोपनिषत् | सु.उ.,सुबा.उ. |
| स्तोत्रभाष्यम् | स्तो.भा. |
| स्तोत्ररत्नम् | स्तो.र. |

श्रीः



श्रीमते रामानुजाय नमः

# विशिष्टाद्वैतकोशः

आः—नारायणः। (मङ्गलार्थत्वात् अयं शब्दः आदौ न्यवेशि)

"नारायणस्तथानन्तो....................दीर्घ आकार एव च"। इत्युक्तरीत्या आकारवाच्यः नारायणः ।। (तं.सा. 2)

आ—निपातसंज्ञकः।

"आङ्मर्यादाभिविध्योः" (पा.सू. 2-1-13) इत्यनेन सूत्रेण मर्यादाभिविध्यर्थ-द्योतकत्वमाङः सिध्यति। यथा—आमुक्ति संसारः (मुक्तेः प्राक् संसारः)। आबालं हरिभक्तिः। बालानारभ्य हरिभक्तिः।

क्वचित्प्रगृह्यसंज्ञकश्च—प्रक्रान्तवाक्यार्थस्यान्यथात्वे स्मरणे चायम् अङित्। यथा—आ एवं वदसि, आ एवं किल तत्। अत्र वाक्यस्मरणयोरङित् इत्युक्तेः आकारस्याङित्वात् प्रगृह्यसंज्ञा भवतीति तत्र न सन्धिकार्यम्।

ईषदर्थे तु आकारस्य ङित्वात् प्रगृह्यसंज्ञा नास्तीति गुणो भवत्येव। यथा—आ+उष्णम्=ओष्णम् ।।

आकरः—1. निधिः।

['पुंसि संज्ञायां घः प्रायेण' (पा.सू. 3-3-118) इति सूत्रेण आ इत्युपसृष्टात् कृधातोः घप्रत्ययः।]

'गुणानामाकरो महान्' (रा.कि. 15-21)

2. रत्नोत्पत्तिस्थानम्—खनिः। रत्नाकर इत्यादि। (सं.अ.)

**आकस्मिकतावादादयः**— कार्यकारणभावे अहेतुककार्योत्पत्त्यादिवादाः ।

अकस्मात्त्वं कारणानधीनत्वम्, अनिश्चितकारणकत्वं वा। अकस्मात् इत्यव्ययम्, 'कारणं विना भवः' इत्यर्थे 'अध्यात्मादित्वात्' ठञ् तस्य इकादेशे टिलोपे च आकस्मिकः, तस्य भावः आकस्मिकता ।

[जगद्व्यापारपरम्परायां लोकायत-कापिल-तार्किकाणां विवर्त-परिणामवादिनां च अभिप्रायभेदाः प्रदर्श्यन्ते ।]

इह खलु जगत्यां सर्वेऽपि पदार्थाः समुपलभ्यन्ते चेतनाचेतनलक्षणाः प्रतिक्षण-परिणामिनः विविधविचित्ररचनाविशेषाः नियतपौर्वापर्यलक्षणस्थितिमन्तः शृङ्खलिता इव, प्रवहन्त इव च । स चायं प्रवाहः जगद्व्यापार इति, संसार इति, व्यवहार इति, लोकयात्रेति, प्रपञ्च इति, सम्प्रदाय इति च विवक्षाविशेषैः सामान्यतो व्यपदिश्यते विपश्चिद्भिः। तमेव च प्रवाहं विवर्तः स्वभावः परिणामः विकारः धर्मः अवस्था पर्यायः उत्पत्तिः अभिव्यक्तिः इत्यादिभिः शब्दभेदैः ते ते दार्शनिकाः विवेचयन्ति ।

सेयं व्यापारपरम्परा तत्तद्वस्तुस्वभावमात्रपरतन्त्रेति आकस्मिकतावादिनो लोकायताः प्राहुः। चेतनात्मकवस्तुगतभोगापवर्गलक्षणपुरुषार्थमात्रपरतन्त्रेति अर्थस्वभाव-वादिनः कापिलाः सत्कार्यवादिनः। तादृशपुरुषार्थस्वामिभूतभोक्तृवर्गीयप्रयत्नपरतन्त्रेति सापेक्षवादिनः असत्कार्यवादिनः आरम्भवादिनस्तार्किकाः। कार्यकारणभावो दुर्निरूपः काल्पनिक इति विवर्तवादिनः । तादृशभोक्तृवर्गीयादृष्टलक्षणप्रयत्नसापेक्षस्य सर्वज्ञस्य सर्वशक्तस्य परमकारुणिकस्य परमेश्वरस्य संकल्पायत्तेति औपनिषदाः प्रायेण सत्कार्यवादिनः परिणामवादिन इति सामान्येन पञ्चतयी गतिः । (द.उ. 256)

[अयमत्र निर्णयः—प्रयोजनवत्त्वाधिकरणे "सृज्यमानदेवादिक्षेत्रज्ञकर्मसापेक्षत्वात् विषमसृष्टेः" इत्युक्तेः विषमसृष्टिः कर्मसापेक्षा। समसृष्टिस्तु 'सर्वज्ञात् सर्वशक्तेः परमकारुणिकात् परस्मात् पुंसः सृष्टिस्थितिलयाः प्रवर्तन्ते' इति जन्माद्यधिकरणोक्तदिशा

कर्मनिरपेक्षा केवलकृपामूला इति सिद्धान्तमार्ग एव सकलप्रमाणाविरुद्धः अनुभवपथमारोहति च ।

अत एवाभिहितं तत्त्वमुक्ताकलापे—(95)

कर्मविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे
तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा ।
तल्लब्धस्वावकाश-प्रथमगुरुकृपागृह्यमाणः कदाचित्
मुक्त्यैश्वर्यान्तसम्पन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥ इति ॥

चार्वाकव्यतिरिक्तास्सर्वे सामग्रीप्रवाहवैचित्र्यात् संसरतां मुक्तिहेतूपनिपात मिच्छन्ति । अतः नात्र अनादिसंसारवादिना केनापि विमन्तव्यमित्यभिप्रायेण सर्वसिद्धान्तसिद्धत्वोक्तिः ।]

जगतः आकस्मिकत्ववादिनः चार्वाकाः इत्थमाहुः । अकस्मादेव भवति कार्यं न किञ्चिदपेक्षमिति, तदेतन्मतं गौतमसूत्रे उक्तम् 'अनिमित्ततो भावोत्पत्तिः. कण्टकतैक्ष्ण्यादिवत्' (न्या.सू. 4-1-22) इति । एतदवतरणिकायां वृत्तिः । यदि कार्याणाम् आकस्मिकत्वं तदा न परमाण्वादीनाम् उपादानत्वम्, न वा ईश्वरस्य निमित्तत्वम् । अतः आकस्मिकत्व निराकरणाय प्रकरणमारभते-तत्र पूर्वपक्षसूत्रम् अनिमित्तत इत्यादि । प्रथमार्थे तसिल् । अनिमित्ता भावोत्पत्तिरित्यर्थः । तथा च—घटाद्युत्पत्तिः न कारणनियाम्या, उत्पत्तित्वात्; कण्टकतैक्ष्ण्यमयूरचित्रताद्युत्पत्तिवत्—इति सूत्रतात्पर्यम् । अत एवोक्तम्—

अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः ।
केनेदं चित्रितं तस्मात् स्वभावादेव तत्स्थितिः ॥ इति ॥ (वाच.)

**आकाङ्क्षादयः**—1. शाब्दबोधसहकारिविशेषाः । (आकाङ्क्षासन्निधियोग्यताः ।)

[आङ्पूर्वक काङ्क्षिधातोः 'गुरोश्च हलः' (पा. सू. 3-3-103) इत्यनेन भावार्थे अङ्प्रत्ययः, ततः स्त्रियां टापि आकाङ्क्षेति रूपम् ।]

शास्त्रस्य तु विशेषेण आकाङ्क्षासन्निधियोग्यताज्ञानाधीनप्रमाणभावस्य सर्वत्रैव तर्कानुग्रहापेक्षा । (श्री.भा. 2-1-4)

आप्तेनोच्चारितानि आकाङ्क्षायोग्यतासन्निधिमल्लौकिकवाक्यान्यपि प्रमाणानि । यथा—नद्यास्तीरे पञ्चफलानि सन्ति इत्यादीनि । (य.दी. 32)

यत्पदेन विना पदान्तरस्य अन्वयबोधाजनकत्वम् अस्ति तयोः आकाङ्क्षा ; यथा प्रकृतिप्रत्यययोः, क्रियाकारकयोश्च । वाक्यप्रतिपाद्यार्थस्य प्रमाणान्तरतो बाधाभावो योग्यता । यत्पदार्थयोः अन्वयबोधो विवक्षितः तद्वाचकपदयोः अव्यवधानेन उपस्थितिः आसत्तिः इति स्वरूपविवेकः आकाङ्क्षादेः । (व्या)

'घटमानय' इत्यादौ क्रियाकारकपदयोः आकाङ्क्षा । अत्र कारकपदस्य क्रियापदेन विना घटकर्मकमानयनम् इति अन्वयबोधजनकत्वाभावात् कारकपदस्य क्रियापदेन सह आकाङ्क्षा । एवं क्रियापदस्यापि कारकपदेनापि सह बोध्या । (न्या.को)

आकाङ्क्षा द्विविधा । उत्थाप्याकाङ्क्षा, उत्थिताकाङ्क्षा चेति । 'देवदत्तो ग्रामं गच्छति' इत्यादौ 'कीदृशो देवदत्तः' इत्याकाङ्क्षा तु उत्थाप्याकाङ्क्षा । स्वरसतोऽत्र तस्या अप्रवृत्तेः ।

'देवदत्तो गच्छति' इत्यादौ कं प्रति इति उत्थिताकाङ्क्षा । अस्या एव शाब्दबोधे सहकारित्वम् ।

2. अभिलाषः ।

**आकाङ्क्षासन्निध्योः आकाङ्क्षा बलीयसी**—उभयोः समवाये सन्निधेः दुर्बलता । वेदार्थसङ्ग्रहादिषु प्रपञ्चितोऽयम् । तत्र हि 'अहमेकः प्रथममासम्' इत्यादिना न रुद्रः स्वस्य त्रैकालिकत्वमुपदिशति । किन्तु स्वान्तर्यामिणः परमात्मन एव । इतरथा 'सोऽन्तरादन्तरं प्राविशत्' इति तच्छब्दप्रयोगस्य, 'प्राविशत्' इति प्रथमपुरुषप्रयोगस्य च अयुक्तत्वप्रसङ्गात् 'अहं प्राविशम्' इति प्रयोगापत्तेः ।

न च—तत् श्रुतिवाक्यम् ; न रुद्रवाक्यम्—इति वाच्यम् ; 'सोऽहं नित्यानित्यो ब्रह्माहं प्राञ्चोऽहं प्रत्यञ्चोऽहं..................अग्रञ्च मध्यञ्च वहिश्च पुरस्ताज्ज्योतिरहमह मेव च सर्वे च मामेव मां यो वेद स सर्वान् देवान् वेद देवैर्गा गोभिर्ब्राह्मणान् ब्राह्मणेन

हवींषि हविषायुरायुषा सत्यं सत्येन धर्मं धर्मेण तर्पयामि स्वेन तेजसा ततो देवा रुद्रं नापश्यन्' इति ; 'स्वेन तेजसा' इत्येतत्पर्यन्तं रुद्रवाक्यानुवृत्तेः मध्ये श्रुतिवाक्यस्य अनवकाशात् 'सोऽन्तरात्' इति वाक्यं रुद्रवाक्यमेव ।

न चैवं 'नान्यः कश्चिन्मत्तो व्यतिरिक्त इति' इत्यत्र रुद्रवाक्यसमाप्ति-द्योतकेतिकरणस्य असङ्गतिप्रसङ्गः, 'स्वेन तेजसा तर्पयामि' इति रुद्रवाक्यान्ते वाक्यान्त-समाप्तिद्योतकस्य इतिकरणस्य अपेक्षितत्वेन तत्रैव अस्य इतिकरणस्य निवेशनीयत्वात् । आकाङ्क्षापेक्षया सन्निधेः दुर्बलत्वेन व्यवहितान्वयस्यैव ज्यायास्त्वात् ।

'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥'

इत्यभियुक्तोक्तेश्च । 'तस्मान्मम त्वमेकोऽसि' इति हि कौषीतकिः पुत्रमुवाच । "रश्मींस्त्वं पर्यावर्तयात् । बहवो वै ते भविष्यन्ति' इत्यादौ इतिशब्दप्रयोगानन्तरमपि वाक्यशेषानुवृत्तेः दर्शनाच्च ।

तस्मात् 'स्वेन तेजसा तर्पयामि' इत्येवमन्तस्य सर्वस्य रुद्रवाक्यत्वात् 'सोऽन्तरात्' इति वाक्यं रुद्रवाक्यमेव । अतश्च 'सः' इति निर्दिष्टस्य परमात्मन एव अन्तर्यामित्वप्रतिपादनपरं तद्वाक्यम् । ततश्च प्रयुक्तोऽहंशब्दोऽपि 'शास्त्रदृष्ट्या तूपदेशः' इति न्यायेनैव प्रवृत्तः इति अकामेनाऽपि स्वीकरणीयम् ।

ननु "को भवान्" इत्यभिमुखस्य रुद्रस्य स्वरूपे देवैः पृष्टे "अहमेकः प्रथममासम्" इत्यादिना मदन्तर्यामी सर्वात्मेति प्रतिवचनम्, "आम्रान्पृष्टः कोविदारानाचष्टे" इति न्यायं कथं नानुसरेदिति चेन्न ; मदन्तर्यामी सर्वात्मेत्युक्ते सर्वात्मकभगवच्छरीरभूतोऽहमित्यर्थे पर्यवसन्नतया "को भवान्" इति प्रश्नप्रत्युत्तरत्वसम्भवात् । (न्या.सि.टी.186)

तथा च अनेन न्यायेन 'नान्यः कश्चिन्मत्तो व्यतिरिक्त इति' वाक्यस्थेतिशब्दस्य 'सोऽन्तरादन्तरं प्राविशत्' इत्यत्र अन्वयस्य साधुत्वं प्रत्यपादि आकाङ्क्षावशात् ॥

**आकाङ्क्षितविधानं ज्यायः**—आकाङ्क्षितस्यैव ज्यायस्त्वम् । न्यायविशेषः ।

[अनाकाङ्क्षितविधानापेक्षया आकाङ्क्षितविधानमेव ज्याय इति न्यायस्वरूपम् ]
आकाङ्क्षितमेव विधातव्यम् ; न अनाकाङ्क्षितमिति न्यायार्थः । (मी. को.)

यथा वैश्वानराधिकरणे—'औपमन्यवादयः उद्दालकषष्ठाः' 'को न आत्मा, किं ब्रह्म' इति विचार्य, मुमुक्षवः वैश्वानरात्मानं जिज्ञासमानाः अश्वपतिं प्राप्य 'तमेव आत्मानम् अस्माकं ब्रूहि' इत्यवोचन् ।

'यस्तु एतमेव प्रादेशमात्रम् अभिविमानमात्मानं वैश्वानरम् उपास्ते' इत्यादिना तेभ्यः अश्वपतिरुपदिदेश ।

अत्र जिज्ञासितार्थः आत्मस्वरूपविषयकः । यद्यत्र वैश्वानरशब्दस्य अन्यत्रापि प्रसिद्धेः जाठराग्न्यादिविषयकत्वं कल्पितं चेत्, तेषामनाकांक्षितत्वं स्पष्टमिति, अनेन न्यायेन परमात्मविषयकमेवेदं प्रकरणमिति सुवचम् । तस्मात् आकांक्षितपरमात्मविधानमेव ज्यायः ॥

आकारः—1. अपृथक्सिद्धप्रकारः (जातिः गुणः शरीरञ्च) ।
[आङ्पूर्वककृधातोः भावे घञ् ।]

आत्मशरीरभावः—पृथक्सिध्यनर्हाधाराधेयभावः, नियन्तृनियाम्यभावः ; शेषशेषिभावश्च । सर्वात्मना आधारतया, नियन्तृतया, शेषितया च आप्नोति इति आत्मा । सर्वात्मना आधेयतया, नियाम्यतया, शेषतया च अपृथक्सिद्धं प्रकारभूतमिति 'आकारश्शरीरम्' इति च उच्यते । (वे.सं.186)

जातिगुणयोरप्याकारत्वम् अपृथक्सिद्धप्रकारत्वात्, शरीरमपि अपृथक्सिद्धप्रकारत्वात् आकारशब्दवाच्यम्, द्रव्यत्वात् शरीरशब्दवाच्यमित्यर्थः । (ता.दी )

1. स्वासाधारणधर्मः, 2. आ इति वर्णविशेषः । 'वर्णात्कारः' (वा. 2227 इति कारप्रत्ययः । (सं-अ.)

1. निरूपकस्वभावः, 2. भ्रूसंज्ञादिः शरीरचेष्टा, 3. विग्रहः, 4. स्वरूपम् । (वि.को.)

हृद्गतभावावेदके मुखप्रसादवैवर्ण्यरूपे प्रीत्यप्रीतिसूचके देहचेष्टने वर्तते ॥ (वाच)

**आकारत्रयम्**—असाधारणधर्मत्रयम् ।

परमात्मनः सद्वारकम् आकारद्वयम्, अद्वारकः एकः आकारश्चेति आकारत्रयम् ।

1. स्वरूपेणावस्थानम् (सत्यत्वज्ञानत्वादिस्वासाधारणधर्मविशिष्टतया स्वरूपेणावस्थानम् ।)

2. जीवान्तर्यामितयाऽवस्थानम् ।

3. अचिदन्तर्यामितया अवस्थानञ्चेति ॥ (ता. दी. 218)

[ अत्र प्रतिज्ञावाक्ये सद्वारक-अद्वारकेति विभागकरणात् प्रथमोपात्तसद्वारकं विहाय, चरमोपात्त अद्वारकनिरूपणं कथमिति चेत्, चरमोपात्तस्यैव प्रथमतः बुद्धिस्थत्वात् एवमाचार्यैः व्यत्ययेन निरूपितम् । इयं च शास्त्रज्ञानां मर्यादा ।]

अनन्यार्हशेषत्व अनन्यशरणत्व-अनन्यभोग्यत्वरूपचेतनासाधारणधर्मत्रयम् । (सं.अ.)

श्रियः प्राप्यत्व-प्रापकत्व-पुरुषकारत्वरूपम् । केचित्तु स्वासाधारणधर्मेण, अविशेषेण चेतनसाधारणधर्मेण, स्वेश्वर (श्रियः ईश्वरस्य च) साधारणधर्मेण च आकार त्रयवत्त्वमाहुः ।

अन्ये तु—भगवदेकशेषत्वं, भगवदेकनियाम्यत्वं, भगवदेकरक्ष्यत्वमिति अविशेषेण आकारत्रयशालित्वम् । तथा जगच्छेषित्वं, जगद्रक्षकत्वं, जगन्नियामकत्वमिति ईश्वरस्त्वसाधारण्येन आकारत्रयशालित्वम्—आहुः ॥ (वि.को.)

**आकारत्रयसम्पन्ना**—पुरुषकारत्वाद्याकारत्रयविशिष्टा लक्ष्मीः ।

'आकारत्रयसम्पन्नामरविन्दनिवासिनीम्' इत्यभियुक्तोक्तिः (श्री पराशर भट्टानाम्) ।

1. पुरुषकारत्व-जगच्छेषित्व-प्राप्यत्वरूपाकारत्रयसम्पन्ना ।

अहं मत्प्राप्त्युपायो वै साक्षाल्लक्ष्मीपतिः स्वयम् ।
लक्ष्मीः पुरुषकारेण वल्लभाप्राप्तियोगिनी ॥

आकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाः पुनः ।
मत्पदाम्भोरुहद्वन्द्वं प्रपद्य प्रीतमानसाः ॥

लक्ष्मीं पुरुषकारेण वृतवन्तो वरानन ।
मत्क्षमां प्राप्य सेनेश प्राप्यं प्रापकमेव माम् ॥

लब्ध्वा कृतार्था प्राप्स्यन्ते मामेवानन्यमानसाः ॥

इति भगवच्छास्त्रस्थस्ववचनानुरोधेन लक्ष्म्याः पुरुषकारत्वमेव; न तु उपायता इति, द्वये च पूर्वखण्डे उपलक्षणतया तत्सम्बन्धः । अत एव इतिहासश्रेष्ठेन श्रीरामायणेन श्रियः पुरुषकारवैभवः ; महाभारतेन तु दौत्येन गतवतो उपायभूत हरेः वैभव उच्यते। (श्री.व.भू.टी. 6)

2. पुरुषकारत्व-उपायत्व-उपेयत्वरूपधर्मत्रयसम्पन्ना ।

"स्वाम्युपाय उपेयश्च स्वरूपादिसमर्पणे ।
प्रथितः प्रतिसम्बन्धी श्रीमान्निगमचक्षुषाम् ॥"

इत्युक्तेः सर्वत्र श्रीविशिष्ट एव प्रतिसम्बन्धी ।—शेषत्वानुसन्धानरूपस्वरूप समर्पणे, श्रीविशिष्टः स्वामी प्रतिसम्बन्धी, तथैव फलसमर्पणे श्रीमानुपेयः भरसमर्पणे च श्रिविशिष्ट एव उपायभूतः प्रतिसम्बन्धी इति निगमेषु प्रथितः ।

श्रीसम्बन्धरहितस्य प्रतिसम्बन्धित्वासम्भवात् पुरुषकारभूतायाः उपायदशायां फलदशायाञ्च नित्ययोगप्रतिपादकप्रमाणानुसारेण उपायत्वमुपेयत्वं च स्वीकरणीयम् । अत एव द्वयमन्त्रे उपायोपेयपरे पूर्वोत्तरभागे नित्ययोगाभिधायिमतुप्सम्बन्धः श्रूयते । श्रीविशिष्टस्य प्राप्यत्वमिव तद्विशिष्टस्यैव उपायत्वमपि निराबाधम् । तदयं निर्णयः—

'उपायोपेयदशयोः द्वयेऽपि श्रीः समन्विता ।
इष्टा च शेषिणि द्वन्द्वे शेषवृत्तिर्यथोचिता ॥'

अतोऽनन्यपरानेक श्रुतिस्मृत्यनुसारतः ।

पत्नीविशिष्ट एवैकः प्रपत्तव्य इहोदितः ॥ इति ॥ (र.त्र.सा. III-289)

**आकारैक्येऽपि तत्ताव्यवहारः**—प्रकारैक्येऽपि सोऽयम् इति व्यवहारः ।

'ब्रह्मवेद ब्रह्मैव भवति' इत्यत्राऽपि, 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' 'निरञ्जनः परमं साम्यमुपैति,' परं ज्योतिरुपसम्पद्य स्वेन रुपेण अभिनिष्पद्यते' इत्यादिभिः ऐकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्म-प्रकारतोच्यते । प्रकारैक्ये च तत्ताव्यवहारो मुख्य एव, यथा सेयं गौः इति ।

(श्री. भा. भा. 1-253)

दृष्टान्ते प्रकारैक्येऽपि तत्ताव्यवहारो मुख्योऽप्यस्वरसः, पूर्वदृष्टे गवि व्यक्त्यं-शप्रहाणादस्वारस्यम्. जात्यंशस्य सौसादृश्यलक्षणैक्यान्मुख्यत्वम् ; दार्ष्टान्तिके तु गङ्गायां घोष इति गङ्गापदवत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात् परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटि-रित्यभिप्रायेण मुख्य एवेत्युक्तम् । लाक्षणिक गङ्गापदवत् नात्यन्तामुख्य इत्यर्थः । न हि मुक्तस्य अपरिच्छिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणगुणबृहत्वं स्वरूपबृहत्वं चास्ति । आकारैक्येऽपि तत्ताव्यवहारस्य अत्यन्तामुख्यत्वाभावे सेयं गौरिति दृष्टान्तः । (श्रु. प्र.)

**आकाशः**—1. निरुपाधिकतया प्रकाशमानः (परमात्मा) ।

(आसमन्तात् काशते इति कर्तरि अच् प्रत्ययः) ।

'अस्य लोकस्य का गतिरिति । 'आकाश' इति होवाच । (छां.उ. 1-9-2)

अत्र आ-काशते–प्रकाशते, आ-काशयति इति वा व्युत्पत्त्या आकाशशब्दो ब्रह्मपरः 'आकाशो ह वै नामरुपयोर्निर्वहिता' इत्यादौ आकाशशब्दस्य ब्रह्मण्यपि प्रसिद्धत्वात् । (रं. भा.)

2. देवताविशेषः ।

'अथ योऽस्योर्ध्वः सुषिः स उदानः, स वायुः, स आकाशः' । (छां.उ. 3-13-5)

3. प्रकाशरूपमालोकादि, 4. प्रकाश्यमानं रूपम् 5. प्रकाशकं रूपम् ।

'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः, स चाक्षुषः पुरुषः ; दर्शनाय चक्षुः'

(छां-उ-8-12-4)

आकाशं—प्रकाशम् । आलोकादि । अथवा प्रकाश्यमानत्वात् आकाशं-रूपम् । ततश्चायमर्थः—यस्मिन्नुपकरणत्वेन अनुविषण्णं-निबद्धं चक्षुः आलोकं रूपं वा प्रकाशयति इति शेषः । यद्वा आकाशं रूपादिप्रकाशकमित्यर्थः । सः चाक्षुषः चक्षुरुपकरणकः पुरुषः आत्मा इत्यर्थः । (रं-भा.)

[आद्ये करणार्थे प्रत्ययः, द्वितीये कर्मणि, तृतीये ण्यन्तात् कर्तरि अच्प्रत्ययः इति विवेकः ।]

6. परमव्योम । ( परमपदम् )

'आकाशः प्रतिष्ठा' । (बृ-उ-6-1-2)

7. अव्याकृताकाशः । (प्रकृतिः)

'कस्मिन्नु खलु आकाशः ओतश्च प्रोतश्चेति । (बृ-उ-5-8-6)

8. भूताकाशम् ।

**अकाशद्रव्यम्**—पञ्चभूतेषु आदिमं द्रव्यम् ।

'आत्मन आकाशस्सम्भूतः' इति हि श्रूयते ।

अस्पर्शवत्त्वे सति विशिष्टशब्दाधारत्वम्, श्रोत्राप्यायकत्वं चाकाशलक्षणम् । स च शब्दमात्रगुणकः अवकाशहेतुः 'नीलं नभ' इति प्रतीतेः प्रत्यक्षः, पञ्चीकरणप्रक्रियया च सावयवो रूपवान् । एतेन आकाशस्याजन्यत्वनिरासः । सूर्यपरिस्पन्दादिभिराकाशस्यैव प्राच्यादिव्यवहारोपपत्तौ दिगिति न पृथग्द्रव्यकल्पनम् । दिक्सृष्टिस्त्वन्तरिक्षादिसृष्टिवदुपपद्यते ॥ (य-दी-40)

अस्पर्शत्वे सति विशिष्टशब्दाधारत्वं श्रोत्राप्यायेकत्वं चाकाशलक्षणम् अयञ्च अवकाशदानादिना उपकरोतीति शास्त्रसिद्धत्वादभ्युपेत्यम् । आकाशरूपपरिणामरहितप्रकृत्यादिप्रदेशेष्वपि अवकाशोऽस्त्येव । अन्यथा तत्र स्पर्शवद्द्रव्यादिनिरोधप्रसङ्गात् । आकाशादेर्नित्यत्वादिसाधनानि निरवयवद्रव्यत्वादीनि

आगमबाधान्यतरानैकान्तिकत्वादिभिर्दूषणीयानि । (न्या.सि. 92-93)

अस्पर्शत्वे सतीति— स्पर्शत्वावच्छिन्नापृथक्सिद्धिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्वे सतीत्यर्थः । विशिष्टशब्दाधारत्वम् इति—अपृथक्सिद्धिसम्बन्धेन उद्भूतशब्दवत्वमित्यर्थः । वाय्वादिवारणाय सत्यन्तम् । प्रकृत्यादिवारणाय विशेष्यम् । शब्दतन्मात्रवारणाय उद्भूतेति ॥ (र.पे.)

**आकाशपरिच्छिन्नत्वन्यायः**—लौकिकन्यायविशेषः ।

यथा आकाशस्य स्वतः अपरिच्छिन्नत्वेऽपि घट-पटाद्युपाधिभेदेन 'घटाकाशः, पटाकाशः' इत्यादिव्यवहारेण आकाशस्य परिच्छिन्नत्वव्यपदेशो युज्यते, तथैव अपरिच्छिन्नस्य ब्रह्मणः "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा" इत्यादिश्रुत्युक्तेः अङ्गुष्ठाद्युपाधिभेदेनैव परिच्छिद्य अनुसन्धानं योयुज्यते ।

**आकाशमुष्टिहननन्यायः**—लौकिकन्यायविशेषः ।

अयं न्यायः सर्वथा असम्भवे निष्फले च वस्तुनि प्रयत्नकरणे अवतरति । मुष्ठिना आकाशस्य हननं न सम्भवति, निष्फलं च । तादृशस्थले केनचित् प्रयत्ने कृते तत्प्रहासार्थम् अयम् उदाह्रियते । (मी.को)

एतन्मूलकमेव उक्तम् यतिराजसप्ततौ आचार्यपादैः—

श्रुति श्रेणीचूडापदबहुमते लक्ष्मणमते
स्वपक्षस्थान् दोषान्वितथमतिरारोपयति यः ।
स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलं
गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः ॥ इति । (55)

अयं भावः—श्रुतिस्मृतिसूत्राद्यविरुद्धे भगवद्रामानुजमते दुराग्रहवशात् यैः दोषाः आरोप्यन्ते, तद्विषये अयं न्यायः अतिदिश्यते । पूर्वस्मिन् दृष्टान्ते नैष्फल्यमात्रमेव । अत्र तु स्वस्यैवानर्थावहत्वम्—इति विशेषः ॥

**आकाशवाणी**—आकाशे भवा वाक् ।

आकाशे अदृश्यतया तिष्ठद्देवताभिः उदीर्यमाणा वाक् । इयमेव अशरीरवाणीति, दैववाणीति च व्यवह्रियते । (सं. अ.)

**आकाशविद्या**—ब्रह्मविद्याविशेषः ।

आकाशशब्दितपरमात्मनः जगत्कारणत्व-ज्यायस्त्व-परायणत्वादिविशिष्टतयोपासनम् । इयञ्च आकाशाधिकरणे छान्दोग्यश्रुत्युदाहरणेन भाष्ये निरूपिता ।

**आकाशशरीरं ब्रह्म**—प्रकाशमानदिव्यविग्रहयुक्तं मुक्तस्वरूपम् ।

'आप्नोति स्वाराज्यं...... आकाशशरीरं ब्रह्म'। (तै. शि. 1-14)

आ समन्तात् प्रकाशमानदिव्यविग्रहयुक्तं ब्रह्म आविर्भूतब्राह्मरूपं भवतीत्यर्थः । (रं.भा.)

अस्य प्रकरणस्य मुक्तात्मनिरूपणपरत्वात् ब्रह्मशब्दः ब्रह्मसदृशमुक्तात्मपरः इति बोध्यम् ।

**आकाशस्तल्लिङ्गात्**—(ब्र सू. 1-1-23)

आकाशः—आकाशशब्दनिर्दिष्टं परमेव ब्रह्म । कुतः ? तल्लिङ्गात्—प्रसिद्धवन्निर्दिश्यमानात् जगत्कारणत्वादिलिङ्गात् ।

सदेव सौम्येत्यादिवाक्यसिद्धं ब्रह्मैव आकाशशब्देन प्रसिद्धवत्—"सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इति वाक्येन निर्दिश्यते इति सिद्धम् ॥

[अत्र प्रसङ्गात् श्रीभाष्यकाराणामाशयं प्रकटयामः । यत्र विषयवाक्ये 'हवै', 'यतः', 'खलु' इत्यादिप्रसिद्धिद्योतकपदानि दृश्यन्ते तत्र प्रसिद्धवन्निर्देशात्, प्रसिद्धवन्निर्दिश्यते इत्येव हि निरदिशन् श्रीभाष्यकाराः ।

अत्र निदानं तु प्रसिद्धिद्योतकपदघटितं वाक्यमनुवादपरमेवेति तत् पुरोवादवाक्यमपेक्षते । तच्च ब्रह्मणः जगत्कारणत्वविधायकं 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यमेव ।

तथा च 'प्रसिद्धवदुपदेशात्' इत्यत्र कारणवाक्ये जगत्कारणत्वं प्रसिद्धमिति तद्वतः ब्रह्मणः अत्रोपदेशात् इत्यभिप्रायेण प्रसिद्धवदुपदेशादित्यादिवाक्यसरणिः प्रववृते । एतेन प्रसिद्धवदित्यत्र तुल्यार्थे वतिः न विवक्षितः ; एवं प्रसिद्धमिति भावार्थक-प्रत्ययेन प्रसिद्धिः इत्यर्थकम्, तत् अस्य अस्तीति प्रसिद्धवत्-प्रसिद्धम् इत्यपि न विवक्षितम् । किन्तु प्रसिद्धिविशिष्टमित्यर्थे कर्मणि प्रत्यये प्रसिद्धमिति, ततः मत्वर्थीय प्रत्यये प्रसिद्धवदित्येव । एवंरीत्या उल्लेखः जगत्कारणत्वस्य अन्यत्र ब्रह्मनिष्ठत्वेन प्रसिद्धिद्योतनायैव । अत एव 'सर्वत्र प्रसिद्धोपदेशात्' इति सूत्रविवरणे प्रथमयोजनायां मनोमयः प्राणशरीरः इत्यादिषु मनोमयत्वादीनां जीव एव सम्भवात् स एवात्र प्रतिपाद्यते इति पूर्वपक्षे आह-सर्वत्र-वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेः उपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः इत्यभाणि । तत्र द्वितीययोजनायां तु 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्यत्र, सर्वत्र 'सर्वं खल्विदम्' इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया विधीयमानं परं ब्रह्मैव ; न प्रत्यगात्मा । कुतः ? प्रसिद्धोपदेशात्—तज्जलान् इति हेतुतः 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धवदुपदेशात् इत्येव भाषितम् ।

अयमत्र विवेकः—यत्र धर्माणामन्यत्र प्रसिद्धिः विवक्षिता, यथा मनोमय-त्वादीनां तत्र प्रसिद्धोपदेशात् इत्येव । यत्र तु तादृश प्रसिद्धधर्मविशिष्टधर्मिणः प्रसिद्धपदेन विवक्षा, तत्र प्रसिद्धवदुपदेशात् इत्येव उल्लेखभेदः दरीदृश्यते ।]

इदमाम्नायते छान्दोग्ये—(1-9-1)

'अस्य लोकस्य का गतिरिति । आकाश इति होवाच । सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते ; आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम्' इति ।

तत्र सन्देहः—किं प्रसिद्धाकाश एव अत्राकाशशब्देनाभिधीयते ? उत उक्तलक्षणमेव ब्रह्म ? इति । अत्र सदादिसामान्यशब्दसमर्पितकारणवस्तुनः विशेषाकांक्षायां छागपशुन्यायेन—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति वाक्यस्थाकाशपदश्रुतिसमर्पितभूताकाशपर्यवसानमेव युक्तम् ।

श्रुत्यन्यथानयनस्यैव युक्तत्वात् । श्रुतिलिङ्गाधिकरणे तु लिङ्गबोधकमन्त्रस्थपदश्रुत्यनुरोधेन विनियोगविधिस्थगार्हपत्यपदस्य इन्द्रलक्षणायां विधिवैयर्थ्यापत्त्या श्रुतिप्राबल्यस्यैव न्याय्यत्वात् ।

किञ्च 'ह'—'वा' शब्दसमभिव्याहारेण आकाशवाक्यस्य अनुवादतया तत्पुरोवादे, सद्विद्यावाक्ये च ईक्षणादिना चेतनसामान्यकारणत्वे तद्विशेषापेक्षायाम् अचेतनविशेषपर्यवसानासम्भवात् तदनुरोधेन 'आसमन्तात् काशते' इति योगाश्रयणमेव न्याय्यम् । अनुवादस्य पुरोवादानुयायित्वस्वाभाव्यात् सद्विद्यावगतचेतनस्य कारणवस्तुनो विशेषापेक्षायां 'स एषोऽनन्तः' इत्येतद्वाक्यस्थानन्तपदेन भगवति रूढेन विशेषसमर्पणसम्भवात् । स एष इति प्रकृतम् आकाशमनूद्य अनन्तत्वरूपविष्णुत्वविधेः स्फुटं प्रतीयमानत्वात् भूताकाशविलक्षणः परमात्मा जगत्कारणमिति सिद्धान्तः ॥

अयं भावः । सत्यं—श्रुतिर्लिङ्गात्प्रबला । अयं तु श्रुत्याभासः । समभिव्याहृतपदार्थान्तरान्वयायोग्यविषयकत्वात् ॥

एतदुक्तं भवति । द्विविधं हि लिङ्गं सामर्थ्यमित्यर्थः । शाब्दमार्थं चेति । तत्र शाब्दं श्रुतिबाध्यं, तद्धि गौणमुख्यसाधारणम् असम्भवतिमुख्ये गौणेऽपि विश्राम्यति। चरमं तु वस्तुनो द्वैरूप्यायोगात् श्रुतिबाधकं, तद्यथा 'सोमेन यजेत' 'आदित्यो यूपः' 'कृष्णलं श्रपयेत्' 'हस्तेन अवद्यति' इत्यादौ सोमयागाभेदादिः सामानाधिकरण्यादिभिः अवगम्यते ॥

न हि—तत्र श्रौतोऽपि क्रियाद्रव्ययोः अभेदः, कृष्णलानां मुख्यः पाकः, हस्तादेः अवदानसामान्याङ्गत्वं वा अङ्गीक्रियते, तत् कस्य होतोः ? वस्तुसामर्थ्यस्य अन्वयितुमशक्यत्वात् ; प्रवाहादेरिव घोषाधारत्वस्य द्रव्यक्रिययोः अभेदस्य बाधितत्वादिति चेत् तुल्यमिहापि ॥

न हि—चेतनाचेतनात्मककृत्स्नजगदुपादनाभिन्ननिमित्ततारूपं कारणत्वं प्रसिद्धवदनूद्यमानं चेतनभिन्नाकाशे घटते । घटते तु ब्रह्मणि चिदचिच्छरीरके इति वक्ष्यते । अतः 'गङ्गायां घोषः' इत्यादौ गङ्गापदमिव इह आकाशपदमपि श्रुत्याभास एवेति ।

एतत्सूचनायैव अत्र 'धर्मोपदेशात्—' इत्यनुक्त्वा 'तल्लिङ्गात्' इत्युक्तिः। लिङ्गिनि प्रमाणान्तरेण गृहीतव्याप्तिकं हि लिङ्गं भवति। अतः कृत्स्नकारणवाक्यप्रतिपन्नं सार्वज्ञ्यसर्वशक्त्यादिसापेक्षं निखिलजगदेककारणत्वं न अचेतने भूताकाशे सम्भवतीति अपशूद्राधिकारिकब्रह्मविद्योपदेशप्रकरणस्थम् 'आजहारेमाश्शूद्र' इत्यादिवचनगतं शूद्रादिपदमिव इदमपि चेतनैकान्तकारणप्रतिपादकवाक्यगतम् आकाशपदं यौगिकं सम्पत्स्यते ; आकाशते, आकाशयति वा इति।

एवं योग्यार्थश्रुतिमूलं लिङ्गम् अयोग्यार्थश्रुतितः प्रबलमिति सिद्धान्तन्यायः उक्तो भवति। यथा गङ्गाशब्दः स्वार्थसमर्पणक्षमो भूतलधर्मतया प्रत्यक्षसिद्धघोषाधिकरणत्व-लिङ्गविरोधेन अन्वयायोग्यः स्वार्थप्रतिपादनक्षमत्वाभावात् श्रुत्याभासः, एवं योग्यार्थश्रुति-मूललिङ्गापेक्षया आकाशश्रुतिः श्रुत्याभास इति।

आकाशः परमात्मेति तल्लिङ्गादिह तूच्यते।
परायणत्वसृष्ट्यादिकारणत्वविशेषणात्॥ (ब्र.प.मा)

**आकाशस्य तुच्छतानिरासः**—आकाशस्य निरुपाख्यताभङ्गः।

सौगतैः परिगणितस्य आकाशस्यापि तुच्छता प्रतिक्षिप्यते। आकाशे च निरुपाख्यता न युक्ता ; भावरूपत्वेन अभ्युपगतपृथिव्यादिवत् आकाशस्यापि अबाधित-प्रतीतिसिद्धत्वाविशेषात्। प्रतीयते हि आकाशः, 'अत्र श्येनः पतति", "अत्र गृध्रः पतति" इति श्येनादिपतनदेशत्वेन। (श्री.भा. 2-2-23)

तदेतदुक्तम् तत्त्वमुक्ताकलापे—

सद्रूपेणैव भानान्न भवति वरणाभावमात्रं विहायः
संसर्गाभावमात्रं न च भवति यतो नास्ति संसर्गिबोधः।
अत्यन्ताभावनाशावजननिरपि वा सत्सु तेष्वेव न स्युः
तादात्म्याभावसिद्धिः कथमपि च भवेत्तं तमर्थं विहाय॥ इति। (46)

अत्र केचिच्चार्वाकाः सौगताश्च प्राहुः—चत्वार्येवभूतानि। आकाशस्त्वावरणाभाव एव। स च निस्स्वभावः। तुच्छतयैव उपलम्भात्। यत्र चावरणं तत्र न आकाशः। अभित्त्वा दुर्दर्शत्वात्, भेदे तु आवरणाभावस्यैव सिद्धेः। यदि तत्र आकाशः

स्यात् निरवकाशं न किञ्चित्स्यात् । अतः घट-तदभावन्यायात् आवरणेष्वसत्त्वात् अयमावरणाभावः । तदिह शून्यधातुसंज्ञिते च निस्तत्त्वेऽपि आवरणाभावे खपुष्पादिषु तत्तच्छब्दादिवत् मिथ्याजले मृगतृष्णिकादिशब्दवच्च व्यामोहैकनिबन्धना व्योमादिशब्दाः ।

अत्र नञुपश्लेषाभावात् असद्रूपतातिरस्कारः । अत्र च तलत्व-विपुलत्व-मलिनत्वादिकम् अध्यासमन्तरेण न कथञ्चिदप्युपपद्यते । प्रतियोगिगतानां च स्मर्यमाणानां गृह्यमाणेऽस्मिन्नध्यासः । अस्ति चासौ सिद्धः ; दुःखाभावे सुखाभिमानात्, आलोकाभावे च नीलत्वबहलत्वाद्यध्यासस्य वैशेषिकादिभिः अङ्गीकारात्, शशशृङ्गं तीक्ष्णम् इत्यादिशब्दजन्याध्यासदृष्टेश्च । वदन्ति च "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति ; 'एष वन्ध्यासुतो याति' इत्यादिषु । अतो नास्त्येव नभ इति ।

तत्राह—सद्रूपेणेति ॥ अयं भावः—सर्वं हि वस्तुजातं संविद्व्यवस्थाप्यं, संविद्यते च भावरूपतयैव नभः, भावान्तरमेव अभाव इति स्थापयिष्यते । अन्यथाऽपि ब्रूमः—न अभावस्य निस्स्वभावता, अभावस्वभावतयैव तत्सिद्धेः । स्वान्यस्वभावतया सिद्धिस्तु न कस्यापि । न च स्वेन स्वभावेन सिद्धस्य परस्वभावविरहात् असत्त्वम्, अतिप्रसङ्गात् । उक्तं च न्यायभाष्ये—असच्चासदिति गृह्यमाणं तथाभूतं विद्यमानम् अविपरीतं च तत्त्वमिति । तुच्छतयैव उपलब्ध्यापि निरस्तं निस्स्वभावत्वम् ।

तुच्छता हि अभावप्रतियोगित्वम्, अभावत्वम्, वस्त्वन्तरशून्यत्वम्, अन्यद्वा किञ्चित्? न प्रथमः, स्वकालादिषु सताम् अभावप्रतियोगिनां यथाप्रमाणं तत्तत्स्वभाव विशिष्टत्वात् । न द्वितीयः, दत्तोत्तरत्वात् । न तृतीयः, ईदृशतुच्छत्वस्य स्वरूपाविरोधिनः सर्वत्र सुलभत्वात् । न चतुर्थः, अस्मन्मतविरोधिनस्त्वदिष्टस्य कस्यचित् कुतश्चित् अत्रासिद्धेः इति ।

यत्तु आवरणेषु आकाशो नास्तीति, तदसत् ; त्वदुक्तयुक्त्यैव तत्सिद्धेः । अभित्त्वा दुर्दर्शत्वं हि व्यवहितत्वात् । अत एव तत्र नास्तीति न निश्चाय्यम् ।

भित्त्वा तु प्रेक्षणे नभस्तत्र दृश्यत एव । न च अत्र आवरणाभावमात्रोपलम्भः । इह आवरणं नास्तीति साधिकरणस्य तस्य उपलम्भात् ; इह आकाश इतिवत् स्वात्मन्येव भेदोपचारात् स्यात् इति चेन्न ; बाधकाभावात् । अधिकरणानवस्थाप्रसङ्गो बाधक इति चेन्न ; आकाशादेः साधिकरणतयैवोपलम्भ इति अनभ्युपगमात् । इह आकाश इतिवदित्यत्र च आकाशशब्देन आवरणाभावविवक्षायां पक्षदृष्टान्तभेदाभावः, त्वदनभ्युपगतस्य परमतसिद्धस्य त्वया दृष्टान्तीकर्तुम् अयुक्तत्वात् । प्रतिबन्दिग्रहणमात्रम् इदमिति चेत् , न ; इह मूर्ते वस्तुनि आकाशसम्बन्ध इति प्रतीतौ विरोधाभावात् । आवरणाभावधीरपि तथैव स्यादिति चेत् , अस्त्वेवम् ; तथापि कदाचिदिह तारकेत्यादिवत् निरधिकरणतया गगनोपलम्भे तदतिरिक्तनभःसिद्धिनिषेधः । आवरणेषु निरवकाशत्वं च विशेषणराहित्यात् , आवरणरहितमेव हि आकाशमन्यद्वा किञ्चिदवकाशः, न त्वाकाशमात्रम् । आवरणेषु अविद्यमानतया तदभाव आकाश इति च अयुक्तम् ; सर्वेषां स्वस्मिन् अविद्यमानतया स्वाभावत्वप्रसङ्गात् ।

यत्तु व्योमादिशब्दाः व्यामोहैकनिबन्धना इति, तदसत् ; प्रमाणसिद्धे क्वचिद्वस्तुन्येव सर्वशब्दानां व्युत्पत्तेः, तद्विषयतयैव च व्यवहारात् ; खपुष्पादिषु तु अयोग्यसमभिव्याहारादन्यथाधीः । मृगतृष्णादिशब्दा अपि जलाध्यासाधिकरणार्हमरीचिव्यूहादिविषयाः । यद्यपि तलत्वादिकम् आकाशे अध्यस्तम्, अल्पत्वविपुलत्वादिकं तु अवच्छेदकभेदायत्तम् , तथापि सत्येव आरोपः ।

यत्तु असति दुःखाभावे सुखाध्यासोदृष्ट इति, तदर्भकवाक्यम् ; सत्येव दुःखाभावे सुखारोपात् । अभावस्य भावान्यत्वमात्रमेव हि असत्त्वं सिद्धम् ; तेन च स्वरूपसन्नेव असौ । आलोकाभावे नीलत्वाध्यासस्त्वस्मान् प्रति न उदाहर्तव्यः । अत एव अध्यस्तनैल्यमालोकाभावमात्रमेव नीलं नभः इति भातीति निरस्तम् ; आलोकदेशे च नभःप्रतीत्यनुवृत्तेः ।

ननु—अस्मदिष्टं क्षणिकत्वादिकं क्वचित्ते सिद्धमसिद्धं वा ? उभयथाऽपि कथं तत्प्रतिक्षेपः कथं वा तस्मिन् केषाञ्चित् सत्यताभ्रमं निर्वक्ष्यसि ?

इत्थम्—एतदुत्तरक्षणवृत्तित्वाभावो हि यत्र क्वचिदन्यत्र सिद्धः, स सर्वस्मिन् कुतश्चिदारोप्यते, प्रतिक्षिप्यते चेति सुस्थमेतत्। एवम् अन्यत्सर्वमपि चिन्त्यम्।

शशशृङ्गं तीक्ष्णम् इत्यादिषु च प्रमिते शशादौ शृङ्गवत्त्वारोपः, शृङ्गादौ च प्रमिते सत्यासत्या वा तीक्ष्णधीः इत्येतावत् सहृदयहृदयारूढम्; नात्रासति किञ्चिदारोप्यते। एवं अनभ्युपगमे वर्णक्रमनिर्देशवत् स्यात्। एतेन शशस्तीक्ष्णशृङ्गवान् इत्यपि निरूढम्। भूतेषु भाविषु च कथं भ्रमः? इति चेत्, कथं वर्तमानेषु? तेषां सत्त्वादिति चेन्न; स्वकालसत्त्वस्य कालान्तरासत्त्वस्य च साधारणत्वात् इति।

आवरणाभावश्च सत्योऽसत्यो वा संसर्गाभावादिविभागं न अतिक्रामेत् इतिमत्वा तत्र तत्र दूषणमाह—**संसर्गेत्यादिना**। संसर्गाभावस्तावत् निरूप्यमाणः संसर्गिनिरूप्यसंसर्गप्रतियोगिकतया अधिकरणप्रतियोगिभूतसंसर्गिबोधाभावे कथं बुध्येत? अत्यन्ताभावोऽपि संसर्गाभावभेद एव। यथा अश्वे गोत्वस्य शशे वा शृङ्गस्य। तथा च अत्र आवरणं नास्तीति साधिकरणभूताभावधीः अनिवार्या। खपुष्पवत् आवरणानाम् अत्यन्तासत्त्वे तु शून्यवादः शरणम्। वर्तमानेषु च आवरणेषु तत्प्रध्वंस-प्रागभावौ दुर्वचौ। तौ हि किम् अन्यत्र विद्यमानानाम्? उत अविद्यमानानाम्? नाद्यः; तेषां तदुभयायोगात्। न द्वितीयः, तत एव; न हि शशे शृङ्गस्य नाश-प्रागभावौ। तदिह सर्वावरणनाशादिकं दुर्वचम्; असम्भवात्। कतिपयावरणनाशादिकं च आवरणदेशेऽप्यस्तीति तत्रापि निष्क्रमणादिप्रसङ्गः। ननु संसर्गे तु विधिरेकेनापि, तन्निषेधस्तु सर्वप्रतियोगिकः तद्वदत्रापि सर्वावरणाभावे व्योमधीः स्यात्। न; असम्भवस्य उक्तत्वात्। एवं सति च संसर्गाभाव एव नामान्तरेण उच्यते; तत्र च दत्तमेवोत्तरम्।

अस्तु तर्हि आवरणतादात्म्याभावोऽसौ स्यात्। स हि असिद्धप्रतियोगिकतया स्वयमप्यसिद्धः। तदात्मनश्च आकाशस्य तुच्छत्वं युक्तमिति। तत्राह—**तादात्म्येति**। चो दूष्यसमुच्चये; श्रुत्यादिविरोधरूपदूषणसमुच्चये वा। असिद्धप्रतियोगिकत्वम् अस्य क्वचिदपि तादात्म्यपदार्थाभावाद्वा? आवरणद्वयस्य तदभावाद्वा? नाद्यः, अभावप्रतियोगित्वेन तत्कल्पनस्य असिद्धिप्रसङ्गात्। न हि क्वचित्सिद्धिमनपेक्षकस्य क्वचिदपि

कल्पना, माध्यमिकमतोत्थानप्रसङ्गात् । नोत्तरः ; संसर्गाभावस्यापि असिद्धप्रतियोगिकत्वापातात् ; न हि एतत्कालीनैतद्भूतलघटसंसर्गो निषिध्यमान इह अन्यत्र च सिद्धः । घटसंसर्गमात्रं यत्र क्वचित् सिद्धमिति चेत्, घटतादात्म्यमपि तथैव । अस्तु तर्हि उभयत्रापि असिद्धप्रतियोगिकत्वम् ; किं नश्छिन्नमिति चेत् न ; अतिप्रसङ्गस्य उक्तत्वात्, अत्यन्ताभावोऽपि असिद्धप्रतियोगिक इति पक्षश्च निरस्तः ।

तत्र तत्र स्वतादात्म्यं सिद्धमन्यत्र कल्प्यते ।
बाधकैः क्षिप्यते चेति नास्माकमिह विप्लवः ॥

सर्वत्र तादात्म्याभावः तत्तद्वस्तुनिष्ठतयैव सिध्येत् ; न तु तन्मध्यादिदेशतया । यथा मिथस्संयुक्ते वियुक्ते वा सिंहे गजान्यत्वं गजे च सिंहान्यत्वमिति । इदम् आवरणं न भवतीति तादात्म्यनिषेधश्च कस्यचिदावरणस्य वा? अनावरणस्य वा? आद्ये विरोधः । आवरणान्तरं न भवतीति विवक्षायाम् अविरोध इति चेत् ; सत्यम्, तथाऽपि न तत्राकाशप्रतीतिविषयावरणाभावसिद्धिः । द्वितीये तु आवरणान्यद्रव्यमिदङ्कारास्पदं सिध्यत्येव ।

ननु आवरणाभाव एव इदङ्कारगृहीतः आवरणतादात्म्याभावाधिकरणतया बुध्यताम्, न हि तत्तदभावयोः तादात्म्यमिति । मैवम् ; न हि आवरणतादात्म्याभावस्य आवरणान्यत्वं बुध्वा कश्चित् तत्र नभःपर्यायान् प्रयुङ्क्ते । निष्क्रमणादौ वा प्रयतत इत्यलमतिविस्तरेण । 'आकाशे चाविशेषात् इति' सूत्रभाष्ये च एतत्सर्वम् अनुसन्धेयमिति ॥ [स. सि.]

अत्रायं सङ्ग्रहः—आकाशस्तु आवरणाभाव एव । स च निस्स्वभावः, तुच्छत एवोपलम्भात् इति बहुधा वादिनं प्रति आकाशस्याभावरूपत्वे अन्योन्याभावो वा अत्यन्ताभावो वा, ध्वंसो वा, प्रागभावो वा इति विकल्प्य, सर्वत्र दोषानुद्भाव्य आकाशस्य सद्रूपेणैव भानात् भावरूपद्रव्यत्वमेव साधितम् । तदुक्त हेत्वाभासाश्च विस्तरेणादूषिषत ।

**आकाशस्य प्रत्यक्षत्वम्**—आकाशस्य चक्षुरिन्द्रियग्राह्यता ।

प्रत्यक्षं व्योम नीलं नभ इति हि मतिश्चक्षुषैवास्मदादेः
कूपोऽसौ रन्ध्रमेतत्पतति खग इहेत्यादिधीश्चात्र मानम् ।
आधारोऽत्रातपादिर्यदि भवति कथं तस्य चेहेति बोधः
तस्यांशैश्चेत् त्र्यणौ तच्छिथिलयति न च व्योमवागातपादौ ॥ (त.मु. 42)

भूतचिन्ताप्राप्तौ प्रथममाकाशे चार्वाकैरपि संमन्तव्यं प्रमाणविशेषं पुरस्करोति— **प्रत्यक्षमिति**—"**नीलं नभः**" इत्यादि । धूम्रादेः उपलक्षणमेतत् । आरोपितं नभसि तलत्वादिवन्मलिनत्वादिकमिति चेत् ; असौ आरोपः चाक्षुषोऽन्यो वा ? आद्ये अधिष्ठानमपि चाक्षुषमेष्टव्यम् , अन्यथा अतिप्रसङ्गात् । द्वितीयस्तु असम्भवी निमीलिताक्षस्य तादृशारोपादृष्टेः । अत एव अनुमिते नभसि नैल्यारोप इत्यपि निरस्तम् ।

न च नीलं नभ इति धीरेव नास्ति ; विश्वविसंवादात् । नाप्यसौ अचाक्षुषः, अस्मदादिचक्षुर्व्यापारानुविधानात् । नभसि वितताना पार्थिवावयवानां कृष्णगुणमात्रं चक्षुषा गृह्यते इति चेन्न ; नीलं नभ इति धर्मिपर्यन्तबुद्धेः, गुणिलिङ्गत्वाच्च अत्र नीलादिशब्दानाम् ; एतेन नीलरूपस्मृतिप्रमोषोऽयमिति पक्षोऽपि निरस्तः ।

ननु नभसि स्वतो नैल्याभावात् पञ्चीकृतेऽपि अस्मिन्नैल्यस्य पार्थिवांशमात्रनिष्ठत्वात् तस्मिन्नेवांशे स्यादसौ चाक्षुषधीः । मैवम् ; तस्य नभश्शब्दार्थत्वायोगात् । नीलपटन्यायस्य चात्र ग्राह्यत्वात्, बालातपसन्निधौ अरुणं नभ इत्यादिबुद्धेः । तत्रापि अरुणातपग्रहणमात्रमिति चेत् ; कस्तर्हि तत्र नभश्शब्दार्थः? न हि अनेकार्थोऽयं शब्दः, अनुवृत्तमनतिप्रसङ्गि च निमित्तं दुर्लभम् ; पृथिव्यूर्ध्वत्वादेस्तथात्वाभावात् । चन्द्रिकादिविशेषानादरेण विरलावस्थितद्रव्यमात्रं नभ इति चेन्न ; वियति विरल चन्द्रिकेत्यादिपृथग्व्यपदेशात्। वैरल्यदर्शनमपि नभःप्रत्यक्षतामन्तरेण न घटते। तत्तन्मध्यप्रदेशानां तैस्तैरस्पृष्टता हि विरलता ; तथा च मध्यदेशभूतं नभःप्रत्यक्षम् ; परस्परासंयोगमात्रं वैरल्यमिति चेन्न ; भिन्नकालेषु, गुणादिषु च विरलधीप्रसङ्गात् । वर्तमानानामासन्नदेशस्थानां द्रव्याणाम्

असंयोगो विरलतेति चेन्न । चन्द्रिकादिषु असंयुक्ततेजःकणानाम् आसन्नदेशतया नभस एव ग्राह्यत्वात् । विरलविरलतरादिबुद्धौ असंयोगाविशेषे मध्यदेशाल्पत्व-भूयस्त्वग्रहणमन्तरेण का गतिः? दूरदूरतरादिस्थितिरिति चेत्, तथापि दूरासन्नदेश-तया नभःप्रत्यक्षमेव ।

दिशस्तत्र देशत्वं स्यादिति चेत्, न, उपाध्यतिरेकिण्यामपि तस्यां प्रत्यक्षत्वस्य नभस्समानचर्चत्वात् । दीर्घेण ह्रस्वेन च स्प्रष्टुं योग्यत्वमेव दूरत्वमासन्नत्वं च । अतः नात्र प्रदेशबुद्ध्यपेक्षा इति चेन्न ; तयोः तत्तत्स्वरूपत्वे अतिप्रसङ्गात् । अतिरेके तु देशविशेषस्थित्युपलम्भमन्तरेण तदसिद्धेः ।

अत्र चाक्षुषमेव उपलम्भान्तरमपि उदाहरति—**कूपोऽसाविति** । कूपरन्ध्रादयो हि तत्तद्देशविशेषतया सर्वलोकप्रत्यक्षसिद्धाः । पत्रिणश्च पतनदेशतया नभःप्रत्यक्षयामः ।

तत्र इह प्रत्ययस्य अन्यथासिद्धिमाशङ्कते—**आधार इति** । इहेति प्रतीयमानत्व-मात्रमिह आधारत्वम् । इह नभस्यातपादिरिति व्यतिरेकनिर्देशान्नातपादिः इहशब्दार्थः स्यादिति भावः । आतपाद्यंशा एव तदाधारः इति चेत् ; न । परैः त्र्यणुकानामप्रत्यक्ष द्व्यणुकाश्रितत्वस्वीकारादंशैः इह प्रतीतिनिर्वाहस्तत्र कुण्ठितः । माभूत् स्वांशैः त्र्यणु-कानामिहेति धीः, त्र्यणुकसमुदायमिहेति निर्दिश्य प्रत्येकं तदाधेयतया उपचर्यतामित्यत्र क्लिष्टगतौ लोकव्यवहारं प्रतिपक्षयति—**न चेति** । इह नभसि त्र्यणुकम्, इह व्योम्नातपः इत्यादिव्यवहारे त्र्यणुक-तत्समुदायादिव्यतिरिक्ते कुत्रचिन्नभःपर्यायाणां प्रयोगः प्रसिद्धः । सर्वलोकप्रतीतिव्यवहारोल्लङ्घनं तु सर्वसंक्षोभकं साहसमिति भावः ।

(स. सि.)

अयं भावः —यदा उन्मीलनं चक्षुषः तदैव आकाशोऽयमिति प्रतीतेः प्रत्यक्ष-श्चायमाकाशः । नीरूपस्यापि उपलम्भानुरोधेन चाक्षुषत्वम् अङ्गीक्रियते । पञ्चीकरणेन वा व्यष्टिरूपसिद्धिः भाष्योक्ता । अतः एवं प्रकारेण रूपवत्त्वात् नभसः, ' आकाशमस्ति, श्यामम् ' इति प्रतीतिः स्वरसेति ॥

आकाशस्य प्रत्यक्षत्वे परोक्तबाधपरिहारः—

रूपस्पर्शोज्झितत्वान्न भवति गगनं दर्शनस्पर्शनार्हं
घ्राणश्रोत्रे रसज्ञाऽप्यवगमयति न द्रव्यमन्यस्त्वबाह्यम् ।
तस्मान्नाध्यक्षवेद्यं वियदिति यदि न प्रत्ययस्यापरोक्ष्यात्
पञ्चीकारेण नैल्यं पटमलिनिमवद्भाषितं वोपकुर्यात् ॥ (त.मु. 43)

आकाशस्य प्रत्यक्षत्वे परोक्तं बाधकं शङ्कते—**रूपेति** । नभो न चाक्षुषम्, रूपशून्यद्रव्यत्वात्; नापि स्पार्शनं स्पर्शशून्यद्रव्यत्वादिति हेतुद्वयविभागः । अन्येषां तु बाह्येन्द्रियाणाम् अत्र असम्भव एव । घ्राणादीनि हि स्ववेद्यगुणाश्रयमपि नावगमयन्ति, किं पुनः द्रव्यान्तरमिति भावः । मानसप्रत्यक्षमिह दूरनिरस्तम् । आत्मतद्धर्मव्यतिरिक्तेषु मनः न स्वातन्त्र्येण प्रवर्तते ।

अयं भावः—न रूपादिविरहात् चाक्षुषत्वादिहानिः, रूपादिप्रत्यक्षवत् यथादर्शनं व्यवस्थोपपत्तेः । प्रतिप्रयोगश्च—विगीतम् अस्मदादिबाह्येन्द्रियग्राह्यं; बाह्यत्वे सति अस्मदाद्यपरोक्षधीविषयत्वात्, अविगीतवत् । नात्र हेतुरसिद्धः, परिशेषप्राप्तेः । न तावत् अत्रागमिकी नभःप्रतीतिः, तदनभिज्ञानामपि सम्भवात् । नापि आनुमानिकी, सिद्धेऽपि तदनुमाने अनधिगततादृशानुमानानां नभःप्रतीतेः । तदेवम् आकाशस्य अत्र अनुमानादिविषयत्वायोगात्, आबालपण्डितम् अनुभूयमानत्वाच्च तद्बुद्धिः अपरोक्षेति सिद्धम् ।

ननु असिद्धस्य, सिद्धस्य वा नभसः प्रत्यक्षत्वसाधनम्? नाद्यः, अनुमानकथाबाह्यत्वात् । न द्वितीयः, अनुमानतः तत्सिद्धेः त्वदनभ्युपगमात्, प्रत्यक्षतः तत्सिद्धेः अस्मदनभ्युपगमादिति । मैवम्; उभयसम्मतादागमतोऽपि तत्सिद्धेः । आस्ताम् आगमः, पृथिव्याद्यतिरिक्तस्य नभःप्रतीतिविषयस्य कस्यचिदुभयसंमत्या पक्षीकारोपपत्तेः । अन्यथा कथमत्र त्वदुक्तमप्रत्यक्षत्वानुमानं जीवेत्? सर्वलोकप्रत्यक्षविरुद्धं च तत् । तथापि तत्स्वीकारे बुद्धिव्यतिरिक्ततया बाह्यार्थः सर्वोऽपि अप्रत्यक्ष इति वदन् सौत्रान्तिक

एव समर्थः स्यात् । तदेवं नीरूपस्याऽपि नभसः चाक्षुषत्वं निर्व्याघातम् । भाष्ये तु अस्य पञ्चीकरणेन रूपवत्तया चाक्षुषत्वाविरोधवचनं वैभवात् स्यात् । यथा रूपरूपिरूपैकार्थसमवेतानां चाक्षुषत्वमविशिष्टम् अङ्गीक्रियते । तथा रूपिद्रव्यसंवलितस्यापि क्वचित् स्यात् । न च अतिप्रसङ्गः, समचर्चत्वात् । न हि रूपिद्रव्यं रूपैकार्थसमवेतं वा सर्वं चक्षुर्ग्राह्यम्, योग्यतानियमस्य दुर्लङ्घत्वात् इति । (स. सि.)

नभसः प्रत्यक्षत्वं पूर्वं प्रसाधितम् । तदुपरि अनुमानमवलम्ब्य प्रत्यक्षत्वाभावं साधयन्तं वादिनं प्रति प्रत्यनुमानेन तदुक्तानुमानमदूषि । तदेवम् आबालपण्डितम् अनुभूयमानत्वाच्च तद्बुद्धेः अपरोक्षत्वे न किञ्चित् बाधकम् इति ॥

**आकाशस्यानुमेयत्वभङ्गः**—आकाशस्य अनुमानतस्सिद्धिं निराकरोति ।

शब्दस्याधारभूतं कथमपि गगनं शक्यते नानुमातुं
स्वेच्छातः पारिशेष्यक्रम इह कथितोऽतिप्रसङ्गादिदुःस्थः ।
निष्क्रान्त्यादेर्न तद्धीस्सति नभसि यतो नास्ति कुड्यादिकेऽसौ
रोधस्त्वावारकैश्चेत्तदभवनवशान्निष्क्रमादिश्च सिध्येत् ॥ (त.मु. 44)

शब्दः क्वचिदाश्रितः गुणत्वात् इत्येतावता तावन्न पृथिव्याद्यतिरिक्तशब्दाश्रयसिद्धिः ; सर्वस्य किंचिद्भावात्, परिशेषहेतूनां तु विपक्षे बाधकाभावात् ।

न हि शब्दस्य पृथिव्याद्याश्रितत्वे किञ्चिदनिष्टं स्यात् ; पुष्पादिगन्ध इतिवत् भेर्यादिशब्द इति सर्वलोकबुध्यनुविधाने कल्पना च लघ्वी । शब्दो विभुगुणो न भवति ; बाह्येन्द्रियग्राह्यगुणत्वादिति विपरीतपरिशेषस्यापि सुशकत्वात् । स्पर्शो न पृथिव्यादिधर्मः, नीरूपेन्द्रियग्राह्यत्वादित्यादिभिः पृथिव्याद्यतिरिक्तस्पर्शाधारकल्पनप्रसङ्गाच्च । आदिशब्देन विपरीतप्रसङ्गसंग्रहः ।

निष्क्रमणं प्रवेशनमित्याकाशलिङ्गमिति परोक्तं प्रतिवक्ति । यत्राकाशस्तत्र सर्वत्र निष्क्रमणादिकं न सिध्यति, आकाशव्याप्ते कुड्यादौ निष्क्रमणादेरशक्यत्वात् । न च कुड्यादिष्वाकाशो नास्तीति वाच्यम् ; तस्य सच्छिद्रत्वाभाव प्रसङ्गादिति भावः ।

सहकारिवैकल्यात्कुड्यादिषु निष्क्रमणादिकार्यप्रतिरोध इति शंकते । तु शब्दः केवलाकाशाद्विशेषद्योतकः । एवं सति निष्क्रमणादेरन्यथासिद्ध्या निर्मूलं नभःकल्पनमित्यभिप्रायेणाह **तद्भवनेति** ।

न हि निष्क्रमणादेराकाशं समवायि ; देहादिक्रियाया नभोनिष्ठत्वाभावात् । नाप्यसमवायि ; द्रव्यस्य तथात्वानभ्युपगमात्, समवायिकारणप्रत्यासन्नत्वायोगाच्च । निमित्तं तु ईश्वराद्यतिरिक्तमपूर्वमिह नापेक्ष्यमिति भावः । (स. सि.)

एवं आकाशस्य अनुमेयत्वनिरसनेन प्रत्यक्षविषयत्वमेव स्थापितम् ॥

**आकाशादीनां नित्यत्वादिनिरासः**—आकाशादीनाम् अनित्यत्व-अव्यापित्वसमर्थनम् ।

आकाशः सर्वव्यापी नित्यश्च इति वैशेषिकादयः, तान् प्रत्याह—

नित्यत्वाद्यम्बरादेर्यदि निरवयवद्रव्यताद्यैः प्रसाध्यं
क: स्याद्बाधो विपक्षे कथमिव निगमे बाधकेऽत्रानुमा स्यात् ।
बाधस्सामान्यदृष्ट्या श्रुतिसमधिगते नैव कुत्रापि शक्य-
स्तेनामूर्तत्वलिङ्गान्न सृजति त्रिमतो मूर्तमित्याद्यपास्तम् ॥ इति ॥ (त.मु. 47)

नित्यत्वं व्यापित्वं च पृथक्साध्यम् । प्रत्येकं तयोरेते हेतवः—विगीतं नित्यं विभु च निरवयवत्वे सति महत्त्वात्, सर्वदा निष्पन्दत्वे सति महत्त्वात्, सर्वदा स्पर्शरहितद्रव्यत्वात् इत्यादयः ।

एतेषां साधारणमप्रयोजकत्वम् आह—न हि एतेषाम् अनित्यत्वादौ किञ्चिदनिष्टं स्यात् । स्वाच्छन्द्येन अनिष्टकल्पने विपरीतकल्पनस्याऽपि शक्यत्वात् । अक्षोभ्यं दूषणान्तरमाह—येषु अनित्यत्वम् अविभुत्वं च सृष्ट्यादिवादैः तत्त्वान्तरावृत्तत्वादिवाक्यैश्च सिद्धम्, तेषु तद्विरुद्धसाधनम् आगमबाधितमित्यर्थः । उक्तेषु च हेतुषु निरवयवत्वादिकं पञ्चीकरणवादिशास्त्रविरुद्धम् । सर्वदा स्पर्शरहितद्रव्यत्वादिति विभुत्वसाधने अणुत्वेन श्रुतिसिद्धैः जीवैः अनैकान्त्यम्, ज्ञानासमवायिसंयोगाधारत्वं आत्ममनसोः असिद्धं च । ज्ञानद्रव्यत्वादेः वक्ष्यमाणत्वात् ज्ञानावस्थानां च आत्ममनस्संयोगासमवायिकारणकत्वाभावात् ।

किं च अत्र नित्यत्वसाधनमाकाशादिद्रव्यपक्षीकारेण वा ? आकाशत्वाद्यवस्था-पक्षीकारेण वा ? आद्ये सिद्धसाध्यता ; द्वितीये तु स्वानभ्युपगतपक्षीकारो न युक्तः । श्रुत्यैव तदङ्गीकारे तयैव बाधः । अनुमानेन श्रुतिबाधे तु हैतुकप्रलापैः श्रुतिप्रमाणस्य निश्शेषोच्छेदप्रसङ्गः ।

प्रत्यक्षविरोधरहितानन्यपरश्रुत्या यथावदधिगतेऽर्थे येन केनचित् सामान्यतो दृष्टेन बाधशङ्कायां श्रौतहिंसा न धर्मः ; हिंसात्वात् संमतवत् , विगीतमस्थि पवित्रम् अस्थित्वात् शङ्खवत् इत्यादेरपि प्रसङ्गः स्यादिति भावः । आकाशो न स्पर्शवदु-पादानम् ; स्पर्शशून्यत्वात् । एवं वाय्वादिकमपि न तेजःप्रभृत्युपादानं रूपशून्यत्वात् रसशून्यत्वात् इत्यनुमानजातं श्रुत्यादिविरोधात् अपास्तमित्यर्थः ॥ (स. सि.)

अत एव ' असम्भवस्तु सतोऽनुपपत्तेः ' (ब्र. सू. 2-3-9) इत्यत्र भगवद्भाष्य-कारैः भाषितम् । ' वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनम् उदाहरणार्थम् । उत्पत्त्य-सम्भवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः । तद्व्यतिरिक्तस्य कृत्स्नस्य अव्यक्त-महदहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्य एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिः अवगतकार्यभावस्य अनुत्पत्तिः नोपपद्यते ' इति ।

तथा निरवयवतापि असिद्धैव । व्यष्टिसृष्टिविषयतया परिदृश्यमानानाम् आकाशादीनां पञ्चीकरणवचनेन प्रदेशभेदवत्ता हि वेदान्तिभिः अभ्युपेतत्वाच्च ॥

**आकाशाधिकरणम्** (1-1-8)—

'आकाशस्तल्लिङ्गात् ' इति एकसूत्रात्मकम् आकाशपदादिमम् इदमधिकरणम् ।

पूर्वाधिकरणेषु तत्तल्लिङ्गविशेषेण जगत्कारणं वस्तु, चेतनाचेतनविलक्षणम् इति निर्णीतम् । तदसङ्गतमित्याक्षेपपरिहाराय प्रवृत्तमिदम् अधिकरणम् ।

' सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ' इत्याकाशशब्देन विशिष्याभिधानात् भूताकाश एव कारणमित्याशङ्क्य, ' सर्वाणि भूतानि ' इति सर्व-शब्दवाच्यचेतनाचेतनात्मकप्रपञ्चं प्रति आकाशस्य कारणत्वासम्भवात्, ' आसमन्तात् काशते ' इति व्युत्पत्त्या आकाशशब्दस्य परमात्मपरत्वोपपत्तेश्च आकाशशब्दवाच्यः परमात्मेति सिद्धान्तितम् ।

आकाश इत्येव विशेषनाम्ना स एव तु स्यात् जगतां निदानम् ।
प्राणोऽथवेत्येतदपाचकार भूताभिसंवेशमुखैश्च लिङ्गैः ॥ (न्या. क. सं.1-15 )

**आकाशे चाविशेषात्**—(ब्र.सू. 2-2-23)

समुदायाधिकरणे सप्तमं सूत्रम् ।

सौगतैः परिगणितस्याकाशस्यापि तुच्छता प्रतिक्षिप्यते । आकाशे तुच्छरूपता न सम्भवति, अबाधितप्रतीतिसिद्धपृथिव्यादिवत् आकाशेऽपि अबाधितप्रतीतेः अविशेषात् । प्रतीयते ह्याकाशः 'अत्र श्येनः पतति, अत्र गृध्रः पतति' इति श्येनादेः पतनदेशत्वेन ।

न हि तत्र पृथिव्यादिः तथाविधप्रत्ययविषयः ; अन्तराळे तदभावात् । नापि पृथिव्याद्यभावः ; तस्यापि भावान्तरत्वात् । पृथिव्यादिषु सत्सु प्रागभाव-ध्वंसयोः असम्भवात् ; भेदस्य च तत्तद्वस्तुगतत्वात्, अभावस्य भावान्तरानधिकरण-त्वाच्च । अत एव अत्यन्ताभावस्यापि न तद्विषयता । 'इह पृथिव्यादिः किमपि नास्ति' इत्यादौ अगतेश्च। नापि प्रभामण्डलस्य तद्विषयत्वम् । 'इह प्रभा' इत्यादावगतेः । तदवयवास्तद्विषय इति चेत्, 'इह तेजस्त्रसरेणुः' इत्यादावगतेः। अतः आकाश एव तत्प्रत्यक्षविषयः 'इह' इति प्रतीयते। तस्य च पञ्चीकरणप्रक्रियया रूपवत्त्वात् न प्रत्यक्षता-विरोधः । 'नीलं नभः' इति प्रत्ययाच्च ।

एवं बौद्धोक्तमाकाशस्य तुच्छत्वम् अनेन सूत्रेण प्रतिक्षिप्तम् ।
जगत्प्रतीतितुल्यत्वान्नाकाशस्यापि तुच्छता ।
पतत्यत्र श्येनः इति प्रतीतिर्हि न बाध्यते ॥ (ब्र.प.म

**आकाशोऽर्थान्तरत्वादिव्यपदेशात्**—(ब्र.सू. 1-3-42)

अर्थान्तरत्वादिव्यपदेशाधिकरणे प्रथमं सूत्रम् ।

आकाशः परं ब्रह्म ; न तु मुक्तात्मा कुतः ? अर्थान्तरत्वादिव्यपदेशात्—तद-सम्भावितनामरूपयोः निर्वोढृत्व-तदस्पर्शलक्षणार्थान्तरत्वव्यपदेशात् । अत्र आदिपदेन

निरुपाधिकब्रह्मत्वामृतत्वात्मत्वादीनि गृह्यन्ते । तानि निरुपाधिकानि मुक्तस्यापि न सम्भवन्ति ।

छान्दोग्ये—'आकाशो ह वै नामरूपयोर्निर्वहिता, ते यदन्तरा तद्ब्रह्म, तदमृतम् , स आत्मा' इत्यत्र आकाशशब्दनिर्दिष्टः किं मुक्तात्मा, उत परमात्मेति संशयः । मुक्तात्मा इति पूर्वःपक्षः । 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' इति मुक्तस्यानन्तरप्रकृतत्वात् ।

राद्धान्तस्तु—'नामरूपयोर्निर्वहिता ते यदन्तरा' इति स्वयमस्पृष्टनामरूपतया नाम-रूपयोः निर्वोढृत्वेन श्रूयमाणोऽयमाकाशः, बद्धमुक्तोभयावस्थात् प्रत्यगात्मनः अर्थान्तरत्वात् परमात्मैव । बद्धावस्थस्तावत् नाम-रूपाभ्यां स्पृष्टः तत्परवशश्चेति न निर्वोढा । मुक्तस्याऽपि जगद्व्यापाररहितत्वात् न निर्वोढृत्वम् ।

यत्पुनरुक्तम्—'धूत्वा शरीरम्' इति, 'मुक्तोऽनन्तरप्रकृत' इति, तन्न ; 'ब्रह्म-लोकमभिसम्भवामि'इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात् । यद्यपि अभिसम्भवितुः मुक्तस्य अभिसम्भाव्यतया परं ब्रह्म निर्दिष्टम् , तथापि अभिसम्भवितुः मुक्तस्य नामरूप-निर्वोढृत्वाद्यसम्भवात् अभिसम्भाव्यं परमेव ब्रह्म तत्र प्रत्येतव्यम् । अत्र अर्थान्तरत्व-शब्दः तदुपपादकधर्मं लक्षयति । तथा च भेदकधर्मव्यपदेशात् , आदिपदग्राह्य-निरुपाधिकब्रह्मत्व-अमृतत्वादिभिश्च आकाशः न मुक्तात्मा इति सिद्धम् ।

यद्यपि निर्वोढृत्वादिव्यपदेशात् इति वा तद्धर्मव्यपदेशादिति वा अन्यत्रेव वक्तुमुचितम् । तथापि येन लिङ्गेन मुक्तात्मपरत्वं त्वया शङ्कितं तदेव ततोऽर्थान्तरत्व-गमकमित्यभिप्रायेण इत्थमुक्तम् । तद्धि —

'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' ॥

'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इत्यादिषु परमात्मासाधारणं प्रतिपन्नम् । अतः निर्वाह्यनामरूपात् प्रत्यगात्मनो अस्य नामरूप-

निर्वाहकस्य अन्यत्वं युक्तमिति श्रुतिरेव नामरूपनिर्वोढृत्वं वदन्ती प्रत्यगात्मनो अर्थान्तरत्वम् आकाशस्य व्यपदिशति। आदिशब्दात् ब्रह्मत्वमात्मत्वममृतत्वं च गृह्यते।

यद्यपि इदमपि अर्थान्तरतागमकम्। तथाऽपि तत् अन्यत्र मुक्तात्मनि श्रुतं न निरपेक्षान्तरतागमकम्। अपि तु निरुपाधिकत्वाद्यवगमेनैव। इदं तु नामरूपनिर्वोढृत्वं ताभ्याम् अस्पृष्टत्वं च न क्वापि श्रुतम्। नापि सम्भावितम्। जगद्व्यापारवर्जनादिति दर्शयितुमेव युक्तम्।

यत्तु अर्थान्तरत्वशब्दो वैलक्षण्यपर इति केषांचित् व्याख्यानम्; तत्तु न स्वरसम्। वैलक्षण्यपदोपेक्षाहेत्वभावात्, आदिशब्दवैयर्थ्याच्च। तदपि हि वैलक्षण्यपरमेव।

शङ्करभाष्ये तु—

अत्र किमाकाशशब्दं परं ब्रह्म? उत प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो युक्तः, आकाशशब्दस्य तस्मिन् रूढत्वात् इति आशंक्य अर्थान्तरत्वादिव्यपदेशात् परं ब्रह्म इति प्रसाधितम्। 'आकाशस्तल्लिङ्गात्' इत्यस्यैव अयं प्रपञ्च इति चोक्तम्।

'आकाशशब्दम्' इत्यत्र शब्द्यते प्रतिपाद्यते इदं इति कर्मणि घञ् प्रत्यये कृते विशेष्यनिघ्नोऽयं शब्दः। अतः एवं निर्देशः योयुज्यते। शब्द्यते अनेन इति करणार्थे तु ल्युटं बाधित्वा 'पुंसि संज्ञायां घः प्रायेण' (पा.सू. 3-3-118) इति सूत्रेण घप्रत्ययान्तप्रतिपादकपरः शब्दः नित्यपुल्लिङ्ग एव॥

यद्यपि मुक्तात्मा सन्निहितः तथापि सन्निधानात् प्रकरणस्य बलीयस्त्वात्, दहराकाशस्य च प्रकृतत्वात् आकाशशब्देन तस्यैव प्रत्यभिज्ञानात्, प्रजापतिवाक्यस्य च तदुपासकस्वरूपनिरूपणेदंपरतया तच्छेषत्वेन तत्प्रकरणाविच्छेदकत्वात्, उपास्योपासकस्वरूपनिरूपणानन्तरं प्राप्यस्वरूपनिरूपणस्यानपेक्षितत्वात्, तत्प्रतिपादनसमर्थस्यास्य तत्परत्वौचित्यादाकाशशब्दप्रवृत्तिनिमित्तस्य समन्तात् प्रकाशनस्य सर्वप्रकाशके परमात्मन्येव स्वरसत्वात्, ब्रह्मात्मशब्दयोश्च तत्रैव मुख्यत्वात्, मुख्यसम्भवे गौणग्रहणस्यानौचित्यात्,

निरुपाधिकामृतत्वस्य तत्रैव युक्तत्वात् , अन्तर्यामिब्राह्मणादिषु तत्प्रसिद्धेश्च 'वैदिको वैदिकत्वेन सामान्येनोपतिष्ठते' इति साप्तमिकन्यायेन औपनिषदवाक्येषु औपनिषदप्रसिद्धिरेव 'ह वै' शब्देन स्वरसतः प्रतीतेः । तस्याश्च परमात्मन्येव सत्त्वात् । 'नामरूपयोर्निर्वहिता' इत्यत्रापि निरुपसृष्टस्य वहेः तृजन्तस्य निर्वाहकर्तरि रूढतया तदभिहितस्य नामरूपनिर्वाहकस्य 'नामरूपे व्याकरवाणि' इति नामरूपव्याकर्तृतया सिद्धे तत्रैव स्वरसत्वात् , मुक्तात्मनि च जगद्व्यापारवर्ज्ये तदसम्भवात् , बद्धे सुतरां तदसम्भवात् , तस्मिन् आकाशशब्दानुपपत्तेः, 'ते यदन्तरा' इति नामरूपासंस्पर्शस्याकर्मवश्ये तस्मिन्नेव स्वारसिकत्वात् , यच्छब्दस्य च 'तद्ब्रह्म, स आत्मा' इति तच्छब्दनिर्दिष्टवक्ष्यमाणपरतयाऽप्युपपत्तेश्च प्रधानपरस्य अभ्यर्हितत्वाच्चायमाकाशः प्रकृतान्मुक्तात्मनोऽर्थान्तरभूतः इति अर्थान्तरत्वादिव्यापदेशात् इत्यत्र प्रकृतो मुक्तात्मा भेदप्रतियोगी विवक्षितः । नामरूपनिर्वोढृत्वं हि बद्धमुक्तावस्थात् जीवात्मनः सकाश तु अस्याकाशस्य भेदं बोधयति ।

यद्यपि निर्वोढृत्वादिव्यपदेशात् इति वा तद्धर्मव्यपदेशादिति वा अन्यत्रैव वक्तुमुचितम् । तथापि येन लिङ्गेन मुक्तात्मपरत्वं त्वया शङ्कितं तदेव ततोऽर्थान्तरत्वगमकमित्यभिप्रायेण इत्थमुक्तम् । तद्धि—

'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इत्यादिषु परमात्मासाधारणं प्रतिपन्नम् । अतः निर्वाह्य नामरूपात् प्रत्यगात्मनो अस्य नामरूपनिर्वाहकस्य अन्यत्वं युक्तमिति श्रुतिरेव नामरूपनिर्वोढृत्वं वदन्ती प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्य व्यपदिशति ।

अयंभावः—आकाशाधिकरणेनैव भूताकाशस्य जगत्कारणत्वं व्यावर्तितम् । अस्यां श्रुतौ 'अश्व इव रोमाणि विधूय....ब्रह्मलोकमभिसम्भवामि' इति मुक्तात्मनिरूपणपरवाक्यसन्निधानात् इदमपि मुक्तात्मपरमेव स्यात् इति शङ्काव्यावर्तनेन प्रयोजनवत्तरमिदम् अधिकरणम् । अद्वैतिनां मते मुक्तात्मपरमात्मनोः भेदः नास्तीति तथा शङ्कानुदयात् , पूर्वस्यैव प्रपञ्च इत्युक्तम् ।

नामरूपविनिर्वोढा ह्याकाशः परमेश्वरः ।
बद्धमुक्तोभयावस्थादन्यत्वेनास्य कीर्तनात् ॥ (ब्र.प.मा.)

**आकिञ्चन्यम्**—उपायन्तरसामर्थ्याभावः ।

(नास्ति किञ्चन उपायान्तरं यस्य सः अकिञ्चनः । तद्भावः इति ष्यञ् ।)

अकिञ्चनोऽनन्यगतिः शरण्य ! त्वत्पादमूलं शरणं प्रपद्ये ॥ (स्तो.र. 22)

अनन्यसाधनोऽहम् इत्यभिप्रायेणाह—अकिञ्चन इति । यद्वा, कर्मयोगादि· हेतुभूतगुणक्रियादिसंपादनदौष्कर्याभिप्रायेण अकिञ्चनत्वोक्तिः । (स्तो भा.)

गीताविस्तरत्वात् पञ्चरात्रस्य 'अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः' इत्यहिर्बुध्न्यसंहितायाम् अकिञ्चनशब्देन 'मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तिनः' इति प्रागुक्तभक्तिशून्यत्वकथनेन न्यासाभिन्नशरणागतौ स एवाधिकारी इति बोधनेन 'सर्वधर्मान् परित्यज्य' इति अनुवादेन उक्ताधिकार एव विवक्षित इति संहितावचनेन निर्धारितं भवति । एतत् संहितावचनमेव शरणशब्दार्थे प्रमाणतया अभ्युपगच्छद्भिः एतद्वचनबलेन 'सर्वधर्मान् परित्यज्य' इत्यस्य अनुवादत्वं नैव प्रत्याख्यातुं शक्यम् । 'अकिञ्चनोऽनन्यगतिः' इति यामुनमुनिसूक्तिः एतदभिप्रायैव ॥ (गू.सं. 20)

**आकुलत्वम्**—मनःक्षोभः । (मनसः अवस्थाविशेषः)

(आकुलस्य भावः इत्यर्थे 'तस्य भावस्त्वतलौ' इति सूत्रेण त्वप्रत्ययः ।)

यः परमार्थतो भ्रान्त्या वा आध्यात्मिकादिदुःखैर्दुःखितया स्वात्मानमनुसन्धत्ते 'अहं दुःखी' इति, 'सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते । (श्री.भा. I-170)

अपुनर्भवमपोह्येत्येतत्फलितमुक्तम् **अनाकुलेति** । आगामिदुःखशङ्कया मनःक्षोभः आकुलत्वम् । (श्रु. प्र.)

**आकूतिः**—1. अभिप्रायः ।

वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिस्सङ्कल्पा मे शुध्यन्ताम् (तै.ना. 52)

मनसः काममाकूतिं वाचस्सत्यमशीमहि । (श्री. सू. 10)

अभिप्रायगतिः मनोरथपरिकल्पितोऽर्थः । (व्या)

2. मनुकन्या

स्वायम्भुवमनोः शतरूपायां पत्न्यामुत्पादिते कन्याभेदे । तत्कथा यथा—

कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ।
ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥

यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट् ।
स्त्री यासीत् शतरूपाख्या महिष्यस्य महात्मनः ॥

तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ।
स चाऽपि शतरूपायां पञ्चापत्यान्यजीजनत् ॥

प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ।
आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ॥

आकूतिं रुचये प्रादात् कर्दमाय तु मध्यमाम् ।
दक्षायादात् प्रसूतिञ्च यत आपूरितं जगत् ॥ इति ॥ (वाच)

आकृतिः—1. कर्ता (जीवः) ।

'स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयम् ।' (श्वे.उ. 6-6)

आ समन्तात् कृतिः यत्नो यस्येति; आकृतिः–कर्ता जीवः । प्रकृतिकालजीवेभ्यः परः—उत्कृष्ट इत्यर्थः । (रं.भा.)

2. संस्थानम् । अवयवसन्निवेशविशेषः ।

'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥' (गी. 15-5)

आकृतिशब्देन सुरनरतिर्यगादिसमानसंस्थानविशेषो विवक्षितः । (ता.चं.)

नामरूपविनिर्वोढा ह्याकाशः परमेश्वरः ।
बद्धमुक्तोभयावस्थादन्यत्वेनास्य कीर्तनात् ॥ (ब्र.प.मा.)

**आकिञ्चन्यम्**—उपायन्तरसामर्थ्याभावः ।

(नास्ति किञ्चन उपायान्तरं यस्य सः अकिञ्चनः । तद्भावः इति ष्यञ् ।)

अकिञ्चनोऽनन्यगतिः शरण्य ! त्वत्पादमूलं शरणं प्रपद्ये ॥ (स्तो.र. 22)

अनन्यसाधनोऽहम् इत्यभिप्रायेणाह–अकिञ्चन इति । यद्वा, कर्मयोगादि· हेतुभूतगुणक्रियादिसंपादनदौष्कर्याभिप्रायेण अकिञ्चनत्वोक्तिः । (स्तो भा.)

गीताविस्तरत्वात् पञ्चरात्रस्य 'अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः' इत्यहिर्बुध्न्यसंहितायाम् अकिञ्चनशब्देन 'मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तितः' इति प्रागुक्तभक्तिशून्यत्वकथनेन न्यासाभिन्नशरणागतौ स एवाधिकारी इति बोधनेन 'सर्वधर्मान् परित्यज्य' इति अनुवादेन उक्ताधिकार एव विवक्षित इति संहितावचनेन निर्धारितं भवति । एतत् संहितावचनमेव शरणशब्दार्थे प्रमाणतया अभ्युपगच्छद्भिः एतद्वचनबलेन 'सर्वधर्मान् परित्यज्य' इत्यस्य अनुवादत्वं नैव प्रत्याख्यातुं शक्यम् । 'अकिञ्चनोऽनन्यगतिः' इति यामुनमुनिसूक्तिः एतदभिप्रायैव ॥ (गू.सं. 20)

**आकुलत्वम्**—मनःक्षोभः । (मनसः अवस्थाविशेषः)

(आकुलस्य भावः इत्यर्थे 'तस्य भावस्त्वतलौ' इति सूत्रेण त्वप्रत्ययः ।)

यः परमार्थतो भ्रान्त्या वा आध्यात्मिकादिदुःखैर्दुःखितया स्वात्मानमनुसन्धत्ते 'अहं दुःखी' इति, 'सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते । (श्री.भा. I-170)

अपुनर्भवमपोह्येत्येतत्फलितमुक्तम् **अनाकुलेति** । आगामिदुःखशङ्कया मनःक्षोभः आकुलत्वम् । (श्रु. प्र.)

**आकूतिः**—1. अभिप्रायः ।

वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिस्सङ्कल्पामे शुध्यन्ताम् (तै.ना. 52)

मनसः काममाकूतिं वाचस्सत्यमशीमहि । (श्री. सू. 10)

अभिप्रायगतिः मनोरथपरिकल्पितोऽर्थः । (व्या)

2. मनुकन्या

स्वायम्भुवमनोः शतरूपायां पत्न्यामुत्पादिते कन्याभेदे । तत्कथा यथा—

कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ।
ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥

यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट् ।
स्त्री यासीत् शतरूपाख्या महिष्यस्य महात्मनः ॥

तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ।
स चाऽपि शतरूपायां पञ्चापत्यान्यजीजनत् ॥

प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ।
आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ॥

आकूतिं रुचये प्रादात् कर्दमाय तु मध्यमाम् ।
दक्षायादात् प्रसूतिञ्च यत आपूरितं जगत् ॥ इति ॥ (वाच)

**आकृतिः** —1. कर्ता (जीवः) ।

' स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयम् । ' (श्वे.उ. 6-6)

आ समन्तात् कृतिः यत्नो यस्येति; आकृतिः–कर्ता जीवः । प्रकृतिकालजीवेभ्यः परः—उत्कृष्ट इत्यर्थः । (रं.भा.)

2. संस्थानम् । अवयवसन्निवेशविशेषः ।

' पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ' (गी. 15-5)

आकृतिशब्देन सुरनरतिर्यगादिसमानसंस्थानविशेषो विवक्षितः । (ता.चं.)

3. तनुः ।

‘ तन्नाकर्मोत्थदिव्याकृतिजनिमहिमशासिता सर्वपुंसाम् ’ इत्यादौ आकृतिशब्दः तनुपरः । (अ.सा. 62)

4. जातिव्यञ्जिका (नैयायिकमते)

आकृतिः जातिलिङ्गाख्या (गौ.सू. 2-2-67)

जात्याकृतिव्यक्तयः पदार्थः (गौ सू. 2-2-68)

तदर्थश्च जातिलिङ्गमित्याख्या यस्याः । जातेः गोत्वादेर्हि सास्नादिसंस्थानविशेषो लिङ्गम् । तस्य च परम्परया द्रव्यवृत्तित्वम् । (व्या)

अत एवोक्तं न्यायपरिशुद्धौ—व्यक्तिर्गुणविशेषाश्रयोमूर्तिः (69), आकृतिर्जातिलिङ्गाख्या (70), समानप्रसवात्मिका जातिः (71) इति । इह तु वस्तुस्वरूपनिरूपितस्वरूपविशेषकधर्मस्वरूपनिरूपकधर्मविषयतया यथासम्भवं योज्यम् । (न्या.प. 25)

**इह त्विति** । एकैकस्यापि वस्तुनः स्वरूपनिरूपकः निरूपितस्वरूपविशेषकश्चेति धर्मद्वैविध्यमस्ति । अतः त्रयमेव स्वरूपेण सह तत्राप्यर्थः । अत्र **वस्तुस्वरूप**पदेन व्यक्तेः, **निरूपितस्वरूपविशेषकेति** आकृतेः, **स्वरूपनिरूपकधर्मेति** जातेश्च यथासंख्यं ग्रहणमपीष्टम् ।

ननु आकृतिग्रहणानन्तरं जातिग्रहणम्, तत् कथमाकृतेर्निरूपितस्वरूपविशेषणत्वमिति चेत्; उच्यते । स्वरूपनिरूपकधर्म इतरव्यावृत्त्युपयोगी प्रथमग्राह्यः । जातिरूपधर्मश्च तथा । तद्भिन्नाकाराणां निरूपितस्वरूपविशेषणत्वम् । जातित्वेन धर्मग्रहणस्याकृतिग्रहणपश्चाद्भावित्वेऽपि जातिरूपधर्मः स्वरूपतो निर्विकल्पप्रत्यक्षेऽपि सिद्धान्ते गृह्यत एवेति । वस्तुतः अंशत्रयं वाच्यमिति न नियमः । क्वचित् धर्ममात्रस्यापि वाच्यतावच्छेदकत्वसम्भवात् । तदाह—**यथासम्भवमिति** । अर्वाञ्चो मीमांसका आकृत्यधिकरणे जातिमेवाकृतित्वेन गृह्णन्तः तावन्मात्रे शब्दानां शक्तिरिति वदन्ति । अस्मन्मते धर्मविशिष्टव्यक्तिवाचित्वमेवेष्टम् । तद्विषय इवातिरिक्तजात्यभावेऽपि गौतमोऽनुकूल इत्युक्तं भवति । (व्या)

स्वेतरव्यावर्तकत्वस्य सजातीयव्यक्तिषु सौसादृश्यरूप निरूपितस्वरूपविशेषकत्वस्य च सम्भवेन आकृत्यतिरिक्ता जातिः नाङ्गीकरणीया ।

सिद्धान्ते तु संस्थानरूपजातिरेव आकृतिः ; न त्वतिरिक्ता । सावयवपदार्थेषु अवयवसन्निवेशः, आत्मसु ज्ञानं, तदितरेषु निरवयवेषु तत्तल्लक्षणमेव च संस्थानम् । अत एव भाषितम्—'संस्थानं नाम स्वासाधारणं रूपम्' इति । अत्र स्वशब्दः धीस्थपरः, रूपमपृथक्सिद्धं विशेषणम् । (अधिकन्तु संस्थानपदे) ।

**आकृतिवादः**—जातिशक्तिवादः । (मीमांसकमते)

व्यक्तेः शब्दार्थत्वे प्रलयकाले व्यक्तीनां नाशात् वैदिकशब्दानाम् अर्थशून्यत्वं स्यात् । तेन च वेदाप्रामाण्यप्रसङ्गः । अतः नित्या आकृतिरेव शब्दार्थ इति मीमांसकाः प्रतिपादयन्ति ।

सिद्धान्ते तु आकृतिविशिष्टव्यक्तावेव शक्तिः । वेदस्य नित्यता च प्रवाहतः अनादित्वमेव । अतः जातिशक्तिवादानुधावनं न प्रयोजनपर्यवसायि ॥

**आकृत्यधिकरणन्यायः**—पूर्वमीमांसान्यायविशेषः ।

किं व्यक्तिः शब्दार्थः, उत आकृतिविशिष्टा व्यक्तिः, अथवा आकृतिरेवेति पूर्वपक्षयित्वा, 'आकृतिस्तु क्रियार्थत्वात्' इति सिद्धान्तयति । तत्र पूर्वमीमांसकरीत्या व्याख्याय अकृतावेव शक्तिः इति तन्मतं प्रदर्श्य, सिद्धान्तानुरोधेन तेषां सूत्राणां जाति-विशिष्टशक्तिपरत्वमुपपादयति ।

पूर्वं लौकिकवैदिकैक्यं समर्थ्य लौकिकानां व्याकरणाद्यनुसारेण व्यक्तिपरत्वात् व्यक्तिरेवार्थ इत्याह—'प्रयोगचोदनाभावात् अर्थैकत्वमविभागादिति ।'

'गामानयति' 'गामानय', 'प्रजापतिः प्रजा असृजत' 'पशुमालभेत' इत्यादिप्रयोगाणां चोदनानाञ्च व्यक्तिविषये भावात् स एवार्थः, क्वचित् आकृतिविवक्षा-यामपि न तस्या अर्थत्वम् । अत एवार्थैकत्वम् । आकृतिप्रतीतिस्तु क्वचित् अवि-भागात् व्यक्तिसंबन्धात् स्यात् । स्थलभेदेन अर्थविभागश्च अयुक्तः; अन्याय्यत्वादनेक-

शक्तिकल्पनस्येति । आकृतिमात्रपरत्वं व्युदसितुं हेत्वन्तरमाह अद्रव्यशब्दत्वादिति । अस्यापि न तदुक्तोऽर्थः । किंतु अद्रव्यं लिङ्गसंख्यादि तद्वाचकशब्दसत्त्वात् तदर्थान्वयार्थं द्रव्यस्यापि वाच्यतया आकृतिपरत्वमयुक्तम् । अन्यथा षड्देयाः द्वादश देया इत्यादीनि निरर्थकानि स्युरिति । हेत्वन्तरञ्चाह अन्यदर्शनाच्चेति । 'यदि पशुरुपाकृतः पलायेत अन्यं तद्वर्णं तद्वयसमालभेत' इत्यादौ अन्यतदादिशब्दानामर्थवर्णनं पशुशब्दस्य जातिवाचित्वे न घटते, तज्जातीयादन्यो हि तर्हि गृह्येतेति ॥

एवं प्राप्तेऽभिधीयते—

'आकृतिस्तु क्रियार्थत्वात्' (पू.मी. 1–3–31) इति ।

यत्तावदुच्यते, न शब्दानामाकृतिवाचित्वम् । 'श्येनचितं चिन्वीत' इत्यादौ श्येनपक्ष्ययोगात् श्येनाकृतिमात्रग्रहणेऽपि व्यक्तावेव प्रयोगभूम्ना, व्याकरणवशाच्च व्यक्तावेव व्युत्पत्तिरिति ।

तत्रेदं वक्तव्यम्—'गमेर्डोः' इति गोशब्दव्युत्पत्त्या गमनकर्तृव्यक्तिपरत्वे गोजातीयभिन्नापि नरवानरादिः क्रयान्वयिनी स्यात् 'गां दद्यात्' 'गवा क्रीणाति' इत्यादौ । पूर्वपक्षिसम्मतमुख्यार्थग्रहणे वैदिकलौकिकसर्वक्रियाक्षोभोऽभिमतद्रव्यानिश्चयात् स्यात् । गमनकर्तृत्वांशाभावे गोरपि गोपदग्राह्यता न स्यात् । कर्तृत्वस्योपलक्षणत्वे व्यक्तिरूपविशेष्यमात्रार्थकत्वे चातिप्रसङ्गः परिच्छेदकाभावादर्थानिर्णयश्च स्यात् ।

अतः क्रियार्थमेवार्थपरिच्छेदकतया अवश्यमाकृतिरपेक्ष्यते । अतश्च व्युत्पत्तिनिमित्ततया गमनक्रियादौ स्वीकृतेऽपि प्रयोगनियमपरिपालनार्थं प्रवृत्तिनिमित्ततया स्वीकर्तव्या भवति आकृतिः । अत एव रूढिशक्तिरिष्यते । व्युत्पत्तिनिमित्तविरहितेपि वस्तुनि प्रयोगदर्शनात् । अतो व्युत्पत्तिबलेन पदानां पश्चात् कल्पितत्वस्य भवताप्यनंगीकारात् भूरिप्रयोगेण आकृतेरपि बोधनीयत्वात् गोशब्दादितो गमनादिरूपार्थस्य बोधे मानाभावाच्च धात्वर्थवैशिष्ट्यं न विवक्षणीयम् । अव्युत्पन्ना एव शब्दाः अर्थधारणानुकूलत्वाय व्युत्पत्तिकल्पनयाऽपि निरूप्यन्ते ।

क्वचित्, 'पद्मानि यस्याग्रसरोरुहाणि' इत्यादौ व्युत्पत्तेरावश्यकत्वात् क्वचिद्व्यङ्ग्यार्थ-पोषणादिहेतोर्व्युत्पत्तेरपि ग्रहणाय च तत्प्रदर्शनं सफलम्। तत्र विशेषणभूताकृति-मात्रविवक्षया श्येनचितमिति प्रयोगः। न पुनः सर्वथा शक्तिबलाप्रतीताया एवाकृतेः श्येनादविभागमात्रेण गङ्गाशब्देनानुपस्थिततीरग्रहणवत् ग्रहणम्, वैषम्यात्। अतो गोशब्दादेर्न गमनकर्तृत्वादि निमित्तम्; किं तु गोत्वादिकमेवेति।

एवं पूर्वपक्षसिद्धान्तयोः स्थितौ मीमांसकोक्तप्रकारः सर्वथोपेक्ष्य एव। व्यक्ति-शक्तिवादनिरसेन आकृतिमात्रशक्तिस्थापनं तच्चिकीर्षितम्। व्यक्तिशक्तिवादे एकव्यक्ति-शक्तौ व्यक्त्यन्तरे प्रयोगायोगः, सर्वव्यक्तिशक्तौ आनन्त्यम् इतीदृशदोषोद्भावनं स्वकपोल-कल्पितम्। सूत्रे तत्सूचक पदलेशस्याप्यभावात्। आकृतिं प्रवृत्तिनिमित्तीकृत्य तद्विशिष्टव्यक्तिसामान्यपरत्वे दूषणस्यानवसरः तार्किकैः प्रपञ्चित एव। प्रयोगबाहुल्यं व्याकरणं च सर्वथैव उपेक्ष्य अनुभवविप्रकृष्टं लाघवविचारं को नामाद्रियेत। मीमांसकैरेव 'गवा क्रीणाति' इति तृतीयाविभक्तिस्थले आकृतेर्द्रव्यपरिच्छेदद्वारा करणत्वेनान्वयेऽपि कर्मसंप्रदानापादानाधिकरणार्थकविभक्तिषु व्यक्तिपर्यन्तत्वविवक्षाया आवश्यकत्वमुक्तम्। परं तत् लक्षणया, न तु शक्त्येति तैरुच्यते।

भूयसांन्यायः किमिति प्रस्मर्यते। न च कुत्रापि जैमिनिर्जातिशक्तिमाह। यत्तु 'उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं' (पू. मी. 7-1-2) इति सूत्रे अङ्गानां सामान्यतो यागतदपूर्वार्थत्वम्, उत यत्किञ्चिदर्थत्वमिति विचारे सत्त्वदृष्टान्तकथनस्य व्याख्यानम् — 'गौर्न पदा स्प्रष्टव्यः' इत्यत्र गोत्वे स्पर्शनिषेधसंबन्धः; गोशब्दस्या-कृतौ शक्तेरिति तत् व्याख्यातृकल्पनमात्रम्। चतुर्थसूत्रे 'सत्त्वे लक्षण-संयोगात् सार्वत्रिकं प्रतीयेत' इत्यत्र प्रवृत्तिनिमित्तभूतलक्षणयोगात् सर्वसत्त्वग्रहणमिति गोत्वस्य लक्षणताया एवोक्तत्वात्। लक्षणसंयोगादित्यस्य व्यक्तिलक्षणाबलादिति व्याख्यानं तु कुत्सितम्। एवं 'तेषामृक् यत्रार्थवशेन पादव्यवस्था', 'गीतिषु सामाख्या' इत्यादिसूत्राद् अनेकव्यक्त्यर्थकत्वं पदस्यादुष्टमित्येव जैमिनि र्ज्ञापयतीति सुवचम्।

अन्यदप्यवधेयम्—आकृतिशब्देन सौत्रेण जातिं तार्किकेष्टां गृह्णन्ति। तदयुक्तम्; तस्या आकृतिव्यङ्ग्यत्वात् आकृतिशब्दार्थत्वाभावात्; श्येनचितमित्युदाहरणे अनन्वयाच्च न हि तत्र श्येनत्वजातिरस्ति आकृतौ सत्यां तद्व्यङ्ग्या जातिरपि स्यादेवेति चेत्–तर्हि तदाश्रयो व्यक्तिरपि स्यादेव। विकलाकृतिसद्भावात् न तदुभयमपीति तु तत्त्वम्।

बादरायणवत् जैमिनिरपि आकृतिव्यतिरिक्तां नित्यामनेकानुगतां तार्किकजातिं नेच्छतीति आकृतिपदप्रयोगादेव ज्ञायते। आकृतेरपि व्यक्तिभेदेन भेदेऽपि अर्थत्वं स्थापयन् आनन्त्यादिदोषं नाद्रियत इत्यपि ध्येयम्। शक्तपदव्यक्त्यनेकत्वेऽपि शक्त्यैक्यवत् शक्यव्यक्त्यनेकत्वेऽपि शक्त्यैक्यं सूपपादमिति न्यायकुसुमाञ्जल्युक्तमपि धर्तव्यम्। शक्तिः सविषयकपदार्थ इह। लोके ज्ञानेच्छादेः सविषयकस्याश्रयभेदेन व्यक्तिभेदेऽपि विषयभेदेन भेदो न लक्ष्यते। एकैकज्ञानादेरनेकविषयकत्वस्य संप्रतिपन्नत्वात्। अतो विषयभूतव्यक्त्यनेकत्वे शक्त्यनेकत्वमिति वार्तम्। एवं च प्रथमसिद्धान्तसूत्रं नाकृतिमात्रे शक्तिस्थापकमिति स्थितम्।

अनन्तरसूत्रम्—'न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत्' इति। अस्यैवमर्थं वर्णयन्ति—जातिमात्रशक्तिवादे व्रीहीन् प्रोक्षतीत्यादौ प्रोक्षणादि-क्रियासंबन्धो व्रीहित्वादौ अशक्यः, 'अन्यं तद्वर्णं पशुम्' इत्यत्रार्थान्तरमिष्टं न गृह्येत षड्देया इत्यादौ द्रव्ये संख्यान्वयो न सिद्ध्येदिति चेदिति। एवं व्याख्याने सूत्र-मध्यगतम् इति चेत् इति पदद्वयं व्यर्थम्।

अतोऽयमर्थः—'श्येनचितम्' त्यादौ पक्षिव्यक्तौ न क्रियायोग इति हेतोःपक्षि-व्यतिरिक्ते आकृतिरूपार्थान्तरे विधानं चेन्मन्यते, तथैव आकृतिमात्रमर्थमिष्ट्वा न द्रव्यं वाच्यतयेप्यताम्, प्रोक्षतीत्यादावाकृतौ क्रियानन्वयादर्थान्तरे द्रव्येऽन्वयकल्पनमित्यस्तु इति पूर्वपक्षः।

तत्रोत्तरम्—तदर्थत्वात् प्रयोगस्याविभाग इति। व्यक्तिग्रहणार्थत्वात् प्रयोगस्य व्याकरणादिसिद्धार्थत्यागायोगात् आकृतिव्यक्त्योरविभागात् विशिष्टमेव शब्देनोच्यते,

यथा चक्षुषा प्रमाणेन विशिष्टमेव ज्ञाप्यते ; न तत्र वैषम्यकल्पने किञ्चित् प्रमाणम्— एवमिति । तदेवं विशिष्टपरत्वमाकृत्यधिकरणार्थः । व्युत्पत्ति निमित्तमुपेक्ष्य प्रवृत्ति-निमित्ततया आकृतिस्वीकरणमत्र चिकीर्षितम् ।

यद्यपि आकृतिरवयवसंस्थानमिति सर्वत्र दुर्वचम्—अथाप्यसंभवस्थलेऽन्योधर्मः । तदुक्तं श्रीभाष्ये—आकृतिः संस्थानम् ; संस्थानं नाम स्वासाधारणो धर्म इति यथावस्तु संस्थानं वेदितव्यमिति । एवं लोकव्युत्पत्तिं जैमिनिस्थापितामाहत्य वेदान्तव्युत्पत्ति-प्रदर्शननेन शेषपूरणं बादरायणश्चकार 'शास्त्रदृष्ट्या तूपदेशः' इत्यादौ । जैमिनिरपि द्रव्यपरत्वमेव मन्यत इति 'साक्षादप्यविरोधं जैमिनिः' इत्यादौ च ज्ञायते । यूपाहव-नीयादिशब्दानामपि न संस्कारमात्रवाचित्वम् संस्काराणामपि भिन्नतयाऽनेकत्वाविशेषात्, 'यूपस्य स्वरुं करोति' तत्र 'यः प्रथमः शकलः परापतेत् स स्वरुः', 'मूलतः शाखां परिवास्योपवेषं करोति' (4-2-1, 2) इत्यादौ स्वरु-उपवेषादिशब्दानां यूपकाष्ठ-वत्सापा-करण-शाखामूलादिद्रव्यविशेषपरत्वमेव स्वरसतोऽवगम्यते ।

आख्यातस्याकृत्यधिकरणन्यायेन कृतावेव शक्तिः न तु कर्तरीत्युक्तमप्ययुक्तम् ; कृतीनामप्यानन्त्यात् शक्त्यानन्त्यप्रसंगात् । कृतित्वेन सर्वकृतिग्रहणे न दोष इति चेत्— तुल्यं गवादावपि । विशेषणग्रहाभावे विशिष्टग्रहो न भवतीति विशेषणे शक्तिरिष्यत इति चेत्—न ; विशिष्टग्रहे विशेषणग्रहणं कारणमित्यनंगीकारात् । विशिष्टग्रहो-नियमेन विशेषणविषयक एव भवतीत्येतावदेवानुभविकम् । अतः प्रत्यक्षं शाब्द-मर्थज्ञानञ्च विशिष्टविषयकमेव । अन्यथा गवादिनाम्नां गोत्वादिमात्रार्थकत्वे उद्भिच्चित्राग्निहोत्रश्येनादिनामधेयानामपि तत्तद्यागविशेषगतजातिविशेषनामधेयत्वमेव स्यात् । तस्य जातिविशेषस्यैव मुख्यार्थस्य प्रमाणबलात् स्वर्गादिकरणत्वं भवेत् । एवञ्च यागादौ नष्टेऽपि कृतिसाधितयागादिव्यक्त्युपलक्षितनित्यभूतजातित एव कालान्तर-भाविफलसंभवे कृतमपूर्वेणेति महदनिष्टं मीमांसकम्मन्यानाम् । एवं तावत् सूत्रस्वरसार्थः प्रादर्शि । इतोऽपि स्वरसेऽर्थान्तरे संभवति अस्योपेक्ष्यत्वेऽपि आकृतिमात्रशक्तिपक्षस्तु जैमिनिमतत्वेन न वक्तुं शक्यते इत्यलम् । कथं तर्हि अरुणाधिकरणे आरुण्यरूपगुण-मात्रस्य क्रियान्वयमभिसंधाय पूर्वोत्तरपक्षौ वर्तयामासेति चेत्- तथावर्तनं व्याख्यातृचेष्टितम्,

जैमिनिस्तु विशिष्टपरमाकलय्यैव प्रावर्तयदिति भगवता भाष्यकृता आनन्दमयाधिकरणे सति प्रसंगे सम्यगुपपादितमेवेति ।

किञ्च मीमांसकमते 'सोमेनयजेत' 'व्रीहिभिर्यजेत' इत्यादावपि सोमादिशब्दस्य जातिवाचितया तत्तत्क्रियान्वयायोग इत्याशंक्य परिहारार्थमप्येकमधिकरणमपेक्षितम् । अगत्या द्रव्यपरिछेदद्वाराऽन्वय इति लोकव्युत्पत्तिकालिकपरिश्रमादेव भोत्स्यत इति चेत्—नथेहपि भोत्स्यत इति गुणवाचित्वप्रयुक्तानन्वयशंकाया नैवावकाशः ॥
(श्री.भा.भू. 75-78)

अत्र मीमांसकैः—'जातावेव शक्तिः, लाघवात्' इत्यङ्गीकृत्य, आनयनादि क्रियान्वयस्तु आक्षिप्तव्यक्तिद्वारेत्युक्तम् ।

सिद्धान्ते तु—जातिविशिष्टव्यक्तावेव शक्तिः, जैमिनेरपि अत्रैव तात्पर्यमिति तदुपपादनाय मतान्तरग्रन्थानुवादपुरस्सरं राद्धान्तार्थः सप्रमाणं न्यरूपि ।

एवमेव गुणवाचकस्थलेऽप्यङ्गीकरणीयम् इत्यन्तेप्रत्यपादि । एतच्चानन्दमयाधिकरणे श्रीभाष्यकाराः 'अर्थैकत्वे द्रव्यगुणयोः'–इति सूत्रं मीमांसकरीत्या पूर्वपक्षसिद्धान्तावुपवर्ण्य जैमिनिहृदयं व्यासमतानुसारेण प्रकाशयामासुः । अत एव 'अरुणया एकाक्ष्या' इत्यत्र आरुण्यगुणविशिष्टद्रव्यस्यैव क्रयसाधनत्वं च उपापीपदन् ।

एवमेव आख्यातस्यापि कृतिविशिष्टेकर्तर्येव शक्तिः न तु कृतौ इति सिद्धम् ॥

**आकृत्यधिकरणन्यायस्य सिद्धान्ताऽविरोधः**—शरीरवाचिनां शरीरिपर्यन्तशक्त्यभावशंका-परिहारेण सिद्धान्तसमर्थनम् ।

शरीरवाचिशब्दैः आत्मबोधनं शक्तिनिबन्धनतया मुख्यमिति श्रीभाष्ये उक्तम् । तत्र आकृत्यधिकरणन्यायस्य प्रतिकूलतामाशंक्य समाधत्ते—

ननु यद्यपि शरीरवाचिशब्दाः आकृतिनयगोचराः, तथाऽपि तैः शरिरिबोधनं लाक्षणिकम्; गवादिशब्दैरपि व्यक्तिबोधनस्य लाक्षणिकत्वात् । सम्बन्धानुपपत्तिभ्यां हि लक्षणा, जातिमात्रस्य आनयनाद्यनर्हत्वाद्व्यक्तिसंबन्धाच्च, गवादिशब्दैः व्यक्तिः लक्षणया बोध्यते ; प्रयोगेऽन्यथासिद्धे शक्तिकल्पनानुपपत्तेः ।

नैवम् ; अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वात् । अन्यथा जात्यादि शब्दानामपि सम्बन्धानुपपत्त्यविशेषेण क्वचित् व्यक्तिपर्यन्तप्रयोगप्रसङ्गः। आकृतिरेव शब्दशक्तिविषयः व्यक्तिबोधस्तु अर्थसामर्थ्यात्, प्रत्यभिज्ञायां संस्कार-सचिवेन्द्रियवत् अर्थसामर्थ्यसचिवा शब्दशक्तिः विशिष्टबोधसामग्री इत्यपि न युक्तम्। जात्यादि शब्दश्रवणेऽपि विशिष्टबोधप्रसङ्गादेव । न हि सत्यां सामग्र्यां कार्यानुदय उपपद्यते ।

ननु गवादिशब्दाः जातेर्व्यक्तिपरतन्त्रतारूपम् अभिदधति, अतः तैः व्यक्ति-पर्यन्तबोधः । जात्यादिशब्दास्तु जातिस्वरूपमात्रम् । अतः तैः व्यक्तिपर्यन्त-बोधाभावः । नैवम् ; जात्यादिशब्दैः द्रव्यपारतन्त्र्याप्रतिपत्तौ द्रव्यविलक्षणतया जातिप्रतीत्यनुपपत्तेः ।

ननु न जातेर्द्रव्यप्रकारैकस्वभावत्वरूपपारतन्त्र्याबोधनं विवक्षितम् । किन्तु विशेषणान्तरान्वयकारकभावानर्हत्वरूपपारतन्त्र्याबोधनमिति । उच्यते—गवादिशब्दैः तादृक्त्वबोधनमेकपदेन विशेष्याभिधाननिबन्धनम् । न हि कुण्डली इत्युक्ते कुण्डलस्य रुचिरत्वादिविशेषणान्वयः, कुण्डलेन भूषित इतिवत् कारकभावश्च भवति । एवं च सति पारतन्त्र्याबोधनात् व्यक्त्यबोधने अभ्युपगम्यमाने अन्योन्याश्रयः स्यात् ; पारतन्त्र्याबोधनात् विशेष्याबोधनम्, तदबोधनात् पारतन्त्र्याबोधनमिति ।

किञ्च गवादिशब्दानां विशेष्यबोधनशक्तिविरहे जात्यादिशब्दानामिव पारतन्त्र्य-बोधनासामर्थ्यप्रसङ्गः । धर्मिबोधनासामर्थ्यव्यापकतया जात्यादिशब्देषु दृष्टं पारतन्त्र्य-बोधनासामर्थ्यं गवादिशब्देभ्यो निवर्तमानं स्वव्याप्यं धर्मिबोधनासामर्थ्यं कथं न निवर्त-येत्! द्रव्यांशे शक्तिर्माभूत्, जातेः व्यक्तिपारतन्त्र्यमपि गवादिशब्दाः बोधयेयुः इति न वाच्यम् ; द्रव्यांशे शक्तिविरहितैः जात्यादिशब्दैरपि द्रव्यपारतन्त्र्यबोधनप्रसङ्गात् । अतः शब्दशक्तिनिबन्धनैव गवादिशब्दैः द्रव्यप्रतीतिः ॥

किञ्च यदि जातिमात्रमेव मुख्यार्थः, तर्हि अमुख्यभूतद्रव्यपर्यन्तप्रयोगादपि जातिमात्रे गवादिशब्दानां प्रचुरप्रयोगप्रसङ्गः, मुख्यार्थगुणसम्बन्धिविषयप्रयोगादपि

मुख्यार्थे प्रचुरप्रयोगदर्शनात् । गङ्गाग्निसिंहादिशब्दानां कूलमाणवकादिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगो दृष्टः ; न तु व्यक्तिनिष्ठा गौः व्यक्तिनिष्ठो महिष इति प्रयोगः । जातिरेव मुख्यार्थश्चेत् गवादिशब्दानां जातिमात्रविषयप्रयोगे त्वतलादिनैरपेक्ष्यं च स्यात्, न हि गङ्गादिशब्दाः प्रवाहादिविषयप्रयोगे भावप्रत्ययान्ताः प्रयुज्यन्ते। प्रचुरप्रयोगाभावो भावप्रत्ययापेक्षत्वं च गवादिशब्दानां व्यक्तौ निरूढलक्षणायोगात् इति चेत्; न, प्रचुरप्रयोगानुगतिर्हि लक्षणाया निरूढिः ततश्च प्रचुरप्रयोगाभावात् प्रचुरप्रयोगाभाव इति परिहारो न घटते, प्रसङ्गस्य प्रसञ्जनीयाभावपरिहार्यत्वाभावात् । न हि अग्निमत्त्वप्रसङ्गोऽग्न्यभावात् परिह्रियते । भावप्रत्ययानपेक्षत्वप्रसङ्गश्च दुष्परिहरः ; शुक्लादिशब्दानां गुणिबोधने निरूढलक्षणाभ्युपगमेऽपि 'पटस्य शुक्ल' इति गुणमात्रपर-प्रयोगे भावप्रत्ययानपेक्षत्वदर्शनात् । शुक्लादिशब्दानां हि लुप्तमतुबर्थलक्षणा परैः अभ्युपगता, यथा समासेषु प्रातिपदिकेन अप्रयुक्तविभक्त्यर्थलक्षणेष्यते । लक्षणाया निरूढिर्नाम सर्वप्रयोगानुगतिः इति चेन्न ; गोशब्दे तदभावप्रसङ्गात्। अनुवृत्तो गोव्यवहार इति गोत्वमात्रेऽपि हि गोशब्दः क्वापि प्रयुज्यते । किञ्च सर्वप्रयोगानुगता वृत्तिः लक्षणैव न स्यात्, आकृतिविषयवृत्तिवत् ।

ननु अनन्यथासिद्धा वृत्तिः मुख्या । सत्यम् ; अनन्यथासिद्धिश्च दर्शिता, अयुतसिद्धविशेषणवाचिशब्दानां विशेष्यलक्षणासामर्थ्याभावस्य उपपादितत्वात् ॥

ननु त्वत्पक्षे धर्मिवाचिपदानां भावप्रधान निर्देशेषु मुख्यैकदेशे लक्षणाभिमता, अस्माकं तु गवादिशब्दानां व्यक्तौ लक्षणा, तत्र शक्तेः विशेषणविशेष्यगोचरत्वकल्पने भवतां गौरवं स्यात् । स्यादेव स तु नात्र दोषः लाघवेन निर्वाहायोग्यस्थले गौरवस्य दोषत्वाभावात् । लक्षणाश्रयणानुपपत्तिर्हि दर्शिता ।

किञ्च 'गामानय' इत्यादिषु व्यक्तिप्रतीतिः अर्थसामर्थ्यात् भवति चेत्, तर्हि विवक्षिताया जातेः प्रतिसम्बन्धिभूतं द्रव्यमुपसर्जनतया प्रतीयेत। ततश्च 'पुत्रः पिता' इतिवत् 'खण्डो गौरयम्' इति सामानाधिकरण्यं न स्यात् । 'पुत्रमानय' इत्यत्र ममेत्यनुक्तेऽपि अर्थवशात् विवक्षितपुत्रप्रतिसम्बन्धिपितृत्वेन प्रतीयमानो देवदत्तः पुत्रं प्रति गुणतया

प्रतीयते ; न तु विशेष्यत्वेन प्रधानतया ; तदवच्छेदार्थत्वात् तस्य । गवादिशब्देषु तु द्रव्यमेव प्रधानतया प्रतीयते । 'गङ्गायां घोषः' इत्यत्र प्रवाहस्य अविवक्षितत्वात् कूलस्य तदुपसर्जनतया प्रतीत्यभावः । 'छत्रिणो गच्छन्ति' इत्यत्र तु अच्छत्रिणां छत्रिप्रतिसम्बन्धितया प्रतीयमानत्वाभावात् छत्रिगुणभावेन प्रतीत्यभावः । अतः विवक्षितार्थप्रतिसम्बन्धितया प्रतीयमानत्वेऽपि प्रधानतया प्रतीयमानं द्रव्यं शब्दशक्त्यैव प्रतीयते । 'अयं पुत्री' इत्यत्र पुत्रिशब्देन प्रतीयमानपुत्रिवत् ।

किञ्च विशेष्यांशे शक्तिमता रूपिशब्देन रूपप्रतिपत्तिदर्शनात् तद्रहितेन रूपशब्देन विशेष्यप्रतिपत्तिदर्शनाभावाच्च । शब्दविशेषोपश्लिष्टविशेष्यप्रतीतिः अन्वयव्यतिरेकाभ्यां शब्दशक्तिनिबन्धनेत्यध्यवसीयते । अतः गवादिशब्दानां विशेष्यबोधकत्वं शक्तिनिबन्धनम् ।

ननु व्यक्तीनाम् आनन्त्यात् ताभिः सम्बन्धग्रहोऽनुपपन्नः । एकस्यां व्यक्तौ शब्दवाच्यताव्युत्पत्तिश्चेत् व्यक्त्यन्तरस्य गोशब्दवाच्यत्वं न स्यात् । नैवम् ; 'यत्र जातिः तत्रायं शब्दः' इत्येवंरूपत्वात् व्युत्पत्तेः । अतः वाच्यतानिमित्तस्य एकत्वात् प्रत्येकव्युत्पत्त्यनपेक्षा, युगपत् सर्वव्यक्तीनां वाच्यताव्युत्पत्तिः एकैकव्यक्तौ वाच्यतानिमित्तस्य पुष्कलत्वात् एकैकव्यक्तेः वाच्यत्वसिद्धिश्च घटते ।

कथम् अनन्तानां व्यक्तीनां बुद्धौ आरोपणं शक्यम्? इति चेत्, व्यक्तीनां शब्दवाच्यत्वं प्रतिषेधता त्वया व्यक्तयः प्रतिपन्नाः न वा? न चेत् तासु शब्दवाच्यत्वनिषेधः अनुपपन्नः । 'लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते' । प्रतिपन्नाश्चेत् किं कतिपयव्यक्तयः प्रतिपन्नाः उत सर्वाः? प्रथमे सर्वव्यक्तीनां शब्दवाच्यत्वनिषेधायोगः, द्वितीये त्वमिव सर्वे सर्वा व्यक्तीः प्रतिपद्येरन् व्युत्पद्येरंश्च । अतः गवादिशब्दाः स्वशक्त्यैव व्यक्तिबोधकाः, तद्वच्छरीरवाचिशब्दानामपि स्वशक्त्यैव शरीरिपर्यन्तबोधकत्वं सिद्धम् ॥ (श्रु. प्र. I-2-67-69)

जातिगुणयोरिव अपृथक्सिद्धानां द्रव्याणामपि शरीरभावेन विशेषणत्वेन 'गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोः मुख्यमेव

दृष्टचरम् । जातिगुणयोरपि द्रव्यप्रकारत्वमेव 'खण्डो गौ:', 'शुक्ल: पट:' इति सामानाधिकरण्यनिबन्धनम् । मनुष्यत्वादिविशिष्टपिण्डानामपि आत्मन: प्रकारतयैव पदार्थत्वात् 'मनुष्य: पुरुषष्षण्डो योषिदात्मा जात: ' इति समानाधिकरण्यं सर्वत्रानुगतमिति नियतप्रकारत्वमेव सामानाधिकरण्यनिबन्धनम् ; न परस्परव्यावृत्ता जात्यादय: ।

तथा च जातिगुणवाचकवत् शरीरवाचकस्यापि विशेष्यपर्यन्तत्वं प्रदर्शितन्यायेन प्रासाधि ॥

## आकृत्यधिकरणांशाधिकरणयोरैकरस्यम्—

'आकृतिस्तु क्रियार्थत्वात्' (पू. मी. 1-3-33)

'व्यक्ति: व्रीह्यादिशब्दार्थ आकृतिर्वा क्रियान्वयात् ।
व्यक्ति: व्युत्पत्तिवेलायामाकृत्या सोपलक्ष्यते ॥'

इत्युक्तदिशा जातिवाचकस्य व्यक्तिपर्यन्तमिव शरीरवाचकानामपि शरीरिपर्यन्तं शक्तिरेवेति न्यायद्वयस्य सामञ्जस्यम् ।

आकृत्यधिकरणे हि जातिगुणवाचकपदानां द्रव्यपर्यन्तत्वं व्यवस्थापितम् । तत्र जातिवाचकत्वं गुणवाचकत्वं वा मिथ: व्यभिचारेण प्रयोजकमिति वक्तुं न शक्यते इति अनुगतप्रयोजकपरीक्षायाम् अयुतसिद्धविशेषणवाचकत्वं प्रयोजकमिति आकृत्यधिकरणसिद्धोऽर्थ: ।

इमं च न्यायं मनसिकृत्वा 'अंशो नानाव्यापदेशात् अन्यथा चापि दाशकितवादित्वमधीयत एके' (ब्र.सू. 2-3-42) इति सूत्रं प्रवृत्तम् । तत्र हि जीवपरयो: विशेषणविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशा: प्रवर्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्वम् आश्रित्य मुख्यत्वेन उपपद्यन्ते इति सिद्धान्त: कृत: । अस्य च सिद्धान्तस्य आकृत्यधिकरणन्याय एव मूलम् । शरीरवाचकपदानामपि लोकवेदयो: आत्मपर्यन्तत्वेन प्रयोगप्राचुर्यात् अपृथक्सिद्धविशेषणवाचकत्वं विशेष्यपर्यन्तताप्रयोजकमिति निर्णय: ।

एतेन अंशाधिकरणेन निर्णीतेन न्यायेन सर्वेषां श्रुतिवाक्यानां सौहार्द प्रदर्श्यते सिद्धान्ते। परेषां सिद्धान्तेषु चतुर्षु बहुविधो विरोधः। अतः तान् विरोधान् प्रदर्श्य प्रागुक्तं मुख्यत्वम् उपपादयितुम् उपक्रमते। (द.उ. 412)

भेदश्रुतिघटकश्रुत्यविरोधार्थं 'तत्त्वमसि' इति वाक्यसामानाधिकरण्यं शरीर-शरीरिभावेन उपपादनीयम्। शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधानं जातिगुण-पदयोः व्यक्तिगुणिपर्यन्ताभिधानवत् सम्भवतीति आकृत्यधिकरणन्यायेन उपपिपादयिषुः शरीरवाचिशब्दानाम् आकृत्यधिकरणन्यायविषयतानिरूपणरूपस्य 'अंशो नाना व्यपदे-शात्' इति अधिकरणस्य पूर्वपक्षभूतेषु अर्थेषु दूषणमाह — निर्विशेषेत्यादिना।

'निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः स्वाभाविकौपाधिकभेदवादिनः यादवभास्कराः, केवलभेदवादिनश्च स्वनिष्ठभेदवादिवैशेषिकादयः, वैयधिकरण्येन सामा-नाधिकरण्येन च ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः। एकस्मिन् वस्तुनि कस्य तादात्म्यम् उपदिश्यते? तस्यैव इति चेत्, तत् स्ववाक्येनैव अवगतमिति न तादात्म्यो-पदेशावसेयमस्ति किञ्चित्। कल्पितभेदनिरसनमिति चेत् तत्तु न सामानाधिकरण्य-तादात्म्योपदेशावसेयम् इत्युक्तम्। सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत्। भेदाभेदवादे तु ब्रह्मण्येव उपाधिसंसर्गात् तत्प्रयुक्ताः जीवगताः दोषाः (ब्रह्मण्येव) प्रादुःष्युः इति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः। स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणवत् दोषाश्च स्वाभाविका भवेयुः इति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव। केवलभेदवादिनां च अत्यन्तभिन्नयोः केनाऽपि प्रकारेण ऐक्यासम्भ-वादेव ब्रह्मात्मभावोपदेशाः न सम्भवन्तीति सर्ववेदान्तपरित्यागः स्यात्—इति।

सिद्धान्तमाह—जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोः मुख्यमेव दृष्टचरम्—इति।

जातिगुणयोरपि हि द्रव्यप्रकारत्वमेव 'खण्डो गौः, शुक्लः पटः' इति सामानाधिकरण्यनिबन्धनम्। मनुष्यत्वादिविशिष्टपिण्डानामपि आत्मनः प्रकारतयैव पदार्थत्वात् 'मनुष्यः पुरुषः षण्डो योषिदात्मा जातः' इति सामानाधिकरण्यं सर्वत्र अनुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम्, न परस्परव्याप्तृता जात्यादयः। स्वनिष्ठानामेव हि द्रव्याणां कदाचित् क्वचित् द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः; 'दण्डी, कुण्डली' इति; न पृथक् प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम्। तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव।

यदि 'गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः' इत्यत्र 'खण्डो मुण्डो गौः, शुक्लः पटः, कृष्णः पटः' इति जातिगुणवत् आत्मप्रकारत्वं मनुष्यादिशरीराणाम् इष्यते; तर्हि जातिव्यक्त्योरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सहप्रतिपत्तिः स्यात्। न चैवं दृश्यते।

न हि नियमेन गोत्वादिवत् आत्माश्रयतयैव आत्मना सह मनुष्यादिशरीरं पश्यन्ति। अतः मनुष्य आत्मेति सामानाधिकरण्यं लाक्षणिकमेव। नैतदेवम्, मनुष्यादिशरीराणामपि आत्मैकाश्रयत्वं तदेकप्रयोजनत्वं तत्प्रकारत्वञ्च जात्यादितुल्यम्। आत्मैकाश्रयत्वम् आत्मविश्लेषे शरीरस्य विनाशात् अवगम्यते। आत्मैकप्रयोजनत्वञ्च तत्तत्कर्मफलभोगार्थतयैव सद्भावात्। तत्प्रकारत्वमपि 'देवो मनुष्यः' इति आत्मविशेषणतयैव प्रतीतेः। एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः। एतत्स्वभावविरहादेव दण्डकुण्डलादीनां विशेषणत्वे 'दण्डी' 'कुण्डली' इति मत्वर्थीयप्रत्ययः। देवमनुष्यादिपिण्डानाम् आत्मैकाश्रयत्व-तदेकप्रयोजनत्व-तत्प्रकारत्वस्वभावात् 'देवो मनुष्य आत्मा' इति लोकवेदयोः सामानाधिकरण्येन व्यवहारः। जातिव्यक्त्योः नियमेन सहप्रतीतिः, उभयोः चाक्षुषत्वात्। आत्मनस्तु अचाक्षुषत्वात् चक्षुषा शरीरग्रहणवेलायाम् आत्मा न गृह्यते। पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मावोचः; जात्यादिवत् तदेकाश्रयत्व-तदेकप्रयोजनत्व-तद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात्। सहोपलम्भनियमस्तु एकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम्।

यथा चक्षुषा पृथिव्यादेः गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते, एवं चक्षुषा गृह्यमाणं शरीरम् आत्मप्रकारैकस्वभावमपि न तथा गृह्यते ; आत्मग्रहणे चक्षुषः सामर्थ्याभावात् । न एतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः । तत्प्रकार-तैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम् । आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति ।

ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति न आत्मपर्यन्तता शरीरशब्दस्य । नैवम् ; आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणात् निष्कर्षकशब्दोऽयम् । यथा—गोत्वम्, शुक्लत्वम्, आकृतिः, गुणः, इत्यादिशब्दाः । अतः गवादिशब्दवत् देवमनुष्यादिशब्दाः आत्मपर्यन्ताः । (श्री.भा. I-2-66)

यत्र अपृथक्सिद्धविशेषणत्वं तत्र विशेष्येण सहधीनियमः जात्यादिषु दृष्टः । प्रकृते व्यापकनिवृत्त्या शरीरिणि देवमनुष्यादिव्यवहारः लाक्षणिक इत्याशङ्क्य गङ्गापदादौ अनुगताकारादर्शनेन लाक्षणिकत्वाभ्युपगमेऽपि तादृशाकारदर्शनेन प्रकृते सम्भवति मुख्यत्वे क्वचिदमुख्यताकल्पनं विनिगमनाविरहात् अनुचितमिति समाधत्ते—**यदि गौरश्व इति । तत्प्रकारत्वं चेति** । पृथगवस्थितत्वेन अप्रतिपन्नत्वं च इत्यर्थः । **जात्यादितुल्यमिति** । मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजका-पृथक्सिद्धविशेषणत्वे प्रयोजकं तुल्यमित्यर्थः । तत्प्रकारत्वमपीति । पृथक्स्थितत्व-प्रतीत्यभावोऽपीत्यर्थः । **एतत्** निरुक्तं रूपत्रयम् ।

अपृथक्सिद्धविशेषणत्वसहधीनियमयोः व्याप्तिः एकसामग्रीवेद्यत्वरूपोपाधि-दुष्टेत्याह—**जातिव्यक्त्योर्नियमेनेति** । एकसामाग्रीवेद्यत्वमेव अपृथक्सिद्धविशेषणत्वे प्रयोजकं स्यात् इति आशङ्क्य प्रागुक्तयुक्त्या परिहरति—**पृथग्ग्रहणेति** । **प्रकारतैक-स्वरूपत्वमिति** । प्रकारत्वमेव स्वरूपं धर्मो यस्य इति बहुव्रीहिः । निरुक्तव्याप्तेः व्यभिचारमप्याह—**यथा चक्षुषा पृथिव्यादेरिति** । अबाधितं व्यवहारं तत्र प्रमाणयति—**आत्मप्रकारतयेति** ।

'शरीरवाचकशब्दत्वं यत्र तत्र शरीरिपर्यन्तत्वम्' इत्यत्र निष्कर्षकभिन्नत्वेन शब्दो विशेषणीय इति शङ्कासमाधानाभ्यां सूचयति—**ननु च शाब्देपीति** ।

निष्कर्षकशब्देष्वपि केचिद्वैवक्षिकनिष्कर्षकाः। केचित् नियतनिष्कर्षकाः। आद्याः शुक्लनीलात्मादिशब्दाः। अनन्तराः जातिगोत्वशरीरादिशब्दाः। प्रयोगाधीना तु इयं व्यवस्था। **अयमर्थ इति**। सर्वस्य शरीरत्वेऽपि तत्प्रयुक्तदोषानवकाशादिकं तत्र निरूपितमिति भावः। स्वरूपैक्यपरत्वेन पराभिमतं सूत्रं वाक्यं च व्याचष्टे—**इदमेवेति**। 'अहमित्येव परमात्मानमुपासीत' इत्यर्थः। तत्र अस्मच्छब्दः अन्तर्यामिपरमात्मपर्यन्त इति भावः। (द.उ. 412-414)

अतः एतावता-प्रबन्धेन आकृत्यधिकरण-अंशाधिकरणयोः विशिष्टपरता बादरायणाभिमतेति प्रत्यपादि। आकृत्यधिकरणे तावत् अपृथक्सिद्धप्रकारभूत-जातिगुण-वाचकयोः व्यक्तिपर्यन्तता, अंशाधिकरणे तु तथैव अपृथक्सिद्धभूतशरीरवाचिनां आत्मपर्यन्तं शक्तिः इति हि भिदा॥

**आकृत्यधिकरणारुणाधिकरणयोः प्रतिपाद्यभेदः**—

आकृत्यधिकरणे गुणवाचि शुक्लादिपदानां जातिवाचि गवादिशब्दवत् द्रव्य-पर्यन्तत्वं निर्णीतम्। 'आक्षिप्तद्रव्ये गुणजातीति' हि टीकाकारः।

तत्र च अत्र च को विशेषः? इति चेत्—एकैकप्रातिपदिकार्थनिरूपणम् आकृत्यधिकरणे; अरुणाधिकरणे तु, अनेकप्रातिपदिकस्थसमानविभक्त्यर्थनिरूपणमिति भेदः। (श्रु प्र. 1-1-13)

तदेतदानन्दमयाधिकरणे भाषितम्-यद्येकहायन्याः क्रयसम्बन्धवत् अरुणिम-सम्बन्धोऽपि वाक्यावसेयः स्यात्; तदा वाक्यस्य अर्थद्वयविधानं स्यात्। न च एतदस्ति, 'अरुणया' इति पदेनैव अरुणिमविशिष्टद्रव्यमभिहितम्। एकहायनीपदसामानाधिकरण्येन तस्य एकहायनीत्वमात्रम् अवगम्यते; न गुणसम्बन्धः। विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् एकस्मिन् अर्थे वृत्तिः सामानाधिकरण्यम्' इति हि सामानाधिकरण्यलक्षणम्।

यत्तु, उपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीति 'अरुणया' इति पदेन केवलगुणस्यैव अभिधानमिति। तन्नोपपद्यते; लोक-वेदयोः द्रव्यवाचिपदसामानाधिकरणस्य

गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात् । उपात्तद्रव्यकवाक्यस्थं गुणपदं केवल गुणाभिधायीत्यपि असङ्गतम् । 'पटः शुक्लः' इत्यादिषु उपात्तद्रव्यकेऽपि गुणविशिष्टस्यैव अभिधानात् । 'पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिः असमानविभक्ति-निर्देशकृता ; न पुनः उपात्तद्रव्यकत्वकृता । तत्रैव 'पटस्य शुक्लो भागः' इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते इति ॥

**आक्रमः**—1. आश्रयः (पुण्य-पापरूपः) (आशयः)

आक्रामति अनेन इत्यर्थे 'पुंसि संज्ञायां घः प्रायेण' (पा.सू. 3-3-118) इति सूत्रेण घप्रत्ययः । आशय इति पाठे तु आशेते अनेनेति व्युत्पत्तिः ।

अथ यथाक्रमोऽयं परलोकस्थाने भवति, तमाक्रममाक्रम्योभयान् पाप्मन आनन्दाँश्च पश्यति ॥ (बृ. उ. 6-3-9)

आक्रामत्यनेनेत्याक्रमः अश्रयः (अशयः) पुण्यपापरूपः । यादृक्पुण्यपापरूपा-क्रमविशिष्टस्सन् परलोके सुखदुःखे अनुभवति, तमेव तादृशमेव पुण्यपापलक्षण-माक्रममाक्रम्य अथ तदा स्वप्ने प्रतिकूलान् अनुकूलाँश्च उभयविधान् पदार्थान् पश्यति । (रं. भा.)

**आक्रान्**—आक्रान्तवान्, व्यापकः (परमात्मा) ।

(क्रमेः ण्विप्रत्यये (कर्तरि) मो नो धातोः इति नत्वे, उपधावृद्धिश्च ।)

'आक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजा भुवनस्य राजा' । (तै. ना. 51)

समुद्रः—सम्यक् उद्भवति उत्पद्यते जगत् अस्मादिति समुद्रः, जगत्का-रणम् । प्रजाः जनयन् । भुवनस्य राजा—रक्षिता । आक्रान्—आक्रान्तवान्, व्यापकः इत्यर्थः । (रं. भा)

**आक्षेपः**—1. अर्थापत्तिः ।

आङ्पूर्वकक्षिपधातोः 'घञ्' प्रत्ययः ।

**आखणम्**—मृत्तिण्ड: ।

(आङ्पूर्वक खनधातोः कर्मणि घप्रत्ययः ।)

'यथाऽश्मानमाखणमृत्वा विध्वंसते, एवं हैव स विध्वंसते, य एवंविदि पापं कामयते, यश्चैनमभिदासति ; स एषोऽश्माखण: ।' (छां.उ. 1-2-8)

'आखन्यत इति आखणं मृत्पिण्ड: । यथा—मृत्पिण्डोऽश्मानं प्राप्य विध्वस्तो भवति, एवम्' इति व्यासार्यैः व्याख्यातम् । आखणमिति छान्दसं णत्वम्, नपुंसकत्वं च ।

स एषः एतद्विद्यानिष्ठे पापकामः अश्माखणः अश्मप्राप्ताखण इत्यर्थः । एतेन 'खनो घ च' इति घप्रत्ययस्य, 'करणाधिकरणयोः' इत्युनुवृत्त्या कर्मणि अभावात्, करणार्थ एव घप्रत्ययो वक्तव्यः । अतः आखणशब्दस्य अश्मविशेषणत्वमेव वक्तव्यम् । 'खननसाधनतया दृढमश्मानं प्राप्य, यथा लोष्टादिकं ध्वंसते' इति हि तस्यार्थः ।

अत एव—'स एषोऽश्माखणः' इति वाक्यशेषे अश्मविशेषणत्वमेव आखणस्य श्रूयते—इति शङ्का अपास्ता । वाजसनेयके समानप्रकरणे—'यथाऽश्मानमृत्वा, लोष्टो विध्वंसते' इति श्रवणेन तत्समानार्थत्वस्य वक्तव्यतया आखणशब्दस्य लोष्टवाचित्वस्यैव उचितत्वात् । बहुलग्रहणेन कर्मण्यपि घप्रत्ययस्य उपपत्तेः । इतरथा कर्तृवाचि-पदाध्याहारप्रसङ्गात् । 'स एषोऽश्माखणः' इत्यत्र अश्माखणशब्दस्य समस्तस्य अश्मप्राप्ताखणवाचित्वेन, अश्मशब्दसामानाधिकरण्येन आखणशब्दस्य अश्मविशेषणत्वा-भावात् । पूर्ववाक्ये नपुंसकलिङ्गनिर्दिष्टस्यापि 'स एष' इतिपुल्लिङ्गसामानाधिकरण्येन आखणशब्दस्य पुल्लिङ्गत्वोपपत्तेश्च इति द्रष्टव्यम् । (रं. भा.)

**आख्यातम्**—तिङन्तम् (मतभेदेन तिङ् च) ।

इदमष्टपदं व्यासे समासे षट्पदं विदुः ।
वाक्यं पञ्चपदैर्युक्तमित्याख्यातप्रधानकम् ॥ (र.त्र.सा. III–377)

द्वयमन्त्रे समस्तपदत्व-भिन्नपदत्वपक्षभेदेन षट्पदत्वाष्टपदत्वे अनुसन्धेये इत्याह— **इदमष्टपदमिति** । **व्यासे**–समासाभावे 'श्रीमन्, नारायण' इति सम्बुद्धिद्वयाश्रयणपक्ष

इत्यर्थः । **पञ्चदैर्युक्तम्**—स्थूलयोजनायां पञ्चपदैः सुबन्तपदैः पञ्चभिरन्वितम् । **आख्यातप्रधानकम्**—तिङन्तप्रधानकं वाक्यम्, व्यासेऽष्टपदं समासे षट्पदं विदुः इत्यन्वयः। (सा. वि.)

आख्यातपदेन तिङन्तं तिङ् वा अभिधीयते इति मतभेदः वर्तते ।

मीमांसकानां मते आख्यातार्थः भावना इति व्यवहारेण आख्यातपदं तिङ्परमेव ।

नैयायिकमतेऽपि आख्यातार्थः (तिङर्थः) कृतिः इति अभिधानात् तिङेवाख्यातार्थः ।

वैयाकरणमते तावत् तिङः कर्तरि कर्मणि भावे च । 'आख्यातमाख्यातेन क्रियासातत्ये' इति वार्तिकानुरोधात् 'भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि' इति निरुक्तोक्तेश्चाख्यातपदेन तिङन्तमुच्यते । तत्र तिङन्तपदेनोपस्थितार्थे तिङर्थस्य कर्त्रादेः धातुवाच्यक्रियायां विशेषणता इति धातुवाच्यक्रियायाः एव प्राधान्यम् । तथा च 'भावप्रधानमाख्यातम्' इत्यत्र भावो नाम धातुवाच्यक्रिया, सैव तिङन्त पदवाच्यार्थे विशेष्यम् इत्यर्थः ।

नैयायिकास्तु तिङर्थकृत्याश्रयकर्तृविशेष्यतयाबोधमाहुः ॥

**आख्यान-उपाख्याने**—पूर्ववृत्तकथाविशेषौ ।

(आख्यायते इति भावे ल्युट् ।)

'आख्यानानि शंसन्ति····मनुर्वैवस्वतो राजा' इति श्रूयते । (श्री.भा. 3-4-23)

'आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ।
पुराणसंहितां चक्रे पुराणार्थविशारदः ॥' (वि.पु. 3-6-15)

**आख्यानम्**—भारतेतिहासादिः । **उपाख्यानानि**—तत्प्रसक्ताः ऋभुनिदाघकथादयः । (वि. चि.)

स्वयंदृष्टार्थकथनं प्राहुराख्यानकं बुधाः ।
श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते ॥ (श्रीध)

प्रबन्धेप्रधानप्रतिपाद्यमानकथा । यथा—भारते पाण्डववृत्तान्तः, रामायणे रामवृत्तान्तः। तेषु प्रतिपाद्यमानाः अन्याः कथाः उपाख्यानमिति व्यवह्रियन्ते। (सं.अ.)

**आख्यायिका**—उपलब्धार्थकथाविशेषः ।

उक्तार्थदृढीकरणार्थं दृष्टान्ततया प्रतिपाद्यमानकथा । (सं. अ.)

'आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम्' इत्यमरः, 'इतिहासः पुरावृत्तम्' इति च ॥

**आगन्तूनामन्ते निवेशः**—न्यायविशेषः ।

अर्चिरादिमार्गे अर्चिराद्यातिवाहिकानां मध्ये वरुणेन्द्रप्रजापतीनां कुत्र निवेशः? इति संशये, 'तटितोऽधिवरुणः सम्बन्धात्' इति सूत्रेण वरुणस्तावत् विद्युदुपरिष्टात् निवेशयितव्यः । मेघोदरवर्तित्वात् विद्युनः वरुणेन सम्बन्धः लोक-वेदयोः प्रसिद्धः ।

एतदुक्तं भवति—वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्ये सति पाठ-क्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधिवरुणः निवेशयितव्यः । ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते । तस्य च व्यवधानसहत्वात्, इन्द्रादेश्च उपदिष्टस्य अवश्यं निवेशयितव्यस्य वरुणादुपरि इन्द्रप्रजापतिपाठक्रमात् प्रबलविशेषाभावाच्च, आगन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरि इन्द्रादिः निवेशयितव्य इति । (श्री.भा. 4-3-3)

अत एव लोकेऽपि एकस्यां श्रेण्यामुपविष्टेषु केषुचित् अनन्तरमागन्तूनाम् अन्ते एव निवेशः दरीदृश्यते ॥

**आगमः**—1. वेदः ।

'आगच्छन्ति विदन्ति अनेन' इत्यर्थे आगम इति। अत्र करणार्थे बहुलग्रहणात् घप्रत्ययः । अत्र गत्यर्थानां ज्ञानार्थकत्वम् इत्युक्तेः धातुः ज्ञानार्थकः । योगरूढोऽयम् । 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्' इति । (महाभाष्यम्)

2. पौरुषेयः पाञ्चरात्रादिः ।

(पाञ्चरात्रादितन्त्राणामुपाङ्गमध्ये परिगणिते धर्मशास्त्रे एवान्तर्भावः ।)

पाञ्चरात्र वैखानसभेदेन द्विविधः । आगम-दिव्य-तन्त्र-तन्त्रान्तरसिद्धान्तभेद-भिन्नस्य श्रीपाञ्चरात्रागमस्य क्वचिदपि वेदविरोधाभावात् कार्त्स्न्येन प्रामाण्यम् । एवं वैखानसागमस्यापि । [एतत् भगवद्यामुनमुनिविरचिते आगमप्रामाण्ये सम्यङ्न्यरूपि]
(य. दी 30)

प्रकृते खलु आगमपदस्यार्थः कः ? इति जिज्ञासायां तत्प्रतिद्वन्द्विभूतं निगमपदं धियमधिरोहति बहुशास्त्रपरिचयवताम् । तस्य च निगमपदस्यार्थः कः ? इति जिज्ञासायाम् ऋग्वेदभाष्यभूमिकायां यास्कनिरुक्तग्रन्थप्रयोजनवर्णनावसरे श्रीमान् माधवाचार्यः प्राहैवम्—'निगमशब्दो वेदवाची', यास्केन तत्र तत्र 'निगमो भवति' इत्येवं वेदवाक्यानाम् अवतारितवान् । तस्मिन् निगम एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयेऽस्मिन् काण्डे उपदिष्टत्वात्, तस्य काण्डस्य नैगमत्वम् ' इति ।

ततश्च पौरुषेयापौरुषेयभेदेन निगमागमव्यवहारो मुख्यः । अत एवोच्यते प्रमाणनयतत्त्वालोकालङ्कारे देवसूरिभिः (4-1) 'आप्तवचनादाविर्भूतमर्थविशेषसंवेदनम् आगमः' । उपचारादाप्तवचनं च —

'आगमो ह्याप्तवचनमाप्तिं दोषक्षयं विदुः ।
क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात्' ॥ इति ॥

तथा—सांख्यसप्ततिव्याख्यायां जयमङ्गलायाम्—

स्वकर्मणाऽभियुक्तो यो रागद्वेषविवर्जितः ।
निर्वैरः पूजितस्सद्भिः आप्तो ज्ञेयस्स तादृशः ॥ इति ॥

आप्तः क्षीणदोष इति । शब्दकल्पद्रुमे तु एवमुदाहृतम्—

सृष्टिश्च प्रलयश्चैव देवतानां तथाऽर्चनम् ।
साधनं चैवमन्त्राणां पुरश्चरणमेव च ॥

षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः ।
सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः ॥ इति ॥

आगमशब्दनिर्वचनमपि पौष्करसंहितागतं श्रीभाष्ये पाञ्चरात्रनये समुदाहृतम्—

कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपासते ।
क्रमागतैः स्वसंज्ञाभिः ब्राह्मणैरागमं तु तत् ॥ इति ॥

अयमर्थः—यत्र चातुरात्म्योपासनं स्वसंज्ञाभिः नमश्शब्दाद्युपेतैः तत्तत् व्यूहनामभिः क्रमागतैः कर्तव्यत्वेन प्रतिपाद्यते स आगम इति । अत एव आगमशास्त्रप्रवर्तकस्य सङ्कर्षणस्य 'आगम' इति संज्ञा मूलश्रुतिसिद्धेति सहस्रनामभाष्ये भाषितमस्ति । (कर्तव्यत्वेन इत्यादिवचनं आगमशब्दनिर्वचनपरम् । स्वसंज्ञाभिः नमश्शब्दाद्युपेतैः तत्तत् व्यूहनामभिः इत्यर्थः । क्रमागतैः—उपास्यं वस्तु प्रतिपादनात् शास्त्रस्य आगमत्वमिति श्लोकार्थः ।)

ततश्च एवमवधारयामः—अनादेः कालात् निगमविरुद्धप्रस्थाननिष्ठैः सौगतार्हतादिभिः आगमसंप्रदायः समाश्रितः । ततश्च निगमसंप्रदायनिष्ठैरपि निगमानुकूल्येन सकलजनश्रेयःकामनया आगमसंप्रदायः प्रवर्तित इति ।

ततश्च वैदिकागमः अवैदिकागम इति विभागः परिनिष्पन्नः । तथापि केचित् विद्याधीराः निगमसंरक्षणाय आगममात्रस्य अप्रामाण्यं साधयन्ति ।

निगमानुकूल्यमेव स्मर्यतेऽपि च वाराहे पुराणे—

वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ।
प्राप्योऽहं नान्यथा प्राप्यः वर्षलक्षशतैरपि ॥ इति ॥

3. शास्त्रम्—

आगमपदं शास्त्रमात्रे मन्वादिभिः प्रयुज्यते । यथा—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ इति ॥

हरिरप्याह—

प्रज्ञाविवेकं लभते विभिन्नागमदर्शनैः ।
अनुपासितवृद्धानां विद्या नातिप्रसीदति ॥ इति ॥

अत्र आगमपदं शास्त्रपरिमिति भावः । (द. उ. 489-491)

4. तन्त्रमन्त्रयन्त्रशिल्पानां मेलनमेव आगमः ।

1. वेदशास्त्रमन्त्रादिः ।

यथा—आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यादौ ।

आगमलक्षणं च प्रामाणिकैः इत्थमुच्यते—

सिद्धं सिद्धैः प्रमाणैस्तु हितं वात्र परत्र वा ।
आगमः शास्त्रमाप्तानाम् आप्तास्तत्त्वार्थवेदिनः ॥ इति ॥

2. उत्पत्तिः ।

यथा—'आगमापायिनो नित्याः' इत्यादौ ।

3. वैयाकरणसम्मतः 'अट्' इत्यादिः ।

4. साक्षिपूर्वकं लिखितं पत्रम् ।

5. स्वत्वहेतुः (स्वत्वोत्पत्तिहेतुः) प्रतिग्रहक्रयादिः । (न्या. को.)

**आगमप्रभेदाः**— शैवागमवैष्णवागमादयः ।

तदेतदुक्तं पराशरमाधवीये—

शैवं च वैष्णवं शाक्तं सौरं वैनायकं तथा ।
स्कान्दं च भक्तिमार्गस्य दर्शनानि षडेव हि ॥ इति ॥

शवागमवैष्णवागमयोरिदं वैलक्षण्यम्—वैष्णवागमनिष्ठाः वेदान्तमूलः वेदान्तानुगुणः वैष्णवागम इति स्थापयन्ति । शैवागमनिष्ठास्तु वेदान्तवत् शैवागमः स्वतन्त्रप्रमाणभूतः वेदान्तवदीश्वरप्रोक्तत्वात्, वेदान्तसिद्धान्तो भिन्नः, शैवसिद्धान्तश्च भिन्नः। वेदान्तसिद्धान्ते

ब्रह्मण एव उपादानत्वं निमित्तत्वं च। शैवसिद्धान्ते तु ब्रह्मपदवाच्यस्य परमशिवस्य निमित्तत्वमात्रमिति। भोजदेवप्रणीततत्त्वप्रकाशव्याख्यायाम् अघोरशिवाचार्यः एवं कथयति—'शैवदर्शनं तु वेदान्तवासनावद्भिः विद्वद्भिः व्याकुलीकृतम्' इति।

अपि च सर्ववैदिकसंप्रदायविरुद्धं वेदान्तानां पौरुषेयत्वं शैवसिद्धान्ते स्वीक्रियते। नैवं वैष्णवागमनिष्ठाः मन्यन्ते। अत एव श्रीकण्ठभाष्यव्याख्यायां शिवार्कमणिदीपिकायाम् अप्पयदीक्षिताः शैवागमानामप्यभिन्ननिमित्तोपादान एव तात्पर्यमिति सन्धिं कुर्वन्ति। बादरायणसूत्रं शाकरादिभाष्यं च शैवागमानां निमित्तमात्रवाद एव तात्पर्यमित्यनूद्य खण्डयति शैवसिद्धान्तम्। एवं श्रीकण्ठाचार्येणापि स्वीयभाष्ये सन्धिं कर्तुं शिवविष्ण्वोरैक्यं प्रदर्शितम्—'विष्णुशिवयोः उपादाननिमित्तयोः अवस्थाभेदमन्तरेण स्वरूपभेदो नास्ति' इति॥ (द. उ. 496-497)

**आगमसिद्धान्तादयः**—पाञ्चरात्रेषु आगमसिद्धान्त-मन्त्रसिद्धान्त-तन्त्रसिद्धान्त तन्त्रान्तरसिद्धान्तभेदेन चत्वारः भेदाः।

तच्चतुर्धा स्थितं शास्त्रमृगादिवदनेकधा।
एकैकं भिद्यते तन्त्रं शाखाभेदेन भूयसा॥
प्रथमं मन्त्रसिद्धान्तं द्वितीयं चागमाह्वयम्।
तृतीयं तन्त्रसिद्धान्तं तुर्यं तन्त्रान्तरं भवेत्॥ इति पाद्मवचनम्।

तदेतत् 'महतो वेदवृक्षस्य मूलभूतो महानयम्' इत्याद्युक्तानन्तशाखाश्रय ऋगादिस्कन्धभिदुरनिगमतरुमूलभागोपबृंहणरूपं स्वमूलनिगमभागभेदात् ऋगादिवदेव चतुर्धावतिष्ठते—आगमसिद्धान्तः, मन्त्रसिद्धान्तः, तन्त्रसिद्धान्तः, तन्त्रान्तरसिद्धान्तः इति।

चत्वारश्चैते सिद्धान्ता ऋगादिवदेव शाखाभेदैः अवान्तरतन्त्रैर्भिद्यन्ते। तत्र यथा ऋगादयो वेदभेदाः तत्तच्छाखाभेदाश्च पूर्वपूर्वपरिग्रहानुसारेण व्यवतिष्ठन्ते, पुत्रादिभिश्च परिगृह्यन्ते, तथा सिद्धान्तभेदास्तदवान्तरभेदाश्च प्रथनपरिग्रहानुसारेण व्यवतिष्ठन्ते।

यथा च वाचनिकातिरिक्ते वेदान्तरशाखान्तरसूत्रान्तरसङ्करे दोषः, तथेह सिद्धान्तसङ्करे तन्त्रसङ्करे प्रत्येकतन्त्रान्तःप्रातिनियतवैकल्पिकधर्मादिसङ्करे च । असंकीर्णा चेयं व्यवस्था प्रमाणसहकृतपारंपर्यपर्यालोचनया व्यवस्थाप्या । इदं च गर्भाधानादिदाहान्तसंस्कारान्तर-सेवनात् भागवतानामब्राह्मण्यं पूर्वपक्षिणा प्रसञ्जितं परिहरद्भिर्भगवद्यामुनमुनिभिरर्थतः समर्थितम्—'यदेते वंशपरंपरया वाजसनेयशाखामधीयानाः कात्यायनादिगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान् कुर्वते । ये पुनः सावित्र्यनुवचनप्रभृतित्रयीधर्मत्यागेन एकायन-श्रुतिविहितानेव चत्वारिंशत्संस्कारान् कुर्वते ; तेऽपि स्वशाखागृह्योक्तमर्थं यथावदनुतिष्ठ-माना न शाखान्तरीयकर्माननुष्ठानात् ब्राह्मण्यात् प्रच्यवन्ते, अन्येषामपि परशाखाविहित-कर्माननुष्ठाननिमित्ताब्राह्मण्यप्रसङ्गात् । सर्वत्र हि जातिचरणगोत्राधिकारादिव्यवस्थिता एव समाचारा उपलभ्यन्ते । यद्यपि सर्वशाखाप्रत्ययमेकं कर्म, तथापि परस्परविलक्ष-णाधिकारिसम्बद्धा धर्मा न क्वचित् समुच्चीयन्ते । विलक्षणाश्च त्रयीविहितस्वर्गपुत्रादि-विषयोपभोगसाधनैन्द्राग्नेयादिकर्माधिकारिभ्यो द्विजेभ्यः त्रय्यन्तैकायनश्रुतिविहित-विज्ञानाभिगमनोपादानेज्याप्रभृतिभगवत्प्राप्त्येकोपायकर्माधिकारिणो मुमुक्षवो ब्राह्मणा इति नोभयेषामप्यन्योन्यशाखाविहितकर्माननुष्ठानमब्राह्मण्यमापादयति । यथा चैकायन-शाखायाः अपौरुषेयत्वं तथा काश्मीरागमप्रामाण्य एव प्रपञ्चितमिति नेह प्रस्तूयते । प्रकृतानां तु भागवतानां सावित्र्यनुवचनादि त्रयीधर्मसम्बन्धस्य स्फुटतरमुपलब्धिः, न तत्त्यागनिमित्तव्रात्यत्वादिमन्देहं सहते' इति । (श्री. पां. र. 3,4)

एषां चतुर्णामपि परब्रह्मभूतवासुदेवप्रापकत्वादपवर्गार्थिभिर्मोक्षोपायोपदेशप्रदेशेषु 'विकल्पोऽविशिष्टफलत्वात्' इति न्यायेन सदक्षरदहरमधुभूमवैश्वानरशाण्डिल्यनाचि-केतोपकोसलप्रतर्दनसंवर्गान्तरादित्यानन्दमयविद्यादिष्विव वैकल्पिकः परिग्रहः । ब्रह्मस्वरूपनिरूपकधर्मव्यतिरिक्तानां तत्तद्विद्याप्रतिनियतगुणानां यथा विद्यासु परस्परमनु-पसंहारः, तथाऽत्रापीति ; प्रत्येकं प्रतिनियतानां प्रक्रियाणां परस्परासङ्करेण प्रयोगःसिद्धः । यत्र तु मधुविद्यादौ वसुपदप्राप्त्यादिपूर्वकब्रह्मप्राप्त्यादिवत् परम्परया वासुदेवप्राप्तिरभि-धीयते, तत्रापि तत्तदर्वाचीनपूर्वव्यवहितपरप्राप्तिकामानामधिकारः इति व्यवस्था ।

तदभिप्रायेण चोक्तं भाष्ये–'तद्धि वासुदेवाख्यं परं ब्रह्म संपूर्णषाड्गुण्यवपुस्सूक्ष्मव्यूह-विभवभेदभिन्नं यथाधिकारं भक्तिज्ञानपूर्वेण कर्मणा अभ्यर्चितं सम्यक् प्राप्यते, विभवार्चनात् व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यते इति वदन्ति' इति। अतः चतुर्णामप्यनपवर्गे तात्पर्यम्। फलान्तरसाधनवचनस्य अन्यार्थत्वं स्वयमेवोक्तम्–'प्रत्ययार्थं च मोक्षस्य सिद्धयस्संप्रकीर्तिताः' इति। एवं चतुर्णामपि मोक्षप्रदत्वे हि त्रय्यन्तसारोपबृंहणरूपत्वमपि समञ्जसं भवति। पाद्मे चर्यापादे चतुर्णामेतेषां परस्पर-विभागसिद्धान्तसङ्करे तन्त्रसङ्करे च दोषः प्रपञ्चितः। (पां. र. 3-9)

चतुर्धा भेदभिन्नोऽयं पञ्चरात्राख्य आगमः।
पूर्वमागमसिद्धान्तं द्वितीयं मन्त्रसंज्ञितम्॥
तृतीयं तन्त्रमित्युक्तमन्यत्तन्त्रान्तरं भवेत्।
आद्यं नित्योदितव्यूहस्थापनादिप्रकाशकम्॥
अपौरुषेयं सद्ब्रह्म वासुदेवाख्ययाजिनाम्।
लक्ष्यभूतं द्विजेन्द्राणां हृदिस्थमधिकारिणाम्॥
ब्रह्मोपनिषदाख्यञ्च दिव्यमन्त्रक्रियान्वितम्।
विवेकदं परंशास्त्रम् अनिच्छातोऽपवर्गदम्॥
एवं नित्योदिताख्यस्य नित्याकारस्य च प्रभोः।
वासुदेवाभिधानस्य षाड्गुण्यादिगुणोदधेः॥
प्रथमं लक्षणं विद्धि हृदयाद्यङ्गशब्दवत्।
एतदागमसिद्धान्तं श्रुतिरूपं तु विद्धि तत्॥ (ईश्वरसंहिता 21-52,57)

अधिकारिभेदेन पाञ्चरात्रागमे सिद्धान्तभेदाः भवन्ति। आगमसिद्धान्तः, मन्त्रसिद्धान्तः, तन्त्रसिद्धान्तः, तन्त्रान्तरसिद्धान्तश्चेति। ते चत्वारसिद्धान्ता एव स्वयंव्यक्त-दैव, सैद्ध, आर्ष इति च उच्यन्ते पारमेश्वरसंहितायाम्। प्रतिष्ठाध्याये श्रीकरसंहितायां प्रागुक्तस्य सिद्धान्तचतुष्टयस्य वेदसिद्धान्तः, दिव्यसिद्धान्तः तन्त्र-सिद्धान्तः, पुराणसिद्धान्तश्चेति नामान्तराणि च उच्यन्ते॥

**आगमस्य स्वातन्त्र्यम्**—वेदस्य अलौकिकविषये निरपेक्षप्रमाणत्वम् ।

स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्राक्षसिद्धि-
र्नाध्यक्षेणाप्रतीतेर्न पुनरनुमया व्याप्तिलिङ्गाद्यसिद्धेः ॥ (त.मु. 11)

साधक बाधकप्रमाणाभावे विशिष्टार्थबोधनसामर्थ्यमागमस्य स्वाच्छन्द्यम् । आगम इह श्रुतिस्मृतीतिहासादिः । कारणदोषबाधकप्रत्ययविरहात् अस्मदाद्यतीन्द्रियविषयं शास्त्रमपि प्रत्यक्षवच्छ्रद्धेयमिति ॥ (स.सि.)

अत एव सूत्रितम् ' श्रुतेस्तु शब्दमूलत्वात् ' इति । एतेन प्रकृतिमहदहङ्कारादिविचित्रसृष्टिक्रमः प्रमाणान्तरेणागम्य इति शङ्का वारिता । आगमस्यैव सर्वस्वतन्त्रत्वात् ॥

**आगमाभासाः**—आगमवत् भासमानवाक्यानि ।

सापराधैः पुरुषैः प्रणीतानि वाक्यानि आगमाभासाः । भ्रमविप्रलम्भप्रमादाशक्तयश्च प्रमातॄणामपराधाः ।

तत्र भ्रममूलः आगमाभासो यथा—' पतति गुरुत्वान्नित्यं पृथ्वी '–इत्यादिः आर्हतादीनामुपदेशः ।

विप्रलम्भमूलो यथा—' अयसः काञ्चनत्वादिवत् आचण्डालं संस्कारविशेषवशात् ब्राह्मणत्वादिसिद्धिः'–इति कापालिकादीनाम् ।

प्रमादमूलो यथा—व्यासङ्गादिदशाविक्षिप्तचेतसां प्रामाणिकानां स्वपक्षपरपक्षसंस्काराद्युपदेशः ।

अशक्तिमूलो यथा—तत्त्वविदामृजूनाम् अवहितानामपि अपटुकरणत्वादिवशादक्षरादिविपर्यासवान् व्यवहारः । सोऽपि हि श्रोतुरर्थान्तरभ्रमादिहेतुत्वात् आगमाभासः ।

एवम् अधिकृतशास्त्रविरोधे अनधिकृतशास्त्रमतत्परमिति तत्परं योजयतां वाक्यमपि। क्वचिद्धि किञ्चिच्छास्त्रमधिकरोति । यथा—शुभाशुभकालेषु ज्योतिषम् , श्रौतानुष्ठानक्रमे कल्पसूत्राणि, आचारेषु धर्मशास्त्राणि, सर्गप्रतिसर्गादिषु पुराणानि, चिदचिद्विवेकमात्रे सांख्यम् , साङ्गसमाधिस्वरूपे योगः, अधिकारिविशेषनियतानन्यभजनप्रस्थाने पञ्चरात्रम् ;

वास्तुविभागादिषु शिल्पविद्यादयः, पथ्यापथ्यद्रव्यविभागादिषु आयुर्धनगान्धर्ववेदादयः इति । तेषु अधिकृतशास्त्रविरोधे अनधिकृतं शास्त्रम् अन्यपरं नेतव्यम् । तदेव तत्परं ब्रुवाणः आगमाभासेन निगृह्येत । अत एव हि सांख्यादेः क्वचिदंशे परिग्रहोऽपरिग्रहश्च।

न च—

'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः' ॥

इत्यादिभिः सांख्ययोगपाशुपतानामपि यथोक्ततात्पर्येण कृत्स्नप्रामाण्यं शङ्क्यम्; अत्यन्तातीन्द्रियार्थविषयतया हेतुहन्तव्यत्वमात्रनिषेधात् श्रुतिहन्तव्यत्वमपि निषिद्धं स्यात्; अतुल्यबलयोः विरोधे हीनस्य निग्रहावश्यंभावात् । पौरुषेयापौरुषेयविरोधे पौरुषेयं हीयते । पौरुषेयेष्वपि परिग्रहादितारतम्यात् परस्परबलाबलव्यवस्था; परिग्रहादिसाम्येऽपि ऐदम्पर्यान्यपर्याभ्यामर्थतत्त्वव्यवस्था—इति ।

लौकिकेष्वपि पित्रादिवाक्यं प्रमाणम्, कुहकादिवाक्यम् अप्रमाणम् इति स्थिते क्वचित् क्वचिदंशे गुणदोषसम्भावनया दृष्टम् अन्यथात्वम् । सन्दिग्धप्रामाण्येष्वपि वाक्येषु आगमाभासत्वमेव; याथार्थ्येऽपि प्रत्ययजनकत्वाभावात् । तदर्थं हि पुरुषः प्रमाणमुपादत्ते । अन्यथा भ्रान्तविप्रलम्भकादिवाक्यानामपि यादृच्छिकार्थसम्भावनया प्रामाण्यप्रसङ्गः । न च तथा लौकिकाः परीक्षका वा प्रतियन्ति ।

वेदार्थसङ्ग्रहे चैव भाष्यकारैः प्रदर्शितम् ।
न च प्रजापशुपतिप्रभृतेर्नास्ति विभ्रमः ॥

मेधाविभ्रंशतत्सिद्ध्योः
एषां व्यासेन साधनात् ।
'त्वं हि रुद्र महाबाहो
मोहशास्त्राणि कारय' ॥

'अल्पायासं दर्शयित्वा फलं शीघ्रं प्रदर्शय ।
अहं मोहं करिष्यामि यो जनं मोहयिष्यति' ॥

इत्थं भगवदादेशात् युक्ता चैषां प्रतारणा ।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥
इत्यादिभिः स्यादेतेषां प्रमादाशक्तिसम्भवः ।
अतः प्रत्यक्षवेदादेः सत्प्रतिग्रहशालिनः ।
विरुद्धमीश्वरवचोऽप्यागमाभास एव नः ॥ इति । (न्या.प. 226-227)

प्रत्यक्ष-श्रुतिसूत्रेतिहासादिविरुद्धवाक्यसामान्यं आगमाभास एव इतिभावः ॥

**आगमोत्थं ज्ञानम्**—शास्त्रजन्यं परोक्षज्ञानम् ।

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ।
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥ (वि. पु. 6-5-60)

'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति, परा चैवापरा च' इति । ब्रह्मप्रेप्सुना 'द्वे विद्ये वेदितव्ये'—ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः । तत्र परोक्षं शास्त्रजन्यं ज्ञानम्, अपरोक्षं योगजन्यं ज्ञानम् । तयोः ब्रह्म-प्राप्त्युपायभूतमपरोक्षंज्ञानम् । तच्च भक्तिरूपापन्नम्, 'यमेवैष वृणुते तेन लभ्यः' इति अत्रैव विशेष्यमाणत्वात्; तदुपायश्च आगमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः ।

आह च भागवान् पराशरः—तत्प्राप्तिहेतुरित्यादिना । 'तत्रापरा ऋग्वेदो यजुर्वेदः' इत्यादिना 'धर्मशास्त्राणि' इत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम् । साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात् । 'अथ परा यया तदक्षरमधिगम्यते' इति उपासनाख्यं ब्रह्मसाक्षात्कारलक्षणभक्तिरूपापन्नं ज्ञानम् । (श्री.भा. 1-2-23)

'द्वे विद्ये' इति विद्याद्वयं भिन्नविषयत्वेन इतरैः व्याख्यातम् । तत्र कैश्चित् परविद्या परमात्मविषया अर्थान्तरविषया चापरविद्येति। कैश्चित् कर्मज्ञानमपरविद्या, ब्रह्मज्ञानं

परविद्येति उक्तम् । कैश्चित् अपरमार्थज्ञानमपरविद्या, परमात्मज्ञानं परविद्येत्युक्तम् । तद्व्यावृत्त्यर्थं व्याचष्टे—**ब्रह्मप्रेप्सुनेति** । ब्रह्मैव विषयश्चेत्, द्वयोरपि को भेदः इत्यत्राह—**परोक्षापरोक्षरूपे** इति । 'स तपोऽतप्यत', 'ओदनपाकं पचति' इतिवत् 'द्वे विद्ये वेदितव्ये' इत्युक्तिः । तत्र फलितमाह—**उपादेये इत्यर्थः** इति । किं परोक्षम्, किमपरोक्षमित्यत्राह—**तत्रैति** । ब्रह्मैव विषयश्चेत् प्रथमेनैवालमित्यत्राह—**तयोरिति** । उपायभूतम्—अव्यवहितोपायभूतम् । तस्यापि निष्फलत्वमत्रत्य वाक्येनावगम्यत इत्यत्राह—**तच्च भक्तिरूपेति** । तर्हि किं प्रथमेनेत्यत्राह—**तदुपायश्चेति** । साधनसप्तकं शास्त्रजन्यज्ञानं चोभयमप्युपासनात्मकज्ञानस्य हेतुरिति यावत् । अत्र श्रुतौ 'द्वे विद्ये वेदितव्ये परा चैवापरा च' इत्यारभ्य, 'तत्रापरा ऋग्वेदः' इत्यादिना शास्त्रजन्यज्ञानस्यैव अपरविद्यात्वमुपपाद्य 'अथ परा यया तदक्षरमधिगम्यते' इत्यादिना ब्रह्मप्राप्तेः, अव्यवहित उपायभूतोपासनात्मकविद्यायाः परत्वं प्रतिपादितम् ।

एतेन उपासनस्य अपरविद्यात्वं तत्त्वमसीति वाक्यजन्यापरोक्षस्यैव परविद्यात्वम् इति विभागस्य अनवकाशः सूचितः ॥

**आग्नीध्रः**—स्थानविशेषस्थितः ऋत्विक् ।

'आग्नीध्रः प्रत्याश्रवयेत् । एतद्वै यज्ञस्य अपराजितं यदाग्नीध्रम्' ।
(तै. सं. 6-3-1)

अग्निमिन्धे अग्नीत् । ऋत्विग्विशेषोऽयम् । इन्धेः क्विप् । 'अनिदिताम्' इति नलोपः । तस्य स्थानमाग्नीध्रम् । सोमे महावेदे उत्तरार्धे पञ्चारत्निचतुरश्रस्थान-विशेषसंज्ञेयम् । तात्स्थ्यात् सोऽप्याग्नीध्रः । 'अग्नीध्रः शरणे रण् भत्वं च' इति वार्तिकेन आग्नीध्रम् इति रूपसिद्धिः । भत्वात् न जश्त्वम् ।

'आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते' इत्यमरः ॥

**आग्नीध्रीयः**—अग्निविशेषः ।

अग्निस्थाने 'गार्हपत्याद्वा आग्नीध्रीयमागच्छति' इति श्रुतिः । आग्नीध्रस्य इदम् इत्यर्थे 'वृद्धाच्छः' इति छप्रत्ययः । आग्नीध्रसम्बन्धिनीत्यर्थः ॥

**आग्रयणम्**—शरदि कर्तव्यः इष्टिविशेषः ।

'यस्याग्निहोत्रमपौर्णमासमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमान् तस्य लोकान् हिनस्ति ।' (मु.उ. 1-2-3)

अन्नसंस्कारार्थं शरत्कालकर्तव्य आग्रयणाख्यइष्टिविशेषः । (रं. भा.)

**आङ्गिरसः**—1. मुख्यप्राणः ।

(अङ्गिरसः अयं इत्यर्थे अण् प्रत्ययः ।)

'अयमास्येऽन्तरिति । सोऽयास्य आङ्गिरसः । अङ्गानां हि रसः' ॥

(बृ. उ 3-3-8)

अन्तरास्येऽयमिति प्रत्यक्षतो दृष्टो यः प्राणः सोऽयास्यः आङ्गिरसोऽङ्गानां हि रसः । अङ्गानां प्राणो हि रसः, अतः आङ्गिरस इत्यर्थः ॥ (रं. भा.)

2. अङ्गिरगोत्रः कश्चन ऋषिः । गोत्रापत्ये अण् ।

**आचरणम्**—सञ्चारणसाधनं शकटम् ।

(आचरति सञ्चरति अनेन इति करणे ल्युट् ।)

'स यथा प्रयोग्य आचरणे युक्तः, एवमेवायमस्मिन् शरीरे प्राणो युक्तः ।'

(छां. उ. 8-12-3)

यथा आचरणे शकटे प्रयोग्यः युग्यः अश्वो बलीवर्दो वा पाशेन युक्तो भवति ; एवमेवाऽयं प्राणसहचारी प्रत्यगात्मा संसारदशायां कर्मपाशवशेन युक्तो भवति । अनेन युग्यशकटदृष्टान्तेन देहात्मव्यतिरेको दृढीभवति । (रं. भा.)

**आचारः**—1. शिष्टानामनुष्ठानम् ।

(अत्र चरधातोः भावे घञ्)

'आचारदर्शनात्' । (ब्र. सू. 3-4-3)

'आचारप्रभवो धर्मः' । (भा. आ. 235-17)

'श्रुति-स्मृतिविहितकर्मानुष्ठानयोग्यतापादकं सन्ध्यावन्दनादिकम् ।'

आचारवत एव पुण्यकर्मसु अधिकारः, सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु, आचारहीनं न पुनन्ति वेदाः इत्यादिवचनेभ्यः ॥

2. शुद्धिः । (शास्त्रविहिता)

तदुक्तम् अभियुक्तैः—

न चाचारं विनाकिञ्चित्कैङ्कर्यमुपपद्यते ।
न हि शौचमकृत्वाहि समाराधनमर्हति ॥ इति ॥

द्विविधानामिन्द्रियाणां मनो-बुद्ध्योश्च वर्ष्मणाम् ।
द्रव्यदेशक्रियाणां च शुद्धिराचार उच्यते ॥

पञ्चेन्द्रियस्य देहस्य बुद्धेश्च मनसस्तथा ।
द्रव्यदेशक्रियाणां च शुद्धिराचार इष्यते ॥ इति । (प्रपन्नधर्मसमुच्चयः)

सदाचारलक्षणमित्थम् उक्तम् अभियुक्तैः—

विद्वेषरागरहिता अनुतिष्ठन्ति यं द्विजाः ।
विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः ॥ इति ॥

3. गुरूक्तस्य अर्थस्य अङ्गीकरणम् 'आचार' इति योगाचारबौद्धाः वदन्ति ॥

**आचारदर्शनात्**—(ब्र. सू. 3-4-3)

(पुरुषार्थाधिकरणे तृतीयं सूत्रम् ।)

विद्या-कर्माङ्गभूता ; ब्रह्मविदां प्राधान्येन कर्मस्वेव आचारदर्शनात् ।

यथा—'अश्वपतिः केकयो ब्रह्मविदग्रेसरः यक्ष्यमाणो ह वै भगवन्तोऽहमस्मीत्याह' इति ।

'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति च स्मर्यते ।

अतः ब्रह्मविदां कर्मप्रधानत्वदर्शनात् विद्यायाः कर्तृस्वरूपवेदनरूपत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः । ( इदं पूर्वपक्षसूत्रम् )

गुणमुख्ययोर्विरोधे मुख्यानुगुणं गुणो नेयः, न तु गुणानुगुणं मुख्यो नेयः । तस्मात् कर्मणो विद्यायाश्च प्रसङ्गे कर्मणोऽनुष्ठानं तस्य प्राधान्येनैवोपपद्यते । अतो विद्या कर्माङ्गमित्यर्थः ।

अस्मिन्नधिकरणे 'पुरुषार्थोऽतश्शब्दादिति बादरायणः' इति सूत्रेण विद्यात एव पुरुषार्थः इति प्रथमतः सिद्धान्तः प्रतिज्ञातः । तदुपरि 'शेषत्वात् पुरुषार्थवादः' इत्यादिना विद्यायाः कर्मशेषत्वमेवेति कर्मणैव पुरुषार्थवाद इति पूर्वपक्षः उपक्षिप्तः, तदुपष्टम्भकतया इदमपि प्रवृत्तम् । पश्चात् विद्यात एव पुरुषार्थः इति च साधितम् । तथा च 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' इत्यादिभिः फलाभिसन्धिरहितयज्ञादिकर्मणः विद्याङ्गत्वमेवेति स्थिरीकृतम् ।

यक्ष्यमाणो ह वै चेति ह्याचारस्यापि दर्शनात् ।
विद्यायाः कर्मशेषत्वं भवतीति च चोद्यते ॥ (ब्र. प. मा.)

**आचार्यः**—1. स्वयमाचरणपूर्वकं प्रवर्तको गुरुः ।

(आङ्पूर्वकचरधातोः 'कृत्यल्युटो बहुलम्' इति कर्तरि ण्यत्प्रत्ययः ।)

'आचार्य देवो भव' (तै. शि. 20)

आचिनोति हि शास्त्रार्थान् आचारे स्थापयत्यसौ ।
स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते ॥ इति हि स्मर्यते ।

'यस्माद्धर्मानाचिनोति स आचार्यः' । (आ.ध.सू. 1-1-14)

यस्मात् पुरुषादयं माणवकः धर्मानाचिनोति आत्मानं प्रचिनोति शिक्षते स

आचार्यः । 'अप्यक्षरसाम्यान्निर्ब्रूयात्' इति चकारमात्रेण इदं निर्वचनम् । अनेन प्रकारेण माणवकमाचार्यः शौचाचारांश्च शिक्षयेदित्युक्तं भवति । (व्या.)

'स हि विद्यातस्तं जनयति' । (आ.ध.सू. 1-1-16)

स हि आचार्यः तं माणवकं विद्यातो जनयति यथा—मातापितृतः । 'अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ।' इति शास्त्रान्तरम् । (व्या )

मातापितृभ्यामाचार्यः श्रेष्ठ इत्याह—

'शरीरमेव मातापितरौ जनयतः' (आ. ध. सू. 1-1-18)

'मातापितरौ शरीरमात्रमेव काष्ठकुड्यादिसमं जनयतः । आचार्यस्तु सर्वपुरुषार्थक्षमरूपं जनयति—आचार्यः श्रेष्ठो गुरूणाम्' इति गौतमः । (व्या.)

सिद्धं सत्संप्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठम् ।
सत्त्वस्थं सत्यवाचं समयनियततया साधुवृत्त्या समेतम् ।
डम्भासूयादिमुक्तं जितविषयगणं दीर्घबन्धुं दयालुम्
स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत् ॥ (न्या. वि. 1)

समयनियततया-यथाकालं प्रवृत्तया ; यद्वा धर्मज्ञसमयव्यवस्थितया । जितविषयगणं स्ववशेन्द्रियवर्गम् । सम्यग्ज्ञानार्थतया गुर्वभिगमनेऽपि स्वेच्छया प्रवर्तमानस्य नियमांशमात्रे विधिरिति ज्ञापनार्थमीप्सेदिति सन्प्रत्ययप्रयोगः ।

तथा च सत्संप्रदायस्थत्व-श्रोत्रियत्व-ब्रह्मनिष्ठत्वादयो आचार्यगुणाः । एतादृश-गुणविशिष्टमाचार्यं ब्रह्मविज्ञानार्थं संजिघृक्षेत् । अत एवोच्यते—

'आचार्यः प्लाविता, तस्य ज्ञानं प्लव इहोच्यते ।
ज्ञानहीनं गुरुं प्राप्य कुतो मुक्तिमवाप्नुयात् ॥' इति । (व्या.)

आशब्दादाप्तिरित्युक्तश्चार्यशब्दश्चरेदिति ।
आप्तौ चरति यो नित्यमाचार्यः सोऽभिधीयते ॥ (न.द्यु. 13)

आप्तिः—शास्त्रार्थसाक्षात्कारः । (व्या.)

संसारनिवर्तकस्य महाश्रीमन्त्रस्योपदेष्टा साक्षात् आचार्य इत्युच्यते। संसारवर्धकानां क्षुद्राणां भगवन्मन्त्राणां उपदेष्टॄणां आचार्यत्वपूर्तिः नास्ति। फलद्वारा भगवन्मन्त्राः क्षुद्रा इत्युच्यन्ते। (श्री व. भू. 336-337)

'आचार्यः कीदृशो देवि शिष्यस्तस्य च कीदृशः।
मन्त्रेषु कतमो मन्त्रः प्रभवेत् परमाप्तये॥
सर्वलक्षणसंयुक्तो ब्राह्मणो वेदपारगः।
षट्कर्मनिरतः शान्तः पञ्चकालरतः शुचिः॥
पञ्चरात्रार्थविन्मौनी मन्त्राक्षरकृतश्रमः।
न स्थूलो न कृशो ह्रस्वो न काणो नैव रोगवान्॥
नान्धो न बधिरो मूढो न खल्वाटो न पङ्गुकः।
न हीनाङ्गोऽतिरिक्ताङ्गो न श्वित्री न च डाम्भिकः॥
न क्रोधनो न दुश्चर्मा न लोभहतचेतनः।
अकुलीनं दुराचारं शठं जिह्मं च वर्जयेत्॥
दयादान्तिशमोपेतं दृढभक्तिं क्रियापरम्।
सत्यवाक्छीलसंपन्नं रेखाकर्मसु कौशलम्॥
जितेन्द्रियं सुसन्तुष्टं करुणापूर्णमानसम्।
आर्यलक्षणसम्पन्नमार्जवं चारुहासिनम्।
एवं गुणगणाकीर्णं गुरुं विद्यात्तु वैष्णवम्'॥ इति॥ (ल.तं. 21-30....36)

2. शिल्पिविशेषः।

'आचार्येण सद्म निर्वापयेत्' इत्यादिप्रयोगात्।

तदुक्तमधिकरणसारावल्याम्-(217)

'जातावाचार्यशब्दः क्वचिदिति न तथाचार्यदेवो भवेत्या-
द्याम्नाते तत्प्रतीतिस्स्मृतिषु नियमिताल्लक्षणात्तत्प्रवृत्तेः'॥ इति।

अयंभावः—यद्यपि सद्मनिर्मातरि आचार्यशब्दः जातिविशेषे रूढः, तथापि अध्यापयितरि तु यौगिक एव। रूढेः बाधितत्वात्॥

**आचार्यकुलवासी**—आचार्यगृहवसनशीलः ब्रह्मचारी ।

(अत्र वसधातोः ताच्छील्ये णिनिः )

'त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्व एते पुण्यलोका भवन्ति ।' (छां. उ. 2-23-1)

ब्रह्मचारी आचार्यकुलवासी, **तृतीयोऽत्यन्तं....अवसादयन्**-अत्यन्तमाचार्यकुले नियमैः देहं क्षपयन्, तृतीय आश्रम इत्यर्थः । (रं. भा.)

यावज्जीवाचार्यकुलवासादिविशिष्टब्रह्मचर्यमिति यावत् ॥

**आचार्यकृपा**—आचार्यदया ।

ईश्वरकृपा हि अनादिरपि आचार्यकृपामपेक्षते, लीलारससहचरिता च । आचार्यकृपा तु तन्निग्रहमपि शमयति, अनुग्रहैकरसा च । ईश्वरस्य क्वचिदधोनिनीषा अपि वर्तते; असाधुकारयितृत्वं च; आचार्यस्य तु सर्वत्र उन्निनीषैव, स साध्वेव कारयति । (स्तो· भा. 5)

**आचार्यनिष्ठा**—आचार्यानुष्ठिता प्रपत्ति विशेषः ।

प्रपत्तिः अधिकारिभेदेन स्वनेष्ठा, उक्तिनिष्ठा, आचार्यनिष्ठाभेदेन त्रिविधा । परमपुरुषार्थोपायभूतनिवृत्तिधर्मेषु प्रवृत्तः अधिकारी द्विविधः । अद्वारकप्रपत्तिनिष्ठः, सद्वारकप्रपत्तिनिष्ठश्चेति । तदुक्तम्—

'स्वतन्त्राङ्गप्रपत्तिभ्यां प्रपन्नावत्र तावुभौ ।
फलसाधनभक्तिभ्यां भक्तावपि च दर्शितौ ॥' इति ।

'स्नानं सप्तविधं स्मृतम्'—इत्युक्तप्रकारेण यथाधिकारं मन्त्र-मानस-दिव्य-वायव्यादिस्नानानि तुल्यफलकानीव, उक्ति-आचार्यनिष्ठापि प्रपत्तेः मुखभेद एव । एतद्द्वयमपि—

'तव भरोहमकारिषि धार्मिकैः शरणमित्यपि वाचमुदैरिरम् ।
इति ससाक्षिकयन्निदमद्यमाङ्कुरु भरं तव रङ्गधुरन्धर ॥'

इत्यनेन अभियुक्तैः क्रोडीकृत्य अनुसंहितम् ।

अत्र आधिक्यसूचकापिशब्देन उभयोर्मध्ये एकस्यैव पर्याप्ततेति चासूचि। आचार्यनिष्ठश्च—

'त्रिसन्ध्यं कारयेत् बालान् वन्दनं देवपादयोः।
पुत्रः प्रेष्यस्तथा शिष्यः इत्येवं च निवेदयेत्'॥

इति शाण्डिल्यस्मृत्युक्तरीत्या आचार्यकृतात्मात्मीयभरसमर्पणे स्वयमप्यन्तर्भूतः। अत्रैव आचार्यनिष्ठा इति प्रयुज्यते।

'सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्।
न संशयोऽत्र तद्भक्तपरिचर्यारतात्मनाम्॥'

इत्युक्तन्यायेन आचार्यनिष्ठस्य कैमुतिकन्यायेन फलसिद्धौ न सन्देहः। अन्यकर्तृक-व्यापारस्य अन्यत्र फलजनकत्वं लोकन्यायतोऽपि सिध्यतीत्यत्र 'मुदलियाण्डान्' (दाशरथि) स्वामिनः सिंहदृष्टान्तं प्रदर्शयतिस्म 'एकस्माद्गिरेः लङ्घयतः सिंहस्य, तदीय शरीरान्तर्वर्तिनः शिशोरपि लङ्घनमिवेति'। अनेन संसारमतिलङ्घयतः आचार्यस्य प्रपत्त्यनुष्ठानेनैव तदीयानामपि मुक्तिः सिद्धैवेति बोधितम्। (र. त्र. सा. 1-438)

अत एवाभिहितमाचार्यपादैः—

'अन्धोऽनन्धग्रहणवशगो याति रङ्गेशयद्वत्
पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन।
भुङ्क्ते भोगानविदितनृपः सेवकस्यार्भकादि-
स्त्वत्संप्राप्तौ प्रभवति तथा देशिको मे दयालुः'॥ इति।

(न्या. ति. 21)

[अन्ध इति ज्ञानशून्यः, शक्तिशून्यः पङ्गुः, तदुभयशून्योऽर्भकः। यथैषाम-नन्धादयः फलाय प्रभवन्ति, तथा मम च (ज्ञान-शक्ति-तदुभयशून्यस्य) देशिकः (आचार्यः) प्रभवति इति। अनेन पित्रानुष्ठितजातेष्टिवत् आचार्यानुष्ठितप्रपत्तेरपि फलम्भकत्वम् अविकलमेवेति सिद्धम्।]

2. आचार्याभिमानः चरमोपायः ।

भक्तौ अशक्तस्य प्रपत्तिः, प्रपत्तौ अशक्तस्यायमेवआचार्याभिमानः ।
(श्री. व. भू. 4-57)

अत्र 'तमेवं विद्वानमृत इह भवति' इति श्रुत्यनुरोधेन ज्ञानविशेषरूपभक्ति-प्रपत्तिभ्यामेव मुक्तिरिति सिद्धान्ते आचार्याभिमानस्यैव कथं साक्षान्मुक्तिसाधनतेति नाशङ्क-नीयम्, 'अयं प्रथमं स्वरूपं पल्लवितं करोति, पश्चात् पुष्पितं करोति, अनन्तरं फलपर्यन्तं करोति' इति आचार्यश्रीसूक्त्यैव परिहृतत्वात् । आचार्यनिष्ठारूपप्रपत्तावेवान्तर्भाव इति भावः ।

**आचार्यप्राप्तिहेतवः**—आचार्यप्राप्तिकारणानि ।

ईश्वरस्य च सौहार्दम् यदृच्छासुकृतं तथा ।
विष्णोः कटाक्षमद्वेषमाभिमुख्यं च सात्त्विकैः ॥
सम्भाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः। इति हि स्मर्यते॥ (र.त्र.सा. 1-84)

अबुद्धिपूर्वकं क्रियमाणस्यापि सुकृतत्वेन परिगणने निर्हेतुककृपैव निदानमिति 'ईश्वरस्य च सौहार्दम्' इति प्रथमतः उदाहारि । अतःयदृच्छासुकृतादीनां साक्षात्परंपरया वा आचार्यप्राप्तौ हेतुत्वम् उपपन्नम् ॥

**आचार्यवंशः**—गुरुपरम्परा ।

[आचार्यवंशो द्विविधः । विद्यया, जन्मना च । तत्र विद्यावंशस्तु स्वाचार्यमारभ्याभगवत्पर्यन्तः । अध्यात्मशास्त्रोपदेष्टृपरम्परैव अत्र आचार्यवंशः ।]

'अथ वंशः । पौतिमाषीपुत्रात् कात्यायनीपुत्रः, गौतमीपुत्रात् गौतमीपुत्रः, भारद्वाजीपुत्रात्, भारद्वाजीपुत्रः....कावषेयः प्रजापतेः, प्रजापतिर्ब्रह्मणः । ब्रह्म स्वयम्भु। ब्रह्मणे नमः' ॥ (बृ. उ. 8-5-1, 2, 3, 4)

अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्यात्, गुणवान् पुत्रो भवतीति प्रस्तुतत्वात् स्त्रीविशेषकृतपुत्रविशेषेण, आचार्यपरम्परा कीर्त्यते—अथ वंश...इत्यादिना । प्रजापतेः चतुर्मुखादित्यर्थः । ब्रह्मणः नारायणादित्यर्थः । स्वयंभु स्वतस्सर्वज्ञ-मित्यर्थः । ब्रह्मणे नमः ।

आचार्येभ्यो नमस्कृत्य अथ वंशमनुक्रमेत् ।
वंशमाब्रह्मणो नयन् दीर्घमायुरवाप्नुयात् ।।

इति आब्रह्मणो वंशपरम्पराकीर्तनस्य श्रेयो हेतुत्वं शास्त्रसिद्धम् इह अनुसन्धेयम् । (रं.भा) 'स चाचार्यवंशो ज्ञेयः, आचार्याणामसावसावित्याभगवत्तः' इति श्रुतिः (रहस्याम्नायः) अत्र विवक्षिता ।

अयंभावः—अध्यात्मशास्त्रोपदेष्टृपारम्पर्यमेवात्र आचार्यवंशः। 'सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते' इत्युक्तेः। अत एव श्रीशठारि-नाथ-यामुन-यतिवरादयो गुरुपरम्परायां निबध्यानुसन्धीयन्ते । एवञ्च पितामह-वसिष्ठ-पराशर-पाराशर्य-शुकादिवदुत्पत्त्या विद्यातश्च एकसन्तानावन्योऽतिशयितः । तदभावे तु उपदेष्टृपारंपर्यमेव अनुसन्धेयम् ।

तदुक्तम्— 'हिरण्यस्य सुतत्वेन प्रह्लादस्त्यज्यते बुधैः ।
किं वा विरोचनस्तस्य पुत्रत्वात्परिगृह्यते' ।। इति ।

अतः यथाकथञ्चित् उपदेष्टृपारंपर्यमेव अनुसन्धेयम् । (सा. प्र. 1-20)

'गुरून् प्रपद्य प्रथमं तद्गुरुं च ततो हरिम् ।'
इति पाञ्चरात्ररक्षोदाहृतवचनमपि अत्र प्रमाणम् ।

अत एव संप्रदाये 'ग्रन्थकालक्षेपसमये' 'तनियन्' इति भाषया व्यवह्रियमाणा स्वाचार्य-प्राचार्यादिभगवत्पर्यन्तविषयकश्लोकादिपठनेन आचार्यपरम्परा अनुसन्धीयते ।।

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।। इति ।

अस्मद्देशिकमस्मदीय परमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम् ।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणम्
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ।। इति च ।।

**आचार्यवत्ता**—आचार्यसम्बन्धः । (मोक्षहेतुः)

[आचार्यः अस्यास्तीत्यर्थे मतुप्प्रत्यये, तदुत्तरभावार्थकप्रत्ययेन आचार्यवत्तेति रूपम् अत्र भावप्रत्ययेन 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति वचनात् आचार्वसम्बन्ध इत्यर्थो लब्ध ।]

स्मर्यते हि—

'पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत् ।
आचार्यवत्तया मुक्तौ तस्मादाचार्यवान्भवेत्' ॥ इति ।

अत एव श्रूयते 'एवमेवेहाऽचार्यवान् पुरुषो वेद । तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति ॥ तस्य कथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति ; स ग्रामात् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येत' इति । (छां. उ. 6-14-1,2)

हे सोम्य ! यथा लोके गन्धारेभ्यो जनपदेभ्योऽभिनद्धाक्षं पिनद्धचक्षुषं कश्चित् पुरुषं चोरो गृहीत्वा अभिजने विजने विसृजेत् यदि, सः दिग्भ्रमोपेतः प्राङ्मुखः उदङ्मुखो वा अधो मुखो वा, 'अभिनद्धाक्ष एव चौरैरानीतो अभिनद्धाक्ष एव विसृष्टोऽहम्' इति प्रध्मायीत-विक्रोशेत् ।

तदा कश्चित् कारुणिकः तस्याभिनहनं बन्धनं मुक्त्वा, उत्तरतो गन्धाराः सन्ति । अत 'एतां दिशमुत्तरां व्रज' इति प्रब्रूयात् यदि, स तेन एवमुक्तो ग्रामात् ग्रामान्तरं पृच्छन् तैरुपदिष्टमार्गे मेधावी उक्तार्थाविस्मरणशीलः पण्डितः ऊहापोहक्षमधीयुक्तो गन्धारानेव पुनरभिसम्पद्येत ।

एवमाचार्योपदेशेन, 'ब्रह्मात्मकस्त्वमसि', अतः 'तदात्मकतया स्वात्मानमनुसन्धत्स्व' इति उपदिष्टः तदात्मकत्वमनुसन्धत्ते । तस्य एतादृशानुसन्धाननिष्ठस्य तावदेव चिरम्-तावानेव विलम्बः, यावत् प्रारब्धकर्मारब्धशरीरात् न विमोक्ष्यते । अथ तदनन्तरं तु सद्रूपं ब्रह्म सम्पद्यते । (रं. भा.)

ईश्वरसम्बन्धो बन्ध-मोक्षयोरुभयोरपि साधारणः आचार्यसम्बन्धो मोक्षस्यैव हेतुः ।
(श्री. व. भू. 450)

अत एव हि—

'आचार्यवत्तया मोक्षमामनन्ति स्मरन्ति च ।
इहामुत्र च तत्पादौ शरणं देशिका विदुः' ॥

इति च आचार्यपादैरभिहितम् ।

**आचार्यवैभवम्**—आचार्यमाहात्म्यम् ।

[विभोः भावः इत्यर्थे युवादित्वादण् ।]

'आचार्यस्य सदृश प्रत्युपकारकरणं विभूतिचतुष्टयमीश्वरद्वयं चास्ति चेद्धि' ॥
(श्री व. भू. 449)

उभयविभूतिं भूतिमन्तमीश्वरं च स्वाधीनार्हं कृत्वा दत्तवताचार्येण कृतस्य उपकारस्य सदृशत्वेन प्रत्युपकारकरणम्—एवमन्ये द्वे विभूती विभूतिमाननेकेश्वरश्च सन्ति यदीत्यर्थः ।

'यो दद्याद्भगवज्ज्ञानं कुर्याद्धर्मोपसेवनम् ।
कृत्स्नां वा पृथिवीं दद्यान्न तत् तुल्यं कथञ्चन' ॥ इत्युक्तं हि ।

अनेन आचार्यस्य प्रत्युपकारावकाशरहितमहोपकारकत्वरूपवैभवउक्तः ॥ (व्या.)

**आचार्यशिष्टा जातिः**—आचार्येण उत्पन्नं जन्म ।

'शरीरमेतौ कुरुतः पिता-माता च भारत ।
आचार्यशिष्टा या जातिः सा सत्या साऽजरामरा' ॥

इति हि स्मर्यते ।

'स हि विद्यातस्तं जनयति, तत् द्वितीयं जन्म, तत् श्रेष्ठतमं जन्म' ।

माता-पितृसम्बन्धजं जन्म एकम्। तदनन्तरं आचार्योत्पन्ना जातिः (विद्याजन्म) द्वितीया । अजरामरा-जरामरणादिरहिता । कर्मकृतमाता-पितृसम्बन्धजं जन्म तु जरामरणसम्बन्धेन असत्यम्—(पुनः पुनः नानावस्थान्तरयोग्यतया असत्यम्)। ज्ञानाख्यं

द्वितीयं जन्म तु मोक्षप्रदमिति पुनः जन्ममरणप्रसङ्गाभावेन सत्यम् । तथा च शरीरोत्पत्तौ मातापितृसम्बन्ध इव ज्ञानोत्पत्तौ आचार्यसम्बन्ध एव आवश्यक इति भावः । अत्रापि मातृस्थानीया (मातृतुल्या) विद्याख्या स्त्री एतन्मूलकमेव अपरजन्मोत्पत्तिः इति भावः । अत एवोक्तमाचार्यपादैः रहस्यत्रयसारे—'आचार्यादिह देवतां समधिकामन्यां न मन्यामहे ' इति ।

**आचार्यशिष्ययोः शेषशेषिभावः—**

[ आचार्यशिष्ययोः ईश्वरनिरूपितशेषत्वस्यैव विद्यमानत्वात् अनयोः परस्परं शेषशेषि-भावः कथं घटतामित्यत्राह]

' अन्योन्यशेषभावोऽपि परस्वातन्त्र्यसम्भवः ।
तत्तदाकारभेदेन युक्त इत्युपपादितम् ' ।। (सं. वि. 200)

ईश्वरः निरपेक्षस्वतन्त्रोऽपि आश्रितपरतन्त्र इत्युच्यते । तदिदं पारतन्त्र्यं स्वेच्छावशेन स्वीक्रियमाणं परमां काष्ठामापन्नं स्वातन्त्र्यरूपमेव । एवमाश्रितविषये निरतिशयप्रीतियुक्तस्य निरङ्कुशस्वतन्त्रस्य ईश्वरस्य अभिप्रायमनुरुध्य तदीया अपि अन्योन्यं शेषभूता भवन्ति । तत्र निरूपकभेदेन शेषित्वं शेषत्वं च न विरुद्धम् । अत एवोच्यते—

' अन्योन्यगुरवो विप्राः अन्योन्यातिथयःस्मृताः ।
अन्योन्यमुपकुर्वाणास्तारयन्ति तरन्ति च ' ।। इति ।।

एवं शिष्याचार्ययोरपि शेषशेषिभावः परस्परमस्ति । तत्र किञ्चित्कारप्रकारः शास्त्रबलेन नियन्त्रितः । यथा—यथाहृदयं यथार्हं हितोपदेशादिरूपः आचार्यकर्तव्यः किञ्चित्कारः । कृतज्ञत्वमुपदिष्टानामर्थानाम् अविस्मरणं यथाशक्त्यनुष्ठानं यथाशक्ति यथायोग्यं च शुश्रूषादिकं च शिष्यकर्तव्यः किञ्चित्कारः ।

तथा—यथा हितैष्याचार्यः शिष्यस्य सर्वास्वपि अवस्थासु सन्मार्गम् उपदिशति । एवं शास्त्रवश्येन शिष्येणापि आचार्यम् अवलिप्तमुत्पथं प्रतिपन्नम् एकान्ते प्रतिबोध्य सन्मार्गप्रवर्तनेन किञ्चित्कारः कर्तव्य इति विधिः । ( द.उ. 226)

**आचार्याभिमानः** — मदीयोयमिति आचार्यानुग्रहविशेषः ।

भगवद्रामानुजाचार्यैः चरमदशायां निर्विण्णान् सन्निहितान् शिष्यान् प्रति "आत्मयात्रा भगवदधीना । देहयात्रा तु कर्मविशेषनिबन्धनैव" अतः तां प्रति न चिन्तनीयम् ; परंन्तु एवमेव वर्तितव्यं इत्युपदिष्टं । कथमिति चेत्—

1. श्रीभाष्यपठनप्रवचनादिकं प्रथमतः कर्तव्यम् ।
2. अत्र योग्यता यदि न स्यात्, दिव्यप्रबन्ध-अध्ययनादिकम् ।
3. अत्राऽपि असामर्थ्ये, अर्चारूपिणो भगवतः कैङ्कर्यम् ।
4. एतदपि कर्तुम् अशक्यं चेत्, द्वयमर्थानुसन्धानेन सदा पठनीयम् ।
5. तत्राऽपि असामर्थ्यम् चेत्, सदाचार्याभिमानविषयतया अनुवर्तनमेव कार्यमिति ।

[ गुरुपरम्पराप्रभावात् द्रमिडभाषामयात् अनूदितः । ]

'पठित्वा भाष्यं तत्प्रवचनमशक्तौ शठरिपो
गिरि श्रद्धा वासः प्रभुपरिचितस्थान निवहे'
प्रभोः कैङ्कर्यं वा, प्रपदनमनो प्रपदमनुः द्वयमन्त्रः रर्थमननम्
प्रपन्नानां वा मे भवतु परिचर्यापरिचयः ॥
कुटीं कृत्वा तस्मिन् यदुगिरितटे नित्यवसतिः ।
षडर्था श्रीशस्य प्रपदनविधौ साधकतमाः ॥

(इति च इळयवल्लि आचान् इत्याख्यै क्रोडीकृतः ।)

यदुगिरि क्षेत्रे कुटी निर्माणेन वा वासः कर्तव्यः ।

(अयं च कतिपयग्रन्थेषु न दृश्यते । यदुगिरिशब्दः दिव्यक्षेत्रसामान्योपलक्षकः इति परे ।)

एतादृशाचार्याभिमानस्तु भक्तौऽशक्तस्य प्रपत्तिः, प्रपत्तौ अशक्तस्य अयम् । एषः "प्रथमं स्वरूपं पल्लवितं करोति, पश्चात् पुष्पितं करोति, अनन्तरं फलपर्यन्तं करोति' इति श्रीवचनभूषण वचनरीत्या मुक्तिसाधनं भवति ।

अन्ये तु आचार्यनिष्ठारूपप्रपत्तिद्वारा उत्तारकः इत्यभिप्रयन्ति ।

तदुक्तम् न्यासतिलके—

'अन्धोऽनन्धग्रहणवशगो याति रङ्गेशयद्वत्
पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन ।
भुंक्ते भोगान् अविदितनृपः सेवकस्यार्भकादिः
त्वत्संप्राप्तौ प्रभवति तथा देशिको मे दयालुः '॥ इति ॥

**आचार्योपासनम्**—आत्मज्ञानसाधनगुणेष्वन्यतमम् ।

'देवमिवाचार्यमुपासीत ' (आ. ध. सू. 1–2–6–13)

'अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः '॥ (गी. 13–7)

आत्मज्ञानप्रदायिनि आचार्ये प्रणिपातपरिप्रश्नसेवादिनिरतत्वम् । (गी. भा.)

उपकारबुद्ध्या आचार्योपासनस्य स्वरसवाहित्वज्ञापनायाह—**आत्मज्ञानप्रदायिनीति** । यद्वा-आत्मज्ञानापेक्षितत्वज्ञापनाय तदुक्तिः । 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ' (4–34) इति प्राक्प्रपञ्चितमिहोपासनशब्देन सङ्गृहीतम् इति ज्ञापनाय—प्रणिपाताद्युपादानम् ॥ (ता. चं )

अत एवोक्तमन्यत्र—

अज्ञानध्वान्तरोधादघपरिहरणादात्मसाम्यावहत्वात्
जन्मप्रध्वंसिजन्मप्रदगरिमतया दिव्यदृष्टिप्रभावात् ।
निष्प्रत्यूहानृशंस्यान्नियतरसतया नित्यशेषित्वयोगा-
दाचार्यः सद्भिरप्रत्युपकरणधिया देववत्स्यादुपास्यः ॥ इति । (न्या. वि. 2)

'आचार्यवान् पुरुषो वेद ', 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् ', 'आचार्यवत्तया मुक्तौ ' इत्यादिप्रमाणानुसारात् आचार्यवरणे सिद्धे 'आचार्यदेवो भव' 'देवमिवाचार्यमुपासीत ' (आ.ध.सू. 1–2–6–13) इत्यादिविहितं तत्सेवनमाह—**अज्ञानेति** । अत्रोक्ता हेतवः आचार्ये भगवति च अन्वीयन्ते । जन्मप्रध्वंसिजन्म-विद्याजन्म ।

'ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते ।
प्रतिप्रदानमथवा दद्याच्छक्तित आदरात्' ॥
इत्याद्यभिप्रेत्य अप्रत्युपकरणधियेत्युक्तम् ॥ (व्या.)

**आच्छादिकाऽविद्या**—ब्रह्मस्वरूपतिरोधानहेतुभूतं भावरूपाज्ञानम् ।
(आच्छादिका-अच्छादनम् भावे ण्वुल् तत्कारिणी अविद्या ।)
ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपरामर्थिकं भेददर्शनमेव बन्धमूलम् ।
(श्री.भा. I-48)

आच्छादिकाऽविद्या, विक्षेपिकाऽविद्येति, अविद्यायाः एकस्या एव अवस्थाद्वयं पराभिमतं तिरोधान-विक्षेपहेतुत्ववचनात् ।

आवरणं नाम यथाऽवस्थितस्वरूपाप्रतिभासः । विक्षेपो नाम अयथाऽवस्थितप्रतिभानम् । आवृत्य विक्षिपतीति अद्वैतिभिरभ्युपगतत्वात् इति भावः । (न्या.सि.टी. 196)

आच्छादिका चासौ अविद्या चेति न कर्मधारयः । येन 'पुंवत् कर्मधारय जातीयदेशीयेषु' इति (पा.सू. 6-3-47) सूत्रेण पुंवद्भावे आच्छादकेत्येव स्यादिति चेन्न । 'धात्वर्थनिर्देशे ण्वुलिति', ण्वुलि आसिका शायिकेतिवत् आच्छादिका—आच्छादनम्, ततः तादर्थ्यचतुर्थीसमासः । आच्छादिकाऽविद्या आच्छादनार्थं अविद्येति आच्छादनकारिण्यविद्येत्यर्थः इत्येवं निर्वाहान्तरं द्रष्टव्यम् ।

ननु प्रकृतिविकृतिभाव एव 'यूपाय दारु' इत्यादौ तादर्थ्यचतुर्थी समासस्य सूत्रकारादिसम्मततयाऽत्र चतुर्थीसमासोऽनुपपन्न इति न शंकनीयम् । 'विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम्' इति वार्तिकोक्तरीत्या अश्वघासादि गणपठिततया षष्ठीसमासो निराबाधः । तादर्थ्यचतुर्थीवर्णनन्तु फलितार्थकथनमेव ॥

**आजानजाः**—देवलोकजाः । (देवाः)

'स एक आजानजानां देवानामानन्दः' 'ते ये शतम् आजानजानां देवानामानन्दाः' (तै. आ. 5-6)

आजानः—देवलोकः, तत्र जाताः आजानजाः ; स्मार्तकर्मविशेषतः देवस्थानेषु जाताः इत्यर्थः । (रं. भा.)

देवत्वं हि द्विविधं, कर्मसिद्धमाजानसिद्धञ्च। कल्पादावेव यत् सिद्धम् तत् आजानसिद्धम्। तदितरत् कर्मसिद्धम्। यद्वा उपासनसिद्धमाजानसिद्धम्। तदितरत् कर्मसिद्धम्। यद्वा त्रयस्त्रिंशद्देवतासायुज्यं कर्मदेवत्वम्। त्रयस्त्रिंशद्देवतात्मत्वमाजान-सिद्धत्वमिति विवेको द्रष्टव्यः। (रं. भा.)

आजानं—जननं जानः इति भावे घञ्, 'आङ्मर्यादाभिविध्योः' इत्यनेन अव्ययीभावः। आजानं जायते इत्याजानजः इति व्युत्पत्तिः॥

**आज्ञा**—ईश्वरशासनम्। (कृत्याकृत्यज्ञापनम्)

('ज्ञा अवबोधने' आतश्चोपसर्गे इत्यङ्।)

'श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न मे प्रियः'॥ इति विष्णुधर्मे।

[नित्य नैमित्तिककर्मणां आज्ञारूपत्वात् तदनुष्ठाने प्रत्यवायानुत्पत्तिः, भगवत्प्रीतिश्च जायते।]

'आशाधिपेषु गिरिशेषु चतुर्मुखेषु
अप्यव्याहता विधिनिषेधमयी तवाज्ञा'॥ (व. पं. 13)

विषयासिद्धौ अनर्थहेतुरभिप्रायज्ञापको व्यापारः। प्रकृते च तादृश व्यापारः भगवतः, श्रुतिस्मृतिरूपः। (व्या.)

1. निकृष्टस्य भृत्यादेः क्रियादौ प्रवृत्त्यर्थो व्यापारविशेषः।
2. लग्नावधिदशमभाव आज्ञेति ज्योतिश्शास्त्रज्ञाः।
3. भ्रूमध्यस्थं सुषुम्नानाड्यन्तर्गतमाज्ञाचक्रमिति तान्त्रिकाः॥ (न्या. को.)

**आज्ञाकैङ्कर्यम्**—ईश्वराज्ञानिबन्धनप्रीतिजनकव्यापारविशेषः।

'आज्ञाऽनुज्ञाविभागेन द्विधा कैङ्कर्यपद्धतिः।
निग्रहानुदयायाद्या परा तत्तत्फलाप्तये'॥ (र. त्र. सा. II–161)

'विहितत्वाच्चाश्रमकर्मापि' इति न्यायेन स्वतन्त्राधिकारसिद्धेः नियमेन कर्तव्य-व्यापारः आज्ञाकैङ्कर्यम्। तच्च करणेन प्रत्यवायाजनकं ईश्वरप्रसादजनकञ्च।

अकरणे प्रत्यवायरहितम्, ईश्वरप्रीतिजनकञ्च अनुज्ञाकैङ्कर्यम् ।

**आज्ञाच्छेदी**—भगवदाज्ञातिलङ्घनकर्ता ।

'श्रुतिस्मृतिर्ममैवाज्ञा यस्तामुलङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न मे प्रियः' ।। इति विष्णु धर्मः ।

तदननुष्ठाने सैरन्ध्रिकायाः सेवात्यागे तादात्विकपरिमलादिपरित्यागः भयानुभवश्च यथा भवतः तथा आज्ञातिलङ्घनमपि द्वेधानर्थकरम् । (र.त्र.सा. 2–199)

आज्ञानुसरणे तु—सेवाजनितस्वामिप्रीत्या, क्रीडाशुकास्वाद्य क्षीरजन्य सुखवत् स्वस्यापि आनुषंगिकः सन्तोषः जायत एव । अननुसरणे तु स्वस्य कैङ्कर्यजन्यसन्तोषाभावः निग्रहश्च, इत्येवं प्रकारेण द्वेधा अनर्थकरम् ॥

**आज्ञानम्**—ईषद्ज्ञानम् ।

"यदेतद्धृदयं मनश्च एतत्संज्ञानं आज्ञानं विज्ञानं प्रज्ञानं........सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति' (ऐ.उ. 5)

एते सर्वे धर्मभूतज्ञानावस्थाविशेषाः । **संज्ञानम्**—एकत्वेन ज्ञानम् । **आज्ञानम्**—ईषद्ज्ञानम् । **विज्ञानम्**—विभिन्नतया ज्ञानम् । **प्रज्ञानम्**—प्रकृष्टतया ज्ञानम् (रं.भा.)

नामधेयभेदाः न वस्तुस्वरूपभेदजनकाः; किन्तु एकस्यैव अवस्थाभेदनिबन्धनतया नामभेदाः इति भावः ।

'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातङ्ङितं विद्यात् वाक्यस्मरणयोरङित्' ॥

इत्युक्तरीत्या अत्र आङ् ईषदर्थकः ॥

**आटिकी**—पर्यटनार्हा

(अटनं अर्हति इत्यर्थे 'तदर्हति' इतिसूत्रेण ठञ्, इकादेशः स्त्रीत्वात् ङीप् ।)
'मटचीहतेषु कुरुषु आटिक्या सह जायया........उवास' (छां.उ. 1–10–1)
अनुपजातपयोधरादिव्यञ्जना । (रं.भा.)

बहिः अधिकं पर्यटनार्हत्वञ्च अनुपजातपयोधरादिव्यञ्जनात्वमेव । अन्या-दृशीनां गृह एव स्थितेः । ( टी. )

**आडम्बरम्**—1. वाद्यविशेषः ।

'स आदित्यमागच्छति । तस्मै स तत्र विजिहीते यथा आडम्बरस्य खम् । तेन स ऊर्ध्वमाक्रमते' । (बृ. उ. 7-10-1)

'आदित्यो ब्रह्मलोकं जिगमिषोः मार्गनिरोधं कृत्वा स्थितोऽपि तस्मै एवंविदे उपासकाय प्राप्ताय आडम्बराख्यवाद्यविशेषस्य खं छिद्रमिव छिद्रं करोति । तेन ऊर्ध्वमा-क्रम्य चन्द्रमसमागच्छति' । (रं. भा.)

'पटहाडम्बरौ समौ' इत्यमरः ।

2. आभटः । 'प्रभाते मेघडम्बरं' इत्यादि प्रयोगात् ।

3. ख्यात्यर्थोयापारः ।

आडम्बयति । 'डबि क्षेपे' चुरादिः बाहुलकादच् । यद्वा डम्बनम् । भावे घञ् । डम्बं राति, रायति वा । 'आतोऽनुपसर्गे कः' इति कः । 'आडम्बर-समारम्भेगजगर्जित तूर्ययोः' इति विश्वः ॥ ( वाच )

**आततायी**— वधोद्यतः द्रोहकारी ।

(आततेन विस्तीर्णेन शस्त्रादिना अयितुं शीलम् अस्य । 'अय गतौ' इत्यस्माद्धातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' (पा.सू. 3-2-78) इति णिनिप्रत्ययः ।)

'निहत्य धार्तराष्ट्रान्नः का प्रीतिस्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः' ॥ (गी. 1-36)

'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः' ॥

'आततायिनमायान्तं हन्यादेवाविचारयन् ।
नाततायिवधे दोषो हन्तुर्भवति कश्चन' ॥ (ता. चं.)

आतिवाहिकाधिकरणम् – (4-3-4)

1. आतिवाहिकास्तल्लिङ्गात् ।

2. वैद्युतेनैव ततस्तच्छ्रुतेः ।

इति सूत्रद्वयात्मकम् आतिवाहिकपदादिमम् इदम् ।

अत्र अर्चिरादिधातृपर्यन्तं क्रमविशेषं व्यवस्थाप्य क्रमनिरूपकार्चिरादिस्वरूपं व्यवस्थाप्यते । अर्चिरादिप्रतिपादकवाक्यानां लौकिकमार्गोपदेशसरूपत्वात् अर्चिरादयो मार्गचिह्नभूताः ; अथवा अहरादीनां मार्गचिह्नत्वानुपपत्तेः लोकशब्दश्रवणात् ते भोगभूमयः इत्याशङ्क्य

'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति' इत्युपसंसारे वैद्युतपुरुषस्य गमयितृत्वश्रवणात् पूर्वमप्यविशेषेणैव श्रुतानां तदेव न्याय्यमिति अर्चिरादिकाः आतिवाहिकाः तत्तदभिमानिदेवता एव इत्युक्तम् ।

उपदेशस्य तथात्वात् चिन्हा गे त्वर्चिरादयः सरणेः ।
नैतत् गमयितृशब्दात् उपरि परेऽप्यातिवाहिका हि स्युः ॥ (न्या.क.सं. 4-26)

आतिवाहिकास्तल्लिङ्गात्—(ब्र. सू. 4-3-4)

आतिवाहिकाधिकरणे प्रथमं सूत्रम् ।

आतिवाहिकाः विदुषामतिवाहे परमपुरुषेण नियुक्ताः अर्चिराद्यभिमानिदेवताविशेषाः गमयितारः परमपुरुषेण नियुक्ताः, तल्लिङ्गात्—'स एनान् ब्रह्म गमयति' इति लिङ्गात् तेष्वेकत्र गमयितृत्वदर्शनात् ।

'यदु चैवास्मिन् शव्यं कुर्वन्ति यदुचन अर्चिषमेवाभिसम्भवन्ति । अर्चिषोहः.........आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इत्युक्तम् ।

अत्र अर्चिरादयः 'किं मार्गचिह्नभूताः ? किं वा भोगभूमयः ? किं वा ब्रह्म प्रेप्सतां विदुषां गमयितारः'? इति त्रेधा सन्दिह्य 'अर्चिषोहरह्न आपूर्यमाणपक्षम्' इत्यादिसन्दर्भाणाम्

'इतो निष्क्रम्य अमुकं वृक्षं गत्वा अमुकां नदीमासाद्य अमुकं पर्वतपार्श्वं तीर्त्वा सारपुरीमाश्रय' इत्यादिमार्गोपदेशपरलौकिकवाक्यसमानशैलीकतया चिह्नभूता एवार्चिरादय इत्येकः पक्षः ।

कालविशेषतया प्रसिद्धानां अहरादीनां मार्गान्तरसाधारण्येन मार्गविशेषचिह्नत्वासंभवात् चिह्नभावयोग्यानां अहरादिशब्दानभिधेयत्वात् 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा अग्निलोकमागच्छति स वरुणलोकं' इत्यादिकौषीतकीवाक्ये लोकशब्दानुविधानेन अर्चिरादीनां निर्देशाच्च भोगभूमय इति द्वितीयः पक्षः ।

राद्धान्तस्तु-विदुषां ब्रह्मप्रेप्सावतामतिवाहने परमपुरुषेण नियुक्ताः केचनार्चिराद्यभिमानिदेवताविशेषा एवार्चिरादयः । 'तं पृथिव्यब्रवीत्' इत्यादौ पृथिव्यादिवत् अत्रापि संवादादिकार्यबलेन अर्चिरादिशब्दानामभिमानिदेवतावाचित्वावश्यंभावात् 'स एनान् ब्रह्म गमयति इत्युपसंहारे वैद्युतपुरुषस्य गमयितृत्वश्रवणेनाविशेषनिर्दिष्टानां पूर्वेषामपि कार्यविशेषमपेक्षमाणानां गमयितृत्वस्यैव लाभात् विदुषां भोगहेतुकर्माभावेन भोगभूमित्वायोगेन लोकशब्दस्य लोक्यत इति व्युत्पत्त्या अभिमानिष्वेव नेयत्वात्, 'स एनान् ब्रह्म गमयति' इति वैद्युतस्य ब्रह्मगमयितृत्व श्रुत्यनुसारात् वरुणेन्द्रप्रजापतीनां वैद्युतपुरुषोपकारकतया आतिवाहिकत्वं द्रष्टव्यमिति ॥

एतेऽर्चिरादयस्सर्वे देवता आतिवाहिकाः ।
गच्छन्तं गमयन्तीति लिङ्गादेव पराज्ञया ॥ (ब्र.प.मा)

**आत्मऋणम्**—शरीरसम्बन्धिऋणम् ।

[अत्रात्मपदं शरीरपरम् । 'आत्मा यत्नो धृतिबुद्धिः स्वभावो ब्रह्म वर्ष्म च' इति ह्यमरः ।]

अनुभूतानि चेष्टानि मया वीरसुखान्यपि ।
देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः ॥ (रा. अयो. 4–14)

आत्मनोऽनृणः सुखानुभवेन । आत्मनः शरीरेन्द्रियसङ्घातरूपस्य ज्ञानप्रकाश-

हेतुत्वेन उपकारकत्वात् तदप्रत्युपकारः पुरुषस्य ऋणमेव । अन्यत्र चोक्तम्—
'अनिषिद्धसुखत्यागी पशुरेव न संशयः' इति । (गो. रा.)

ज्ञानप्रकाशहेतुत्वेन उपकर्तरि शरीरेन्द्रियसङ्घातरूपे आत्मनि प्रत्युपकारानाचरणम् । (वि. को.)

'विचित्रादेहसम्पत्तिः ईश्वराय निवेदितुम् ।
पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥
महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ।
प्राप्तुं दुःखोदधेः पारं त्वर यावन्न भिद्यते' ॥

इत्युक्तरीत्या देहेन्द्रियाद्युपकरणरूपसम्पदः सार्थकीकरणेनैव ऋणं निवर्तते । अतः अत्र प्रत्युपकरणं नाम जीवपरमात्मस्वरूपविवेकपूर्वकभगवदुपासनेन, प्रपत्त्या वा संसारविमोचनमेव ऋणनिवृत्तिः ।

अत एव गीयते—
'आत्मैव ह्यात्मनो बन्धुः आत्मैव रिपुरात्मनः' ॥ इति ॥

धर्माविरुद्धशरीरनिबन्धनभोगः मुमुक्षुणापि अनुभाव्य एव । अत एव 'अनिषिद्धसुखत्यागी पशुरेव' इत्युक्तम् ॥

**आत्मकामम्**—आत्मानन्दतृप्तंब्रह्मस्वरूपम् ।

'तद्वा अस्यैतदाप्तकामम् आत्मकामम्' । (बृ.उ. 6-3-21)

**तद्वा**—तदेव जीवसुषुप्तिस्थानभूतं प्राज्ञात्मलक्षणं स्वरूपम् ।....**आत्मकामम्**—आत्मानन्दतृप्तम् । (रं. भा.)

अत्र आत्मन्येव कामः यस्येति व्युत्पत्तिः—आत्मशब्दः विभूतिगुणविशिष्टस्वरूपपरः ॥

**आत्मकामः**—आत्मप्राप्तिकामनावान् जीवात्मा ।

'योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' ॥ (बृ.उ. 6-4 6)

आत्मैव कामो यस्य, स तथोक्तः। आत्मव्यतिरिक्तस्य काम्यस्य वस्तुनोऽभावात्, आत्मरूपकाम्यस्य नित्यसिद्धत्वात् आप्तकामत्वम्, अत एव अकामत्वञ्चेत्यर्थः। एतादृशस्तु 'ब्रह्मैव सन् ब्रह्माप्येति' इति योजना। ब्रह्मैव सन्—आविर्भूतगुणाष्टक-रूपब्रह्मरूपस्सन् ब्रह्माप्येति परब्रह्मणि लीनो भवति इत्यर्थः ॥ (रं. भा.)

अत्र कामशब्दः 'काम्यते' इति व्युत्पत्त्या इच्छाविषय परः। आत्मनः इच्छाविषयत्वं च प्राप्यत्वेन इति भावः।

इदमत्र अवधेयम् आत्मपदेषु। आत्मन्शब्दः जीवपरमात्मसाधारणः। व्यवहारकाले जीवे बहुलं प्रयुज्यते। क्वचित् परमात्मपरतयापि। अतः तत्र तत्र असन्देहाय प्रकरणाद्यनुरोधेन 'जीवात्मा-परमात्मा' इति विशिष्य लिख्यते ॥

**आत्मकामा**—स्वप्रयोजनपरा।

'आत्मकामा सदाचण्डी क्रोधना प्राज्ञमानिनी'। (रा. अयो. 70--10)

आत्मानं कामयते इत्यात्मकामा। (गो. रा.)

अत्रात्मशब्दः स्वमात्रपरः। आत्मानं कामयते इत्यर्थे 'कमुकान्तौ' इत्यस्माद्धातोः ण्यन्तात् कर्तर्यचि णिलोपे स्त्रीत्वात् टापि आत्मकामा इति रूपम् ॥

**आत्मकृतेः**—(ब्र.सू. 1-4-26)

(प्रकृत्यधिकरणे चतुर्थं सूत्रम्)

'सोऽकामयत बहु स्यां प्रजायेय' इति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणः 'तदात्मानं स्वयमकुरुत' इति स्रष्टुः आत्मनः जगदाकारेण कृतिः उपदिश्यते। अतश्चोभयं ब्रह्मैव।

न च श्रुतमपह्नोतव्यम्। अपि तु उपपादयितव्यम्। उपपादयन्ति च चिदचितोः परमात्मशरीरत्वापादकानि श्रुत्यन्तराणि। अतः सूक्ष्मावस्थचिदचिच्छरीरकपरमात्मानं स्थूलावस्थचिदचिच्छरीरकं स्वयमेवाकरोदिति न कर्मकर्तृत्वयोर्विरोधः। तेन प्रकृत्यधि-करणोपक्रान्तं निमित्तत्वं उपादानत्वम् च फलितम्।

आत्मानं प्रति स्वस्यैव कर्तृत्वमनुपपन्नम् । कार्यं हि साध्यम्, कर्ता हि सिद्धः इत्येकस्य सिद्ध्यसिद्ध्योर्विरोधं परिहरति—सूक्ष्मचिदचिच्छरीरकेत्यादिना आकारभेदात् सिद्ध्यसिद्ध्योः अविरोधः, आकार्यैक्यात् निमित्तोपादानैक्यञ्चेति भावः ।

न च निर्विकारस्य ब्रह्मणः कथं परिणामित्वरूपमुपादानत्वं श्रुतिरुपदिदेशेति वाच्यम्; विशेषणीभूतचिदचिद्द्वारा परिणामाश्रयत्वेनोपादानत्वोपपत्त्या साक्षात्सम्बन्धेन विकाररहिततया निर्विकारत्वोपपत्त्या च विरोधाभावात् ।

न चैवं मृत्पिण्डद्वारा घटादिपरिणामाश्रयभूतलादेर्घटाद्युपादानत्वं स्यादिति शङ्क्यम् । अपृथक्सिद्धिसम्बन्धेन परिणामाश्रयत्वस्य विवक्षिततया मृत्पिण्ड-घटयोरपृथग्भावेऽपि मृत्पिण्डभूतलयोस्तदभावेन उक्तातिप्रसङ्गानवकाशात् । चिद-चिदात्मकजगद्ब्रह्मणोः अपृथग्भावसत्त्वेन निरुक्तोपादानत्वसम्भवाच्च । लोके तन्तु-मृत्पिण्डादौ उपादानपदप्रयोगात्; वेदे च 'यद्भूतयोनिं', 'पुरुषं ब्रह्मयोनिं', 'यथोर्णनाभिस्सृजते गृह्णते च', 'यथा सतः पुरुषात्केशलोमानि' इत्यादौ मृत्पिण्ड इव शरीरविशेषविशिष्टचेतनवाचिनोर्णनाभिशब्देन सतः पुरुषादिति चेतनविशिष्ट-शरीरवाचिपुरुषशब्देन च विशिष्टेऽप्युपादानपद प्रयोगबाहुल्येन सकलप्रयोगविषयानु-यायिनः अपृथक्सिद्धिसम्बन्धेन साक्षात्परम्परासाधारणेन परिणामाश्रयत्वस्यानति-प्रसक्तस्योपादानपदप्रवृत्तिनिमित्तत्वसम्भवेन क्वचिन्मुख्यत्वं क्वचिद्गौणत्वमित्यस्य निर्युक्ति-कतयानुपादेयत्वात ।

यद्वा परिणामो नामागन्तुकाऽवस्था । सा च सूक्ष्मचिदचिद्विशिष्टत्वावस्थस्य ब्रह्मणः स्थूलचिदचिद्विशिष्टत्वाऽवस्थामागन्तुकामादाय साक्षात्सम्बन्धेनैवोपपादयितुं शक्या ।

न च पिण्डविशिष्टत्वाऽवस्थस्य भूतलस्य घटविशिष्टत्वावस्थामादाय घटविशिष्ट-भूतलोपादानत्वं शङ्क्यम् । द्रव्यद्वयवैशिष्ट्यस्यापृथक्सिद्धिसम्बन्धरूपस्य विवक्षिततया मृत्पिण्डभूतलयोश्चापृथग्भावसम्बन्धाभावेनानतिप्रसङ्गात् जगद्ब्रह्मणोश्शरीरात्मनोश्च तथा-त्वाल्लक्षणसङ्गतिः ।

न च ब्रह्मणो निर्विकारत्वश्रुतिविरोधः। प्रणामनमस्काराद्याराधनजनितप्रीत्यादि विकारवत् 'बहु स्याम्' इति लीलाप्रवृत्तभगवत्स्वसङ्कल्पायत्तनिरतिशयैश्वर्यसम्पादकोक्त-कादाचित्कधर्मरूपविकारस्य कर्मनिबन्धनचिदचिद्गत विकारवदपुरुषार्थ हेयानापादकतया गुणत्वात् ॥

बहुत्वकरणात्स्वस्य कर्तृत्वं कर्मता च हि।
अतो ब्रह्म निमित्तञ्चोपादानञ्चेति कथ्यते ॥ (ब्र. प. मा.)

**आत्मक्रीडः**—आत्मव्यतिरिक्ते क्रीडारहितः।

'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः', (मुं. उ. 3-1-4)

यस्य क्रीडा आत्मन्येव, नोद्यानादिषु सः **आत्मक्रीडः**। यस्य रतिरात्मन्येव, न स्रक्चन्दनादिषु स **आत्मरतिः**। रतिः-स्रक्चन्दनादिजन्या प्रीतिः। क्रीडा-उद्यानादिजन्या इति भूमाधिकरणे व्यासार्यैरुक्तत्वात् (रं. भा.)

**आत्मख्यातिः**—भ्रान्तिज्ञानम्-विज्ञानात्मन एवाध्यस्तपदार्थाकारेण भानम्। (योगाचारमतम्)
(अत्रात्मशब्दः ज्ञानपरः, वासनातो नानार्थाकारेण भानम्।)

'आत्मख्यातिरसत्ख्यातिः अख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनीयख्यातिः इत्येतत्ख्यातिपञ्चकम् ॥
योगाचारा माध्यमिकास्तथा मीमांसका अपि।
नैयायिका मायिनश्च प्रायः ख्यातीः क्रमाज्जगुः'॥

ख्यात्यन्तरवादिनाञ्च सुदूरमपि गत्वा अन्यथावभासोऽवश्याश्रयणीयः। असत्ख्यातिपक्षे सदात्मना; आत्मख्यातिपक्षे अर्थात्मना; अख्यातिपक्षेऽपि अन्य-विशेषणमन्यविशेषणत्वेन, ज्ञानद्वयमेकत्वेन च;- विषयासद्भावपक्षेऽपि विद्यमानत्वेन।
(श्री. भा. I-2-27)

यथार्थख्यातिव्यतिरिक्तपक्षेषु अन्यथाख्यातिपक्षः प्रबल इति अभिप्रायेणाह—**ख्यात्यन्तरेति**। **सुदूरमपि गत्वा** पदकपरंपरामुक्त्वापीत्यर्थः। अयं माध्यमिकपक्षः।

किमसदित्येव प्रतीयते, उत सदिति ? असदिति चेत् भ्रमत्वबाधप्रवृत्त्यसम्भवः। सदितीति चेत् अन्यस्यान्यथाभानं स्यादित्यर्थः। अयं योगाचारपक्षः आत्मशब्दो ज्ञानपरः। किं ज्ञानमित्येव प्रतीतम्, उतार्थ इति। प्रथमे प्रवृत्तिबाधभ्रमत्वासंभवः। द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः। (श्रु. प्र.) (विस्तरस्तु ख्यातिपदे द्रष्टव्यः)

तदुक्तं तत्त्वमुक्ताकलापे (247)

> आत्मख्यातौ मतीनां मिथ इतरतया संविदन्या न सिध्ये-
> दन्योन्यार्थोऽनाभिज्ञाः कथमिव च धियो वादजल्पादिकुर्युः।
> मानाभासादिसीमा न कथमपि भवेत् ग्राह्यमिथ्यात्वसाम्यात्
> सर्वं तत्संवृत्तेश्चेन्न खलु सदितरा साऽपि तत्तन्नियन्त्री। इति।

बाह्यख्यातेरसम्भवं परिहृत्य स्वात्ममात्रख्यातेरनुपपत्तिमाह। ग्राह्यस्य ग्राहकतादात्म्ये संविदन्तरासिद्ध्या मतान्तरप्रसङ्गः। तत्र स्वप्रवृत्तिविरोधं चाह—वादिबुद्धिविषयादिकमनुल्लिखन्त्या प्रतिवादिबुध्या कथं तत्प्रतिषेधव्यवहारः प्रवर्त्येतेति भावः। उपलक्षणमेतत् शिष्याचार्यादिसंव्यवहाराणाम्। **मानाभासादीति**—आदिशब्देन तर्कतदाभाससद्दूषणासद्दूषणादिसंग्रहः। अयं भावः—संवृतिः संवित्स्वरूपादन्या वा, अनन्या वा ? आद्ये कथं तदन्यस्याः तेन ग्राह्यत्वम् ? अगृह्यमाणायाश्च स्वरूपसत्यत्वाभावात् संविदधीनसिद्ध्यभावाच्च कथं मानतदाभासादिव्यवस्थापकत्वम् ? न द्वितीयः। संविदनन्यया हि संवृत्या सिद्धं संविदैव सिद्धमित्युक्तं भवति। तथा च त्यज्यतां तन्मिथ्यात्वाभिसन्धिः; अन्यथा संवित्स्वरूपमेवापह्नुतं स्यात्; तस्यास्तदभिन्नत्वादिति॥

(स. सि.)

तत्र आत्मख्यातिर्नाम आत्मनो बुद्धेः ख्यातिर्विषयरूपेण प्रतिभासः। इदं रजतमिति बुद्धिरेव रजतरूपेण अवभासते; न तत्र विषयान्तरापेक्षा। 'अयं घटः' इत्यादिषु सर्वत्र बुद्धेरेव विषयाकारोल्लेखसंभवेन अत्रापि तथैवौचित्यात्।

प्रयोगश्च—विमतं रजतं बुद्धिरूपम्, चक्षुरादिसंप्रयोगमन्तरेण अपरोक्षत्वात्,

संमतबुद्धिवदिति विज्ञानवादिनो बौद्धाः । तच्चिन्त्यम् । चतुर्विधान्हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इति हि तेषां मतम् । तत्र न तावत् सहकारिप्रत्ययाख्यादालो-कादेः रजताकारोदयः संभवति । तस्य स्पष्टतामात्रहेतुत्वात् । नाप्यधिपतिप्रत्यया-ख्याच्चक्षुरादेः । तस्य विषयनियममात्रहेतुत्वात् । नापि समनन्तर प्रत्ययाख्या-त्पूर्वज्ञानात् । विजातीयघटज्ञानानन्तरं विजातीयरजतभ्रमोदयादर्शनात् । नाप्या-लम्बनप्रत्ययाख्याद्बाह्यात् । विज्ञानवादिना तदनङ्गीकारात् । ततः कथं रजताद्य-सत्वे विज्ञानस्य रजताकारसमर्पणम् । न च संस्कारसामर्थ्येन तत्कल्पनमिति वाच्यम् । विकल्पासहत्वात् । तथाहि—स संस्कारः स्थायी क्षणिको वा : आद्ये क्षणिकं-सर्वमिति त्वदीयसिद्धान्तहानिः । अन्त्ये तस्य द्वितीयक्षणावृत्तित्वेन रजताकारकल्पना हेतुत्वायोगात् । पक्षद्वयेऽपि तस्य संस्कारस्य ज्ञेयत्वेन विज्ञानमात्रवादहानिश्च ।

किं च स रजताकारः कथमुत्पद्यते । बाह्यार्थाज्जायत इति तु वक्तुमशक्यम् । त्वया बाह्यार्थस्यानङ्गीकारात् । ज्ञानमपि विशुद्धं तावन्न तज्जनकम् । तस्य मोक्षरूप-त्वात् । दुष्टकारणजन्यज्ञानं तज्जनकमिति चेत् तत्रापि जनकीभूतज्ञानमेव रजत-ग्राहकम् अन्यद्वा । नाऽऽद्यः । क्षणिकयोर्जन्यजनकयोर्भिन्नकालीनत्वेन अपरोक्ष-रजतप्रतीत्यभावप्रसङ्गात् । नान्त्यः । अन्यस्य ज्ञानस्य रजतजन्यत्वे रजतादिर्बा-ह्योऽर्थोऽङ्गीकार्यः स्यात् । रजताजन्यत्वे तु रजतं न तद्विषयः स्यात् । ज्ञानाकारार्पको हेतुर्विषय इत्यङ्गीकारात् । तस्मादात्मख्यातिपक्षे रजतमेव न प्रतीयेत । किं च बुद्धि-बोध्ययोरभेदं ब्रुवता विरुद्धधर्माध्यासेन भेदः कश्चिदङ्गीकृतो न वा । न चेत्क्षणभेदाद्य-सिद्धिप्रसङ्गः । अङ्गीकृतश्चेत् श्वेतपीताद्यनेकाकारग्राहिण्येकत्र ज्ञाने कथं मिथो विरुद्धश्वेतपीतादितादात्म्यसंभव इति बोध्यम् ॥ (य. दी. व्या 9)

आत्मख्यातिः बौद्धैकदेशिनां योगाचाराणाम् । आत्मशब्दो बुद्धिपर्यायः । आत्मनो बुद्धेः रजतात्मना ख्यातिरात्मख्यातिः । ते हि ज्ञानाख्यं तत्वमेकमङ्गीकृत्य तद्व्यतिरिक्तं सर्वं ज्ञानविवर्तितरूपमेवेति ब्रुवते । तेषां मते ' इदं रजतम् ' इत्यत्र ज्ञानमेव रजततया भातीत्यात्मख्यातिरियम् ॥ (वे.का. उप.)

**आत्मगुणाः**—आत्मगतमोक्षहेतुगुणाः ।

'अथाष्टावात्मगुणाः । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति। (अत्र प्रशस्तवाचिमङ्गलपदेन मुक्तिसाधनं विवक्षितमिति भावः) यस्यैते चत्वारिंशत्संस्काराः न चाष्टावात्मगुणाः न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति इति । यस्य तु खलु संस्काराणामेकदेशोऽष्टावात्मगुणाः अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' । (गौ.ध.सू. 8-20, 21, 22, 23)

(भक्तिप्रपत्त्योरपि, मङ्गलपदार्थेऽन्तर्भावो विवक्षितः ।)

भगवद्गीतास्वपि—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थचिन्तनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ इति । (गी. 13-7....11)

अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ (गी. 16-2, 3) इति चोक्तम् ।

शम-दम-तपः-शौच-क्षमार्जव-भयाऽभयस्थानविवेक-दया-अहिंसाद्यात्मगुणाः ।

(वे. सं. 226)

शम-दमौ अन्तःकरणबाह्येन्द्रियजयौ । तपः–कृच्छ्रादि । शौचम्–मानस-वाचिक-कायिकरूपेण त्रिविधम् । क्षमा–दुःखसहिष्णुत्वम् ।

भगवदपचराभीरुत्वम् (भयस्थानविवेकः), तद्रक्षकत्वाध्यवसायादिना निर्भयत्वम् (अभयस्थानविवेकः) ।

दया—परदुःखासहिष्णुत्वम् । अहिंसा—परदुःखाहेतुत्वम् ॥ (ता. दी.)

**आत्मगृहीतिरितरवदुत्तरात्**—(ब्र. सू. 3-3-16)

(आनन्दाद्यधिकरणे षष्ठं सूत्रम् )

'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यत्र आत्मशब्देन परमात्मन एव ग्रहणम् । कुतः एतत्? उत्तरात्–'सोऽकामयत बहु स्यां प्रजायेय' इत्यानन्दमयविषयादुत्तरात् वाक्यात् । इतरवत्–यथा इतरत्र 'आत्मा वा इदमेक एवाग्र आसीत् । स ईक्षत लोकान्नु सृजै' इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणम्, तद्वत् ॥

आत्माऽऽनन्दमय इति ह्यात्मशब्दात्परग्रहः ।
संकल्पादुत्तरादग्र आत्मेत्याद्यात्मशब्दवत् ॥ (ब्र. प. मा. )

**आत्मघाती**—आत्मसम्बन्धिदेहनाशकः (शरीरहन्ता) ।

(आत्मानं देहं हन्तीत्यर्थे हनधातोः कर्मणि हनः (पा.सू. 3-2-86) इति सूत्रेण णिनिप्रत्यये हकारस्य कुत्वं नकारस्य तकारश्च ।)

'व्यापादयेद्वृथात्मानं स्वयं योग्न्युदकादिभिः ।
अवैधेनैव मार्गेण आत्मघाती स उच्यते' ॥

इति हि स्मर्यते ।

आत्मनः स्वशरीरस्य प्राणेन सह वियोजयितरि जने प्रसिद्धोऽयं शब्दः आत्मघातीति । स च द्विविधः ; वैधोऽवैधश्चेति । अवैधोऽपि ज्ञानपूर्वकः तदपूर्वकश्चेति द्विविधः ।

वैधात्मघाते न दोषः । तदाहुः—मनुवृद्धगर्गादयः—

वृद्धः शौचमृते लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
नरस्तु व्याधिरहितः न त्यजेदात्मनस्तनुम् ।
अरिष्टैरात्मनो ज्ञात्वा मृत्युकालमुपस्थितम् ॥
व्याधितो भिषजा त्यक्तः पूर्णे चायुषि चात्मनः ।
यथा युगानुसारेण संत्यजेदात्मनस्तनुम् ॥ इति ॥

अत्र अवैधे नेत्युक्तेः विधिबलप्राप्त आर्तप्रपत्तौ न दोष इति ध्वन्यते ॥

**आत्मचैतन्यस्य नित्यता**—आत्मधर्मभूतज्ञानस्य अविनाशः ।

'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' (बृ उ 6-5-14)
'नहि विज्ञातुः विज्ञातेर्विपरिलोपो विद्यते, अविनाशित्वात्' (बृ.उ. 6-3-30)

अयमात्मा स्वयमविनाशी । अनुच्छित्तिधर्मा—न विद्यते उच्छित्तिर्यस्य, सोऽनुच्छित्तिः अविनाशीति यावत् । अनुच्छित्तिः धर्मो यस्य, सोऽनुच्छित्तिधर्मा ; एवं बहुव्रीहिगर्भो बहुव्रीहिः । तस्य ज्ञानलक्षणो धर्मोऽप्यविनाशीत्यर्थः ; न तु उच्छित्तेरभावोऽनुच्छित्तिः, स धर्मो यस्येति बहुव्रीहिः ॥ (रं. भा.)

आत्मनः चैतन्यमागन्तुकमिति न्यायवैशेषिकाः वदन्ति । अर्थेन्द्रियसन्निकर्षाद्यन्वयव्यतिरेकानुविधानात्, जानामि, अज्ञासिषम् इत्यादिकालावच्छेदप्रतीतेः ; स्वापादिदशासु ज्ञानादर्शनाच्चेति ।

सिद्धान्ते तु—'एष हि द्रष्टा श्रोता....बोद्धा विज्ञानात्मा पुरुषः' इत्यादिश्रुतिभिः आत्मनः ज्ञानस्वरूपत्वं 'विज्ञानात्मा' इत्यनेन सिद्ध्यति । तथैव द्रष्टा श्रोता इत्यादिभिश्च उपाधेः अनिर्देशात् ज्ञानस्य स्वाभाविकधर्मत्वं च सिध्यति ।

अत एव 'ज्ञोऽत एव' इति सूत्रितम् । स्वापादिषु ज्ञानस्य स्वरूपतः सद्भावेऽपि इन्द्रियाणामुपरमात् तदानीं ज्ञानस्य प्रसरणाभावः । तावन्मात्रेणैव ज्ञानस्य अनित्यत्व-

वादो न घटते। लोके ज्ञानस्योत्पत्तिव्यवहारस्तु प्रसरणविवक्षयैव। विस्तरस्तु आत्मसिद्धौ द्रष्टव्यः।

अत्र धर्मपदेन ज्ञानमेव ग्राह्यमित्येतत् न केवलं प्रकरणात्, 'अलं वा अरे इदं विज्ञानाय' इति पूर्वोपदेशसमानार्थकत्वानुसारादपि सिद्ध्यति। प्राभाकरा अपि धर्मभूतज्ञानम् अभ्युपयन्ति स्म।

विज्ञातुरित्यत्र ताच्छील्ये तृन्। अतः स्वाभाविकविज्ञानवतः विज्ञानस्य लोपो नास्ति, कुत इति चेत्, अविनाशित्वात्-स्वाभाविकविज्ञानवतः आत्मनः नाशाभावात्, तद्धर्मस्यापि नाशो नास्तीत्यतिरोहितं विपश्चिताम्॥

**आत्मचौर्यम्**—आत्मापहारः। भगवदीये तद्गतातिशयाधानेच्छयैव परिकल्पिते प्रत्यगात्मनि स्वातिशयावहस्वतन्त्रत्वाभिमानम्।

'योऽन्यथा सन्तमात्मानं अन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा'॥ (भा.उ. 42-35)

अनेनेश्वरशेषत्वाकारम् अपरिज्ञाय, 'अहमेव स्वतन्त्रः' इति ज्ञानमेवात्मचौर्यं विवक्षितम्। इदं च बुद्धिकृतं चौर्यं गीतावाक्येनापि लक्ष्यते—

'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः'॥ इति॥ (गी. 3-12)

**यज्ञभाविताः**—यज्ञेनाराधिताः मदात्मका देवाः **इष्टान् भोगान् वो दास्यन्ते** उत्तमपुरुषार्थलक्षणं मोक्षं साधयतां ये इष्टा भोगास्तान् भोगान् पूर्वपूर्वयज्ञभाविता देवा दास्यन्ते, उत्तरोत्तराराधनापेक्षितान् सर्वान् भोगान् वो दास्यन्ते इत्यर्थः। स्वाराधनार्थतया तैर्दत्तान् भोगान् तेभ्यो अप्रदाय यो भुङ्क्ते चोर एव सः।

चौर्यं हि नाम अन्यदीये तत्प्रयोजनायैव परिक्लृप्ते वस्तुनि स्वकीयतावुद्धिं कृत्वा तेन स्वात्मपोषणम्। अतोऽस्य न परमपुरुषार्थानर्हतामात्रम्; अपि तु निरयगामित्वं च भविष्यतीत्यभिप्रायः॥ (गी.भा.)

ननु किमत्र चोरत्वम्? न हि देवानां भोगान् असौ गूढं प्रसह्य वा हरति। न च तैर्दत्तस्य स्वहस्तागतस्य भोगश्चौर्यम्। न हि राजादिसेवकाः तद्दत्तभोगजीविनश्चोरा इति शूलमारोप्यन्ते। एवं च सति सर्वेषां यज्ञादिफलभुजाम् अविशेषेण चोरत्वं प्रसज्यत इत्याशङ्क्याह- **चौर्यं हीति**। परबुद्ध्या परप्रयोजनत्वेन परिकल्पितस्य स्वकीयस्य, परानुमत्या स्वप्रयोजनतया परिकल्पितस्य अन्यदीयस्य च व्यवच्छेदाय अन्यदीय इत्यादिविशेषणद्वयम्। तेन स्वात्मपोषणमिति चौर्यस्य फलम्। अन्यदीये स्वकीयताबुद्धिकरणमित्येव लक्षणम्। तत्प्रयोजनतया इत्यन्यदीयत्वफलम्। तेन स्वात्मपोषणानौचित्यद्योतनम्। वस्तुशब्देन चोरयितव्यावान्तरभेदाविवक्षां द्योतयति। बुद्धिं कृत्वेत्यनेन चौर्यस्य न कायिकव्यापारोऽवश्यापेक्षित इति सूचितम्, बुद्धिपूर्वत्वं च द्योतितम्। एवं च सति 'योऽन्यथा सन्तम्' इत्याद्युक्त आत्मचौर्यमपि लक्षितं भवति। भगवदीये तद्गतातिशयाधानेच्छयैव परिकल्पिते प्रत्यगात्मनि स्वातिशयावहस्वतन्त्रत्वाभिमानरूपत्वात् तस्य।

नन्वेवमप्यत्रोदाहरणे कथं चोरत्वम्? उच्यते—देवा हि कर्मभिराराधिता अपि हविर्ग्रहणार्थमेव फलं प्रयच्छन्ति; यथा राजानः षड्भागसंग्रहाय स्वाराधकेभ्यः क्षेत्रादिकम्। तत्र करप्रदानविमुखाः पुरुषा इव हविरादिकमप्रयच्छन्तो दण्ड्या एवेति॥

(ता. चं.)

**आत्मतत्त्वस्य ज्ञानातिरिक्तत्वसमर्थनम्**—आत्मनः नित्यधर्मभूतज्ञानापेक्षयातिरिक्तत्वसाधनम्।

धीर्नित्या यस्य पक्षे प्रसरति बहुधाऽर्थेषु सैवेन्द्रियाद्यै-<br>
स्तेनात्माऽजागलस्थस्तन इव किमिह स्वीक्रियेतेति चेन्न।<br>
कल्प्यं चेदात्मतत्त्वं कथयितुमुचितं लाघवं तत्र युक्त्या<br>
नित्या सा यस्य तद्वानपि निगममितो गौरवं नास्य भारः॥ (त.मु. 74)

माभूदस्थिरज्ञानानां प्रतिसन्धानाद्यनर्हत्वादात्मत्वम्। यस्यात्मवत्तद्धर्मभूता धीर्नित्या, सा प्रसरणभेदैः तत्तदर्थान् प्रकाशयतीति पक्षः; तस्य किं तदाश्रयभूतेन नित्यात्मनेति चोद्यमनूद्य प्रत्याह—**धीरिति**। धी-तद्वन्तौ तावत् पृथग्दृष्टौ। तत्र 'न विज्ञातुर्वि ज्ञातेर्विपरिलोपो विद्यते', 'अवबोधादयो नित्या एव हि ते' इत्यादिभिः द्वयोरपि नित्यत्वं यस्य सिद्धं, तस्य कल्पनागौरवरूपो भारो नास्ति। (स॰ सि.)

'अनुमितिविषये लाघवस्यानुरोधात्' इत्याचार्यपादैरुक्तदिशा नित्यज्ञानाश्रयस्यात्मन एव श्रुत्यैकसमधिगम्यतया लाघवयुक्तिः निर्मूलेति भावः। गीताचार्येणाऽपि एतत् स्पष्टमभिहितम्—

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्' ।। इति ॥

अत्र भाषितम्—**तेषामिति**। नष्टज्ञानानां बहुत्वाभिधानादात्मस्वरूपबहुत्वम्; 'न त्वेवाहं जातु नासम्' इत्युपक्रमावगतमत्र स्पष्टतरमुक्तम्। न चेदं बहुत्वमुपाधिकृतम्, विनष्टज्ञानानामुपाधिगन्धाभावात्। तेषामादित्यवत् ज्ञानमिति व्यतिरेकनिर्देशात् ज्ञनस्य स्वरूपानुबन्धिधर्मत्वमुक्तम्। आदित्यदृष्टान्तेन च ज्ञातृज्ञानयोः प्रभाप्रभावतोरिवावस्थानं च। तत एव संसारदशायां ज्ञानस्य कर्मणा सङ्कोचो मोक्षदशायां विकासश्च उपपन्नः'—इति ॥

**आत्मतन्त्रः**—स्वतन्त्रः (अकर्मवश्यः परमात्मा)।

'तस्योपरिष्टात्स्वयमब्जनाभः
पपात विश्वाश्रय आत्मतन्त्रः'। (भाग. 10-44-37)

परतन्त्रप्रतियोगिकः अयं स्वतन्त्रवाची। (भाग. वी.)

'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरेण तन्त्रशब्दः प्रधानवाची। तथा च स्वम् आत्मा तन्त्रं प्रधानमस्य (स्वमेव प्रधानम्) इति व्युत्पत्तिः स्वतन्त्रपदे, परः तन्त्रं प्रधानं यस्य, (पर एव प्रधानम्) इति च परतन्त्रपदे विवक्षिता।

**आत्मतृप्तस्य साधनानारम्भः**—स्वतः प्राप्तात्मदर्शनस्य आत्मनैव तृप्तस्य तत्साधनानारम्भः।

[असाधनायत्तात्मदर्शनस्य मुक्तस्येव तदर्थं कर्मानारम्भ इत्याह—]

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते' ॥

'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः' ॥ (गी. 3-17, 18)

यस्तु ज्ञानयोग-कर्मयोगसाधननिरपेक्षः स्वत एव आत्मरतिः आत्माभिमुखः, आत्मनैव तृप्तो नान्नपानादिभिः आत्मव्यतिरिक्तैः ; आत्मन्येव च सन्तुष्टो नोद्यान-स्रक्चन्दनगीतवादित्रनृत्तादौ, धारणपोषणभोग्यादिकं सर्वमात्मैव यस्य, तस्यात्मदर्शनाय कर्तव्यं न विद्यते ; स्वत एव सर्वदा दृष्टात्मस्वरूपत्वात् । अत एव तस्यात्मदर्शनाय कृतेन तत्साधनेन नार्थः—न किञ्चित्प्रयोजनम् ; अकृतेनात्मदर्शनसाधनेन न कश्चिदनर्थः : असाधनायत्तात्मदर्शनत्वात् । (गी.भा.)

ज्ञानयोगाद्यधिकारिणोऽपि कर्मकर्तव्यताया उक्तत्वात्, 'तस्मादसक्तः' इत्यादिना वक्ष्यमाणत्वाच्च तन्मध्ये 'यस्त्वात्मरतिः' इत्यादिश्लोकौ न ज्ञानयोगाद्यधि-कारिविषयौ ; किन्तु फलदशाविषयौ इत्यभिप्रायेणाह—**असाधनायत्तेति** । एतेन 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्याद्युक्तसन्यासाश्रमिपरत्वेन परव्याख्यानं निरस्तम् । तस्यापि हि स्वाश्रमधर्मनिष्ठस्य सर्वकर्मनिवृत्त्यभावात् । वर्णाश्रमविशिष्टस्यैव हि वर्णाश्रम-धर्मारम्भः ; न पुनः वर्णाश्रमाधीननामरूपविनिर्मुक्तस्येति मुक्तशब्दस्य भावः । यस्त्विति तुशब्दः साधननिष्ठव्यावृत्त्यर्थ इत्यभिप्रायेण ज्ञानयोग-कर्मयोगसाधननिरपेक्ष इत्युक्तम् ।

कथं तर्हि साधनाभावे साध्यसिद्धिः इत्यत्राह—**स्वत एवेति** । प्रतिबन्धकं हि तन्निवर्त्यम् । आत्माभिमुखत्वं तु स्वतः प्राप्तमिति भावः । रतिशब्दोऽत्राभि-मुख्यविषयः, तृप्त्यादेः पृथङ्निर्देशात् । 'आत्मरतिरेव', 'आत्मन्येव' इति पूर्वापरवत् 'आत्मतृप्तः' इत्यत्राप्यवधारणं विवक्षितम् । यस्य तु ज्ञानयोगनिष्ठस्यापि धारणादिकमन्नपानादिभिः, तस्य कर्तव्यं विद्यत एव । (ता. चं.)

शङ्करभाष्ये तु—

'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ' ॥ इति ॥

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेण अनुवर्तनीयम् ? आहोस्वित् पूर्वोक्त कर्मयोगानुष्ठानोपायप्राप्यामनात्मविद: ज्ञानयोगेन निष्ठाम् आत्मविद्भिः सांख्यैरनुष्ठेयाम-प्राप्तेनैव ? इत्येवमर्थम् अर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थम् ' एतं वा एतमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तः ब्राह्मणाः मिथ्याज्ञानवद्भिः अवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्र-प्रयुक्तं चरन्ति न तेषाम् आत्मज्ञाननिष्ठाव्यतिरेकेण अन्यत् कार्यम् अस्ति ' इत्येवं श्रुत्यर्थम् इह गीताशास्त्रे प्रतिपिपादयिषितमाविष्कुर्वन् आह भगवान्—**यस्तु इति** । यस्तु सांख्यः आत्मज्ञाननिष्ठः, **आत्मरतिः**—आत्मनि एव रतिः न विषयेषु यस्य, सः आत्मरतिरेव, **स्यात्**—भवेत् , **आत्मतृप्तश्च**—आत्मनैव तृप्तो न अन्नरसादिना स, **मानवः** मनुष्यः सन्यासी, **आत्मन्येव च सन्तुष्टः**—सन्तोषो हि बाह्यार्थलाभे सर्वस्य भवति, तम् अनपेक्ष्य आत्मन्येव च सन्तुष्टः सर्वतो वीततृष्ण इत्येतत् । य ईदृश आत्मवित् तस्य कार्यं करणीयं न विद्यते इत्यर्थः । इत्यभिहितम् ।

अयमत्र विवेकः— शङ्कराचार्याः सन्यासिविषयकतया श्लोकद्वयं योजयित्वा, तेषां कर्तव्यकर्माभावं प्रत्यपीपदन् ।

आनन्दतीर्थास्तु—आत्मशब्दस्य परमात्मपरत्वेनाङ्गीकृत्यासंप्रज्ञातसमाधिनिष्ठस्य कर्तव्यं कर्म नास्तीति वर्णयामासुः ।

रामानुजाचार्या हि—प्रथमषट्के जीवात्मविषयकसाक्षात्कारार्थं कर्म-ज्ञान-योगाः प्रस्तुताः । प्रकृते सुकृतविशेषेणासाधनायत्तात्मदर्शनस्य मुक्तस्येव तदर्थं साधनानुष्ठानं नैव कार्यम् । स्वत एव सर्वदा दृष्टात्मस्वरूपत्वात् । ' तस्मादसक्तः सततं कार्यं कर्म समाचार ' इति वक्ष्यमाणत्वाच्च तन्मध्ये ' यस्त्वात्मरतिः ' इत्यादिश्लोकौ न ज्ञानयोगा-द्यधिकारिविषयौ ; किन्तु फलदशाविषयावित्येवाभ्युपागमन् सर्वाश्रमिणां तत्तदाश्रमानु-गुणकर्मणामत्यागादिति ॥

**आत्मतृप्तिः**—परमात्मनः स्वानुभवजन्यानन्दः ।

[ परमात्मनः आत्मतृप्तिः भोगतृप्तिविलक्षणा । लीलाविभूति-भोगविभूतिभेदेन रसवैषम्यं च प्रमाणप्रतिपन्नम् ]

अवाप्तसमस्तकामस्यापि लीलाप्रयोजनत्वे नैरपेक्ष्यं संभवति, लोके केवललीलायै कन्दुकाद्यारम्भदर्शनात् अस्यात्मतृप्तस्य अवाप्तसमस्तकामत्वं हि सदाऽभिमतसकलभोगोपकरण सद्भावः । आत्मतृप्तेर्भोगतृप्तिर्विसजातीया । लीलारसस्यापि तद्विलक्षणस्य त्रिगुणपुरुषाद्युपकरणं नित्यमेव ॥ (वे.सा. 2-1-33)

तथाचेश्वरस्यात्मतृप्तस्य, नित्यविभूतियोगेन भोगः, तद्विलक्षणलीलारसश्चोपपन्नः । अत्र अवाप्तशब्दे अर्हार्थे क्तप्रत्ययः । 'अर्हेकृत्यतृचश्च' (पा.सू. 3-3-169) इत्यत्र चकारेण लिङ इव अर्हार्थे क्तप्रत्ययस्यापि समुच्चयो विवक्षितः ॥

**आत्मत्वम्**—1. अन्तःप्रविश्य नियन्तृत्वम् ।

'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति हि श्रूयते ।

2. पुरुषार्थप्रतिसम्बन्धित्वम् । देहं प्रति नियन्तृतया व्यापित्वं वा । (श्रु.प्र. I-110)

3. शरीरप्रतिसम्बन्धित्वम् । (य. दी. 70)

तत्तच्छरीरप्रतिसम्बन्धित्वं जीवात्मनः ; चेतना-चेतनात्मकसर्वशरीरप्रतिसम्बन्धित्वं परमात्मन एव । असङ्कोचेन प्रवृत्तिनिमित्तसद्भावात् । व्यापित्वमाकाशे वर्तत इति तद्व्यावर्तनाय नियन्तृत्वम् । राज्ञिनियन्तृत्वमिति दोषवारणाय अन्तः प्रविश्येतीति निष्कर्षः । अत एवात्मशब्दः जीवात्मनि परमात्मनि च प्रयुज्यते ॥

**आत्मत्वोपासनाधिकरणम्**—(4-1-2)

'आत्मेतितूपगच्छन्ति ग्राहयन्ति च' इत्येकसूत्रात्मकं आत्मपदादिमम् इदमधिकरणम् ।

पूर्वाधिकरणे परमात्मोपासनं आप्रयाणात् असकृदावृत्तरूपम् इत्युक्तम् । तत्र उपासनप्रकारनिर्णयार्थं प्रवृत्तमिदमधिकरणम् ।

जीवब्रह्मणोः भिन्नत्वात् जीवादन्यत्वेनशरीरशरीरिभावसम्बन्धशून्यत्वेन ब्रह्मोपास्यमित्याशङ्क्य, 'त्वं वा अहमस्मि' इत्यादिना पूर्वोपासकानां ब्रह्मणोऽहमित्यनुसन्धानदर्शनात्, अर्थान्तरभूतस्यापि तस्यात्मनः अन्तर्यामित्वेनात्मतयाऽहमित्यनुसन्धानमविरुद्धमिति स्थापितम् अत्र ।

आत्माधिकरणात् भेदप्रदर्शनाय, इतिशब्दस्य प्रकारवाचित्वज्ञापनाय च आत्मत्वोपासनाधिकरणं इति व्यपदिश्यते ।

स्वस्मात् विभेदेन परोह्युपास्यः
भेदस्य सर्वत्र समर्थितत्वात् ।
नैवाहमित्यात्मतया ह्युपास्यः
त्वं वेति शब्दाच्च तदात्मतश्च ॥ (न्या. क. सं. 4–2)

**आत्मदाः** — स्वात्मप्रदः । (मोक्षप्रदः परमात्मा ।)

[ आत्मानं ददातीत्यर्थे 'आतो मनिन् क्वनिप् वनिपश्च' (पा.सू. 3–2–74) इत्यनेन चाड्विच् ]

' य आत्मदा बलदा यस्य विश्व उपासते ' (तै.ना. 12)

आत्मदाः समाश्रितेभ्यः स्वाश्रयणमहाधर्मस्यानुगुणं अन्यत् प्रदेयमजानन् स्वात्मानं ददाति । एवं स्वमेव परया कृपया आत्मानं प्रदाय, विभूतिद्वयनिर्वाहकमात्मानं भोक्तुं बलमपि ददातीति बलदाः । ददातेः विजन्तं पदद्वयमिदम् ॥ (कू.भा.)

प्रळयकाले अचिदविशिष्टस्य जीवस्य परमकृपया देहेन्द्रियज्ञानशक्त्यादिकं, उपासनपर्यन्तानुष्ठाने बलं च प्रदाय मोक्षपर्यन्तफलमपि सर्वेषां अनुगृह्णातीति भावः ॥

**आत्मदास्यम्**—आत्मनिष्ठं कैङ्कर्यम् ।

[दासस्य कर्म इत्यर्थे 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा.सू. 5-1-124) इत्यनेन ष्यञ् । शेषिभूतपरमात्मनिरूपितसेवा इति यावत् ।]

'स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर' ॥ (श्रीविष्णुतत्त्वम्)

जीवस्वरूपस्य परमात्माधीनसत्ताकत्वात् तच्छेषतैकस्वरूपत्वाच्च, परमात्मदास्यं स्वरूपानुगुणमिति सुखावहमेव । अत एवोक्तं वेदान्ताचार्यैः—

' आत्माभिमानानुगुणपुरुषार्थव्यवस्थया ।
भगवत्पारतन्त्र्यादि प्रवुद्धस्य सुखायते ' ॥ इति ॥

**आत्मदैवतम्**—स्वोपास्यदेवतान्तरशून्यं ब्रह्म ।

[आत्मैव देवता यस्येत्येवकारेण स्वस्योपास्यदेवतान्तरव्यावृत्तिः ।]

' विप्राणां देवदेवानां भगवान् आत्मदैवतम् ' । (भाग. 3-16-17)

**आत्मदैवतम्**—त्वमेव परं दैवतम् । आत्मदैवतमिति हेतुगर्भं विशेषणम् । आत्मदैवतस्य तव न देवतान्तरं सम्भवतीत्यर्थः । तथा च श्रूयते—' पतिं विश्वस्यात्मेश्वरम् ', ' यस्मात्परं नापरमस्ति किञ्चित् ', ' न तस्येशे कश्चन तस्य नाम महद्यशः ', ' स्वे महिम्नि प्रतिष्ठितः ' इत्यादि । (भाग. वी.)

**आत्मदृष्टिसाधकाः**—आत्मसाक्षात्कारस्य साधनानि कर्म-ज्ञान-भक्तिरूपाणि त्रीणि ।

त्रयाणामपि योगानां त्रिभिरन्योन्यसङ्गमः ।
नित्यनैमित्तिकानां च पराराधनरूपिणाम् ॥
आत्मदृष्टेस्त्रयोऽप्येते योगद्वारेण साधकाः ॥ (गी.सं. 25)

अत्र कर्म-ज्ञान-भक्तिरूपाणां त्रयाणां योगानां परभक्तिजनने प्रत्यगात्मदर्शनरूपमवान्तरव्यापारं सहेतुकमाह—**आत्मेति** । योगोऽत्र समाधिरूपमन्तःकरणैकाग्र्यम् , तत्साध्यसाक्षात्कारो दृष्टिः ।

ननु यद्यपि कर्मयोगस्य ज्ञानयोगव्यवधानमन्तरेणापि आत्मावलोकनसाधनत्वं पूर्वमेवोक्तम् ; तथापि भक्तियोगस्य तत्साधकत्वमयुक्तम् , तस्यात्मावलोकनपूर्वकत्वादिति चेत् , मैवम् ; भक्तिनिष्ठाया एव पर्वभेदेन सर्वोपपत्तेः । ज्ञानदर्शनप्राप्तीनामविशेषेण भक्तिसाध्यत्वमुच्यते । तच्च पर्वभेदमन्तरेण नोपपद्यते । अत एव ह्यात्मावलोकनानन्तरं ' मद्भक्तिं लभते पराम् ' इति परशब्देन विशेष्यते ।

अतः आत्मावलोकनरहितस्यापि अद्यतनभक्तानामिव स्तुतिनमस्कारकीर्तनादि-निष्ठया सेवारूपत्वादभिव्यक्तया भक्तिशब्दाभिलप्यया आत्मावलोकनम् उपपद्यते ।

दर्शितश्च परावरभक्तिविभागो वेदार्थसंग्रहे–'सोऽयं परब्रह्मभूतः पुरुषोत्तमः निरतिशयपुण्यसञ्चयक्षीणाशेषजन्मोपचितपापराशेः परमपुरुषचरणारविन्दशरणागतिजनिततदाभिमुख्यस्य सदाचार्योपदेशोपबृंहितशास्त्राधिगततत्त्वयाथात्म्यावबोधपूर्वकाहरहरुपचीयमानशमदमतपश्शौचक्षमार्जवभयाभयस्थानविवेकदयाऽहिंसाद्यात्मगुणोपेतवर्णाश्रमोचितपरमपुरुषाराधनरूपनित्यनैमित्तिककर्मोपसंहृतिनिषिद्धपरिहारनिष्ठस्य परमपुरुषचरणारविन्दयुगलन्यस्तात्मात्मीयस्य तद्भक्तिकारितानवरतस्तुतिस्मृतिनमस्कृतियतनकीर्तनगुणश्रवणवचनध्यानार्चनप्रणामादिप्रीतपरमकारुणिकपुरुषोत्तमप्रसादविध्वस्तस्वान्तध्वान्तस्य अनन्यप्रयोजनानवरतनिरतिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपभक्त्येकलभ्यः' इति । इयं परभक्तिः–भक्तिकारितेत्यवरेति स्पष्टम् ।

'उभयपरिकर्मितस्वान्तस्य ऐकान्तिकात्यन्तिकभक्तियोगलभ्यः' इति चोक्तम्–

अनेन भक्तियोगस्य मुक्तिसाधनत्वोक्तेः कथं वा तस्य आत्मावलोकनसाधनतेति शङ्का व्युदासि ।

आत्मावलोकनसाधनभूतभक्तियोगे भक्तिपदार्थः महनीयविषये प्रीतिसामान्याकाररूप एव; न तु मुक्तिसाधनभूतभक्तिविशेषः इत्यभिप्रायेण भक्तेः पर्वभेदश्च प्रादर्शि ॥

**आत्मधिष्ण्यम्**—आत्मस्थानभूतः वैकुण्ठलोकः ।

> कृत्स्नप्रसादसुमुखं स्पृहणीयधाम
> स्नेहावलोककलया हृदि संस्पृशन्तम् ।
> श्यामे पृथावुरसि शोभितया श्रिया स्वः
> चूडामणिं सुभगयन्तमिवात्मधिष्ण्यम् ॥ (भाग. 3-15-39)

'धिष्ण्यम् ऋक्षे स्थाने बले गृहे' इति वैजयन्ती ।

उरसि शोभितया लक्ष्म्या स्वर्लोकस्य चूडामणिमिव स्थितं आत्मधिष्ण्यं स्थानं वैकुण्ठलोकं सुभगयन्तं शोभयन्तं इव स्थितम् ॥ (भाग. वी )

**आत्मनः अहंशब्दवाच्यता**—आत्मस्वरूपस्य अहंशब्दाभिलापयोग्यता ।

[ परमते अहमर्थः अन्तःकरणावच्छिन्नचित् केवलासंविदेवात्मेत्यभ्युपगम्यते सिद्धान्ते तु ज्ञातुरहमर्थस्यैवात्मत्वं प्रसाधयति ।]

ननु च ' अहं जानामि ' इत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थः, स आत्मा तस्मिन् तद्बलनिर्भासिततया युष्मदर्थलक्षणः, अहं जानामीति सिद्ध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव । नैतदेवम्; अहं जानामीति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव। (श्री.भा. I-147)

अहमर्थात्मनिरासं विस्तरेणानूद्य दूषयति–**ननु चाहमिति** ॥ अत्र परेण विषये घटत्वादिरहितं सन्मात्रं विषयिणि कर्तृकर्मक्रियात्वरहितं प्रकाशमात्रमात्मेत्यभ्युपगतम् । तच्च विस्तरेण प्रतिक्षिप्तम् । तथा ज्ञातरि प्रत्यगर्थे अहंत्वादिकं त्यक्त्वा, तत्रत्यं प्रकाशमात्रमात्मेत्याहुः । तथाहि—' अहं जानामी'त्यस्मदर्थप्रत्यये उत्तमपुरुषोपात्तज्ञातृविषयायां धातूपात्तायां ज्ञप्तौ ज्ञप्त्यंशभूतसंविदात्मा अनिदंशत्वलक्षणप्रत्यक्त्वात् । तत्र हेतुः प्रकाशैकरसत्वलक्षणस्वतस्सिद्धत्वात् तत्र हेतुः चित्त्वलक्षणधीत्वादिति व्यतिरेकित्रयम् । तथा—अहं जानामीत्यबाधितप्रतीति सिद्धः उत्तमपुरुषोपात्तो ज्ञाता, अनात्मेति शेषः, युष्मदर्थस्वरूपात् प्रत्यक्त्वशून्यत्वात् । तत्र हेतुःयुष्मदर्थलक्षणोपेतस्वरूपात् धीनिर्भासितत्वलक्षणात् स्वतस्सिद्धत्वशून्यत्वात् । तत्र हेतुः चिद्व्यतिरिक्तत्वलक्षणात् धीत्वशून्यत्वादित्यन्वयित्रयम् । अयं पूर्वपक्षसारार्थः ॥

तत्र धियः स्वतस्सिद्धत्वमिष्टम् । ज्ञातुः स्वतस्सिद्धत्वशून्यत्वरूपं जडत्वं प्रतिवक्ष्यते । शिष्टानां चतुर्णां हेतूनां बाध उच्यते—**नैतदेवमिति** ॥ प्रत्यक्त्वं नाम स्वस्मै भासमानत्वम् । पराक्त्वं तु परस्मै भासमानत्वम् । अहं स्वस्मै भाति । धीस्सुखादिवत् परस्मै भाति । अतः अहमर्थस्यैव प्रत्यक्त्वं ॥ (द. उ. 359)

किञ्च—अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।
अहम्बुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥

निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥

अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥

मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥

स्वसम्बन्धितया ह्यस्याः सत्ता विज्ञप्तितादि च ।
स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति ॥

छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥

'विज्ञातारमरे केन', 'जानात्येवे'ति च श्रुतिः ।
'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ' इति च स्मृतिः ॥

'नात्मा श्रुते' रित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
'ज्ञोऽत एवे' त्यतो नात्मा ज्ञाप्तिमात्रमिति स्थितम् ॥

अहंप्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्र, अहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनम्, जननी मे वन्ध्येतिवत् व्याहतार्थञ्च । न चासौ ज्ञाता अहमर्थोऽन्याधीन प्रकाशः ; स्वयम्प्रकाशत्वात् । चैतन्यस्वभावता हि स्वयम्प्रकाशता । यः प्रकाशस्वभावः सोऽनन्याधीनप्रकाशः दीपवत् ॥
(श्री. भा. I-147)

इयमष्टश्लोकी अहमर्थात्मवादस्य सकलार्थस्य संग्रहरूपा भाष्यकारीया । तत्र अहंशब्दवाच्यः आत्मा प्रत्यक्त्वादिति व्यतिरेकिणः अनुकूलतर्कः—**अहमर्थो नचेदिति** ॥

योऽसावहमिति व्यवह्रियते स एव हि स्वस्मै भाति । तदन्यत्सर्वं परस्मा एव भातीति परागेव । परस्मै अञ्चतीति पराक् । तस्य प्रतीपमञ्चतीति प्रत्यक् ।

अञ्जनमत्र भानम् । संवित् अनात्मा पराक्त्वात्सुखादिवदित्यर्थो हीत्यनेन विवक्षितः । अनिष्टनिवृत्तीष्टप्राप्तिकामनाविशिष्टस्याधिकारिणो विनाशे शास्त्रस्य निरधिकारिकतयाऽप्रामण्यापत्तिलक्षणा श्रुत्यर्थापत्तिः द्वाभ्यां श्लोकाभ्याम्—**निरस्तेति** । अपुरुषार्थत्वेन विनश्वरत्वेन च ज्ञप्तेरधिकारशङ्कानिराकृतिः द्वाभ्यां—**मयि नष्टेऽपीति** । घटाकाशादिदृष्टान्तं निराह—**छेत्तुरिति** ।

अयं भावः—

स्वावच्छेदकनिर्मुक्तसंविन्नित्यत्वमिच्छता ।
संयोगच्छेदनादौ च किं न तादृक्त्वमिष्यते ॥
घटाकाशादिनीतिश्च त्वया संविदि दुर्भणा ।
तत्तत्संयोगविश्लेषतुल्यागन्तृगुणोज्झनात् ॥ इति ॥

यद्यप्यत्रास्मदर्थस्यैव युष्मदर्थत्वमात्मव्यक्तिभेदात्स्यात् । तथापि घटादिवत् प्रत्यक्त्वसामान्याभावलक्षणं युष्मदर्थत्वमिह व्याहतमित्यभिप्रायः । (द. उ. 359)

अतः अहं जानामीति प्रतीतिस्वारस्यात् प्रमाणान्तरेण युक्त्या च अहमर्थस्यैव आत्मत्वं सुस्थम् । यद्यपि संविदात्मपक्षे लाघवमस्ति । तथापि क्लृप्तौ हि गौरव लाघवविचारः ; न तु उपलब्धौ । उपलब्धिबलेनैव हि अतिलघुरपि शून्यवादो निराक्रियते ॥

**आत्मनः अहङ्काराभिव्यङ्ग्यत्वपक्षनिरासः—**

[ परैः संविद्रूपानुभूतेरेवात्मत्वाङ्गीकारात् तद्व्यञ्जकः अहंकारः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति इत्युच्यते तन्निरस्यते ।]

अहङ्कारस्तु अनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति, आदर्शादिवत् इति । तदयुक्तम् ; आत्मनः स्वयञ्ज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात् । तदुक्तम्—

' शान्ताङ्गार इवाऽऽदित्यमहङ्कारो जडात्मकः ।
स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ' ॥ इति ।

स्वयम्प्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचित् अहङ्कारः अनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीति आत्मविदः परिहसन्ति ।

किञ्च अहङ्कारानुभवयोः स्वभावविरोधात् अनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्यभावः ।

यथोक्तम्—

'व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्यात् यथा घटे ।। इति ।

न च रविकरनिकराणां स्वाभिव्यंग्यकरतलाभिव्यग्याहङ्काराभिव्यंग्यत्वं संविदः साधीयः ; तत्रापि रविकरनिकराणां करतलाभिव्यंग्यत्वाभावात् । करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात् करतलस्य नाभिव्यञ्जकत्वम् । (श्री. भा. I–162)

**स्वयंप्रकाश**शब्देन अभिव्यञ्जकापेक्षाया अभाव उक्तः । **अनुभवाधीनसिद्धय** इत्यनेन अहङ्कारस्याभिव्यञ्जकत्वाभाव उक्तः । **अचिदहङ्कार** इत्यनेन चिन्मात्रातिरेकित्वात् तदायत्तप्रकाश इति परोक्तहेतुः सूचितः । **अनुदितानस्तमितस्वरूपप्रकाशम्** । कदाचिदप्रकाशं चेत्, तदा अभिव्यञ्जकापेक्षा स्यात् ; तदभावात् कदाचिदपि व्यञ्जकापेक्षा नास्तीत्यर्थः । **अशेषार्थ सिद्धिहेतुभूतम्** । त्वया विषयप्रकाशकत्वेन हि स्वयम्प्रकाशत्वं समर्थितमिति भावः । **परिहसन्तीति** । ईदृशमनुभवमीदृशाहङ्कारोऽभिव्यनक्तीति त्वदीया एव त्वत्समीपस्था एव हसन्तीति भावः ॥ (श्रु. प्र.)

संविदि अहङ्कारे च वस्तुतो ज्ञातृत्वम् न स्वीक्रियते । संविदःस्वयंप्रकाशत्वं सर्वसम्मतम् । तस्याः पूर्वोक्तादिशा अभिव्यङ्ग्यत्वे जडत्वंप्रसङ्गः । अतः स्वाभाविकज्ञातृत्ववान् ज्ञानरूपश्च आत्मा इति स्वीकरणीयमिति भावः ॥

**आत्मनः आनन्दानुभवः**—जीवस्वरूपस्यानुकूलतया भानम् ।

[' रसो वै सः । रसं ह्येवायं लब्ध्वाऽनन्दी भवति ' इत्युक्तेः रसशब्द-वाच्यानन्दमयलाभात् तादृशानन्दानुभवस्तु मोक्षकालिकः । इदानीं जीवस्वरूपस्य सर्वदा अनुकूलतया भानात् तत्र वैषम्यं प्रदर्शयति—आत्मस्वरूपमित्यादिना—]

आत्मस्वरूपं सर्वदाऽनुकूलप्रकाशरूपमित्यानन्दपदव्यपदेश्यं भवति । तदेतदा-नन्दत्वं संसारदशायां मन्दमनुभूयते । धर्मभूतज्ञानगतमनुकूलविषयकत्वरूपमानन्दत्वं तु संसारदशायां कर्मवैचित्र्येणानुकूल-प्रतिकूलशब्दादिविषयभेदेन नानाविधाभिरवस्थाभिः विचित्रं भवति ।

मोक्षदशायां तु धर्मभूतं ज्ञानं सर्वं निरतिशयानुकूलत्वेन विषयीकुर्वत्सत् धर्मिस्वरूपमपि तीव्रानुकूलत्वेन विषयीकृत्य सर्वानुभवरूपमात्मानुभवरूपं च भवति । परिपूर्णपरब्रह्मानुभवरूपं च भवति । सर्वं साक्षात्करोति । आश्रयस्य सर्वज्ञत्वं चावहति । यावत्कालं विकसदेव प्रवहति ॥ (द.उ. 242)

**आत्मनः चतुष्पात्त्वम्**—1. पादचतुष्टयविशिष्टः जीवात्मा ।

' सर्वं ह्येतद्ब्रह्म ; अयमात्मा ब्रह्म, सोऽयमात्मा चतुष्पात् ' । (मां.उ. 1-2)

प्रणवं स्तुत्वा उपासनमुपदेष्टुमुपक्रमते । सः ब्रह्मात्मकतया प्रस्तुतः, **अयमात्मा**—प्रत्यगात्मा, **चतुष्पात्**—चत्वारः पादा यस्य, तथोक्तः जाग्रद्दशावस्थः स्थूलभुग्वैश्वानरः प्रथमः पादः । स्वप्नावस्थः प्रविविक्तभुक्तैजसः द्वितीयः पादः । सुषुप्तस्थः एकीभूतः आनन्दभुक् चेतोमुखः प्राज्ञः तृतीयः पादः । जाग्रदाद्यवस्था-त्रयत उत्तीर्णः प्रकृतिबन्धविनिर्मुक्तः स्वस्वरूपमापन्नः प्रत्यगात्मा चतुर्थः पादः। (गो.भा.)

2. पादचतुष्टयविशिष्टः परमात्मा ।

**सोऽयमात्मा चतुष्पादिति**—सः समस्तप्रणवप्रतिपाद्योऽयं सर्वनियामकतया तत्तद्देहेषु अवस्थितः आत्मा—परमात्मा, चतुष्पात्—चत्वारः पादाः स्वरूपांशा यस्य, सः चतुष्पात् । चत्वारि अस्यांशभूतानि स्वरूपणीत्यर्थः । यत्र स्थित्वा जीवो जागर्ति, तत्स्थानं जागरितं तदेव स्थानं यस्य, तादृशोऽयं प्रथमः पादः ।

स्वप्नकालीनानर्थान् भुङ्क्ते भोजयति च जीववर्गमिति द्वितीयः पादः।

सुषुप्तिस्थानस्य प्राज्ञस्य भगवतो व्यापारः तृतीयः पादः।

अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चो दशमं शान्तं विश्वमद्वैतं चतुर्थं मन्यन्ते॥ (आ.भा.)

**आत्मनः ज्ञप्तिमात्रत्वनिरासः**—आत्मा ज्ञानस्वरूपः ज्ञानगुणकश्च।

'मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञाप्तिरवस्थिता।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥
स्वसम्बन्धितया ह्यस्याः सत्ता विज्ञप्तितादि च।
स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम्॥
'विज्ञातारमरे केन' 'जानात्येवेति' च श्रुतिः।
'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ' इति च स्मृतिः॥
'नात्मा श्रुते'रित्यारभ्य सूत्रकारोऽपि वक्ष्यति।
'ज्ञोऽत एवे'त्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम्'॥

अहम्प्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः। तत्र, 'अहं जानामी'ति सिद्धो ज्ञाता युष्मदर्थ इति वचनम्, 'जननी मे वन्ध्ये'तिवत् व्याहतार्थञ्च। न चासौ ज्ञाता अहमर्थोऽन्याधीनप्रकाशः; स्वयम्प्रकाशत्वात्। चैतन्यस्वभावता हि स्वयम्प्रकाशता। यः प्रकाशस्वभावः सोऽनन्याधीनप्रकाशः, दीपवत्। न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वञ्च। किं तर्हि? दीपः प्रकाशस्वभावः स्वयमेव प्रकाशते; अन्यानपि प्रकाशयति स्वप्रभया।

एतदुक्तं भवति—यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते—

यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथापि तेजोद्रव्यमेव, न शौक्ल्यादिवद्गुणः; स्वाश्रयादन्यत्रापि वर्तमानत्वात् रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्, प्रकाशवत्त्वाच्च

तेजोद्रव्यमेव, नार्थान्तरम् । प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषाञ्च प्रकाशकत्वात् । अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रय-त्व-तच्छेषत्वनिबन्धनः ।

न च आश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते ; मणि-द्युमणिप्रभृतीनां विनाशप्रसङ्गात् । दीपेऽप्यवयवविप्रतीतिः कदापि न स्यात् । न हि विशरणस्वभावा एव दीपाः चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य, ततः पश्चात् युगपदेव तिर्यगूर्ध्वमधश्चैकरूपाः विशीर्णाः प्रचरन्तीति शक्यं वक्तुम् । अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्नाः विनश्यन्तीति, पुष्कलकारणक्रमोपनिपातात् तद्विनाशे विनाशाच्च अवगम्यते । प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यं औष्ण्याधिक्यमित्यादि उपलब्धि-व्यवस्थाप्यम् , अग्न्यादीनामौष्ण्यादिवत् ; एवमात्मा चिद्रूप एव चैतन्यगुणक इति । चिद्रूपता हि स्वयम्प्रकाशता ।

तथा हि श्रुतयः, 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव', 'विज्ञानघन एव', 'अत्राऽयं पुरुषः स्वयञ्ज्योतिर्भवति', 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते', 'अथ यो वेदेदं जिघ्राणीति स आत्मा,' 'कतम आत्मेति', 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः', 'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः', 'विज्ञातारमरे केन विजानीयात्', 'जानात्येवायं पुरुषः', 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्', 'स उत्तमः पुरुषः....नोपजनं स्मरन्निदं शरीरम्', 'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति', 'तस्माद्वा एतस्मान्मनोमयात्, अन्योऽन्तर आत्मा विज्ञानमयः' इत्याद्याः । वक्ष्यति च 'ज्ञोऽत एव' इति। अतः स्वयम्प्रकाशोऽयमात्मा ज्ञातैव ; न प्रकाशमात्रम् । प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः दीपादिप्रकाशवत् । तस्मात् नात्मा भवितुमर्हति संवित् । संविदनु-भूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः। न हि लोक-वेदयोः जानात्या-देरकर्मकस्य अकर्तृकस्य च प्रयोगो दृष्टचरः ।

यच्चोक्तम्—अजडत्वात् संविदेवाऽऽत्मेति । तत्रेदं प्रष्टव्यम् । अजडत्वमिति

किमभिप्रेतम्। स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्, तथा सति दीपादिषु अनैकान्त्यम्। संविदतिरिक्तप्रकाशधर्मानभ्युपगमेन असिद्धिः विरोधश्च। अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम्। यद्युच्येत—सुखादिः अव्यभिचरितप्रकाशोऽपि अन्यस्मै प्रकाशमानतया घटादिवत् जडत्वेन अनात्मा—इति। ज्ञानं वा किं स्वस्मै प्रकाशते? तदपि हि अन्यस्यैव अहमर्थस्य ज्ञातुरवभासते, अहं सुखीतिवत्; जानाम्यहमिति।

अतः स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविदि असिद्धम् अजडोऽहमर्थ एवाऽऽत्मा। ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता। तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयं प्रति प्रकटत्वम्, इतरं प्रति अप्रकटत्वं च। अतो न ज्ञप्तिमात्रमात्मा, अपि तु ज्ञातैवाहमर्थः। (श्री. भा. I–148, 156)

ज्ञानस्य द्रव्यत्वे द्वयोर्ज्ञानयोर्नियमेन धर्मधर्मिभावो नोपपद्यते; अन्यत्रादर्शनात्। गुणत्वे तु न ज्ञानाश्रयत्वसंभवः; गुणानामगुणत्वात्। न च द्रव्यत्वेऽपि नियताश्रयाश्रयिभावः प्रभाप्रभावतोर्दृश्यत इति वाच्यम्; प्रभाया विशीर्णदीपावयवत्वादित्याशङ्क्याह–**एतदुक्तमिति**। यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते, एवमात्मा चिद्रूप एव चैतन्यगुण इति। यथाशब्दस्योत्तरत्रान्वयः। [चिद्रूपः इत्यत्र रूपशब्दः धर्मिस्वरूपपरः।]

(श्रु. प्र. I–150)

तदुक्तं सारावल्याम्—(230)

ज्ञातृत्वं ज्ञानता च श्रुतिभिरभिदधे नात्र पक्षे पतामः
　सर्वत्रात्मा न भायात्किमिति न निगमैर्देहिनोऽणुत्वसिद्धेः।
स्वाभासैकस्वमूर्तेरविशदमहमस्सर्वदा भानमिष्टं
　धीसङ्कोचात् सुषुप्तिप्रभृतिषु विशदोल्लेखमात्रोपरोधः॥

ज्ञानमात्रमागन्तुकमिति न्यायवादिभिरुक्तं, न पुनर्ज्ञातृत्वम्, मृषावादिभिस्तु ज्ञानत्वं नित्यसिद्धं, ज्ञातृत्वं तु तत्त्वतो नास्त्येव; अथापि अविद्यापरिकल्पितमित्युक्तम्।

विशिष्टाद्वैतिभिः अस्माभिस्तु उभयस्मिन्नपि पक्षे पक्षपातं परित्यज्य ज्ञानत्ववत् ज्ञातृत्वमपि स्वाभाविकमित्युच्यत इत्याह—**ज्ञातृत्वमित्यादिना** ।

श्रुतिभिः किल 'जानात्येवाऽयं पुरुषः' इत्यादिना ज्ञातृत्वमभिधीयते । 'यो विज्ञाने तिष्ठन्', 'विज्ञानं यज्ञं तनुते' इत्यादिना ज्ञानत्वमप्यभिधीयते । तेन वयं अपक्षपातात् ज्ञानत्वं ज्ञातृत्वम् उभयमप्यात्मनः परिगृह्णीम इत्यर्थः । अत्र चोदयति—**सर्वत्रेति** । जीवस्तावत् महदादिशब्दश्रवणात् विभुरेव, तथा च तस्य ज्ञानस्वरूपत्वे, स्वाभाविकज्ञानगुणकत्वे च सर्वतः प्रकाशेत इति । परिहरति—नेति । 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यादिभिः निगमशतैः जीवस्य अणुत्वसिद्धेः इति ।

ज्ञानस्वरूप आत्मा सुषुप्त्यादावपि नित्यं प्रकाशते । तत्र किं विशदज्ञानं प्रसज्यते ? उत अविशदज्ञानम् ? अविशदं चेत् इष्टमेव ; नित्यमेव आत्मस्वरूपमात्र-प्रकाशस्य अङ्गीकारात् । विशदं चेत् तन्न, स्यादेव ; अत्र 'सुप्तोऽहं ईदृशोऽहम्' इत्यादिविशदप्रकाशस्य निद्रादिदोषदूषितधर्मभूतज्ञानसंकोचेन अप्रसञ्जनीयत्वात् । तदिदं सर्वमभिप्रेत्याह—**धीसङ्कोचादिति** । धर्मभूतज्ञानसङ्कोचात् सुषुप्तिप्रभृतिष्वात्म-विषयं विशदज्ञानमुपरुध्यते, अविशदं तु स्वरूपज्ञानं सुषुप्तावप्यनुवृत्तमेवेति न कश्चिद्दोषः ॥ (चिं.म.)

**आत्मनः त्रिधा सर्गः**—परमात्मनः स्वेन रूपेण अवतारः, ततः ब्रह्मणः, ततः रुद्रस्य चोत्पत्तिः।

नारायणः परो देवः सत्त्वरूपी जनार्दनः ।
त्रिधाऽऽत्मानं स भगवान् ससर्ज परमेश्वरः ॥
रजस्तमोभ्यां युक्तोऽभूत् रजस्सत्त्वादिकं विभुम् ।
ससर्ज नाभीकमले ब्रह्माणं कमलासनम् ॥
रजसा तमसा युक्तः सोऽपि मामसृजत् प्रभुः ॥ इति

(अगस्त्यं प्रति रुद्रः) (श्रीवाराहे. 70-14.)

अत्र त्रिधाऽऽत्मानम् इत्येतत् स्वेन रूपेण, क्षेत्रज्ञद्वयविशिष्टवेषेण चेति बहु-प्रमाणानुसारेण मन्तव्यम् । रजस्तमोयोगश्च तद्गुणकद्रव्याधिष्ठातृत्वेन भवति । श्रीनारसिंहपुराणे—

'तत्र सुप्तस्य देवस्य नाभौ पद्ममभून्महत् ।
तस्मिन् पद्मे महाभाग ! वेदवेदाङ्गपारगः ॥
ब्रह्मोत्पन्नः स तेनोक्तः प्रजाः सृज महामते ।
एवमुक्त्वा तिरोभावं गतो नारायणः प्रभुः ॥
तथेत्युक्त्वा स तं देवं विष्णुं ब्रह्माऽथ चिन्तयन् ।
आस्ते किञ्चिज्जगद्धेतोर्नाध्यगच्छत किंचन ॥
तावत्तस्य महारोषो ब्रह्मणोऽभून्महात्मनः ।
ततो बालः समुत्पन्नस्तस्याङ्के रोषसंभवः ॥
स रुदन् वारितस्तेन ब्रह्मणा व्यक्तमूर्तिना ।
नाम देहीति चेत्युक्तस्तस्य रुद्रेत्यसौ ददौ ॥ इति ॥

अत्रैवमण्डजसृष्टिः महोपनिषदि श्रूयते—'एको ह वै नारायण आसीत्, न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः, स एकाकी न रमेत, तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि' इत्यारभ्य, 'अथ पुनरेव नारायणः सोऽन्यं कामं मनसाऽध्यायत, तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोऽपतत्, ता इमा आपस्तद्धिरण्मयमण्डमभवत्, तत्र ब्रह्मा चतुर्मुखोऽजायत' इति । अनन्तरं रुद्रोत्पत्तिश्चैवमभिधीयते—'अथ पुनरेव नारायणः सोऽन्यं कामं मनसाऽध्यायत, तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोऽपतत्, स्वेदात् बुद्बुदमभवत्, बुद्बुदात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत, इति ॥ (स्तो.भा. 14)

[अनेन चतुर्मुखब्रह्मणः रुद्रस्य च सृष्टिः प्रत्यपादि । एवमेव विष्णोरपि परमात्मनः कर्मनिबन्धना सृष्टिः स्यात् इति चेदुच्यते,

जगत्सृष्ट्यनन्तरं रक्षणार्थं स्वयमेव त्रिमूर्तिषु मध्ये अवततार इत्येव प्रमाणसहस्र-सिद्धम् । अत एव ब्रह्मविष्णुरुद्रेन्द्राः सर्वे संप्रसूयन्ते । इति हि उद्घोष्यते । अत्र त्रिमूर्तिमध्यवर्तिनः विष्णोः परमात्मनश्च ऐक्यम् अथर्वशिखायां प्रतिपाद्यते ।]

'ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमिति, एतदक्षरं परं ब्रह्म । अस्य पादाश्चत्वारो वेदाः । शतुष्पादिदमक्षरं परं ब्रह्म'।

(1) भास्वती स्मृता प्रथमा रक्तपीता महद्ब्रह्मदेवत्या ।

(2) द्वितीया विद्युमती कृष्णा विष्णुदेवत्या ।

(3) तृतीया शुभाशुभा शुक्ला रुद्रदेवत्या ।

(4) याऽवसानेऽस्य चतुर्थ्यर्धमात्रा विद्युमती सर्ववर्णा पुरुषदेवत्या ।। इति ।।

( अथर्व 1 )

अस्य ओंकारस्य अकार–उकार–मकार–अर्धमात्रारूपेषु चतुर्ष्ववयवेषु चतुर्वेद-बुद्धिः कर्तव्येत्यर्थः ।

नन्ववसाने श्रूयमाणनादात्मिकाया अर्धमात्रायाः, 'अर्धमात्रात्मको नादो ब्रह्म-नादैकविग्रहः' इति प्रमाणप्रतिपन्नाया ओंकारभिन्नत्वात् कथमस्या अर्धमात्रायाः ओंकार इत्युक्तिरिति चेत्—'अर्धमात्रात्मको नादो ब्रह्मनादैकविग्रहः' इत्योंकारं प्रस्तुत्य, 'ततोऽभूत् त्रिवृदोंकारः' इति ओंकारप्रकृतित्वस्य श्रवणात् तस्य ओंकाराभेदव्यपदेश इति द्रष्टव्यम् ।

प्रथमा अकाराख्या अर्धमात्रा भास्वतीनाम्नी रक्तपीतवर्णा महत्त्वगुणक-ब्रह्मदेवत्या । (2) द्वितीया विष्णुदेवत्या विद्युमतीति स्मृता कृष्णवर्णेत्यर्थः । (3) तृतीया रुद्रदेवत्या शुभाशुभेति प्रसिद्धा शुक्लवर्णेत्यर्थः । (4) विद्युमता पुरुष देवत्या, अत्र पुरुषशब्देन वासुदेव उच्यते ।

'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥
पुरुषञ्ज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥
स्त्रीप्रायमितरत् सर्वं जगत् स्थावरजङ्गमम् ।
ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥

ब्रह्माद्याः सकला देवाः यक्षगन्धर्वकिंनराः ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति '।।

इति स्मरणादिति द्रष्टव्यम् । (टी)

अत्र तुरीयस्य परत्वं सर्वसंप्रतिपन्नम् । अस्यां श्रुतौ द्वितीया विद्युमती विष्णुदेवत्या, चतुर्थी अर्धमात्रा विद्युमती पुरुषदेवत्या इत्यत्र च विष्णुपुरुपपदप्रयोगात् सर्ववेदपठिततत्त्वनिर्णयपरपुरुषसूक्तानुरोधेन जगत्कारणभूतः पुरुषः ब्रह्मपदवाच्यश्च विष्णुरेवेति स्वरसतः प्रतीयते । अत एव उभयत्र विद्युमती इत्यनेन विद्युत्सदृश कान्तिविशिष्ट श्रीसंबन्धोऽपि अविशिष्ट एव इति अर्धमात्रावाच्य तुरीयस्य त्रिमूर्तिघटक-विष्णोश्च ऐक्यमेवेति विष्णोः अवतार एव ; न तु उत्पत्तिः इति सूक्ष्मधियः प्राहुः ॥ अत एवोक्तं वेदार्थसंग्रहे—(266)

पुरुषस्यैव शुद्धिगुणयोगेन शिवशब्दाभिधेयत्वं, 'शाश्वतं शिवमच्युतम्' इत्यादिना ज्ञातमेव, पुरुष एव शिवशब्दाभिहित इत्यनन्तरमेव वदति, 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति उक्तेनैव न्यायेन 'न सन्नचासच्छिव एव केवलः' इत्यादि सर्वं नेयम् इति ।

एवं कारणवाक्यबलादुपास्यविषयपरनारायणानुवाकेन च नारायणस्यैव परत्वं उक्तम् । एवम् 'देवतान्तरस्यापि परत्वे, (न सन्नचासच्छिव एव केवलः) इति कारणवाक्यं, यः परस्स महेश्वरः' इत्युपास्यविशेषनिर्णयपरवाक्यञ्चास्ति' इत्यत्राह—**उक्तेनैव** इति ।

उक्तेनैव न्यायेन कारणवाक्यैः, नारायणस्यैव परमकारणत्त्वप्रतिपादनात्, अनन्यपरनारायणानुवाकादिभिः तस्यैव सर्वस्मात्परत्वनिश्चयात्, ब्रह्मरुद्रादीनां तत्सृज्यत्व-संहार्यत्वश्रवणाच्च । अर्थान्तरेषु दृष्टप्रयोगाणां शिवमहेश्वरादिशब्दानां साधारणत्वात्, तेषां नारायणपरत्वेन प्रयोगदर्शनात्, बह्वीष्वुपनिषत्सु नारायणादिशब्दनिर्देशात्, एकैकस्यामुपनिषदि नारायणादिशब्दाभ्यासाच्च, शिवादिशब्दोऽपि सद्ब्रह्मादिशब्दवत्, नारायणपर्यवसायी इत्यर्थः । तत्र 'यद्वेदादौ स्वरः' इत्यादिवाक्यस्य न केवलं प्रकरणान्तरवाक्यैः नारायणपरत्वनिश्चयः । (ता.दी.)

अपि तु तस्यैव पूर्वापरपर्यालोचनया च नारायणपरत्वं गम्यते ॥

**आत्मनः देवमनुष्यादिनामरूपसम्बन्धः**—परमात्मनः देवमनुष्यादिनामरूपसम्बन्धः।

'स एष इह प्रविष्टः आनखाग्रेभ्यः, यथा क्षुरः क्षुरधानेऽवहितः स्यात्, विश्वम्भरो वा विश्वम्भरकुलाये। तं न पश्यति अकृत्स्नो हि सः।

प्राणन्नेव प्राणो नाम भवति, वदन् वाक्, पश्यंश्चक्षुः, शृण्वन् श्रोत्रम्, मन्वानो मनः। तन्यस्यैतानि कर्मनामान्येव'॥ (बृ.उ 3–4–7)

ननु आत्मनः कथं देवमनुष्यादिनामरूपवत्त्वम्, देवमनुष्यादिशरीरे तस्य अवर्तमानत्वादितीमां शङ्कां व्यावर्तयति 'स एष इह प्रविष्ट आनखाग्रेभ्यः'। **एषः**—अव्याकृतशरीरकः, **सः**—पूर्वमात्मशब्दितः परमात्मा, **इह**—कार्यवर्गे, **आनखाग्रेभ्यः प्रविष्टः**—कारणावस्थायां चिदचितोर्व्याप्य स्थितत्वात् कार्यावस्थायामपि तयोः परिपूर्ण एव स्थित इत्यर्थः। **प्रविष्टः**—अन्तर्यामिरूपेणेति शेषः। तत्र दृष्टान्तमाह–यथा–'**क्षुरः क्षुरधानेऽवहितः स्याद् विश्वम्भरो वा विश्वम्भरकुलाये**'–क्षुरो धीयतेऽस्मिन्निति क्षुरधानम् [अधिकरणे ल्युट्] क्षुरकोशः। तस्मिन् यथा क्षुरः **अवहितः**—पिहितप्रविष्टः, विश्वं बिभर्ति वैश्वानराग्निरूपेणेति विश्वंभरः–अग्निः। तस्य विश्वंभरस्याग्नेः कुलाये–नीडे, दारुणीति यावत्। यथा पिहितप्रविष्टः तथा इह प्रविष्ट इति पूर्वेणान्वयः। **तन्न पश्यत्यकृत्स्नो हि सः**—यस्तिलतैलवत् सर्वस्वरूपव्याप्तं परमात्मानं न पश्यति, सः **अकृत्स्नः** अपूर्णस्वरूपः। असत्कल्प इति यावत्।

परमात्मन एव सर्वनामरूपवत्त्वमुपपादयति–**प्राणन्नेव प्राणो नाम....कर्मनामान्येव।** प्राणन्नेव-प्राणनक्रियां कुर्वन्नेव परमात्मा प्राणनामा भवति। प्राणितीति प्राण इति व्युत्पत्तेरित्यर्थः। **वदन् वाक्**–वदनक्रियां कुर्वन्नेव वाङ्नामा भवति। वक्तीति वाक्। पश्यंश्चक्षुः–दर्शनक्रियां कुर्वन् चक्षुर्नामा भवति। चष्ट इति चक्षुः। शृण्वन् सन् श्रोत्रं भवति। शृणोतीति [हि] श्रोत्रम्। मन्वानः–मननं कुर्वन्नेव मनो भवति। मनुत इति [हि] मनः। **तान्येतानि** प्राणादिनामानि अस्य परमात्मनः पाचक-लावकादिवत् कर्मनामान्येव। अतः सः परमात्मैव प्राणवागादिद्वारा प्राणनवदनादिकर्ता, तथा तत्तच्छब्दप्रवृत्तिनिमित्तभूतजातिगुणक्रियाद्याश्रयः स एवेति तस्यैव तत्तत्प्रवृत्तिनिमित्तक-

चराचरशब्दवाच्यत्वमपीति सर्वनामरूपाश्रयत्वं परमात्मनोऽस्तीति भावः। अत्र प्राणनादिकरणेषु प्राणादिषु कर्तृत्वोपचारः प्राधान्यादवगन्तव्यः॥ (रं-भा.)

ननु ब्रह्मणः नामरूपसम्बन्धाङ्गीकारे 'ब्राह्मणो यजेत' इत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयम् इति शङ्का च 'अरूपवदेव हि तत्प्रधानत्वात्' इति सूत्रकारेणैव निरासि। देवादिशरीरानुप्रवेशे तेन रूपेण युक्तमप्यरूपवदेव तत्—ब्रह्म रूपरहिततुल्यमेव; जीववत् शरीरित्वनिबन्धनं कर्मवश्यत्वमस्य न विद्यत इत्यर्थः। कुतः? निर्वाहकत्वेन प्रधानत्वात्। 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति सर्वानुप्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयोः निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति।

ननु तच्छरीरकत्वेन तदन्तर्यामित्वे कथमरूपवदिति संबन्धरहिततुल्यत्वमुच्यते? इत्थम्; यथा जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसंबन्धः, तथा तदभावात् परस्यारूपवत्त्वम्। विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति। तस्मादरूपतुल्यमेव परं ब्रह्म। ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव॥ (श्री.भा. 3–2–14)

अत एव हि श्रूयते 'सर्वाणि रूपाणि विचित्य धीरः; नामानि कृत्वाऽभिवदन् यदास्ते' इति। अभिवदन्—तैस्तैः नामभिः—स्वाभिमुख्येन वदन् इत्यर्थः। अनेन सर्वशब्दवाच्यत्वं परमात्मनः स्पष्टम्। रूपसम्बन्धस्तु सर्वशरीरकत्वात् निराबाध एव। अत एव सूत्रितम्—'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशः अभाक्तः तद्भावभावित्वात्'—इति॥

**आत्मनः नित्यसंसारित्वादिपक्षभेदः—**

स्वतस्सुखी च अयमात्मा। उपाधिवशात् संसरति। स द्विधा—संसारी असंसारी चेति। पुण्यपापादिमान् पूर्वः। तच्छून्य इतरः। पूर्वोऽपि द्विधा—नित्यसंसारी भाविसंसारविरहश्चेति। तत्र इतःपूर्वमनन्तकल्पेष्विव परस्तादपि हेत्वनागमनात् संसाराविच्छेदसम्भवात् पूर्वः। मानं तु लीलाविभूतिनित्यत्वोक्तिः।

'क्षिपाम्यजस्रम्, न क्षमामि कदाचन' इत्यादिकमपि तदुत्तम्भकम्। केचित्तु 'विलम्बातिरेकपराणि तानि; न तु कस्यचिदपि नित्यः संसारः। अविरुद्धयोरसंसर्गस्य कालविप्रकर्षनियमेन व्याप्तेः। अन्यथा मोक्षसाधने 'स किमहम्?' इति सन्देहात् अप्रवृत्तिप्रसङ्गात्' इति वर्णयन्ति। इतःपूर्वमनागतैतच्छरीराद्युपनिपातवत्, तद्धेतूपनिपातवत् भाविसंसारविरहोपपत्तिः। प्रमाणञ्च ब्रह्मविदो मोक्षवचनानि।
(न्या. सि. 138)

सर्वस्यापि जन्तोरनादौ कालचक्रे कदाचिन् मोक्षहेतूपनिपातावश्यम्भावेन नित्यसंसारिणोऽसम्भव इत्याशङ्क्याह—**इतः पूर्वमिति**। लीलाविभूतिनित्यत्वोक्तिरिति—'निःशेषात्मापवर्गे विरतविरहिणो विश्वकर्ता तदा स्यात्, ततश्च 'अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः' इत्यादिप्रमाणविरोधः स्यादिति भावः। अविरुद्धयोरसंसर्गस्येति—अविरुद्धयोर्यत्र असंसर्गनियमः; स कालविप्रकर्षेण व्याप्तः; यथा पटकुङ्कुमरागयोः। कालविप्रकर्षो भिन्नकालत्वम्। प्रकृते च भिन्नकालभूतत्वाभावात् जीव-मुक्तिकारणयोः संसर्गोऽवश्यंभावीत्यर्थः।

अयं भावः—न तावत् जीवमुक्तिहेत्वोर्भावाभावयोरिव स्वभावविरोधः; येन तयोरसन्निधाननियमः स्यात्। नापि हिमवद्विन्ध्ययोरिव भिन्नदेशत्वनियमः। ततश्च अविरुद्धयोर्जीवमुक्तिहेत्वोरसन्निधानस्य कालविप्रकर्षव्याप्तत्वात्, नित्ये च जीवे कालविप्रकर्षाभावात् नासन्निधाननियम इति। ननु जीवविशेषे मोक्षहेतुविरुद्धोऽस्त्वित्याशङ्क्याह—**अन्यथेति**। **अप्रवृत्तीति**—किमहं मोक्षस्वरूपयोग्यो वा? नित्यसंसारी वा? इति शङ्कायां मोक्षोपायानुष्ठानादौ प्रवृत्तिर्न स्यादित्यर्थः। ननु इतःपूर्वमनन्तेष्वपि कल्पेषु अजाता मोक्षोपायसिद्धिरितःपरं कथमुत्पद्यताम्? ततश्च कस्यापि मुमुक्षा नोत्पत्तुमर्हतीत्याशङ्क्य—'कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे, तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा' इति श्लोकार्थमभिप्रयन्नाह—**इतःपूर्वमिति**। **मोक्षवचनानीति**—इतरथा 'ब्रह्मविदाप्नोति परम्' इत्यादीनामनुष्ठापकत्वाभावेन जरद्गवादिवाक्यतुल्यत्वं स्यादिति भावः। (टी.)

कश्चिच्चेन्नित्यबद्धः किमयमहमिति स्यान्मुमुक्षोरुपेक्षा
मैवं युक्तस्य मुक्तिर्भवति दृढमिति प्रत्ययात्तत्प्रवृत्तेः ।
नो चेत्स्यामन्त्यमुक्तः किमहमिति न केऽप्यद्य मुक्तौ यतेरन्
सर्गस्थित्यादिसन्तत्यविरतिरत इत्येवमेकेऽन्यथाऽन्ये ॥ (त.मु. 97)

अयमेव सिद्धान्त इति निश्चयव्युदासायाह—**इत्येवमेक इति** । पक्षान्तरमाह—**अन्यथाऽन्य इति** । स्वरूपयोग्यानां शुकादिवत्कदाचित्सहकार्यागमान्मुक्तिस्स्यादेव, 'तथा संसारपान्थस्य याति मोहश्रमः शमम्' इत्यादेस्सङ्कोचकाभावादिति भावः । (स.सि.)

निःशेषात्मापवर्गे विरतविहरणो विश्वकर्ता तदा स्यात्
नित्यं चेत् कोऽपि दुःस्थेन्निरुपधिकदयाहानिरस्येति चेन्न ।
पक्षः पूर्वो यदि स्याद्विहरणविरतिः स्वेच्छया नैव दोषः
शिष्टे पक्षे निरुद्धा निरुपधिकदया कुत्रचिन्नित्यमस्तु ॥ (त. मु 98)

द्वयोरपि पक्षयोर्दोषमाशङ्क्य प्रत्याह—**निश्शेषेति** । उत्तरार्धं पक्षद्वयदोषपरिहारार्थम् । पुरुषान्तरप्रतिरोधादिना लीलाविरतौ हि दोषः, न तु स्वेच्छया ; प्रवृत्तिवन्निवृत्तेरप्यैच्छत्वात् । क्वचिन्नित्यं दयारोधोऽपि, तत्तज्जीवकर्मवशात् । अतः प्रतिबन्धरहितेषु सावकाशा कृपा, अल्पव्याजेनानन्तापराधसहनाच्च । (स.सि.)

अत्राचार्यपादानां सर्वमुक्तिपक्ष एव सम्मत इति ज्ञायते । परन्तु 'आत्मनामानन्त्यात्' (असंख्यातत्वात्) इत्यारम्भणाधिकरणभाष्यानुसारेण लीलाविभूतेरविच्छेदो गम्यते । परोक्तरीत्या व्यक्तिविशेषे नित्यसंसारित्वं (मुक्तियोग्यताभावः) इति तु नाभ्युपेयते । सर्वेषां मुक्तियोग्यतैवेति श्रीभाष्यकाराणमाशयः ॥

**आत्मनः पुत्रस्य चाभेदोपपत्तिः**—पितापुत्रयोरभेदः शरीरद्वारकः ।

'आत्मा वै पुत्रनामासि' (मन्त्रप्रश्न. 2-12)

अत्र योऽयमात्मनः पुत्रादिरूपः परिणामः प्रतीयते, सोऽपि 'अङ्गादङ्गात् सम्भवसि' इत्यादिकम् अनुसन्दधानस्य प्रकृत्यंशगत एव प्रकाशते ॥ (ता.चं. 13-20)

**आत्मनः वरणम्**—जीवविषयकं परमात्मनो वरणम् ।

[अत्र वरणं भक्तिरूपापन्नोपासनेन ' मामयं प्राप्नुयात् ' इत्यमोघः संकल्पः]

' नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् '॥ (मु.उ. 3-2-3)

अत्र प्रवचनशब्देन मननं लक्ष्यते ; तत्साधनत्वात् । मेधाशब्दश्च निदिध्यासनवाची । श्रवणमनननिदिध्यासनैः केवलैः न प्राप्य इत्यर्थः । पुनः केनेत्यत्राऽऽह— **यमेवैष वृणुते तेन लभ्यः** । एषः परमात्मा यमुपासकं वृणुते, तेन प्राप्यः । वरणीयेन प्राप्य इति यावत् । प्रियतमश्च वरणीयो भवति । प्रियतमत्वं च स्वस्मिन् प्रीतिमत एव । अतश्चायमर्थो लभ्यते—' यस्तु परमात्मनि निरतिशयप्रीतिमान्, स परमात्मानं प्राप्नोति ' इति । प्रीतिरूपापन्नभगवदुपासनस्य भगवत्प्रीतिहेतुत्वमित्यर्थः। **तस्यैष आत्मा विवृणुते तनूं स्वाम्** । तादृशस्योपासकस्यैष आत्मा स्वात्मानं प्रकाशयति ; स्वानुभवमुत्पादयतीत्यर्थः । (रं.भा.)

प्रत्यक्षतापन्नामपवर्गसाधनभूतां ध्रुवानुस्मृतिं विशिनष्टि—**नायमात्मेति** । अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा, ' यमेवैष आत्मा वृणुते तेनैव लभ्यः ' इत्युक्तम् । प्रियतम एव हि वरणीयो भवति । यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति । यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम् ,

' तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ इति,
' प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ' । इति च ।

अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति । एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य ।
(श्री. भा. I-60)

**अपवर्गसाधनभूतामिति** प्रतीकोपासनव्यवच्छेदः। **नायमात्मेति**। प्रवचनशब्देन मननं लक्षयति, मननफलत्वात् प्रवचनस्य; मननस्याचार्यप्रवचनफलत्वाद्वा; प्रोच्यतेऽनेनेति करणव्युत्पत्त्या वा प्रवचनं मननम्। मेधा निदिध्यासनम्; परिशेषात्। अस्मिन् वाक्ये श्रवणादीनामनुपायत्वं प्रतीतम्; ध्रुवानुस्मृतिविशेषणत्वेन न किञ्चित्प्रतिपन्नम्; अतस्तद्व्याचष्टे—**अनेनेति**। केवलश्रवणमनननिदिध्यासनानां—वक्ष्यमाणविशेषणविरहितानामित्यर्थः। यथा 'न पृथिव्यामग्निश्चेतव्यः' इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनं निषिध्यते; न तु पृथ्वीमात्रे, तद्वदिति भावः। विवक्षितं विशेषं वाक्यतात्पर्यनिरूपणेन दर्शयिष्यन् वाक्यस्यार्थान्वयं दर्शयति—**यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तमिति**। वरणीयेन लभ्योऽस्तु; ततः कथं ध्रुवानुस्मृतेर्विशेषितत्वमिति शङ्कायां तद्दर्शयितुं लोकसिद्धप्रतीतिमाह—**प्रियतम एव हीति**।

प्रीतिविषयमात्रस्य न वरणीयत्वम्; किन्तु स्वयमुपस्थितस्य स्वीकार एव। अतस्तद्व्यावृत्त्यर्थं प्रियतम इत्युक्तम्। तत. किमित्यत्राह-**यस्येति**। यस्योपासकस्यायं परमात्मा निरतिशयप्रीतिविषयः, स एवास्य परमात्मनः निरतिशयप्रीतिविषयो भवति। चेतनत्वे सति भगवता वरणीयत्वं भगवति निरतिशयप्रीतिमत एव। यद्वा स्वतः प्रियत्वं वरणीयत्वं च स्वस्मिन् प्रीतिमत एव। पुण्यक्षेत्रादिषु भगवतः प्रीतिः स्वस्मिन् प्रीतिमत्पुरुषवरणार्था। पत्रपुष्पफलादिषु तत्सम्बन्धनिबन्धना। स एवेत्येवकारेण केवलश्रवणादिमद्व्यावृत्तिः। भगवति प्रीतिमत एव भगवत्प्रीतिविषयत्वमिति कथमिदमवगम्यते इत्यपेक्षायाम्, अत्र प्रमाणतया स्मृतिवचनमर्थोपन्यासपूर्वकं दर्शयन् वरणप्रकारमपि विवृणोति—**यथेति**। **अयम्**—भगवति निरतिशयप्रीतिमान्। **प्रियतमः**—निरतिशयभगवत्प्रीतिविषयो भवन्नित्यर्थः। 'ददामि बुद्धियोगं तम्' इत्यस्यार्थविवक्षया, **स्वयमेव भगवान् प्रयतत** इत्युक्तम्। अनेन वरणप्रकारो दर्शितः। **भगवतैवोक्तमि**त्येवकारेण भगवदाप्त्यतिशयः सूचितः। **तेषामिति**। **सततयुक्तानाम्**–सततयोगं काङ्क्षमाणानाम्। 'आशंसायां भूतवच्च' इति कर्तरि क्तः। प्रीतिपूर्वकं ददामीत्यन्वयः। अनेन परस्परविषयप्रीतिरुपास्योपासकयोर्दर्शिता। (श्रु. प्र)

यदुक्तम्—'अमृतस्यैष सेतुः' इति प्राप्यप्रापकसंबन्धव्यपदेशात् प्रापकात्परं प्राप्यमस्तीति—तन्न ; प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः ।

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' ॥

इत्यनन्योपायत्वश्रवणात् । (श्री.भा. 4-2-33)

**अनन्योपायत्वश्रवणात्**—प्राप्यस्यैवोपायत्वश्रवणादित्यर्थः । 'विवृणुते तनूं स्वाम्' इत्यनेन प्रापकत्वं प्राप्यत्वं च गम्यते । (श्रु. प्र.)

[अनेन भक्तिरूपापन्न उपासनस्य प्रपत्तेर्वा अपवर्गसाधनत्वं न व्यवच्छिद्यते । किन्तु एवकारेण प्रापकात् परमात्मनः अन्यदेव प्राप्यम् इति प्रस्तुत शंकामात्रं निरस्यते। प्रापकस्यैव प्राप्यत्वस्थापनात् । तथा च प्रापकं ब्रह्मैव तत्प्रसादजनकन्तूपासनादिकमिति पूर्वोत्तरयोः न विरोधः ।]

ध्यानं विशिनष्टि—

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' ॥ इति ॥

भक्तिरूपापन्नानुध्यानेनैव लभ्यते, न केवलवेदनमात्रेण ; न मेधयेति केवलस्य निषिद्धत्वात् । एतदुक्तं भवति–योयं मुमुक्षुः वेदान्तविहितवेदनरूपध्यानादिनिष्ठः, यदा तस्य तस्मिन्नेवानुध्याने निरवधिकातिशया प्रीतिर्जायते, तदेव तेन लभ्यते परमपुरुषः– इति । यथोक्तं भगवता–

पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ इति ॥

तदनन्तरं मां तत एव–भक्तेः, विशत इत्यर्थः । भक्तिरपि निरतिशयप्रिया

नन्यप्रयोजनस्वेतरवैतृष्ण्यावहज्ञानविशेष एवेति, तदुक्त एव । तेन परेणात्मना वरणीयो भवतीति, तेन लभ्यते इति श्रुत्यर्थः । (वे सं. 231-233)

[एतेन श्रुतौ भक्तेः साधनत्वानुक्त्या, भक्तेरेवात्र साधनत्वोक्तिः कथं योयुज्यत इति शङ्का निरासि । निरतिशयप्रीतेरेव भक्तिशब्देनात्राभिधानात् ॥]

अत्र श्रीभाष्यकारस्यायमतिशयः अपूर्वः अवगन्तव्यः, यत् उपासनमार्ग-भक्तिमार्गयोः विभिन्नप्रस्थानत्वेन निगमागमसम्प्रदायभेदेन परैः व्याख्यातयोः ऐक्यस्य पूर्वाचार्यसम्मतस्य प्रकाशीकरणम् ।

यद्यप्यत्र सर्वत्र प्रकरणभेदः । तथापि फले तारतम्यरहिते उपाये गुरुलघुविकल्पानुपपत्त्या 'वस्तुसामर्थ्यलक्षणं लिङ्गं प्रकरणाद्बलीयः' इति सर्वप्रामाणप्रमाण्यवादिनः साधवस्सन्धिमिच्छन्ति । यथा 'नाऽन्तरिक्षे न दिवि' इत्यप्राप्तप्रतिषेधसहपठितो 'न पृथिव्यां' इति प्राप्तप्रतिषेधः केवलपृथिव्यां अन्तरिक्षादिवदधिकरणत्वव्युदासेन हिरण्योपधानत्ववैशिष्ट्यविधौ विश्राम्यति, तथाऽनुपायभूतश्रवणमननसहपठितोपायभूतनिदिध्यासनप्रतिषेधः केवलनिदिध्यासनस्य श्रवणवदुपायत्वोक्तिमुखेन भक्त्यात्मकविधौ विश्राम्यतीति 'नायमात्मा' इति श्रुतिसारार्थः ॥ (द.उ. 308)

**आत्मनस्तु कामाय**—परमात्मनः इष्टं सम्पादयितुं सर्वं प्रियं भवति ।

'न वा अरे पत्युः कामाय पतिः प्रियो भवति । आत्मनस्तु कामाय पतिः प्रियो भवति....आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः' ।

(बृ.उ. 4-4-5)

अत्र 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा.सू. 2-3-14) इत्यनेन चतुर्थी । नृसिंहम् अनुकूलयितुमित्यर्थे 'नमस्कुर्मो नृसिंहाय' इतिवत् । क्रियाप्रयोजनक क्रिया उपपदं (समीपोच्चारितम्) यस्य, तस्याप्रयुज्यमानस्य तुमुन्प्रकृत्यर्थक्रियावाचकस्य कर्मणि चतुर्थी भवतीति हि तदर्थः । 'तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यनेन धातोः तुमुन् प्रत्ययः । तथा च चतुर्थ्यैव कामम्—इष्टं, सम्पादयितुमित्यर्थः सिद्ध्यति । पत्यादीनां प्रियत्वं न भार्याद्यात्मनः सङ्कल्पेन, किंतु तत्तदिष्टं सम्पादयितुं परमात्मैव संकल्पयति । अत एव 'न वा अरे वित्तस्य कामाय

वित्तं प्रियं भवति आत्मनस्तु कामाय प्रियं भवति' इति सङ्गच्छते, तत्र वित्तस्याचेतनस्य संकल्पायोगात्—तद्दृष्टान्तेनैव पत्यादीनामपि प्रियत्वं भगवत्संकल्पाधीनमिति 'आत्मनस्तु कामाय' इति स्पष्टयति ॥

**आत्मनाम् अविनाशित्वे देहस्य विनाशित्वे च हेतवः**—आत्मस्वरूपाणां नित्यत्वं देहस्य विनाशस्वभावत्वं च ।

[ विनंष्टुं शीलम् अस्येति विनाशी । ताच्छील्ये णिनिः ]

आत्मा अविनाशी ; एकरूपत्वात्, अनुपचयात्मकत्वात्, प्रमातृत्वात्, व्यापकत्वाच्च । देहस्तु विनाशी ; उपचयात्मकत्वात्, अनेकरूपत्वात्, शरीरिणः कर्मफलभोगार्थत्वात्, व्याप्यत्वाच्चेति आत्मनो नित्यत्वे, देहस्य विनाशित्वे च प्रत्येकं हेतुचतुष्टयम् । एवमष्टावपि हेतवः अष्टदिग्विजयिनः इति श्लोकद्वयसिद्धं दर्शयति—**अविनाशीति** ।

'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति' ॥ (गी. 2 17)

तदात्मतत्त्वमविनाशीति विद्धि, येनात्मतत्त्वेन चेतनेन तद्व्यतिरिक्तमिदमचेतनतत्त्वं सर्वं ततं व्याप्तम् । व्यापकत्वेन निरतिशयसूक्ष्मत्वात् आत्मनो विनाशानर्हस्य तद्व्यतिरिक्तो न कश्चित्पदार्थो विनाशं कर्तुमर्हति ; तद्व्याप्यतया तस्मात् स्थूलत्वात् । नाशकं हि शस्त्रजलाग्निवाय्वादिकं नाश्यं व्याप्य शिथिलीकरोति । मुद्गरादयोऽपि हि वेगवत्संयोगेन वायुमुत्पाद्य तद्द्वारेण नाशयन्ति । अतः आत्मतत्त्वमविनाशि । (गी. भा.)

हेत्वंशप्रतिपादकद्वितीयपादं व्याकुर्वन् सर्वशब्दस्य वाक्यान्वयौचित्यप्राप्तं संकोचम् इदन्त्वनिर्देशस्वारस्यसूचितं, बाह्यानां पराक्त्वं तद्विपर्ययेणाऽऽत्मनः फलितं चेतनत्वं तत एवाचेतने चेतनस्याऽऽत्मत्वेन व्याप्तिं च गमयति—**येनेति** । चेतनसमुदायेन अचेतनसमुदायस्तिलतैलदारुवह्न्यादिवत् यथांशं व्याप्त इत्यर्थः ; यद्वा सर्वाचेतनानुप्रवेशयोग्यत्वमिह विवक्षितम्—इत्युभयथापि नात्माणुत्वविरोधः ।

अत्रायं प्रयोगः—आत्मा शस्त्राद्यधीनविनाशो न भवति, तद्व्यापकत्वेन ततः सूक्ष्मत्वात्, यथाऽऽकाशः। व्यतिरेकेण वा—यो यदधीनविनाशः; स ततस्सूक्ष्मो न भवति, यथा वायुविनाश्यो दीप इति। इमं प्रयोगं व्यञ्जयन् प्रयोगान्तरपरतया उत्तरार्धं व्याचष्टे—**व्यापकत्वेनेति**। विनाशानर्हस्येत्यव्ययशब्दार्थः। तस्य हेतुः **निरतिशयसूक्ष्मत्वादिति**। इदं च निरतिशयसूक्ष्मत्त्वम् अचेतनापेक्षया। कश्चित् इत्यस्य ईश्वरोपीति परस्य व्याख्या स्वदर्शनविरुद्धेत्यभिप्रायेणाह—**तद्व्यतिरिक्तः कश्चित्पदार्थ इति**। (ईश्वरस्याघटितघटनासमर्थस्य सति संकल्पे जीवनाशकरणार्हत्वात् स्वसिद्धान्तविरोधः) धर्मिनिर्देशोऽयम्। आत्मनो नाशं कर्तुं नार्हतीति साध्यार्थः। तत्र हेतुमाह—**तद्व्याप्यतया तस्मात्स्थूलत्वादिति**। तस्मात्स्थूलत्वादित्येव हेतुः। तस्यासिद्धिपरिहारायोक्तं—**तद्व्याप्यतयेति**। व्याप्तिपूर्वं दृष्टान्तमाह—**नाशकमिति**। घटादिनाशकमुद्गरादौ अनैकान्त्यमाशङ्क्य परिहरति—**मुद्गरेति**।

अयमभिप्रायः—न तावत् मुद्गरादेः संयोगमात्रं घटादिनाशकम्, मुद्गरोपरिस्थापितघटस्य नाशप्रसङ्गात्। नापि वेगमात्रम्, असंयोगेऽपि ध्वंसप्रसङ्गात्। नापि तदुभयमात्रम्, वेगवत्तृणसंयोगेऽपि प्रसङ्गात्। न च वेगवद्द्रव्यविशेषसंयोगो नाशकः, तस्यैव पृष्ठभागसंयोगे नाशादर्शनात्। अतो वेगवत्काठिन्यादिविशिष्टद्रव्यविशेष-भागविशेष-संयोगविशेष एव नाशक इत्यविवादम्। तथा च वायुविशेषोत्पत्तिरपि प्रायशः प्रत्यक्षसिद्धत्वादविवादा। वायोश्च तत्तद्द्रव्यानुप्रवेशेन नाशकत्वं कठिनतरशब्दाभिघातसंक्षोभ्यमाणपदार्थेष्वभ्युपगतम्। एवं सति क्लृप्तकारणभावस्यात्रापि विद्यमानस्य वायुविशेषस्य नाशहेतुत्वमवश्याभ्युपगमनीयम्। स च वायुः घटाद्यपेक्षया सूक्ष्मः। यत्र तु वेगाभावेपि आक्रमणादिमात्रेण नाशकत्वम्, तत्र मुद्गरावयवनुन्ना घटादिद्रव्यावयवविशेषाः भागान्तरं स्वस्मात्स्थूलतरमनुप्रविश्य भिन्दन्ति, आक्रमणमूलाऽऽन्तरवायुनिस्सरणवशाद्वा वायुपूरितभस्त्रिकाक्रमणादिष्वेवेति। **अत इति**। उक्तहेतुद्वयेन शस्त्रादेरनाशकत्वात्, आत्मनोऽपि सूक्ष्मतरस्य तन्नाशकस्यान्यस्यादर्शनात्, ईश्वरस्यापि तन्नाशसङ्कल्पाभावदिति भावः॥ (ता. चं.)

[ आत्मनः अविनाशित्ववत् देहस्यापि विनाशित्वसाधनम् ]

देहानां तु विनाशित्वमेव स्वभाव इत्याह—

'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्मात् युध्यस्व भारत' ॥ (गी 2-18)

'दिह उपचये' इत्युपचयरूपा इमे देहा अन्तवन्तः विनाशस्वभावाः । उपचयात्मका हि घटादयोऽन्तवन्तो दृष्टाः । नित्यस्य शरीरिणः कर्मफलभोगार्थतया भूतसंघातरूपा देहाः, 'पुण्यः पुण्येन' इत्यादिशास्त्रैरुक्ताः कर्मावसानविनाशिनः । आत्मा त्वविनाशी ; कुतः? अप्रमेयत्वात् । न ह्यात्मा प्रमेयतयोपलभ्यते ; अपि तु प्रमातृतया । तथा च वक्ष्यते, 'एतत् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' इति । न चानेकोपचयात्मक आत्मोपलभ्यते, सर्वत्र देहे 'अहमिदं जानामि' इति देहस्य च अन्यस्य च प्रमातृतयैकरूपेणोपलब्धेः । न च देहादेरिव प्रदेशभेदे प्रमातुराकारभेद उपलभ्यते । अत एकरूपत्वेन अनुपचयात्मकत्वात् प्रमातृत्वात् व्यापकत्वाच्च आत्मा नित्यः । देहस्तु उपचयात्मकत्वात्, शरीरिणः कर्मफलभोगार्थत्वात्, अनेकरूपत्वात्, व्याप्यत्वाच्च विनाशी । तस्मात् देहस्य विनाशस्वभावत्वात् आत्मनो नित्यत्वाच्च उभावपि न शोकस्थानमिति ॥ (गी. भा.)

**अनाशिनोऽप्रमेयस्येति** पदद्वयमात्मनित्यत्वाख्यसाध्यसंभावना तद्धेतुपरतया व्याख्याति—**आत्मा त्विति** । नित्यत्वस्य नाशानर्हत्वेन स्थिरीकरणात् नित्यस्य अनाशिनः इत्यनयोरपुनरुक्तिः स्थूलसूक्ष्मनाशविरहाभिप्रायाद्वा । असिद्धो हेतुः, आत्मनोऽप्यस्मत्सिद्धान्ते ( विशिष्टाद्वैतसिद्धान्ते ) प्रमाविषयत्वादित्यत्राह—**न ह्यात्मेति** । प्रमेयत्वपर्युदासः प्रमेयैकस्वभावशरीरादिव्यावर्तनमुखेन प्रमातृत्वपर्यवसितः, नञोऽत्र तदन्यवाचित्वात् । एवमेव हि क्षेत्रक्षेत्रज्ञयोः विवेको वक्ष्यते—**तथा चेति** । एतेन ज्ञानविषयत्वमत्र व्याकुर्वन्निरस्तः । प्रमेयत्वं चात्र भोग्यत्वपर्यवसितम् । तद्व्यतिरेकश्च पूर्वोक्तकर्मफलभोगार्थत्वरूपहेतुव्यतिरेकरूपो भोक्तृत्वपर्यवसितः । ततश्चायं पूर्वोक्तहेत्वन्तरद्वयव्यतिरेकस्यापि प्रदर्शनार्थ इति मत्वा तयोरपि व्यतिरेकमाह—**न चेत्यादिना** । सावयवत्वे योग्यानुपलब्धिमाह—**सर्वत्रेति** । 'सर्व'शब्दोऽत्र

देहांशकार्त्स्न्यपरः । तेनाणोरप्यात्मनः 'पादे मे वेदना, शिरसि मे सुखम्' इत्यादि-सुखदुःखनिमित्त-तत्तदवयवावच्छिन्नव्यवहारदशायामपि निरवयवत्वोपलब्धिरुक्ता ।

यद्वा देवादिरूपेण विचित्रप्रकारेष्वनन्तेषु देहेषु क्वचिदपि देहे देहिनस्सावयवत्वं नोपलब्धमित्यर्थः । अहमित्येकवचनमेकस्मिन् देहेऽभिमन्तुरात्मन एकत्वं सूचयति । यद्यात्मा सावयवस्स्यात्, तदा वयमिति (अवयवोऽहमिति) कदाचिदुपलभ्येत, प्रत्येकं तदवयवानामपि चैतन्यस्यावश्याभ्युपगमनीयत्वात् । सावयवत्वे हि अवयवसंघात-रूपोऽवयविरूपो वा स्यात्, उभयथाप्यवयवगतविशेषगुणमन्तरेण न तत्र विशेषगुण-सिद्धिः । किण्वादिष्वपि हि प्रत्येकमसिद्धाऽपि मदशक्तिः पाकविशेषात् रसविशेषादिवत् प्रत्येकं जायते । शक्तेश्चापर्यनुयोज्यत्वेऽपि विशेषगुणेष्वयं नियमो दुस्त्यजः, ज्ञानस्य द्रव्यत्वपक्षेऽप्येवमेव ; निष्प्रभसमुदाये सप्रभत्वायोगवत् ।

एवं च सति समाजवदेकस्मिन् देहे मिथः कलहासूयाईर्ष्यानिग्रहादयोऽप्युप-लभ्येरन् । समुदायावयविनोश्चातिपीडायामवयवव्यतिरिक्तयोरभावादवयवानामेवानु-भवितृत्वं स्यात् । तथा सति पाण्याद्यवच्छिन्नात्मावयवानुभूतं तदन्योऽवयवो न प्रति-सन्दधीतेति 'दक्षिणहस्तेन मयैव स्पृष्टं वामहस्तेन पुनः स्पृशामि' इत्यादिप्रतिसन्धानं न स्यात् । न चात्मावयवानामाशुतरसञ्चारात् तदुपपत्तिः, आत्मनश्चूर्णपुञ्जकल्पत्व-प्रसङ्गेन संघातविशेषस्याप्यसिद्धिप्रसङ्गात् । न च वस्त्रादिषु मृगमदवासनेव अन्य-वासनासंक्रमः, मात्रानुभूतस्य गर्भस्थेनापि स्मरणप्रसङ्गात् । न च भेदाभेदात् सर्वोपपत्तिः, तस्यैव व्याघातादिदुःस्थत्वस्य शारीरकभाष्यादिषु प्रपञ्चितत्वात् । तदेवम् अहमित्येकत्वेनोपलम्भो निरवयवत्वमन्तरेण नोपपद्यते । एतेनार्थात् देहेन्द्रियप्राणा-नामप्यात्मत्वं निरस्तं वेदितव्यम् । तथाहि—

न हि पाण्याद्यारब्धोऽवयव्यस्ति, सत्कार्यवादस्थापनात् । न च पाण्यादय एवात्मानः, प्रत्येकमहंत्वाद्यभावात्, अविवादनियमासम्भवाच्च । न चात्र परस्परोप-कार्योपकारकभावाभिमानः सुवचः । अत एव च न तत्समुदायः । एवमिन्द्रियग्रामे प्राणाख्यसङ्घातेऽपि इति । **देहस्य चान्यस्य चेति** । गृहक्षेत्रादितुल्यो ममेदं

इति देहस्येदंग्रहः । 'स्थूलोऽहम्' इत्यादिकं तु प्रबुद्धस्यापृथक्सिद्धेः, अप्रबुद्धस्य तु भ्रान्त्येति न कश्चिद्दोष इति भावः । **प्रमातृतयेति** । विमर्शदशायां प्रमेयस्याप्यात्मनः प्रमातृत्वेनैव हि सर्वदा विषयग्रहणवेलायां स्फुरणम् । 'अज्ञासिषम्' इत्येवमादिरूपेण अन्यदाऽपि प्रमातृत्वं परामृष्टम् । आत्मग्रहणेऽपि 'मां जानामि' इति प्रमातृत्वमपि सुस्थितमेवेति भावः । **एकरूपेणेति** । सावयवत्वे कस्यचिदवयवस्य कदाचित्प्रमातृत्वेऽन्येषां च अप्रमातृत्वेन स्फुरणं स्यात् । न ह्यनेकेषां चेतनानामवयवानां प्रमाप्रसारयौगपद्यनियमोऽस्तीति भावः । अथ पूर्वोक्तमेव सुखभेदेन साधयन् विजातीयसङ्घातात्मकत्वे योग्यानुपलब्धिं चाह—**न चेति** । पाञ्चभौतिकेषु देहादिषु तत्तद्भूतांशभूतत्वगसृङ्मांसादौ तत्तद्भूतप्रयुक्ताकारभेद उपलभ्यते; नैवं प्रमातरि। तथा च श्रूयते 'कृत्स्नः प्रज्ञानघन एव' इत्यादि ।

यद्वा आकारभेद इति पाणिपादादिसन्निवेशभेदो विवक्षितः । तदेवमात्मनो नित्यत्वे देहस्य विनाशित्वे च प्रत्येकं हेतुचतुष्टयं श्लोकद्वयसिद्धं सुखग्रहणाय सङ्कलय्य दर्शयति—**अत इति** । एकरूपत्वेन अभूतसंघातात्मकत्वादित्यर्थः । अनुपचयात्मकत्वात् निरवयवत्वादित्यर्थः । (ता. चं.)

### आत्मनः अविनाशित्वादिहेतूनाम् अनुपपत्तिशङ्कानिरासः—

इदमखिलमपि हेतुजातमनुपपन्नम् ; तथा हि तत्रासङ्घातरूपत्वस्य निरवयवत्वस्य च रूपरसादिभिः महदादिभिश्चानैकान्त्यम् ; प्रमातृत्वं च यदि कर्मफलभोक्तृत्वं विवक्षितं, तदानीमसाधारणानैकान्त्यम्, सकलसपक्षविपक्षव्यावृत्तेः। तत्र चेश्वरादेरपि पक्षीकारे भागासिद्धिश्च । यदि प्रमाश्रयत्वमात्रं विवक्षितम्, तदा सर्वप्रमातृपक्षीकरणे पूर्ववदसाधारण्यम् । जीवमात्रपक्षीकारे तु ईश्वरनित्यत्वस्यापि दृढाभ्युपगमाभावात् तस्मिन् दृष्टान्ते सन्दिग्धसाध्यवैकल्यादिदोषः। व्यापकत्वं च यदि सर्वव्यापकत्वम्, तदा स्वरूपासिद्धिः ; प्रत्येकं क्षेत्रज्ञानामणूनां तदभावात्, ईश्वरापेक्षया व्याप्यत्वाच्च । यदि कतिपयव्यापकत्वम्, तदा शब्दाकाशादिभिरेव अनैकान्त्यम् । शरीरानित्यत्वसाधकं सावयवत्वमपि ईश्वरदिव्यविग्रहाभरणायुधादिविशेषैः । एवं कर्मफलभोगार्थत्वं च यदि तद्धेतुत्वम्, तदा

ईश्वरजीवस्वरूपादिभिः पूर्ववदनैकान्त्यम् । यदि तदर्थमुत्पन्नत्वम्, तदा व्यर्थविशेषणत्वम्; उत्पन्नत्वमात्रेण व्याप्तिसिद्धेः । सङ्घातरूपत्वमपि सावयवत्ववदनैकान्तिकम् । व्याप्यत्वं च यदि सर्वापेक्षया, तदा स्वसिद्धिदोषः। न हि शरीरादिकं पर्वतादिभिर्व्याप्यते। अप्रसिद्धत्वं च हेतोः, कुत्रचिदपि तस्याभावात् । यदि कतिपयापेक्षया, तदा ईश्वरव्याप्यैर्जीवदिव्यमङ्गलविग्रहादिभिरनैकान्त्यम् । यदि जीवव्याप्यत्वमिति विशेष्येत, तदा नित्यसूरिविग्रहविशेषादिभिः प्रकृत्यादिभिश्च प्राग्वत् व्यभिचारः । एतेन क्षेत्रज्ञव्याप्यत्वमित्यपि निरस्तम् । यदि पुनरव्यापकत्वं विवक्षितम्, तदाणिमाद्यैश्वर्यवद्योगिप्रभृतिशरीरेषु स्वरूपासिद्धिः, तच्छरीराणां शिलाद्युन्मज्जननिमज्जनादेरपि योग्यत्वात् इति।

अत्रोच्यते—असङ्घातत्वनिरवयवत्वयोस्तावत् अर्जुनादिबुध्या घातकतया प्रस्तुतशस्त्राग्न्याद्यधीनविनाशनिवृत्तेस्साध्यत्वात् न महदादिभिरनैकान्त्यम् । द्रव्यत्वेन विशेषणात् नाग्न्यादिनाश्यरूपादिभिरनैकान्त्यम् । एवं प्रत्यक्षादिसिद्धनाशकनिषेधे महदादिवत् केवलमीश्वरसङ्कल्पादिना नाशः शङ्क्येत, तदपि श्रुत्यैव प्रतिषिध्येतेति भावः । प्रमातृत्वस्य भोक्तृत्वपर्यवसाने कर्मफलभोगार्थत्वरूपप्रमेयत्वनिषेधमुखेनानुत्पत्तिपर्यवसितत्वात् अनुत्पन्नत्वस्य च नित्यत्वेन व्याप्तिसिद्धेः आत्मस्वरूपानुत्पत्तेश्च शास्त्रसिद्धत्वान्न कश्चिद्दोषः । प्रमाश्रयत्वमात्रस्य हेतुत्वे त्वीश्वरो दृष्टान्तः । तत्र साध्यसन्देहो 'न त्वेवाहम्' इत्यस्य व्याख्यानदशायां निराकृतः । व्यापकत्वस्य प्रयोगस्तु पूर्वमस्मद्व्याख्यातप्रकारेण शस्त्रादिविषयतया पठितव्य इति न तत्रापि दोषः । शरीरानित्यत्वसाधनेषु च सावयवत्वभूतसङ्घातत्वयोः प्राकृतत्वे सतीति विशेषणान्न व्यभिचारः । एतदर्थं हि इमे देहाः इत्युक्तम् । कर्मफलभोगार्थत्वमपि तदर्थमुत्पन्नत्वमेव; न च व्यर्थं विशेषणम्, मुक्तात्मज्ञानविकासस्य व्यवच्छेद्यत्वात् । न हि सोऽनुत्पन्नः, प्राक् अभावात् । निवृत्ते प्रतिबन्धके करणनिरपेक्षस्वरूपाधीनोत्पत्तित्वमात्रेण हि स्वाभाविक उच्यते; नत्वनुत्पन्नत्वेन ।

'दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते'॥

इत्यादिकं तु अवबोधादिस्वरूपस्यानुत्पन्नतामाह, न तु तद्विकासस्य। अथवा-वस्थारूपत्वेन तस्योत्पन्नत्वं मा भून्नाम (मा नाम पृथक्चिन्त्यताम्।) तदवस्थाऽवस्थितस्य व्यवच्छेदाय विशेषणं स्यात्। अस्तु वा विशेषणनैरपेक्ष्यम्; तथाप्युत्पन्नत्वमात्रेणा-नित्यत्वं तावत् सिद्धम्, अज्ञातोत्पत्तिषु केषुचिच्छरीरेषु हेत्वसिद्धिशङ्कापरिहारः कर्ममूलत्वप्रदर्शनेन क्रियते। कर्मावसानविनाशित्वस्य वा साध्यत्वात् तदौचित्याय चेदं विशेषणं सार्थम्। व्याप्यत्वं च शस्त्राद्यपेक्षया विवक्षितम्। साध्यं च तदधीन-विनाशित्वमिति न कश्चिद्दोषः।

ननु यो यद्व्याप्यः स तदधीनविनाश इति न व्याप्तिः, ईश्वरव्याप्यैः प्रकृति-पुरुषकालादिभिः अनैकान्त्यादिति चेन्न; योग्यत्वस्य साध्यत्वात् तत्रापि तत्सद्भावात्। ईश्वरनित्येच्छापरिग्रहादेव हि तन्नित्यत्वम्, अन्यथा यदि ईश्वरो जीवादिस्वरूपमपि संजिहीर्षेत्, कस्तस्य शासिता? तर्हि जीवाकाशादिव्याप्यैस्तदधीननाशरहितैः शरीरादि-भिर्व्यभिचार इति चेन्न, तेषामपि तन्नाश्यत्वयोग्यत्वात्। तन्नाशकर्ता ईश्वरस्तु न तत्र जीवादीनुपकरणीकरोतीति विशेषः।

ततश्चैवं प्रयोगः—शरीरादिशस्त्राद्यधीनविनाशयोग्यम्, तद्व्याप्यत्वात्; यत् यद्व्याप्यं तत् तदधीनविनाशयोग्यम्—इति।

यद्वा—तिष्ठतु सामान्यव्याप्तिः। शस्त्रादिनाश्यत्वमेव साध्यम्, शस्त्रादि-व्याप्यत्वादित्येव च हेतुः; यत् शस्त्रादिव्याप्यं तत् शस्त्रादिनाश्यम्, यथा कदली-काण्डादीति। न चाकाशादि शस्त्रादिव्याप्यम्, सूक्ष्मत्वे सति अनुप्रवेशस्य विवक्षित-त्वात्, सूक्ष्मत्वस्य चात्र यत्र यत् प्रतिहन्यते, तत्र अप्रतिहतत्वं ततस्सूक्ष्मत्वं इति निष्कर्षात्। योगिप्रभृतिशरीराणां तु शस्त्रादिव्याप्यत्वमेव परिणामविशेषादेर्निवृत्तम्। अतस्तदधीननाशाभावः। शस्त्राद्यपेक्षया व्यापकत्वमेव तेषां इति तैर्न व्यभिचारः। ततोऽपि सूक्ष्मतरैः ईश्वरसङ्कल्पस्वसङ्कल्पादिभिस्तु तन्नाशः।

एतेन शस्त्रास्त्रादिप्रतिबन्धकौषधाद्यनुगृहीतशरीरवृत्तान्तोऽपि व्याख्यातः; औषधा-दिभिः तत्र प्रवेशप्रतिबन्धात्। तस्मात्सिद्धमष्टावपि हेतवो अष्टदिग्विजयिन इति। (ता.चं)

शङ्कराचार्यस्तु—

किं पुनस्तत् यत् सदेव सर्वदा इति ? उच्यते—अविनाशीति । अविनाशि न विनंष्टुं शीलमस्येति । तु शब्दोऽसतो (तु शब्दस्सतः) विशेषणार्थः । तद्विद्धि—विजानीहि । किं येन सर्वमिदं जगत्तत्त्वं व्याप्तं सदाख्येन ब्रह्मणा साकाशम् आकाशेनेव घटादयः । विनाशमदर्शनम् अभावम् । अव्ययस्य नैतत्सदाख्यं ब्रह्म स्वेन रूपेण व्येति—न व्यभिचरति, निरवयवत्वात् ; देहादिवत् । नाप्यात्मीयेन आत्मीयाभावात्, यथा—देवदत्तो धनहान्या व्येति ; न त्वेवं ब्रह्म व्येति । अतः अव्ययस्यास्य ब्रह्मणो विनाशं न कश्चित्कर्तुमर्हति, न कश्चिदात्मानं विनाशयितुं शक्नोति ईश्वरोऽपि । आत्मा हि ब्रह्म ; स्वात्मनि च क्रियाविरोधात्, यथा चक्षुर्गत-रेखाश्चक्षुर्न पश्यति ।

किं पुनस्तदसत् यत्स्वात्मसत्तां व्यभिचरतीति ? उच्यते—'अन्तवन्त' इति। अन्तो विनाशो येषां ते अन्तवन्तः । यथा मृगतृष्णिकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते, स तस्यान्तः ; तथा इमे देहास्स्वप्नमायादेहादिवच्चान्त-वन्तः नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्याऽत्मनः अन्तवन्त इत्युक्ताः विवेकिभिरित्यर्थः । 'नित्यस्याऽनाशिनः' इति न पुनरुक्तम् ; नित्यत्वस्य द्विविध-त्वाल्लोके, नाशस्य च । यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते । विद्यमानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते । तत्र 'अनाशिनो नित्यस्य' इति द्विविधेनापि नाशेनासंबद्धस्येत्यर्थः । अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनः ; तन्माभूदिति 'नित्यस्याऽनाशिनः' इत्युक्तम् । अप्रमेयस्य न प्रमेयस्य प्रत्यक्षदिप्रमाणैरपरिच्छेद्यस्येत्यर्थः ।

ननु आगमेनाऽत्मा परिच्छिद्यते, प्रत्यक्षादिना च पूर्वम् । न ; आत्मनः स्वतस्सिद्धत्वात् । सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । न हि पूर्वम् 'इत्थम् अहम्' इत्यात्मानमप्रमाय पश्चात् प्रमेयपरिच्छेदाय प्रवर्तते । न ह्यात्मा नाम कस्यचित् अप्रसिद्धो भवति । शास्त्रं त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्र-निवर्तकत्वेन प्रमाणत्वमात्मनः प्रतिपद्यते ; न तु अज्ञातार्थज्ञापकत्वेन ।

तथा च श्रुतिः 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इति। यस्मादेवं नित्योऽविक्रियश्चाऽऽत्मा तस्माद्युध्यस्व, युद्धादुपरमं मा कार्षीः इत्यर्थः।

न ह्यत्र युद्धकर्तव्यता विधीयते, युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धः तूष्णीमास्ते। अतः तस्य प्रतिबन्धापनयनमात्रं भगवता क्रियते। तस्मात् 'युध्यस्व' इति अनुवादमात्रम्, न विधिः इत्याहुः।

सिद्धान्ते जीवपरमात्मनोः भेदस्य स्वाभाविकत्वात् देहात्मनोः वैलक्षण्यनिरूपणेन देहातिरिक्तात्मस्वरूपमेव प्रधानतः प्रथमषट्केन विविच्यते। तथा कर्मयोग-ज्ञानयोग-अष्टाङ्गयोगेन हि आत्मावलोकनं साध्यतया निरूप्यते। तदुक्तं यामुनमुनिभिः गीतार्थसङ्ग्रहे—

'नारायणः परं ब्रह्म गीताशास्त्रे समीरितः'
ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते॥
आत्मानुभूतिसिध्यर्थे पूर्वषट्केन चोदिते।
मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये॥
ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः' ॥ इति।

अतः पूर्वषट्कं जीवात्मपरतयैव गीताचार्येण उपादेशि।

शङ्कराचार्यास्तु—परमात्मातिरिक्तजीवात्मनः परमार्थतः अनङ्गीकारात् प्रकरणमिदं परमात्मपरतयैव आयोजयन्॥

**आत्मनः कर्तृत्व-भोक्तृत्वे**—जीवानां वीवधघटन्यायेन कर्तृत्वभोक्तृत्वे सहैवावतिष्ठेते। (उभयतो बद्धशिक्यं स्कन्धवाह्यं काष्ठम्, तत्रैकेन घटेन नालम्।)

('प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति' ॥

इत्यादिषु गुणानामेव कर्तृत्ववचनात् आत्मनः कर्तृत्वं दुर्वचमित्याक्षेपे सामाधत्ते—शास्त्राणीति -)

शास्त्राणि हि, 'यजेत स्वर्गकामः', 'मुमुक्षुः ब्रह्मोपासीत' इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते। न हि अचेतनस्य कर्तृत्वे अन्यो नियुञ्जते। शासनाच्च शास्त्रम्, शासनं च प्रवर्तनम्। शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण। अचेतनं च प्रधानं न बोधयितु शक्यम्। अतः शास्त्राणामर्थवत्त्वं भोक्तुः चेतनस्यैव कर्तृत्वे भवेत्। तदुक्तम्—'शास्त्रफलं प्रयोक्तरि' इति।

यदुक्तम्—'प्रकृतेः क्रियमाणानि' इत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति; तत् सांसारिकप्रवृत्तिषु अस्य कर्तृत्वं सत्त्व-रजस्तमोगुणसंसर्गकृतम्, न स्वरूपप्रयुक्तमिति प्राप्ताप्राप्तविवेकेन गुणानां कर्तृत्वप्रतिपादनपरम्। तथा च तत्रैवोच्यते, 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति। तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते—

'तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः॥
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्'॥

इत्यधिष्ठानादिदैवपर्यन्तसापेक्षे सति आत्मनः कर्तृत्वे यः आत्मानमेव केवलं कर्तारं मन्यते, न स पश्यतीत्यर्थः। (श्री.भा. 2–3–33)

तदुक्तमधिकरणसारावल्याम्—(233)

'ज्ञातृत्वं पुंस इत्थं भवतु तदपि नामुष्य कर्तृत्वसिद्धिः
श्रुत्याद्यैस्तन्निषेधाद्विकृतिविरहतश्चेत्यसद् दृष्टबाधात्'।
कर्तृत्वापह्नवोक्तेरविकृतिवचसोऽप्यान्यपर्यं हि गीतं
कर्ता शास्त्रार्थवत्त्वात्तदयमिह न च स्यादबोद्धुर्नियोगः'॥ इति॥

दृष्टं हि शयनासनभोजनादिषु कर्तृत्वं जीवस्य, तन्निषिध्यमानं प्रत्यक्षादिसकलप्रमाणबाधितमित्यर्थः। न केवलं प्रमाणविरोधः, स्ववचनविरोधस्यापि

विद्यमानत्वादितीममर्थं प्रदर्शयति—**कर्तृत्वापह्नवोक्तेरिति**। यदि कर्तृत्वमपह्नोति 'नाहं कर्तास्मी'ति, तदा स्ववचनविरोधः ; तत्रैव कर्तृत्वात्। यदि नापह्नोति 'अस्मदीयत्वाद्वयमपि सन्तुष्यामः' इति तर्ह्यात्मनो विकाराभाववचनं कर्तृत्वांगीकारे कथमुपपद्यत इत्याशंक्य, तदपि भगवतैवान्यपरत्वेन निर्व्यूढमित्याह—**अविकृतीति**।

अयमत्र 'कार्यकारणकर्तृत्वे हेतुः' इत्यादेर्गीतावचनस्य भावः- जीवस्य कर्तृत्वं न नित्यसिद्धम्, अपि तु प्रकृतिसम्बन्धप्रयुक्तमिति। न च तन्मिथ्या, औपाधिकस्य कर्तृत्वस्य सर्वदोपलभ्यमानत्वादिति। **शास्त्रार्थवत्त्वात्**—शास्त्रस्य प्रयोजनवत्त्वादित्यर्थः। कर्तृर्जीवस्य सद्भावे हि शास्त्रस्य प्रयोजनवत्त्वं सिद्ध्यति, अन्यथाननुष्ठानलक्षणाप्रामाण्यप्रसंगादित्यर्थः। यस्तु नियोगं जानीते स एव हि नियोज्यः। **अबोद्धुर्देहस्य** कथमिव नियोज्यत्वमभिधातुं शक्यत इति॥ (चिं. म.)

तदुक्तमभियुक्तैः —

'आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयं
तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन् वर्तते।
तत्रोपेक्ष्य ततोऽनुमत्य विदधत्तन्निग्रहाऽनुग्रहौ
तत्तत्कर्मफलं प्रयच्छति ततम्सर्वस्य पुंसो हरिः'॥ इति॥

कर्तृत्ववत् भोक्तृत्वमपि उपपादयति

'किञ्च स्वोत्त्यादिभग्नो निगदितुरहमः कर्तृताया निषेधो
यद्यन्यस्याहमर्थात्तदिदमुपनिषद्रेदिनस्सिद्धसाध्यम्।
भोक्तृत्वस्याप्यभावे प्रसजति वितथं बन्धमोक्षादिशास्त्रं
प्राणादानाद्विहारात्प्रकृतिसमधिकोऽस्मीतियोगाच्च कर्ता'॥ (अ.सा.234)

कर्तृत्वनिषेधवादिनं विषयभेदेन विकल्प्य दूषयित्वा तत्र तत्र कर्तृत्वसहपठितं भोक्तृत्वमपि विशदमेव स्थापयति—**किञ्चेति**।

अयमत्र विकल्पः—अहमः कर्तृत्वं नास्तीति वदन् वक्तुः स्वस्य वा अहमर्थवचनादौ कर्तृत्वं निषेधति? किं वा अचिद्वस्तुविशेषस्याहङ्कारस्य? यदि पूर्वः पक्षः

परिगृह्यते तदा स्ववचनविरोध इति प्रागेवोक्तम् । यद्युत्तरः पक्षः—तदा अहङ्कारस्य प्रकृतिकार्यत्वेन अकारणत्वात् अकर्तृत्ववचनं सिद्धसाधनमेव । **अहमर्थादन्यस्य यदीति**—आत्मनोऽन्यस्याहङ्कारस्य यद्यकर्तृत्वमुच्यत इत्यर्थः । **उपनिषद्वेदिनः**—देहातिरिक्त आत्मयाथात्म्यवादिनः वेदान्तिन इत्यर्थः । न हि अहङ्कारस्य कर्तृत्वं वयमनुमन्यामहे ।

इत्थं कर्तृत्वम् उपपाद्य तत्तुल्यन्यायेन भोक्तृत्वमप्युपपादयति—**भोक्तृत्वस्येति** । कर्तृत्वभोक्तृत्वे हि वीवधघटन्यायेन सहैवावतिष्ठेते इति सर्वलोकसिद्धमेतत्, यः पुण्यमेव वा पापमेव वा करोति स एव तत्फलमुपभुङ्क्ते नापर इति सार्वलौकिकी प्रसिद्धिः । भोक्तृत्वाभावे सकलमपि **बन्धमोक्षादिशास्त्रं** वितथमेव प्रसजेत् । किञ्च कर्तृत्वं सर्वथा न परित्याज्यम् पामरपरीक्षकाविशेषेण उच्छ्वासनिश्श्वासादिसर्वव्यापारेषु कर्तृत्वस्यैव सुप्रसिद्धत्वात् । **प्राणादानादिति**—प्राणव्यापारे हेतुत्वमुच्यते । **विहारादिति**—चरणादिव्यापारकर्तृत्वम् । **प्रकृतिसमधिकोऽस्मीतियोगादिति**—प्रकृतिविलक्षण आत्मध्यानादित्यर्थः । चार्वाकव्यतिरिक्ता हि सर्ववादिनो देहातिरिक्तमात्मानं ध्यायन्ति तत्रैव तेषां कर्तृत्वमपरित्याज्यमित्यर्थः ॥ (चिं. म.)

ज्ञातेत्युक्त्यैव कर्ता भोक्ता चेत्युक्तं भवति । कर्तृत्वभोक्तृत्वयोर्ज्ञानावस्थाविशेषत्वात् । (त. त्र. 58)

आत्मनो ज्ञातृत्वप्रतिपादनेनैव तस्य कर्तृत्वं भोक्तृत्वं चापि सिद्धम् । तत्कथमिति चेदाह—**कर्तृत्वभोक्तृत्वयोरित्यादिना** ।

अयमाशयः—आत्मनो ज्ञातृत्वं हि हेयोपादेयप्रतिपत्तेर्मूलं भवति । हेयपरित्यागोपादेय परिग्रहयोश्चिकीर्षा कर्तृत्वमूला, कर्तुर्हि चिकीर्षा जायते ; सा च चिकीर्षा ज्ञानावस्थाविशेषः । चिकीर्षया सह कर्तृत्वस्य प्रत्यासत्तिं दृष्ट्वा कर्तृत्वं ज्ञानावस्थाविशेष इत्युपचारः कृतः । अन्यथा कर्तृत्वस्य क्रियाश्रयत्वरूपत्वात् तज्ज्ञानावस्थाविशेष इति मुख्योक्तिः न सम्भवति । क्रिया हि नाम—जानाति, इच्छति, यतते, करोतीति

क्रमेण ज्ञानचिकीर्षाप्रयत्नानन्तरभाविनी प्रवृत्तिरूपा । तस्या आश्रयः कर्ता । तस्य भावः कर्तृत्वम् । तच्च ज्ञानावस्थाविशेष इत्यौपचारिकः प्रयोगः ॥ (व्या.)

तथा च भोक्तृत्वस्य जीवगतत्वात् तद्धेतुभूतं कर्तृत्वमपि जीवस्यैव सिद्धम् ; 'शास्त्रफलं प्रयोक्तरि' इति न्यायात् । तच्च कर्तृत्वं सामान्यतः परमपुरुषहेतुकमिति 'परात्तु तच्छ्रुतेः' इत्यनेन स्थाप्यते ॥

**आत्मनां जननमरणोपपादनम्**—नित्यस्यापि जीवस्वरूपस्य ज्ञानविकाससंकोचकरदेहसंयोग-वियोगनिमित्ते जननमरणे ।

'सच्छब्दार्थातिरिक्तं जनिमदखिलमित्यैतदात्म्यादिसिद्धं
प्रोक्ता सृष्टिश्च जीवे निरवयवनयस्त्वम्बरादौ निरस्तः ।
जीवोत्पत्तिस्ततस्यादिति न सदकृताभ्यागमादिप्रसङ्गात्
नित्यत्वाजत्वकण्ठोक्तिभिरपि जननं त्वस्य देहादियोगः' ॥ (अ.सा. 226)

'सन्मूलाः' इत्युपक्रम्य, 'ऐतदात्म्यमिदं सर्वम्' इत्यभिधानात् सर्वासामपि प्रजानां सन्मूलत्वं सिद्धम् । तेन वियदादिवदात्मनोऽपि कार्यत्वमनुमन्तव्यम् । 'तोयेन जीवान्व्यससर्ज' इत्यादौ जीवसृष्टिश्च साक्षात्प्रोक्ता । यत्तु निरवयवत्वान्नित्यत्वमिति तदाकाशे व्यभिचारान्निरस्तम् । तेन **जीवोत्पत्तिस्स्यादिति** पूर्वपक्षिते तन्निराकरोति ।

अकृताभ्यागमकृतविप्रणाशौ हि जीवनित्यत्वे हेतुतया न्यायवादिभिरुपादीयेते । यदि जीवस्सादिरनित्यः कृतकश्च, तदा पूर्वमेवाकृतं सुकृतं दुष्कृतञ्च अधुना अनुभूयात् ; तथाच **अकृताभ्यागमदोषः** । तथैव चेदानीं कृतयोः सुकृतदुष्कृतयोः उत्तरस्मिन् जन्मनि विनाशस्स्यात् । अत्र सुकृतदुष्कृतयोः विनाश इति फलानुभवाभावः प्रसज्यते । एवं युक्त्या जीवनित्यत्वमुपपाद्य श्रुत्यादिभिरप्युपपादयति—**नित्यत्वेति** । 'नित्यो नित्यानाम्' इत्यादिका नित्यत्वश्रुतिः, 'ज्ञाज्ञौ द्वावजौ' **इत्यजत्वश्रुतिः** । तर्हि चेतनाचेतनयोर्द्वयोरपि भगवत उत्पत्तिः श्रुतिस्मृतीतिहासपुराणादिषु श्रूयते तत्कथमित्या-शङ्क्य आह—**जननमिति** । पूर्वदेहप्रहाणं मरणम् ; उत्तरदेहपरिग्रहो जननमिति न्यायवादिनामपि सम्मतमेतत् । अन्यथा प्रेत्यभावोपपादनायोगात् ॥ (चिं. म.)

एतेन देहात्मवादिनो निरस्ताः । उत्पन्नमात्रस्य शिशोस्तन्याभिलाषो दरीदृश्यते। सचाभिलाषः पूर्वजन्मानुभवजन्यसंस्कारमन्तरेण न सम्भवति। तेन पूर्वोत्तरजन्मनोः जीव'नुवृत्तिं प्रतिपद्यामहे 'वीतरागजन्मादर्शनात्' (3-1-25) इति न्यायसूत्राभिप्रेतस्तर्कः।

एवं च आत्मनः स्वरूपतः नित्यत्वं देहेन्द्रियसम्बन्धप्रयुक्तधर्मभूतज्ञानविकासेन कार्यत्वं च स्थापितम्।

अत एव भाषितम् आत्माधिकरणे–'यदि नात्मोत्पद्यते, कथं तर्हि एकविज्ञानेन सर्वविज्ञानमुपपद्यते? इत्थमुपपद्यते—जीवस्यापि कार्यत्वात्, कार्यकारणयोरनन्यत्वाच्च। एवं तर्हि वियदादिवत् उत्पत्तिमत्त्वमङ्गीकृतं स्यात्। नेत्युच्यते। कार्यत्वं हि नाम एकस्य द्रव्यस्य अवस्थान्तरापत्तिः। तत् जीवस्याप्यस्त्येव। इयांस्तु विशेषः वियदादेरचेतनस्य यादृशोऽन्यथाभावः, न तादृशो जीवस्य। ज्ञानसङ्कोचविकास-लक्षणः जीवस्यान्यथाभावः; वियदादेस्तु स्वरूपान्यथाभावलक्षणः। सेयं स्वरूपान्यथा-भावलक्षणोत्पत्तिः जीवे प्रतिषिध्यते' इति। एवं च एकविज्ञानेन सर्वविज्ञानोपपत्तिश्च निराबाधा॥

**आत्मनां ज्ञातृत्वस्य भ्रान्तत्वनिरासः—**

यदुक्तम्—अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृ-तयाऽवभासते, रजततयेव शुक्तिः, निरधिष्ठानभ्रमानुपपत्तेः–इति। तदयुक्तम्; तथा सति अनुभवसामानाधिकरण्येन अनुभविता अहमर्थः प्रतीयेत, अनुभूतिरहमिति पुरोवस्थितभास्वरद्रव्याकारतया रजतादिरिव। अत्र तु पृथगवभासमानैव इयमनुभूतिः। अर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम्। तथा हि अनुभवाम्यहमिति प्रतीतिः।

तदेवम् अस्मदर्थमनुभूतिविशिष्टं प्रकाशयन् अनुभवाम्यहमिति प्रत्ययः, दण्डमात्रे 'दण्डी देवदत्त' इति प्रत्ययवत् विशेषणभूतानुभूतिमात्रावलम्बनः कथं प्रतिज्ञायेत?

यदप्युक्तम्—स्थूलोऽहमित्यादि देहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति—तदयुक्तम्, आत्मतयाऽभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्; तद्वत एव प्रतीतेः।

सकलेतरोपमर्दितस्वज्ञानाबाधितत्वेन अनुभूतेः न मिथ्यात्वं इति चेत्—हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ।

यदप्युक्तम्—अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न सम्भवति । अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थम्—इति न ज्ञातृत्वमात्मनः ; अपि तु, अन्तःकरणरूपस्याहङ्कारस्य । कर्तृत्वादिर्हि रूपादिवत् दृश्यधर्मः । कर्तृत्वेऽहम्प्रत्ययगोचरत्वे च आत्मनोऽभ्युपगम्यमाने देहस्येव अनात्मत्व-पराक्त्व-जडत्वादिप्रसंगश्चेति नैतदुपपद्यते ; देहस्येव अचेतनत्व-प्रकृतिपरिणामत्व-दृश्यत्व-पराक्त्व-परार्थत्वादियोगात् अन्तःकरणरूपाहङ्कारस्य ; चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य ।

एतदुक्तं भवति—यथा देहादिः दृश्यत्व-पराक्त्वदिहेतुभिः तत्प्रत्यनीकद्रष्टृत्व-प्रत्यक्त्वादेः विविच्यते, एवमन्तःकरणरूपाहङ्कारोपि तद्द्रव्यत्वादेव तैरेव हेतुभिः तस्मात् विविच्यते इति । अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य, दृशित्ववत्—यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम् ।

न च ज्ञातृत्वं विक्रियात्मकम् । ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम् । ज्ञानञ्चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम् । नित्यत्वञ्चाऽऽत्मनः 'नात्मा श्रुतेः' इत्यादिषु वक्ष्यति । 'ज्ञोऽत एव' इत्यत्र 'ज्ञ' इति व्यपदेशेन ज्ञानाश्रयत्वञ्च स्वाभाविकमिति वक्ष्यति । अस्य ज्ञानरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव, ज्ञानाश्रयत्वमपि अविरुद्धमित्युक्तम् ।

स्वयमपरिच्छिन्नमेव ज्ञानं संकोचविकासार्हम् इत्युपपादयिष्यामः । अतः क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते । ज्ञानप्रसरे तु कर्तृत्वमस्त्येव । तच्च न स्वाभाविकम् ; अपि तु कर्मकृतम् इत्यविक्रियस्वरूप एव आत्मा । एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्य आत्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसंभवः । (श्री.भा. I-157-160)

'ज्ञोऽत एव' इत्यत्र 'ज्ञ' इति व्यपदेशस्य विवरणम्। 'यावदात्मभावित्वाच्च न दोषः....' इति सूत्रम्। अतः स्वाभाविकत्वसिद्धिरिति भावः। ज्ञानस्वरूपस्य ज्ञानाश्रयत्वं कथमित्यत्राह–**अस्येति**। ज्ञानं स्वाभाविकनित्यधर्मश्चेत्, सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह—**स्वयमिति**। स्वयम्–स्वतः।....तर्हि इदानीमपि कदाचित् सर्वज्ञत्वम्, मुक्तौ च कदाचित् ज्ञानसंकोचः किं न स्यात्। यदि क्षेत्रज्ञावस्थायां सङ्कोचः, तर्हि सर्वेऽप्यज्ञाः स्युरित्यत्राह–**अतः क्षेत्रज्ञेति**। अतः सङ्कोचविकासार्हत्वात्। **कर्मणेति** संकोचकोपाधिः। **क्षेत्रज्ञावस्थायामिति**। तदानीमेव सङ्कोच इत्यर्थः। सर्वेषामज्ञत्वप्रसक्तिश्च कर्मतारतम्यात् परिहृता। **तारतम्यशब्देन,**

'तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता।
सर्वभूतेषु भूपाल तारतम्येन वर्तते'॥

इति वचनं स्मारितं भवति॥ (श्रु. प्र.)

अत्र 'धात्वर्थो हि क्रिया ज्ञेया' इति शाब्दिकोक्तदिशा 'ज्ञानक्रिया कर्तृत्वमिति व्यवहारः समजनि ; न तु मुख्यतया। ज्ञानस्य क्रियात्वं न केनाप्युच्यते। नैयायिकैः गुण इति ; सिद्धान्ते तु, द्रव्यमित्येव इष्यते॥

**आत्मनां देवादिभेदः** —आत्मत्वेन एकाकाराणां जीवानां देवादिसंज्ञाभेदः।

(जीवस्वरूपे स्वाभाविकः भेदः नास्ति ; किन्तु, अन्तःकरणरूपोपाधिभेदेन भेदः इति मतं निरस्यते।)

'वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः'॥

['परमात्म'शब्देनात्र जीवात्मा विवक्षितः। देहेन्द्रियापेक्षयास्य परत्वात्।]

'एकस्वरूपभेदश्च बाह्यकर्मवृत्तिप्रजः।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः'॥ (वि.पु. 2-14-32,33)

'वेणुरन्ध्रविभेदेन आकारवैषम्यमात्मनां न स्वरूपकृतम्; अपि तु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते ; नात्मैक्यम् । दृष्टान्ते चानेकरन्ध्रवर्तिनां न स्वरूपैक्यम् ; अपि त्वाकारसाम्यमेव । तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः ; एवमात्मनां देवादिसंज्ञाभेदः । [ यथा ] तैजसाप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव ; न स्वरूपैक्यम् । तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः ।

'सोऽहं स च त्वम्' इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं तच्छब्देन परामृश्य तत्सामानाधिकरण्येन अहंत्वमित्यादीनामर्थानां ज्ञानमेवाऽऽकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह । अन्यथा देहातिरिक्तात्मोपदेश्यस्वरूपे अहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते । अहंत्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न संगच्छते । सोऽपि यथोपदेशमकरोदित्याह—'तत्याज भेदं परमार्थदृष्टिः' इति । कुतश्चैष निर्णय इति चेत्-देहात्मविवेकविषयत्वादुपदेशस्य । तच्च 'पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः' इति प्रक्रमात् । 'विभेदजनकेऽज्ञाने' इति च नाऽऽत्मस्वरूपैक्यपरम्; नापि जीवपरयोः, आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम् । जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न सम्भवति ; तथा च श्रुतिः—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'॥
'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः'॥

'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' इत्याद्याः ।

( श्री.भा. I-242,246 )

दृष्टान्तमुखेन अद्वैतपरत्वेन परोक्तस्य श्लोकस्य अर्थमाह—**वेणुरन्ध्रेति** । स्वत एकाकाराणामुपाधिवशात् अवान्तरभेदसद्भावमात्रे दृष्टान्तोपन्यासः । अन्यथा सर्वथा

साधर्म्याभ्युपगमे हि आत्मनोऽचित्त्वाकाशकार्यत्वादिकमपि स्यात् । तद्धि प्रमाणान्तर-विरोधात् त्यज्यते ; तथा दृष्टान्तगतमाकारान्तरमपीति भावः । **तथाऽसौ परमात्मन** इत्युक्ते षड्जादिसंज्ञाभेदो मा भूदित्यभिप्रायेणाह—**एवमात्मनां देवादिसंज्ञाभेद इति**। भेदष्षड्जादिसंज्ञित इति पाठे सत्यपि षड्जादिसंज्ञाभेद इति व्याख्यातम् । दुरवगम-षड्जादिरूपभेदप्रतिपत्तिसौकर्यस्य संज्ञाभेदाधीनत्वादिति भावः ; दार्ष्टान्तिकेऽपि तथैव । दृष्टान्ते व्युक्तिबहुत्वं किमस्तीति शङ्कायां वाय्वंशानामनेकत्वं तर्केण साधयति—**तैजसेति** । स्पर्शवद्द्रव्यत्वादिति भावः । यत्र त्वाकाशदृष्टान्त उक्तः, तत्राप्येकस्यात्मनो दृष्टान्तत्वेनाकाशमुक्त्वा आत्मान्तरे तथात्वमिति मन्तव्यम् ।

'सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरात्मापि तथैकस्सन् पृथक् पृथक्' ॥ इति ॥

नभसः सितनीलादिभेदः शरत्प्रावृट्सन्ध्यासमयेषु मेघोपश्लिष्टस्य तस्य यथाक्रमभावी ।

तथैकस्यात्मनोऽपि देवादिभेदः क्रमभावीति ।। (श्रु.प्र.)

**आत्मनां परतन्त्रत्वेऽपि कर्तृत्वोपपत्तिः**—परमात्मपरतन्त्रजीवानां स्वातन्त्र्याभावेन कर्तृत्व-मनुपपन्नमिति शङ्कानिरासः ।

[जीवः स्वतन्त्रः, परतन्त्रो वा ? स्वतन्त्रश्चेत् 'परात्तु तच्छ्रुतेः' इति पारतन्त्र्य-कथनं कथं स्यात् ? परतन्त्रश्चेत् 'कुर्यात्, न कुर्यात्' इति विधिनिषेधशास्त्रे कर्तृत्वं कथं स्यात् ? न हि निगलितस्य पुरुषस्य धावनं विधीयते, इति पूर्वपक्ष-मनूद्य दूषयति—कर्तेति ।]

'कर्ता न ह्यन्यतन्त्रस्सरति खलु तथा पाणिनिश्चान्यथा चेत्
आज्ञा कुर्यान्न कुर्यादिति तु निगलिते धावनादेशवत्स्यात् ।
मैवं कर्माक्षकालप्रभृतिपरवशे कर्तृता तत्फलञ्च
स्वीकृत्यात्मेशमात्रे श्रुतिशतविदिते द्वेष इत्थं दुरन्तः' ॥ इति ।

(अ.सा. 236)

अयमर्थः–द्विविधं हि कर्तृत्वम्–प्रयोजककर्तृत्वं प्रयोज्यकर्तृत्वं चेति। तत्र 'अन्तः-प्रविष्टः शास्ता जनानां सर्वात्मा', 'य आत्मानमन्तरो यमयति' इत्यादिप्रमाणबलात् यद्यपि ईश्वरस्यैव सर्वप्रयोजककर्तृत्वम्, तथापि तेनैव ईश्वरेण दत्तशक्तिकस्य जीवस्याऽपि प्रयोज्यकर्तृत्वम् अस्त्येव इति 'कर्ता शास्त्रार्थवत्त्वात्' इति जीवकर्तृत्वमुच्यत इति न कश्चिद्विरोधः। कर्मादीनां सामान्यकारणत्वमभ्युपगम्य तत् परतन्त्रजीवेऽपि कर्तृत्व-मभ्युपगच्छद्भिः भवद्भिः ईश्वरप्रतिक्षेपप्रयासः श्रुतिप्रामाण्यप्रद्वेषनिबन्धनः। श्रुतयो हि जीवः ईश्वरप्रेरित एव चिन्तितनिमिषितादिकं निखिलमपि कर्म करोतीति निर्मत्सरमेव प्रतिपादयन्ति। स्मृतयोऽपि तामेव श्रुतिमनुधावन्तीति निपुणविदां निर्णयः। (चिं. म.)

अयमाशयः–

'साधारण्येन हेतुः सलिलमिव विभुः सर्वकार्याङ्कुराणां
वैषम्यन्त्वाविरिञ्चात् प्रतिनियतफलैः प्राणिनां कर्मबीजैः'।

इत्युक्तदिशा सर्वाङ्कुराणां साधारणकारणसलिलमिव परमात्मा कार्यसामान्यं प्रति साधारणो हेतुः ; बीजादिवत्। तदीय कर्मैवासाधारणमिति निर्णयात् ईश्वरपरतन्त्र-स्यापि स्वव्यापारे कर्तृत्वमक्षतमिति ॥

**आत्मनां परसम्पत्तिः**— जीवात्मनां परमात्मसंश्लेषविशेषः।

(जीवस्वरूपस्य परमात्मना संश्लेषविशेषः प्रलयकाले, सुषुप्तौ, उत्क्रान्तौ, मुक्तौ च श्रुतिसिद्धः। अत्र वैलक्षण्यं प्रतिपाद्यते।)

'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' (बृ.उ. 3-4-7)
'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6-2-1)

इत्यादिश्रुतेः–तदिदं मिथुनादिलक्षणं जगत्, तदा—सृष्टेः प्राक्, **अव्याकृतमासीत्**– अव्यक्तमासीत्, अव्यक्तशरीरकं ब्रह्मासीदित्यर्थः। नाम-रूपाभ्यां न व्याकृतमिति व्युत्पत्त्या अव्याकृतशब्दस्य अव्यक्तवचनत्वात्। अव्यक्तत्वं च नाम-रूपविशिष्टतया अनभिव्यक्तत्वम्। इति प्रळये नामरूपविभागाभावेन परमात्मसंश्लेषः सिद्धः।

सुषुप्तावपि — 'यत्र एतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इत्युक्तेः पुरुषशब्दितस्य कार्यावस्थजीवस्य, कारणावस्थस्वशब्दित-जीवविशिष्टतया स्वशब्दवाच्येन परम्परया स्वावस्थाश्रयतया उपादानभूतेन सता सम्पत्तेरपि सूपपादतया 'प्राज्ञेनात्मना संपरिष्वक्तः' इति श्रुत्यैकार्थ्यमपि स्वरसतां एव सिद्ध्यति । ( रं.भा. )

'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्–एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम् । (बृ.उ. 6-3-21)

यथा प्रियतमया स्त्रिया संपरिष्वक्तस्य पुरुषस्याऽऽन्तरदुःखादिपदार्थज्ञानं वा बाह्यपदार्थज्ञानं वा नास्ति, एवं परमप्रियेण **प्राज्ञेनात्मना** — सर्वज्ञेन परमात्मना संपरिष्वक्तस्य अस्य पुरुषस्य जीवस्य बाह्याभ्यन्तरस्वेतरसर्ववस्तु ज्ञानाभाव उपपद्यते इत्यर्थः । अत्र च संपरिष्वङ्गो नाम तत्र लय एव । स्वाप्ययसूत्रे, 'स्वमपीतो भवति इति वाक्यसमानार्थकतया भगवता भाष्यकृतैतद्वाक्यस्य उदाहृतत्वात् । (रं. भा.)

अनेन सुषुप्तौ प्रियतमा दृष्टान्तेन लयविशेषः प्रादर्शि ।

तथा उत्क्रान्तौ —

'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि तेजः परस्यां देवतायाम्' ॥ (छां.उ. 6-8-6)

प्रयाणकाले जीवस्य सत्सम्पत्तिं प्रदर्शयति–**अस्य ....देवतायाम्** इति । **प्रयतः**– म्रियमाणस्येत्यर्थः । अत्र वाचो मनःप्रकृतिकत्वासम्भवात् व्यापारो परमहेतुभूत-संश्लेषविशेष एव वाचो मनसि लयः । मनसः प्राणे लयोऽपि तादृश एव । 'मनसि करणग्रामं प्राणे मनः पुरुषे च तं झटिति घटयन् भूतेष्वेनं परे च तमात्मनि' इत्युक्तरीत्या प्राणो जीवे संपन्नस्सन् जीवेन सह तेजश्शब्दोपलक्षितेषु सर्वेषु भूतेषु सम्पन्नो भवति । ततः परं सुखदुःखोपभोगायासविश्रमाय तेजःशब्दितानां सजीवानां भूतसूक्ष्माणां परस्यां देवतायां परमात्मनि सम्पत्तिर्भवतीत्यर्थः । (रं. भा.)

अशरीरो वायुः ; अभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि । तद्यथैतानि अमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते, एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ' ॥

( छां.उ. 8-12-2 )

'वाय्वादीनाम् आकाशात् समुत्थानं नाम स्वकार्यकरणायोर्ध्वदेशे अभिवृद्धिः । परशब्दो वाय्वादीनां कारणावस्थावाची । ज्योतिश्शब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभिव्यञ्जक(व्यक्ति)हेतुतया प्रयुक्तः । वाय्वादीनि च कारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति । वायुर्हि आवहप्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते । विद्युत्तु विद्युत्वं हित्वा तेजस्त्वेन । अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण । एवं जीवोऽपि मार्गविशेषेण देशविशेषविशिष्टं परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेण आविर्भवतीत्येवमर्थे सत्येव दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति ' इति वर्णितम् । ( रं.भा. )

अत एव भाषितम्—अपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्यया अविद्यया तिरोहितस्वरूपः परंज्योतिरुपसंपद्य आविर्भूतस्वरूपो भवति । अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयः स्वाभाविका गुणाः परं ज्योतिरुपसंपन्नस्याविर्भवन्ति नोत्पद्यन्ते ।

( अत्र स्वाभाविकाविर्भाव एव दृष्टान्तः विवक्षितः । )

अत्र व्यासार्याः प्राहुः—भारवाहिकस्य देहिनः सभारस्यैव यष्ट्यवष्टम्भेन विश्रमतुल्यः सुषुप्तौ विश्रमः । अपनीतभारस्य विश्रमतुल्यो महाप्रलये ; यथा च कञ्चुकोष्णीषवतस्तद्रहितस्य च विश्रमः, तद्वत् कारणे लीनस्य करणकलेवररहितस्य द्विपरार्धकाले विश्रमः प्रळये—इति प्रयोजनविभागः सुषुप्तिप्रलययोः शरीरान्वयव्यतिरेकाभ्यामवगतः ।

सुषुप्तौ जीवमात्रस्याविभागापत्तिः ; प्रलय एव विशिष्टस्य लयापत्तिः ; उत्क्रान्तौ तु भूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या संयोगमात्रमेव । विशेष्यांशस्य प्रलय इति चेन्न, 'तेजः परस्यां देवतायाम्' इत्यत्र तेजश्शब्दस्य विशेष्यभूतजीवमात्रवाचित्वा-

भावात् अनुषक्तपदार्थवैरूप्यायोगादिभिश्च । एवं विभागानर्हभूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या प्रयोजनाभावाव्यक्तादिसृष्टवचनाभ्यां च सम्पत्तिः संयोगः । नित्यान्तरावस्थितेऽपि परमात्मनि तदानीं संसर्गविशेषः शास्त्रैकसमधिगम्यः इति। (श्रु.प्र. 4–2–15)

1. तथा च सूक्ष्मावस्थाविशिष्टजीवस्य परमात्मसंयोगः (करणकलेवरादिरहितस्य) । (महाप्रलये)
2. (सुषुप्तौ) करणकलेवरादिविशिष्टस्य जीवमात्रस्य पुरीतन्नाड्यवच्छिन्नपरमात्मसंपरिष्वङ्गः ।
3. (उत्क्रान्तौ) भूतसूक्ष्मविशिष्टस्य जीवस्य संश्लेषः परस्यां देवतायाम् ।
4. (मुक्तौ तु) सर्वकर्मबन्धविनिर्मुक्तस्य अप्राकृतदेशविशिष्टपरमात्मसम्पत्तिरेव इति विभागः ।

सर्वत्र परमात्मापृथक्सिद्धिसद्भावेऽपि संश्लेषमात्रदृढ-दृढतर-दृढतमसंश्लेषविशेषेणैव भेदो बोध्यः ॥

**आत्मनां परिमाणम्**—जीवानामणुत्वं स्वाभाविकम् ।

देहान्तर्मात्रदृष्टेः पृथगिह विषयिप्राणजीवोत्क्रमोक्ते-
भूयोवाक्यानुसाराद‌णुरिति वचने तादृशोपाध्यनुक्तेः ।
ईशादाराग्रमात्रो ह्यवर इति भिदा वर्णनात्स्पन्दवाक्या-
द्व्याप्त्युक्तिर्जातिधर्मप्रतिहतिविनिवृत्त्यादिमात्रेण जीवे ॥ (त. मु 92)

यदि आत्मा विभुः स्वयंप्रकाशश्च, किमिति सर्वत्र सर्वदा न प्रकाशते? अहमिति सार्वत्रिकः प्रकाशत एवेति चेन्न; अस्मिन् देहे 'अहं वर्ते' इतिवत् सर्वत्र प्रतीतिप्रसङ्गात् । सार्वत्रिकस्याविशदप्रकाशोऽस्तीति च न प्रमाणम् । व्यञ्जकान्तरसापेक्षत्वात् व्यञ्जकदेशे व्यक्तिरिति नियमहेतुरिति चेन्न; स्वप्रकाशत्वविरोधात् । अथ मानसप्रत्यक्षः, तथापि कथं क्वचित्कोपलब्धिः? यद्यपि सामग्रीदेशानुविधानेन ज्ञानोत्पत्तिः; तथापि विषयत्वं न तन्निबन्धनम्, तथा अदृष्टेः । अगृहीतपरिमाणस्य

स्वरूपतो ग्रहणे देहात्मभ्रमात् क्वाचित्कत्वोपलम्भ इति चेन्न; भ्रमव्यतिरिक्तमानसप्रत्यक्षेष्वपि तद्दृष्टेः। विवेकतः समाहितानामपि परिच्छिन्नतया तदुपलब्धेः ; 'हृदि ह्ययमात्मा' इत्यादिदृष्टेश्च। हेत्वन्तरमाह—**पृथगिति**। इन्द्रियादीनां पृथगुत्क्रमणोक्तेरात्मोत्क्रमणं न भाक्तमिति भावः।

सर्वगतत्वोक्तिसद्भावेऽप्यणुत्वोक्तीनां बलीयस्त्वं व्यनक्ति—**भूय इति**। सन्ति हि—

'एषोऽणुरात्मा चेतसा वेदितव्यः'।

'वालाग्रशतभागस्य शतधा कल्पितस्य च।

भागो जीवस्स विज्ञेयः................'॥

इत्यादिका बह्व्यः।

ननु विभोरपि परमात्मनोऽणुत्वं श्रूयते, तथेह स्यात्; तन्न, तत्र हि—'एष आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा' इत्यादिषु औपाधिकाणुत्वव्यक्तेः। जीवाणुत्वश्रुतौ तादृशोपाध्यनुक्तेः ; प्रत्युत स्वरूपनिर्देशेनैव वालाग्र सूक्ष्मभागसमत्वं ख्याप्यते। यद्यौपाधिकं जीवस्याणुत्वम्, तस्य जीवेश्वरसाधारणत्वात्, 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति परव्यावर्तकपरिमाणोक्तिर्विहन्येत इत्यभिप्रायेणाह—**ईशादिति**। स्वप्नसुषुप्त्यादिवाक्येषु 'आसु तदा नाडीषु सुप्तो भवति,' 'ताभिः प्रत्युपसृत्य पुरीतति शेते' इत्यादिभिः जीवस्य तत्र तत्र स्वरूपेण संचरणं श्रूयत इत्याह—**स्पन्दवाक्यादिति**। एतैर्बलीयोभिर्जीवव्याप्तिवचनानामन्यपरत्वमाह—**व्याप्त्युक्तिरिति**। 'तस्यात्मपरदेहेषु सतः' इत्यादौ जनितः, 'स चानन्त्याय कल्पते' इत्यत्र धर्मतः। तथा च सूत्रम्—'प्रदीपवदावेशस्तथा हि दर्शयति' इति। सर्वगत इत्यत्र क्रमेण सर्वविधाचेतने प्रवेशाद्वा, शिलादिष्वपि प्रतिहत्यनर्हतया वा ; तथा च भाषितम्—'अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः' इति। आत्मनोऽणुत्वे पृथिव्याद्यणुवत्प्रत्यक्षत्वं न स्यादिति चेन्न, विभुत्वेऽपि ते विभ्वन्तरवदप्रत्यक्षत्वप्रसङ्गात्। यथादृष्टि व्यावृत्तिरस्तीति चेत् अणुत्वेऽपि समम्। न चास्माकं पृथिव्याद्यणूनामप्रत्यक्षत्वनियमः। एवमणुत्वे मानसप्रत्यक्षत्वं न स्यादिति प्रसङ्गोऽपि श्रुतिविरोधादिभिः प्रत्याख्येयः। (स.सि.)

शङ्कराचार्यास्तु—जीवः किम् अणुपरिमाण एव? उत मध्यमपरिमाणः? आहोस्वित् महापरिमाण इति चिन्तायाम्—'उत्क्रान्तिगत्यागतीनां' इति श्रवणात् जीवस्य अणुपरिमाणम् अवगम्यते। अतः अणुः इति चेत्–सिद्धान्तयति–'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इत्यादिना।

नैतदस्ति अणुरात्मेति। उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् तादात्म्योपदेशाच्च परमेव ब्रह्म जीवः इत्युक्तम्। तस्मात् विभुः जीवः। तथा च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इत्येवंजातीयकाः जीवविषयकाः विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति। तथा च अणुत्वम् औपचारिकम् बुध्युपाधिधर्माध्यासनिमित्तं हि अणुत्वम्। अणुत्ववादस्तु औपचारिक एव इत्याहुः।

सिद्धान्ते तु जीवब्रह्मणोः भेदस्य ताह्विकत्वात् जीवे स्वाभाविकाणुत्वमेव श्रुति-स्मृति-सूत्राद्यनुरोधेन प्रतिष्ठापितम्॥

**आत्मनां भेदवत्त्वे जडत्वादिवारणम्**—आत्मनां स्वाभाविकभेदवत्त्वे आपादितदोषनिरासः।

यत्तु—आत्मनां भिन्नत्वे घटादिवज्जडत्वानात्मत्वक्षयित्वप्रसङ्ग—इति, तदयुक्तम्; एकजातीयानां भेदस्य तज्जातीयानां जात्यन्तरीयत्वानापादकत्वात्। न हि घटादीनां भेदस्तेषां पटत्वमापादयति।

यत्तु–भिन्नत्वे वस्तुतः परिच्छेदात् देशकालाभ्यामपि परिच्छेदो ब्रह्मणः प्रसज्यत इत्यनन्तत्वं ब्रह्मणो न सिध्यति—इति, तदयुक्तम्; वस्तुतः परिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूनाधिकभावेनानियमदर्शनात् देशकालसंबन्धेयत्तायाः प्रमाणान्तरायत्तनिर्णयत्वेन [च] ब्रह्मणः सर्वदेशकालसम्बन्धस्यापि प्रमाणान्तरादापततो विरोधाभावात्। वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारपरिच्छेदरहितत्वाभावादानन्त्यासिद्धिरिति चेत्, तद्भवतोऽप्यविद्याविलक्षणत्वं ब्रह्मणोऽभ्युपयतः समानम्। अतः सतोऽविद्याविलक्षणत्वाभ्युमगमाद्ब्रह्मणोऽपि भिन्नत्वेन भेदप्रयुक्ता दोषाः सर्वे तवापि प्रसज्येरन्।

यदि अविद्याविलक्षणत्वं नाभ्युपेयते, तर्ह्यविद्यात्मकमेव ब्रह्म स्यात्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणवाक्यमपि तत एवापार्थकं स्यात्। भेदतत्त्वानभ्युपगमे हि स्वपक्ष-परपक्षसाधनदूषणादिविवेकाभावात् सर्वमसमञ्जसं स्यात्। आनन्त्यप्रसिद्धिश्च देशकालपरिच्छेदरहितत्वमात्रेण; न वस्तुतोऽपि परिच्छेदरहितत्वेन, तथाविधस्य शशविषाणायमानस्यानुपलब्धेः।

भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतोऽपि परिच्छेदो न विद्यते। (श्री.भा. 2-1-15)

एतेन देश-काल-वस्तुपरिच्छेदरहितत्वरूपानन्तत्वम् उपपादितम्।

**आत्मनां मातृमेयमानरूपता**—प्रमातृ-प्रमेय-प्रमाणरूपः आत्मा।

[वृत्त्यवच्छिन्नचित् प्रमा, विषयावच्छिन्नचित् प्रमेयम्। अन्तःकरणावच्छिन्न-चित् प्रमाता इति निर्विशेषाद्वैतिनः। सिद्धान्ते तु त्रिरूपता]

'प्रमाता च प्रमेयञ्च प्रमाणञ्च भवेत्पुमान्।
प्रमा मेया च धीरेव मेया एव घटादयः'॥ (न्या.सि. 125)

[प्रमाणं प्रमा इत्यर्थः (भावे ल्युट्)] **प्रमा मेया चेति**—अत्र **एवकारः** व्युत्क्रमेण **मेया च** इत्यनेनान्वेति। ततश्च धीः **प्रमा मेयैव**; न तु प्रमात्रीत्यर्थः॥

**आत्मनां विभागः**—ज्ञानानन्दरूपाणां जीवानां बद्ध-मुक्त-नित्यरूपेण त्रैविध्यम्।

स्वतस्सुखी च अयमात्मा। उपाधिवशात् संसरति। स द्विधा—संसारी असंसारी चेति। पुण्यपापादिमान्-पूर्वः। तच्छून्यः इतरः। एते च संसारिणः कर्मपाशप्रग्रथिता (सन्दिता) ब्रह्माण्डकुहरपरिवर्तमानकालघटीयन्त्रकुण्डिकायमानाः तस्मिन् क्षीयमाणाः पूर्यमाणाश्च सन्तः परिभ्रमन्ति। तत्र पुण्यकृतो धूमरात्र्यपर-पक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण स्वर्गलोकमधिरोहन्ति। अवरोहन्ति च चन्द्रमसस्स्थानात्, आकाशवायुधूमाभ्रमेघादिक्रमेण। तत्र श्रद्धासोमवर्षान्नरेतोमयी-नामाहुतीनां विद्युत्पर्जन्यपृथिवीपुरुषयोषितः स्थानानि। प्रायिकी च पञ्चमाहुत्यपेक्षा;

द्रौपदीधृष्टद्युम्नप्रभृतिषु अदर्शनात् । एवमपुण्यकृतामपि स्वेदजादिशरीरेषु पञ्चमाहुत्यभावात् चन्द्रप्राप्त्यभावाच्च । तेषामतिघोरा निरयसरणिः, निरयदुःखानुभूतिश्च पुराणादिषु प्रपञ्चिता स्मर्यमाणापि कलेबरं कदम्बगोलाययति ।

द्वितीयोऽपि द्विधा—संसारात्यन्ताभाववान् प्रध्वस्तसंसारश्चेति । तत्र कदाचिदपि संसारहेत्वभावात्, पूर्वस्य ईश्वरवत् नित्यसूरेस्तदत्यन्ताभावः । उत्तरस्तु उपपादितो मुक्त एव । अनादावपि काले प्रतिदिवसं सहस्रपुरुषमोक्षेऽपि न संसारात्यन्तविलयः । अस्यानन्तस्य एवंस्वभावत्वात् ।

उक्तञ्च वेदार्थसंग्रहे 'ब्रह्माज्ञानपक्षादपि पापीयानयं भेदाभेदपक्षः । अपरिमितदुःखस्य पारमार्थिकत्वात् संसारिणामनन्तत्वेन दुस्तरत्वाच्च' इति । अनन्तपयोनिधौ पयोबिन्दुसन्निपातवत् संसारिवर्गे पूर्वमुक्तेषु पश्चान्मुक्तानामनुप्रवेशः । अनन्तेष्वपि संसार्यसंसारिषु एकपादत्वत्रिपादत्वतारतम्यमापेक्षिकम् । तथा च मुहूर्तयामाहोरात्रकल्पादिषु द्रव्यपार्थिवघटादिषु च दृष्टमेव । अत एव नित्यानां समस्तबद्धमुक्तापेक्षयापि अनन्तत्वमुपपन्नम् ।

केचित्तु नित्यसूरिवर्गं नेच्छन्ति, तन्न; 'सदा पश्यन्ति सूरयः' इत्यादिभिः सदा पश्यदनेकद्रष्टृविशिष्टस्थानविधानात् । अत एव न मुक्तप्रवाहेण वा ईश्वरेण वा अन्यथासिद्धिः । सर्वेषां जीवानां संसारात्यन्तायोगव्यवच्छेदसाधनानि जीवत्वादिलिङ्गानि यथासम्भवं सिद्धसाधनबाधादिभिर्दूष्याणि । एतेषां नित्यसूरीणामानन्त्यावान्तरभेदादिकं श्रीपांचरात्रसंहितासु विशदमनुसन्धेयम् ।

अनन्तविष्वक्सेनाद्यैर्नियताधिक्रियैरपि ।
ज्ञानानन्दादिभिर्मुक्ता नित्यैरानन्दसोदराः ॥

एवं सदा दर्शनादिबलादेव नित्यमुक्तेश्वराणां प्रतिसर्गावस्थायां सुषुप्तकल्पतया अवस्थानं वदन्तः प्रत्युक्ताः । संकोचककर्माद्यभावाच्च साऽवस्था दुरुपपादा ॥

(न्या. सि. 138–142)

**आत्मनां विभुत्वनिरासः**—जीवात्मनां विभुत्वशंकानिरासः ।

[ननु तत्पुरुषीयसुखहेतुकार्योत्पत्तौ तत्पुरुषीयादृष्टस्य हेतुत्वमिति निर्विवादम् । हेतुता च स्वाश्रयसंयोगसंबन्धेनैव वाच्या । ततश्च देशान्तरेऽपि तत्तत्पुरुषसुखहेतु-कार्योत्पत्तये तस्य विभुत्वमावश्यकमित्यत आह—**युगपदिति** ।]

युगपदखिलभुवनेषु अदृष्टद्वारा तत्कार्यसिद्धये विभुत्वकल्पनमयुक्तम् ; ईश्वरप्रीति-कोपयोरेव अदृष्टत्वात्, तदाधारस्य चेश्वरस्य विभुत्वात्, जीवस्याविभुत्वे बाधकाभावात् । विभुत्वे च उपलम्भाद्यस्वारस्याच्च । इन्द्रियवत् शरीरप्रत्युप्तात्मगमनेनैव तत्रतत्र ज्ञानसुखाद्युपपत्तेः । आत्मगमनं तु उपलम्भश्रुत्याद्यनुकूलम्, विभुत्वकल्पनं तु न तथेति लाघवमिच्छतां तदेव फलितम् ।

उक्तञ्चाऽऽत्मसिद्धौ प्राणात्मवादनिराकरणे—'अविभोरात्मनः स्पर्शविरहिणोऽपि प्रयत्नादृष्टप्रेरणानुगुण्येन मनस इव उत्क्रान्तिगत्यागतयो युज्यन्ते' इति । तथा तत्रैव चैतन्यप्रसरणचोद्यपरिहारयोरपि, 'गुणिनमपहाय' इत्यादिना अणुत्वं व्यक्तम् । श्रुतिस्मृत्यादिषु सर्वगतत्वादिव्यपदेशास्तु समुदायापेक्षया, धर्मभूतज्ञानद्वारा सूक्ष्मानु-प्रवेशक्षमतया वा तत्र तत्र यथोचितं निर्वाह्याः । 'नित्यो व्यापी' इत्यात्मसिद्धि-वचने व्यापिपदमपि 'अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः' इति भाष्ये व्याख्यातम् । 'उत्क्रान्तिगत्यागतीनाम्' इत्यादिभिश्च सूत्रकारैरेवाणुत्वं समर्थितम् । हृत्प्रदेशस्थितस्यैव जीवस्य ज्ञानद्वारा नानाधिष्ठानोपपत्तिः । एवमेव योगिप्रभृतीनां नानादेहाधिष्ठानं घटते । न ततो विभुत्वक्लृप्तिः । तदेतदखिलमभिप्रेत्य सूत्रितम्, 'गुणाद्वाऽऽलोकवत्' इति । (न्या. सि. 130-132)

'नित्यस्सर्वगत' इति श्रुत्या आत्मनां नित्यत्वे तत्सहचरितं सर्वगतत्वमपि स्यादिति शङ्कायामाह—व्याप्ता इति ।

व्याप्तास्सर्वत्र जीवास्सुखतदितरयोस्तत्रतत्रोपलम्भा-
न्निर्वाह्ये देहगत्यागतिरिह वितथा तद्वतोऽपीति चेन्न ।

वक्त्री पंचाग्निविद्याप्रभृतिषु भविनां स्वस्वरूपेण सिद्धं
यातायातप्रकारं श्रुतिरगतिरिमां लाघवोक्तिं श्रुणोतु ॥ इति ॥ (त.मु. 88)

आगमस्यानुग्राहकमाह—**सुखेति** । तदितरशब्दोऽत्र दुःखवत् धीच्छादीनामपि संग्राहकः । अविभुत्वे सर्वत्र दुःखाद्युपलम्भो न स्यादित्यर्थः । आत्मगत्या सर्वत्र सुखादीति शङ्कां गौरवप्रसक्त्या वारयति—**निर्वाह्य इति** । अत्र श्रुतेः अन्यपरत्वाभिप्रायेण प्रतिवक्ति—**नेति** । सर्वगतत्वोक्तिस्तावत्, 'अग्निर्यथैको भुवनं प्रविष्टः', 'वायुस्सर्वगतो महान्' इत्यादिवदेकजातीयानां सर्वत्र अनुप्रवेशान्नेतुं शक्या । गतेश्च श्रुतत्वान्न कल्पनागौरवमित्याह—**वक्त्रीति** । प्रभृतिशब्देन 'तेन प्रद्योतेनैष आत्मा निष्क्रामति, तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादयः संगृह्यन्ते । न च तासां श्रुतीनां प्राणानूत्क्रमणादिभिः अन्यथासिद्धिरास्थेया इत्यगतिशब्दाभिप्रायः । (स. सि.)

अनुमितिविषये एव लाघवोक्तिः ; न तु श्रुतिसिद्धे इति हि वेदान्तिनां प्रक्रिया। अणुत्वन्तु श्रुतिसिद्धमिति भवदीयलाघवोक्तिं श्रुतिरेव शृणोतु न वयम् इति परिहासोक्तिः ॥

## आत्मनां विभुत्वाभावे दोषशङ्कानिरासः—

अविभुत्वे सिद्धैश्वर्याणां युगपदनेकशरीराधिष्ठातृत्वं न स्यादित्यत्राह—**अव्यापित्वेऽपीति** ।

अव्यापित्वेऽपि पुंसोऽभिमतबहुवपुःप्रेरणे यौगपद्यं
ज्ञानव्याप्त्योपपन्नं बहुषु च वपुषोंऽशेषु निर्वाह एषः ।
यच्चादृष्टं क्रियां स्वाश्रययुजि तनुतेऽन्यत्र तत्कृद्गुणत्वा-
दित्येतत्सिद्धसाध्यं विभुन इह हि तद्ब्रह्मणः प्रीतिकोपौ ॥ (त. मु. 89)

बहुवपुःप्रेरणं किं द्रव्यान्तरद्वारकम्? उत कर्मनिमित्तम्? आद्ये यथा पाणिपादादिद्वारनियतं युगपत्खड्गपादुकाद्यधिष्ठानम्, न तथाऽत्रेति भावः । द्वितीये स्वकर्मनियतमनेकशरीराधिष्ठानं कर्मिणः स्वसन्निधिविरहे कथं स्यादिति । **ज्ञानव्याप्त्या**—

स्वरूपसन्निधानाभावेऽपि ज्ञानस्य युगपदनेकदेहाधिष्ठानानुगुणवृत्त्येति भावः। स्वरूपव्याप्तिर्ज्ञानतोऽधिष्ठानाभावेऽनर्थिका। तर्हि तत एव कुड्यादीनामप्यधिष्ठानं स्यात्। न स्यात्, तदधिष्ठानानुगुणकर्मातिशयविशेषाभावात्।

ये तु तादृशातिशयवन्तः, ते कुड्यादीन्यप्यधितिष्ठेयुः ; यथा परकायादीन्। देहैकदेशवर्तिन आत्मनो युगपदनेकावयवाधिष्ठानं कथमित्यत्रापि प्रत्येतव्यमेतदेवेत्याह—**बहुष्विति**। धर्माधर्मौ स्वाश्रयसंयुक्त एवाश्रयान्तरे क्रियां जनयतः, क्रियाहेतुगुणत्वात्; गुरुत्ववत् इति परोक्तमनुवदति—**यच्चेति**। तत्र सिद्धसाधनतामाह—**इत्येतदिति**। तद्व्यनक्ति—**विभुन** इति। इह हि धर्माधर्मशब्दः कर्मनिमित्तेश्वरप्रीतिकोपरूपबुद्धिद्योतकः। अस्ति हि—'शुभे त्वसौ तुष्यति दुष्कृते तु न तुष्यतेऽसौ परमश्शरीरी' इति।

'न च प्रीतेरपूर्णत्वं न च कोपात्सदुःखता।
फलप्रदित्सारूपत्वादुभयोरपि कर्मणोः'॥ इति च।

अतो न दोषः। (स सि.)

तथा च प्रीतिकोपात्मकादृष्टस्य परमात्मनिष्ठतया परोक्तमनुमानं सिद्धसाधनताग्रस्तम् इति जीवानां विभुत्वाभावे न कापि क्षतिः। ईश्वरप्रीतिकोपविषयतामादाय-अदृष्टस्य जीवनिष्ठताव्यवहारोऽपि सुगम एव॥

**आत्मनां वियदादिवत् उत्पत्तिशङ्कानिरासः**—जीवानां स्वरूपपरिणामाभावसाधनम्।

'यतो वा इमानि भूतानि जायन्ते' 'प्रजापतिः प्रजा असृजत', 'तोयेन जीवान् व्यससर्ज भूम्याम्' इत्यादिश्रुतेः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञनात्, प्राक्सृष्टेरेकत्वावधारणाच्च वियदादिवज्जीवोऽप्युत्पद्यत एव।

न च 'तत्त्वमसि' इति ब्रह्माभेदात् जीवस्यानुत्पत्तिः शङ्क्या। 'सर्वं खल्विदं ब्रह्म' इत्यनेन ब्रह्माभेदावगमाद्वियदादेरप्यनुत्पत्तिप्रसंगात्। शरीरात्मभावेन सामानाधिकरण्याभ्युपगमस्योभयत्र तुल्यत्वात्। 'न जायते म्रियते' इत्यादिवचनस्य

वाय्वन्तरिक्षामृतत्ववचनान्यथानयनवत् देहोत्पत्तिविनाशानुबन्ध्युत्पत्तिविनाशनिषेधपरतया नेयत्वात् । 'जीवापेतं वाव किलेदं म्रियते, न जीवो म्रियते' इति श्रुत्यन्तरानुरोधेन तथैवावश्यवर्णनीयत्वात् । न च कृतहानादिदोषप्रसंगः । सर्वं द्रव्यं नित्यं, तस्य पूर्वावस्थाप्रहाणं नाशः । अवस्थान्तरप्राप्तिरुत्पत्तिरिति परिणामवादिमते-द्रव्यात्मना नित्ये आत्मनितदप्रसंगात् । अतो वियदादिवज्जीवोऽप्युत्पद्यत इति, 'न जायते म्रियते वा विपश्चित्,' 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादिश्रुतेः, 'नित्यो नित्यानाम्', अजो नित्यश्शाश्वतोऽयं पुराणः' इत्यादिश्रुतिभ्यो नित्यत्वाच्च नायमात्मा वियदादिवदुत्पद्यते। न हि वियदादावुत्पत्तिनिषेधिका श्रुतिरस्ति, येन तत्तुल्यता स्यात् । 'न हन्यते हन्यमाने शरीरे' इति पूर्ववाक्यादेव देहनाशाद्यनुबन्धिनाशाद्यभावसिद्ध्या 'न जायते म्रियते' इत्यत्र साक्षादुत्पत्त्यादेरेव निषेद्धव्यत्वात् । 'वायुश्चान्तरिक्षञ्च' इत्यमृतत्व-वचनन्तु 'आत्मन आकाशस्सम्भूतः', 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च', 'खं वायुर्ज्योतिः' इत्याद्युत्पत्तिश्रुतिबाहुल्येन चिरकालस्थायित्वाभिप्रायं वर्णनीयम् ।

जीवोत्पत्तिश्रुतिश्च धर्मभूतज्ञानस्य संकोचविकासात्मकविकाराङ्गीकारेण स्वभाव-विकाररूपोत्पत्तिपरा, शरीरसम्बन्धरूपोत्पत्तिपरा वा । चेतनस्याचेतनप्रधानोपादेयत्वे तस्याचेतनत्वापत्तेश्चेतनस्योपादानस्य कस्यचिदभावाच्च तदुत्पत्तिश्रुतेरुक्तार्थपरत्वावश्यम्भा-वात् । वियादादेस्त्वेवंविधानुपपत्त्यभावेन वाय्वादिसहपाठेन विशिष्य लयश्रवणेन जीवात्मवैषम्यस्य स्फुटत्वात् । प्राक्सृष्टेरेकत्वावधारणस्य सृष्टिकालीनविषमविकार-राहित्येन सूक्ष्मरूपसमविकारपरत्वेन सूक्ष्मचेतनस्वरूपावस्थानाविरोधित्वात् ।

किञ्च जीवात्मनो वियदादिवदुत्पत्तौ—कृतहानादिदोषो दुर्वारः। न हि द्रव्यात्मना नित्यत्वादात्मनो न तद्दोष इति वाच्यम् । प्रागवियतोऽपि वियद्भाववत् प्रागजीवस्य जीवभावाङ्गीकारे जीवभावेन द्रव्यकृतपुण्यपापयोर्जीवाश्रितयोर्जीवनाशनाश्यतया कृतहा-नादिदोषतादवस्थ्यात् । नित्यस्य प्रत्यगात्मनः प्रधानेश्वरादिव्यावृत्तेर्जीवभावेनैव वक्तव्य-तया यावदाश्रयभाविधर्मस्यैव व्यावर्तकत्वस्वाभाव्यात् स्वरूपनिरूपकस्य जीवभावस्य-स्वरूपनुबन्धित्वमवर्जनीयमिति वियद्भाववज्जीवभावस्य कादाचित्कत्वायोगाच्च ।

तस्माज्जीवात्मा वियदादिवन्न स्वरूपेणोत्पद्यत इति सिद्धान्तितम् ॥

(श्री.भा प्र. 2-3-8)

**आत्मनां व्यापित्वोपपादनम्**—अणुरूपाणां जीवानां व्यापित्वोक्तिनिर्वाहः ।

उत्क्रान्तिस्पन्दनाणूपमिति वचनतोऽणीयसश्शक्तिलाभे

धीभूम्ना यौगपद्यं त्ववयवनयतोऽनेकमूर्तिग्रहेऽपि ।

यत्राम्नातं विभुत्वं परविषयमिदं भाति तात्पर्यलिङ्गैः

जीवे व्यापित्ववादो मतिमहिमपरस्स्वच्छताद्याशयो वा ॥ (अ.सा.232)

'उत्क्रान्तिगत्यागतीनाम्' इत्यादिसूत्रोक्तं देहादुत्क्रमणं देशान्तरगमनं पुनरागमनम्, 'वालाग्रशतभागस्य', 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इत्याद्यणुद्रव्योपमानम्, 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति साक्षादणुत्ववचनम्, 'एवमादितो. ऽणुत्वेन सिद्धस्यापि जीवस्य शक्तिलाभे योगादिसामर्थ्यलाभे कथमनेकशरीरपरिग्रह इति चोद्यमेव हि परेषामभिमतम्, तत्परिहृतमेव ; धर्मभूतज्ञानविकासेन सूत्रकारैरेव 'प्रदीपवदावेशः' इत्यादिना प्रसाधितत्वात्। इदमेवैकस्मिन्नपि शरीरे 'पादे मे वेदना, शिरसि मे सुखम्' इति जीवस्याणोरपि नानावयवप्रयुक्तसुखदुःखानुसन्धानेन समानम्।

अयमत्राशयः— अनेकदेहग्रहणेऽपि अणुतया प्रमाणसिद्धस्य जीवस्य यौगपद्यमनेकावयवेषु सुखदुःखप्रतिसन्धानवदुपपद्यते । यथा—प्रदीपस्यैकत्रावस्थितस्यापि प्रभया धर्मभूतया तत्तत्प्रकाशकारणत्वम्, एवमणोरपि जीवस्य प्रभास्थानीयेन धर्मभूतज्ञानेन तत्तत्प्रकाशकत्वमपि युज्यत इति सन्तोष्टव्यमायुष्मता । तर्हि तर्कं परित्यजामः ; जीवस्य महत्त्वप्रतिपादकं श्रुतिमवलम्ब्याणुत्वं निराकुर्म [इत्याशंका तु यत्र विभुत्वमुच्यते तत्परमात्मविषयतया तात्पर्यलिङ्गैः नेतव्यमिति परिहरणीया । परमात्मविषयकत्वनियामकलिङ्गमाह—**तात्पर्यलिङ्गैरिति** । तात्पर्यलिङ्गपरामर्शाभावे 'पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्' इति न्यायः स्यादित्यर्थः ।

ननु 'नित्यो व्यापी' इति जीवस्य व्यापित्वं सर्वाचार्यसम्मतयामुनाचार्यैरेवोच्यते तत्कथमित्याशंक्याह—**जीव इति**। जीवविभुत्ववादः 'स चानन्त्याय कल्पते' इति धर्मभूतज्ञानव्याप्त्या वा सौक्ष्म्यात् सर्वाचेतनान्तःप्रवेशसामर्थ्याद्वा भवतीति न कश्चिद्विरोधः। (चिं.म.)

अणोरपि व्यापित्वं धर्मभूतज्ञानव्याप्तिनिबन्धनमिति,

'वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवस्स विज्ञेयः स चानन्त्याय कल्पते'॥

इत्यादि श्रुतिसिद्धम्॥

**आत्मनां शरीरात्समुत्थानम्**—चरमशरीरावधिक उद्गमनम्।

[अत्र समिति उपसर्गबलात् मोक्षार्थगमनं स्वरसतः प्रतीयते। तच्च चरम-शरीरावधिकमेव।]

'अशरीरो वायुः; अभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि। तद्यथैतानि अमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते, एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रुपेणाभिनिष्पद्यते'॥

(छां. उ. 8-12-2)

शरीरात् समुत्थानं नाम श्रवणमननध्यानाभ्यासरूपविवेकः। स्वेन रूपेण अभिनिष्पत्तिर्नाम प्रपञ्चविलापको वृत्तिरूपसाक्षात्कारः। तेन परं ज्योतिर्भवति **उपसम्पद्येति** निर्देशो 'मुखं व्यादाय स्वपिति' इतिवदिति केचित् व्याचक्षते। तदयुक्तम्; 'समुत्थान'शब्दस्य विवेकवाचित्वाभावात्। शरीरविषयो विवेक इति चेत् पञ्चमी न घटते; तस्याः द्वितीयार्थत्वाभावात्। शरीरादात्मनो विवेकश्चेत् आत्मानमिति अध्याहारः। 'तयोर्ध्वमायन्नमृतत्वमेति' इत्यादिश्रुत्यन्तरैकार्थ्य-प्रत्यभिज्ञाविरोधश्च।

शरीराभिमानात् उत्थानमिति चेत्—शरीरशब्दस्य लक्षणा। शरीरात् आत्मन उत्थानं विवक्षितं चेत्—सशरीरस्य तत्सम्भवात् मोक्षस्य च अशरीरता-

लक्षणत्वात् अस्य वाक्यस्य मोक्षविषयत्वं न स्यात्–इति चेत्, अर्चिरादिमार्गगमनस्य सूक्ष्मदेहसापेक्षत्वात् तेन गतवत एव सवासनसर्वहेयप्रहाणाच्च मुख्यार्थपरत्वे सत्येव मुक्तिविषयत्वोपपत्तेः । ल्यबन्तपदस्य अविवक्षितक्रमत्वे च क्लिष्टं गत्यभावद्योतकम्, 'सम्पद्याविर्भाव' इति सूत्रविरोधश्च ।

न हि 'आविर्भूय सम्पत्तिः' इति सूत्रितम् । भेदप्रविलयातिरेकेण परं ज्योतिर्भावात्मकार्थान्तरासम्भवात्, 'परं ज्योतिरुपसम्पद्य' इति निर्देशवैयर्थ्याच्च । परं ज्योतिर्भावो नाम न धर्मान्तरं निर्विशेषवस्तुन्युत्पद्यते ; न च आविर्भवति ।

ननु परं ज्योतिर्भावो नाम अद्वितीयत्वम् । तेन निवर्तकज्ञानसद्वितीयत्वव्युदास इति चेन्न ; सम्पत्तिशब्दस्य इतरनिवृत्तिवाचित्वाभावात् । न हि 'घटो भवति' इत्युक्ते दण्डचक्रादिद्वितीयनिवृत्तिः उक्ता भवति । उपसम्पत्तेः सकर्मकत्वप्रतीतिस्वारस्यविरोधश्च । अस्य वाक्यस्य एवमर्थपरत्वे दृष्टान्तोपस्थापकपूर्ववाक्यविरोधश्च स्यात् । पूर्वं हि—'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्युक्त्वा, 'अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः' इति वय्वादीनां कर्मकृतशरीराभावेन प्रियाप्रियानन्वयं दर्शयित्वा, 'तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते' इत्युक्तम् ।

न हि वाय्वादिनामाकाशात् समुत्थानं नाम विवेकज्ञानरूपम् ; अपि तु स्थितिवेलायां स्वकार्यकरणाय ऊर्ध्वदेशेऽभिवृद्धिः । परशब्दो वाय्वादीनां कारणवस्तुवाची । ज्योतिश्शब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः । वाय्वादीनि च स्वकारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति । वायुर्हि आवह-प्रवाहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते । विद्युच्च विद्युत्त्वं हित्वा तेजस्त्वेन अभ्रस्तनयित्नू च अभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण । एवं जीवश्च मार्गविशेषेण गत्वा परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेण आविर्भवतीत्येवमर्थे सति हि दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति । (श्रु.प्र.1-3-18)

एवञ्च शरीरात् समुत्थानं मुख्यमेवेति प्रत्यपादि ॥

20

**आत्मनां स्वरूपेणाभिनिष्पत्तिः**—जीवात्मनां मुक्तौ स्वरूपाविर्भावः ।

'अशरीरो वायुः ; अभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि । तद्यथैतानि अमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते, एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ' ।

(छां.उ. 8-12-2)

'वाय्वादीनामाकाशात् समुत्थानं नाम स्वकार्यकरणायोर्ध्वदेशे अभिवृद्धिः । **परशब्दो** वाय्वादीनां कारणावस्थावाची । **ज्योतिश्शब्दस्तु** कारणानां कार्योत्पादन-द्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः । वाय्वादीनि च कारणद्रव्यमुपगम्य कार्य... हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति । वायुर्हि आवह-प्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते । विद्युत्तु विद्युत्वं हित्वा तेजस्त्वेन । अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण । एवं जीवोऽपि मार्गविशेषेण देशविशेषविशिष्टं परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेण अविर्भवतीत्येवमर्थे सत्येव दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति । (रं॰ भा.)

नित्यस्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरित्यूचिवांसः
तन्मात्रं स्यान्न विद्याफलमिति न विदुर्नित्यसिद्धं त्वसाध्यम् ।
सिद्धं साध्यानुवेधादपि भवति फलं सा त्वविद्यादिभङ्गो
यद्वा सिद्धस्य वित्तिस्तदिह न विहतं मुक्त इत्यादिसूत्रम् ।। (अ.सा. 520)

'स्वेन रूपेणाभिनिष्पद्यते ' इत्युक्ताभिनिष्पत्तिर्नित्यं पूर्वमपि सिद्धमेव यत् स्वात्म-स्वरूपं तत्स्थितिरूपैव इत्युक्तवन्तो मायिनो नित्यसिद्धस्वरूपमात्रं विद्यासाध्यं फलं न भवितुमर्हतीति न जानन्ति । **नित्यसिद्धं त्वसाध्यम्**—यन्नित्यमेव सिद्धं, तन्न साध्यं भवितुमर्हति ; सिद्धसाध्ययोस्तादात्म्यायोगात् ।

ननु त्वत्पक्षे कथमभिनिष्पत्तिर्वक्तुं शक्यत इति चेत्तत्राह—**सिद्धमित्यादि** । **सिद्धमपि साध्यानुवेधात् फलं भवति**—लोके स्वरूपतः सिद्धमपि साध्यभूत-

विशेषणानुवेधात् साध्यभावमापद्यते । यथा स्पर्शविशेषादशुद्धः स्नानादिसाध्यशुद्धि-रूपविशेषयुक्तस्वरूपेण साध्य इत्युच्यते, एवं कर्मभिः अशुद्धो जीवः कर्मसम्बन्धविनि-र्मुक्तरूपेण साध्यत इत्यादिवचने न कोऽपि विरोधः । **सा तु अविद्यादिभङ्गः**—भिनिष्पत्तिविवक्षया सेति स्त्रीलिङ्गनिर्देशः । अभिनिष्पत्तिस्तु अविद्याकर्मवासना-रुच्यादिध्वंसात्मिकैव । अतोऽविद्यादिनिवृत्तिरूपसाध्यानुविद्धतया स्वरूपस्याप्यभिनि-ष्पत्तिशब्दवाच्यत्वात् साध्यत्वं युक्तमिति भावः ।

**यद्वा सिद्धस्य वित्तिः**—पक्षान्तरे, सिद्धस्यापि स्वरूपस्य वित्तिर्निश्चय एवा-भिनिष्पत्तिः । युक्त्या अयमर्थोऽभिनिष्पन्न इत्यादिप्रयोगात् । अतो देहादिविविक्त-ज्ञानानन्दस्वरूपगुणकस्वात्मसाक्षात्कार एव अभिनिष्पत्तिरित्युच्यते इति । **तत्**—तस्मात् कारणात् **इह**—अस्मत्पक्षे, **मुक्त इत्यादिसूत्रं न विहतम्**—'मुक्तः प्रतिज्ञानात्' इत्यादिसूत्रं न वैयर्थ्यमापादितम् ; किन्तु सार्थकमेव ।

अयं भावः—सिद्धान्ते जीवस्य सगुणत्वात् तद्गुणे सङ्कोचविकाससद्भावात् अत्रपुनः विकासस्य आगन्तुकत्वात् अभिनिष्पत्तिशब्दवाच्यत्वं सङ्कोचनिवृत्तेर्मुक्तशब्द-वाच्यत्वञ्च घटते । युष्मत्पक्षे निर्गुणस्य आत्मनः नित्यस्वयंप्रकाशत्वादपूर्वाकारप्राप्त्य-भावेन पूर्वं मुक्तः पश्चान्मुक्त इति वचनमवचनमेव स्यात्, अविद्यानिवृत्तिरपूर्वा विद्यत इति चेत्, सा किं ब्रह्मस्वरूपम् ? उतातिरिक्ता ? प्रथमे अपूर्वाकारत्वं फलत्वञ्च न स्यात्, अतिरिक्तत्वे पारमार्थ्ये तन्मूलाविद्यावत्त्वेन मुक्तिरेव न स्यादित्येवमादिदोषकलुषितत्वात् सूत्राननुरूपत्वाच्चाविद्यैव गतिः-इति । (प. यो.)

अत एव ज्ञानानन्दादिगुणानां कर्मणां आत्मनि सङ्कुचितानां परं ज्योतिरुपसम्पद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न इति भाषितम् । अयमत्राभिसन्धिः—स्वरूपस्य नित्यसिद्धत्वेऽपि कर्मरूपाविद्यानिवृत्तेः साध्यतया तद्विशिष्टवेषेण स्वरूपस्यापि साध्यत्वं सूपपादम् । किञ्च ज्ञानविकासस्य भावरूपस्यापि आविर्भावेण स्वरूपाविर्भावः समीचीन एवेति । परन्तु अत्र ज्ञानविकासस्य आगन्तुकतया आविर्भाववचनं कथमिति

न शङ्कनीयम्, निवृत्तोपाधिकस्य ज्ञानस्य स्वरूपप्रयुक्तत्वात् विकासस्य तथोक्तिः उपपद्यते । सर्ववस्तु संयोगित्वे स्वरूपयोग्यता अवर्ततेति भावः ॥

**आत्मनां स्वस्मिन् नियमनम्**—जीवस्य परमात्मशेषताप्रतिपत्तिः ।

'यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेद्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेत् शान्त आत्मनि' ॥ (क.उ. 3–13)

ऊर्मिषट्कप्रतिभटे शान्ते आत्मनि महतो आत्मनः जीवस्य नित्यमनं नाम तच्छेषताप्रतिपत्तिः ॥ (रं. भा.)

**आत्मनाम्नोर्ग्रहणनिषेधः**—स्वनाम्नः साक्षादुच्चारणं निषिद्धम् ।

'आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृण्हीयाज्ज्येष्ठापत्यकलत्रयोः' ॥

इति स्मृत्युक्तरीत्या स्वनाम्नः कलत्रादिनाम्नश्च साक्षात् कथनं शास्त्रनिषिद्धम् । स्मृतौ 'न गृण्हीयात्' इत्यस्य 'नोच्चारयेत्' इत्यर्थकत्वेन उच्चारणमन्तरापि लिखितुं शक्यत्वेन लेखने प्रत्यवायाभावः । अत एव सर्वोऽपि व्यवहारकाण्डः सङ्गच्छते ।

यद्वा—तस्य निषेधस्य वैखरीवाक् विषयः । ननु वैखरीविषयेऽपि 'रामो द्विर्नाभिभाषते' इत्यादिप्रयोगाणां का गतिः ? इति चेत्, 'मनुरब्रवीत्', 'शातातपोऽब्रवीत्' इत्यादिप्रयोगाणां दर्शनेन प्रतिपादयितुमिष्यमाणस्यार्थस्य यत्र प्रतिज्ञा ग्रन्थकारैः क्रियते, तत्र नामसङ्कीर्तनेऽपि दोषाभावकल्पनात्, अस्मदर्थ–नामार्थयोः यत्र साक्षादभेद-सम्बन्धेन अन्वयः ; यथा–'मनुरहं ब्रवीमि' इति तत्रैव तन्निषेधविषयकत्वस्य कल्पनाद्वा प्रकृते नामोच्चारणे दोषाभावः ।

कैश्चित्तु–कूपखानकन्यायेन स्वनामोच्चारणजः प्रत्यवायो नङ्क्ष्यति इति समाहितम् । तन्न, नान्तरीयकपापनाशस्यैव तन्न्यायविषयत्वात् । आत्मनामोच्चारणस्य ग्रन्थकरणनान्तरीयकत्वाभावात् । शास्त्रविहितसङ्कल्पादौ साक्षादुच्चारणं कर्तव्यमेव ।

साक्षादुच्चारणस्य विहितत्वात् पूर्वोक्तनिषेधः विहितव्यतिरिक्तविषय एव । विस्तरस्तु धर्मशास्त्रग्रन्थे ॥

**आत्मनामनादित्वम्**—जीवस्वरूपाणां स्वरूपतः अनादित्वम् ।

[ न विद्यते आदिः येषाम् , इत्यनेन इदम्प्रथमता शून्यत्वमिति यावत् ।]

प्राक्सृष्टेः क्षेत्रज्ञा नाम न सन्ति । 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्', 'इदं वा अग्रे नैव किञ्चनासीत्', इत्यादिषु कारणावस्थायां ब्रह्म एकमेव निरवयवमासीत् इत्युक्तम् । अतः कारणावस्थायाम् अवयवतोऽपि चिदचिद्विभागाभावसिद्धेः क्षेत्रज्ञा नाम न सन्ति इति चेत् , अत्राह—आत्मानः अनादयः, सर्वकालेऽपि स्वरूपतः तेषां सद्भावात् । अन्यथा अकृताभ्यागमकृतविप्रणाशप्रसङ्गः । एकत्वश्रुतिस्तु 'तद्धेदं तर्हि अव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति श्रुत्यनुरोधेन नामरूपविभागाभावाभिप्रायेणैवोपपद्यते । उपलभ्यते च तेषामनादित्वम्—' न जायते म्रियते वा विपश्चित् ' इति । सृष्टिप्रवाहानादित्वं च –' सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ' इत्यादिना । (श्री. भा. 2-1-35)

स्वरूपानादित्वे सत्यपि सृष्टिप्रवाहानादित्वे सति हि कर्मप्रवाहानादित्वसिद्धिः । प्रतिकल्पमधीतस्य अस्य वाक्यस्यार्थवत्वात् सृष्टेः अनादित्वसिद्धिः । (श्रु. प्र.)

एतेन जीवस्वरूपस्य तु स्वरूपतः अनादित्वं सिद्धम् ।

अत एव हि गीयते-( 13-19 )

' प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् '॥ इति ॥

प्रकृतिपुरुषौ उभावन्योन्यसंसृष्टावनादी इति विद्धि । (गी. भा.)

' उभावनादि ' इत्यत्र 'प्रकृतिं पुरुषञ्च ' इति इतरेतरयोगपर चकारेण लब्धं

विशेषं दर्शयति—**प्रकृतिपुरुषावुभावन्योन्यसंसृष्टाविति** । तदपेक्षया द्विवचनान्त-प्रयोगः उपपन्नः । (ता. चं.)

तत्र सप्तमे अध्याये ईश्वरस्य द्वे प्रकृती उपन्यस्ते—परापरे क्षेत्रक्षेत्रज्ञलक्षणे ; 'एतद्योनीनि भूतानि' इति चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामिति ? अयमर्थः अधुनोच्यते—प्रकृतिं पुरुषञ्चैव ईश्वरस्य प्रकृती, तौ प्रकृतिपुरुषौ उभावपि अनादी विद्धि । न विद्यते आदिः ययोः, तौ अनादी । नित्यत्वात् ईश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिपुरुषद्वयवत्त्वमेव हि ईश्वरस्य ईश्वरत्वम्, याभ्यां प्रकृतिभ्यामीश्वरः जगदुत्पत्तिस्थितिप्रलयहेतुः ; ते अनादी सत्यौ संसारस्य कारणम् ।

'न आदी अनादी' इति तत्पुरुषसमासं केचित् वर्णयन्ति । तेन किल ईश्वरस्य कारणत्वं सिद्ध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्याताम्, तत्कृतमेव जगत् ; न ईश्वरस्य जगतः कर्तृत्वम् इति ।

तदसत् ; प्राक् प्रकृतिपुरुषयोः उत्पत्तेः ईशितव्याभावात् ईश्वरस्यानीश्वरत्व-प्रसङ्गात् । संसारस्य निर्निमित्तत्वे अनिर्मोक्षप्रसङ्गात् । शास्त्रानर्थक्यप्रसङ्गात्, बन्धमोक्षा-भावप्रसङ्गाच्च । नित्यत्वे पुनः ईश्वरप्रकृत्योः सर्वमेतत् उपपन्नं भवेत् । कथम् ? **विकारांश्च**—बुद्ध्यादिदेहपर्यन्तान्, **गुणांश्च**—सुख-दुःखमोहप्रत्ययाकारपरिणतान् वक्ष्यमाणान्, **विद्धि**—जानीहि । **प्रकृतिसम्भवान्**—प्रकृतिः ईश्वरस्य विकारकारण-शक्तिः त्रिगुणात्मिका माया ; सा सम्भवो येषां विकाराणां गुणानाञ्च तान् विकारान् गुणांश्च जानीहि, प्रकृतिसम्भवान् प्रकृतिपरिणतान् । (शं. भा.)

अपरा—न परा, निकृष्टा अशुद्धा अनर्थकरी, संसारबन्धनात्मिका इयम् । इतः अस्याः यथोक्तायाः तु अन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो, यथा प्रकृत्या इदं धार्यते जगत् अन्तःप्रविष्टया । (शं.भा. 7-5)

तथा च पुरुषस्य स्वात्मरूपत्वेन स्वाभिन्नतया अनादित्वं स्थापितम् ; न तु स्वभावतः इति बोध्यम् ॥

आत्मनामनित्यत्वेबाधकानि

> स्थैर्यं चेन्नाभ्युपेतं भवभृति न भवेदैहिकार्थप्रवृत्तिः
> देहान्तत्वे तु धर्म्ये पथि निरुपधिका विश्ववृत्तिर्न सिध्येत् ।
> आकल्पस्थायिपक्षे कृतमफलतया मुक्तिमार्गोपदेशैः
> आमोक्षस्थापितायां श्रुतिरनभिमुखी पूरुषार्थे चतुर्थे ॥ (त.मु. 87)

आत्मानित्यत्ववादिनश्चतुर्विधाः । तेषु ज्ञानात्मवादिनः शरीरस्थितावप्यात्मनो भिदुरत्वमाहुः । प्राणेन्द्रियात्मवादिनः आत्मानमाशरीरस्थायिनम् । पौराणिकैक. देशिनस्तु प्रलयान्तम् । औपनिषदाभासास्तु मोक्षावधिकम् । एतेषु दूषणवर्गः किञ्चिदुद्ग्रहणेन उपलक्ष्यते—**स्थैर्यमिति** । तत्र स्थैर्यं चेन्नाभ्युपेतमित्याशुतर-विनाशित्वानुवादः । बाधकमाह—**न भवेदिति** । आत्मानमुत्तरकालानवस्थायिनं मन्यमानो न किञ्चिदुद्दिश्य प्रवर्तेत । तत्खल्वायत्या सुखं दुःखनिवृत्तिं वाऽभिसन्धाय । तत्कथं घटेत ? फलकाले स्वाभावात्, स्वकाले फलाभावात् । सन्तानैक्यादिकुसृत-यस्तु प्रागेव निरस्ताः ।

द्वितीयपक्षे दूषणं **देहान्तत्व** इति । यदि देहावधिरात्मा, तदा देहात्मवाद इव प्रेक्षावतो महाजनस्य धर्मादनपेते मार्गेऽनादिस्सार्वत्रिकी दृष्टफलाद्युपाधिरहिता प्रवृत्तिर्न घटेत ; तदाहुः—

> ‘विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि च ।
> दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः’ ॥ इति ॥

तृतीयं दूषयति—**आकल्पेति** । अयं भावः—यदि सर्वदुःखनिवृत्तियुक्त आत्मनाश एव मोक्षः, स तर्हि वः कल्पान्ते स्वयमेवैष्यति । न चासौ पूर्वं साध्यः । त्वरया मध्ये स्वनाशार्थमुपायग्रह इति चेन्न ; स्वनाशस्य सर्वप्रमाणैरपि पुमर्थत्वासिद्धेः ।

एवं च भाषितम्—

‘अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।

अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः’ ॥ इति ।

चतुर्थे बाधकमाह—**आमोक्षेति** । अनभिमुखीति—स्वनाशरूपं चतुर्थपुरुषार्थं न वक्ति । स्वेन रूपेण अभिनिष्पन्नस्य भोगादीनप्याह । ननु ‘विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति’ इति जीवविनाशः श्रूयते, मैवम्; लोकधीरूढानुवादमात्रत्वात्, अदर्शनमात्रपरत्वाद्वा । स्मर्यते च ‘अदर्शनादिहायातः पुनश्चादर्शनं गतः’ इति । अन्यथा कथम् ‘अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मा’ इति तन्नित्यत्वसाधनम् ।

ननु ‘न प्रेत्य संज्ञास्ति’ इति मुक्तस्य निस्संबोधत्वश्रुत्या नाशः सिध्येत्; न; देहादिभिः एकीकृत्य बुद्धेः तन्निबन्धनाख्याभेदस्य वा निवृत्तौ तात्पर्यात् । ब्रह्मण्यात्यन्तिकलयः कथम्? अनात्यन्तिकवत्, स्वविशिष्टे ब्रह्मणि औपाधिकरूपेण विशेषत्यागेन श्लेषस्य विवक्षितत्वात् । अन्यथा मुक्तिदशायां भेदोक्तिभिर्विरोधात् । ‘यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय’ इति निदर्शनात् मुक्तोऽप्यस्तमेष्यतीति चेन्न, प्रविष्टजलस्य स्वरूपनाशाभावात्; अन्यथा पयःप्रस्थद्वयसंभेदे प्रस्थशेषत्वप्रसङ्गात्, ‘यथोदकम्’ इत्यारभ्य, ‘तादृगेव भवति’ इति श्रुत्यन्तरविरोधाच्च । घटध्वंसे घटाकाशोऽपि न नश्यत्येव; घटसंयोगनाशात् नश्यति इत्युपचरन्ति ।

मुक्तिदशायां भेदनिवृत्तिवादाश्च कर्मकृतवैषम्यनिवृत्तिपराः । साधर्म्यवादिभिरप्येतदेव व्यवस्थाप्यते । ‘ब्रह्मैव भवति’, इत्यवधारणात् । जीवनिवृत्तिः गम्यत इति चेन्न; अत्यन्तसाम्ये तात्पर्यात् । यथा—‘वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वा इमान् लोकानभिजयति’ इति, तदेतत् ‘नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः’ इति सूत्राभिप्रेतम् । (स. सि.)

**आत्मनामहमिति नामकथनम्**—जीवानाम् अहमित्येवाग्रे उक्त्वा स्वनामकीर्तनस्य उपपादनम्।

'आत्मैवेदमग्र आसीत् पुरुषविधः। सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्। सोऽहमस्मीत्यग्रे व्याहरत्। ततोऽहन्नामाभवत्। तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति' (बृ.उ.3-4-1)।

**सः**—पुरुषः, **अनुवीक्ष्य**—अन्वीक्ष्य साक्षात्कुर्वन् आत्मनोऽन्यं विभक्तं नापश्यत्। सृष्टेः प्राक् 'तमः परे देव एकी भवति' इत्युक्तरीत्या अयः पीताम्बुवत् चिदचित्प्रपञ्चस्य परमात्मनोऽविभक्तत्वादिति भावः। **सोहमस्मीत्यग्रे....भवत्**। अहमिति हिरण्यगर्भनाम। अहमभिमानाश्रयव्यष्टिपुरुषाणां प्रथमजत्वात् हिरण्यगर्भस्य। उक्तश्च मोक्षधर्मे भृगुभारद्वाजसंवादे-

'तस्मात् पश्चात् समभवत् ब्रह्मा वेदमयो निधिः।
अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत्' ॥ इति।

तस्मादयमर्थः **अहमस्मि**—अहङ्कारः स्याम्, चतुर्मुखः स्यामिति सङ्कल्पवाक्यम्, **अग्रे**—ब्रह्मसृष्टिपूर्वकाले व्याजहार। ततः **अहन्नामा**—चतुर्मुखोऽभवदिति। **तस्मादप्येतर्ह्या........यदस्य भवति**। यस्माद्धेतोः भगवता प्रथमतः चतुर्मुखे अहंशब्दः प्रयुक्तः, तस्माद्धेतोः **एतर्ह्यपि** अस्मिन्नपि काले केनचित् पुंसा आमन्त्रितोऽयं जनः अहमित्येवाग्रे उक्त्वा **अथ**—पश्चात् अस्य यत् पित्रादिकृतं नाम भवति तद्वदितीत्यर्थः॥ (रं.भा.)

**आत्मनामीश्वरस्य च शेषशेषिभावः**—जीवनिष्ठं परमात्मशेषत्वम् (स्वाभाविकम्)।

['पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादि श्रुतिभ्यः शेषशेषिभावः प्रतीयते। तं प्रदर्शयति व्यासार्याः।]

**गुणेशः**—गुणानां सत्वरजस्तमसां नियन्ता। अनन्येश्वरत्वं दर्शयति—**पतिमिति**। अनेन शेषशेषित्वलक्षणभेदोऽपि सिद्धः।

न च–' पा-रक्षणे ' इति धातोर्व्युत्पन्नत्वात् पतिशब्दो रक्षकवाची, न शेषित्व-वाचीति वाच्यम्; शेषिणि रूढत्वात्। अन्यथा 'गमेर्डो: ' इति डोप्रत्ययान्त-गमिधातोर्निष्पन्नत्वात् गोशब्दस्य मनुष्यादिवाचकत्वप्रसङ्गः। गतिमत्सु सर्वेषु प्रयोगा-भावात्, तिष्ठत्यपि गवि प्रयोगात् तत्र रूढिशक्त्याश्रय इति चेत्, एवम्—

' वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः।
अप्यकार्यशतं कृत्वा कर्तव्या मनुरब्रवीत् ' ॥

इति न्यायेन पितृसंरक्षके पुत्रे पित्राद्यपेक्षया पतिशब्दप्रयोगाभावात् गृहाद्यरक्षकेऽपि स्वामिनि पतिशब्दप्रयोगाच्च शेषिणि पतिशब्दो रूढः। तथा,

'दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मनः', तथा,

' नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः।
नन्तृ-नन्तव्यभावोऽयं न प्रयोजनपूर्वकः ' ॥

इति दास-शेष-शेषिपदप्रयोगो भगवच्छास्त्रेषु दृश्यते।

पत्यादिशब्दाभावेऽपि, 'व्रीहीन् प्रोक्षति ' इत्यादौ द्वितीया श्रुत्या प्रोक्षणादेः व्रीह्यादिशेषत्ववत्, 'यस्यात्मा शरीरम् ' इत्यादिना जगतः परमात्मशरीरत्वावगमात् शरीरपारार्थ्यस्य च ' सङ्घातपरार्थत्वात् ' इत्यादिभिः प्रसिद्धत्वाच्च जगद्ब्रह्मणोः शेष-शेषिभावः सिद्धः। (श्रु.प्र. I-2-74)

परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपं, सः शेषः, अन्यः शेषीति च अभाषिष्ट भगवान् भाष्यकारः॥

**आत्मनामैक्यम्**—जीवात्मनां ज्ञानानन्दस्वरूपेण प्रकारैक्यं न तु स्वरूपतः।

' तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः' ॥ (वि.पु. 2-14-31)

[ ज्ञानाकाराणामात्मनामैक्योक्तिं दर्शयति—**तस्येति**।]

'तस्यात्मपरदेहेषु सतोऽप्येकमयम्' इत्यत्र, सर्वेषु आत्मसु ज्ञानैकाकारतया समानेषु सत्सु, देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते। पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते। देवमनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः। यथोक्तं भगवता—'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः,' 'निर्दोषं हि समं ब्रह्म' इत्यादिषु। 'तस्यात्मपरदेहेषु सतोऽपि' इति देहातिरिक्ते वस्तुनि स्व-परविभागस्य उक्तत्वात्। 'यद्यन्योऽपि परः कोऽपि' इत्यत्रापि नात्मैक्यं प्रतीयते। 'यदि मत्तः परः कोऽपि' इति एकस्मिन्नर्थे परशब्द-अन्यशब्दयोः प्रयोगायोगात्। तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः, अन्यशब्दः तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः।

एतदुक्तं भवति—यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारोऽस्ति, तदा 'अहमेवमाकारः अयं च अन्यादृशाकारः' इति शक्यते व्यपदेष्टुम्। न चैवमस्ति, सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेव—इति। (श्री.भा. I–240)

**एकमयम्**—इत्यत्र मयट् स्वार्थिकः। यद्वा **एक**शब्दो भावप्रधानः, ऐक्यम्; तत्प्रचुरमेकमयम्। शुद्धावस्थात्मनो हि ऐक्यप्राचुर्यम्, न तु संसृष्टस्य; तस्य बुद्धिसुखदुःखाद्यान्तरभेदेन देवत्वादिबाह्यभेदेन च ऐक्यप्राचुर्याभावात्। **एक**शब्दः समानवाची; 'एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते प्रजाः' इत्यादिषु तथा प्रयोगदर्शनात्। **देवमनुष्यादिप्रकृतिपरिणामविशेषरूपेत्यनेन**—

'दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः'।,

'पुमान्न देवो न नरो न पशुर्न च पादपः।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः'॥

इति वचनयोः ऐकार्थ्यं दर्शितम्।

'पिण्डः पृथग्यतः पुंसः शिरः पाण्यदिलक्षणः' इति प्राकरणिकवचनं स्मारयति **पिण्ड**शब्दः। एकमयमित्यात्मन्येकत्वं विधाय भेदे निषिध्यमाने आत्मस्वरूपभेद एव निषेध्यः स्यादिति चेत्, स्यादेवम्; यदि विधीयमानमेकत्वं व्यक्त्यैक्यं स्यात्। तत्तु प्रकारैक्यम्। अतः भेदनिषेधो वैजात्यनिषेध एवेति भावः।

'द्वैतिनोऽतथ्यदर्शिनः' इति सामान्येनोक्ते कथं देवादिद्वैतनिषेध इत्युच्यते, इति चेत्; कथं सामान्येन द्वैतनिषेधे प्रतीते आत्मद्वैतनिषेध इत्युच्यते; न पिण्डात्मनोर्भेद-निषेधः। पिण्डात्मनोर्भेदस्य प्रामाणिकत्वादिति चेत्, आत्मभेदस्यापि प्रामाणिकत्वान्न तद्भेदनिषेधः; अपि तु देवादिभेदनिषेध इति भावः। आत्मगतद्वैतमप्रतिषिद्धं चेत्, 'आत्मा शुद्धोऽक्षरः शान्तः', 'विज्ञानं यज्ञं तनुते' इत्येकवचनं नोपपद्यते; जातावेकवचनं चेत्, देहशब्देप्येकवचनं स्यादिति शङ्का च **देवमनुष्यादि** पदेन परिहृता। देवादिष्ववान्तरभेदविवक्षया **विविध**शब्दः। तत्राप्यनेकविधत्वविवक्षया **विचित्र**शब्दः। आत्मसु जात्येकत्वादेकवचनम्, पिण्डेषु अवान्तरजातिबहुत्वाद्बहु-वचनमित्यभिप्रायः।

साम्ये प्रमाणमाह—**यथोक्तमिति**। बहुत्वस्य विहितत्वात् साम्यप्रतिपादनाच्च आत्मव्यक्तिभेदनिषेधोऽनुपपन्न इत्यर्थः। हेत्वन्तरं चाह—**तस्येति**। अन्यथार्थश्चेत्, ऐतत् श्लोकस्थपदानां व्याघातः स्यादित्यर्थः। (श्रु.प्र)

श्रीभाष्यादिप्रबन्धेषु बहुषु प्रदेशेषु जीवाद्वैतवादस्य प्रकाराद्वैतपरत्वेन व्यवस्थाप-नात् ज्ञानैकाकारतया सर्वेषामात्मनामैक्यं साम्यमिति च विशिष्टाद्वैतसिद्धान्तः। एषोऽप्यपूर्वाधिकरणे—'चैतन्यात्मकत्वाद्यविभागाच्च उपनिषत्सु ऐकात्म्यव्यवहारः' इति स्पष्टं निरूपितम्।

एषोऽर्थः अनतिविशद इत्यभिसन्धाय शास्त्रदीपिकायां विस्तरेणोपपादितः। यथा—सम्बन्धाक्षेपपरिहारे ऐकात्म्यवादास्तर्हि औपनिषदाः कथम्? अवैलक्षण्येनेति ब्रूमः। भेदशब्दो हि वैलक्षण्यवचनो लोके प्रसिद्धः। यथा हि सुसदृशेषु वक्तारो भवन्ति

नास्यास्य च कश्चिद्भेदोऽस्तीति । तथाऽऽत्मनामपि नरपशुतिर्यग्भेदशरीरवर्तिनां शरीर-सम्बन्धमपोह्य केवलं नैजरूपेण निरूप्यमाणानां पञ्चरजः परमाणुद्वयवत् न- किञ्चिदपि वैलक्षण्यमस्तीत्यनेनाभिप्रायेणैकत्ववादाः नानात्वनिषेधवादाश्च । एतदभिप्रायमेव चैतदपि भगवद्वासुदेववचनम्–

' विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' ॥ इति ।

तथैव, ' इन्द्रो मायाभिः पुरुरूप ईयते ' इति । स्वयमविलक्षणोऽप्यात्मा नरपश्वादि-विचित्रशरीरसम्पर्कवशात् भ्रान्त्या स्वयमपि विलक्षणरूपः प्रतीयते इत्यर्थः । (द उ. 165)

अनेन सर्वेषां जीवानां स्वतः भिन्नानामपि ज्ञानरूपत्वेन ऐक्यमुक्तम् ; न तु स्वरूपैक्यम् । अनेन प्रकाराद्वैतम् उक्तम् ' उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ' इत्यादिना जीव परमात्मनोः अत्यन्तभेदकथनेन ऐक्यवादाः सर्वे सादृश्यपरा एवेति सिद्धम् ॥

**आत्मनामविनाभावः**—जीवस्वरूपस्य परमात्मापृथक्सिद्धता ।

[सर्वान्तःप्रविश्य नियन्ता हि आत्मा । तेन विना स्थितिः–विनाभावः, स नास्तीत्यविनाभावः । ' विनञ्भ्यां नानञौ न सह ' (पा सू. 5–2–27) इत्यनेन (असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ भवतः ) सूत्रेण नाप्रत्यये विनेति । पृथक्सिद्धमिति यावत् । तथा नास्तीत्युक्तेः अपृथक्सिद्धिः इत्यर्थः स्वरसः । अनेन ' नेह नानास्ति किञ्चन ' इति श्रुतिरप्युपबृंहिता । अत एव अब्रह्मात्मकं वस्तु किञ्चन नास्तीति भाषितञ्च । तदेतत् गीताचार्यः विशदयति- **यच्चापीति** ]

'यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् '॥ (गी. 10–39)

सर्वभूतानां सर्वावस्थावस्थितानां तत्तदवस्थाबीजभूतं प्रतीयमानमप्रतीयमानं च यत् तदहमेव ; भूतजातं मया आत्मतयावस्थितेन विना यत्स्यात्, न तदस्ति ; ' अहमात्मा गुडाकेश सर्वभूताशयस्थितः ' इति प्रक्रमात्, ' न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ' इत्यत्राप्यात्मतयावस्थानमेव विवक्षितम् । सर्वं वस्तुजातं सर्वावस्थं मया आत्मभूतेन युक्तं स्यादित्यर्थः ॥ (गी. भा.)

'न तदस्ति' इत्यादौ स्वव्यतिरिक्तासत्त्वादिविषिपरत्वभ्रमव्युदासायाविना-भावार्थतोक्तिः। आत्मतयावस्थितेन अविनाभावमुपपादयति—**अहमात्मेति** (ता.चं.)

आत्मना विना हि शरीरभूतं न भवतीत्यविनाभावः। 'अग्निना विना धूमो नास्ति, गुणिना विना गुणो नास्ति' अग्न्यादिरेव परमार्थः, धूमादिस्तु मिथ्याभूत इति वा, इत्युक्ते अग्न्याद्यात्मक इति वा, प्रत्ययो हि न भवति। तद्वदत्रापि।

ननु 'यज्ञदत्तं विनान्ये गृहे न सन्ति', 'रज्जुं विना सर्पादिकं नास्ति' इत्युक्ते, यथा एकस्यैव सत्त्वं ;तदतिरिक्तानां चासत्त्वं प्रतीयते ; तद्वदत्रापि किं न स्यात् ? असञ्जातविरोधिकालसमुदितोपक्रमविरुद्धतया उपसंहारस्य नोदय इत्युपक्रमाधिकरणसिद्धम्। नियाम्यतया इत्यनेन धूमाग्निव्याप्तिवैषम्यमपि दर्शितम्। एवमेतावता ग्रन्थेन 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इति सर्वशरीरवर्तिनां जीवानां ब्रह्मस्वरूपैक्यम् उच्यत इति कुदृष्टिमतमुन्मूलिनम्॥ (ता.चं. 10-21)

**आत्मनाशनम्**—आत्मनाशहेतुः।

[ नाश्यते अनेन इति करणे ल्युट्, आत्मनः नाशनम्। ]

'त्रिविधं नरकस्यैतद् द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्'॥ (गी. 16-21)

अस्यासुरस्वभावरूपस्य नरकस्यैतत् त्रिविधं द्वारम्, तच्चात्मनो नाशनम्; कामः क्रोधो लोभ इति। त्रयाणां स्वरूपं पूर्वमेव व्याख्यातम्। द्वारम्—मार्गो, हेतुरित्यर्थः।

अवश्यपरिहरणीयं संक्षिप्योच्यत इत्यभिप्रायेण अनन्तरग्रन्थं सङ्गमयति—**अस्येति**। यथावस्थितस्य आत्मनोऽप्राप्तिरेव ह्यात्मनाशः; स चासुरस्वभावः एवेत्यभिप्रायेणाह — **आसुरस्वभावस्यात्मनाशस्येति**। मूलच्छेदात्सर्वोऽप्यासुर-स्वभावश्छिन्न एवेत्यभिप्रायेणाह—**मूलहेतुमिति**। **आसुरस्वभावरूपस्य नरकस्येति**। एतस्मादधिकं किमन्यन्नरकमिति भावः। आसुरस्वभावपरिहारार्थं हि तन्मूलोपदेशोऽय-मिति वा ; तमोद्वारैः' इत्यनन्तरैकार्थ्यं वा विवक्षितम्। **आत्मनो नाशनमिति**। 'असन्नेव स भवति' इत्यादिक्रमेणेति भावः। प्रवेशहेतुर्हि द्वारम्, तेनापि

प्राप्तिमात्रहेतुत्वमिह विवक्षितमित्यभिप्रायेणोपचारावलम्बनक्रममाह—**मार्गो हेतुरित्यर्थ** इति । द्वारं नाशनम्, प्रविशन्नेव नश्यतीति भावः । (ता.चं )

नरकशब्देनात्र न लोकान्तरविवक्षा ; किन्तु आत्मनाशस्यैवेति ज्ञापनार्थमेव नाशनमात्मन इत्युक्तमिति ज्ञापनाय भाष्ये तच्चेति प्रयोगः । तच्च नाशनमिति । द्वारत्वं नाशनत्वमेवेत्यर्थः । (टी.)

आत्मस्वरूपस्य नित्यतया तदननुभवनिबन्धन एव नाशव्यवहारप्रयोजक इति भावः ।

**आत्मनिक्षेपः**—आत्मात्मीयभरन्यासः ।

[ भरन्यासः —प्रपत्तिः—न्यासः शरणागतिश्च एतच्छब्दपर्यायः ।]

'सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन् ॥
संसारतन्त्रवाहित्वात् रक्षापेक्षां प्रतीक्षते ।
आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते' ॥ (ल.तं. 17 79, 80)

शरण्यस्य सर्वज्ञत्वात् करुणाकरत्वाच्च स्वयमेवार्तान् रक्षिष्यति इत्याशङ्क्याह—**सर्वज्ञोऽपीति** । संसारतन्त्रवाहित्वं नाम लीलाविभूतिनिर्वहणम् । व्याजानपेक्षरक्षणे सुकृत-दुष्कृत्यसाधारण्येन सर्वरक्षणप्रसक्तौ धर्माधर्मकृत्याकृत्यन्यायान्यायसङ्करप्रसङ्गः । स्वेच्छया कांश्चिदेव रक्षन् अन्यान् न रक्षति चेत् 'समोऽहं सर्वभूतेषु' इति उद्घोषयतस्तस्य वैषम्यनैर्घृण्यप्रसङ्ग इति भावः । (व्या.)

परमपुरुषचरणारविन्दयुगलन्यस्तात्मात्मीयस्य,........। (वे.सं. 227.)

भगवति न्यस्त भरत्वमाह—**परम** इति । (ता. दी.)

उक्तं ह्याचार्यपादैः न्यासविंशतौ (9)—

श्रुतिसिद्धेऽपि प्रपदने सामान्यधर्मभूतसत्यवचनन्यायात् सर्वाधिकारत्वं च न विरुद्धम् 'सर्वस्य शरणं सुहृत्', 'सर्वलोकशरण्याय' इत्यादिष्वेतदभिप्रेतम्— इति ॥

आत्मनिचैवं विचित्राश्च हि—(ब्र. सू. 2-1-28)
(कृत्स्नप्रसक्त्यधिकरणे तृतीयं सूत्रम् ।)

आत्मनि—जीवात्मनि, अचेतनधर्माप्रसक्तिश्च एवम् अचेतनविजातीयत्वादेवेत्यर्थः । विचित्राश्च हि—अचेतनेषु च विसजातीयेषु अग्निजलादिषु विचित्रा हि शक्तयो दृश्यन्ते । एवं परमात्मनः चेतनाचेतनविसजातीयस्य विचित्राः शक्तयः उपपद्यन्ते । हि शब्दो हेतौ प्रसिद्धौ वा ।

निरवयवस्य ब्रह्मणः कृत्स्नपरिणामे ब्रह्माभावप्रसंगः, विशेषणीभूताचिन्मात्र-परिणामे ब्रह्मकारणत्वाभावप्रसंगः इति शङ्का 'श्रुतेस्तु शब्दमूलत्वात्' इति सूत्रेण समाहिता । अनेन तु लोकसामान्यदृष्टिं परिहरति ।

यदि सामान्यदृष्ट्या ब्रह्मणि दोषा आपाद्यन्ते । तदा जीवात्मन्यचिद्धर्माः कुतो नापाद्यन्ते ? लोकेऽपि पदार्थानां विचित्रशक्तिदर्शनात् तद्विलक्षणे जीवात्मनि यदि तदप्रसक्तिः, तदा तद्वदेव परमात्मन्यपि तदप्रसक्तिरङ्गीक्रियताम् । स हि तदुभयविलक्षण इति श्रुतिभिरेवावगम्यते । हीति प्रसिद्धवन्निर्देशात् लोकप्रसिद्धमग्निजलादेर्विलक्षण-शक्तिमत्त्वमनालोचयत इयमाशङ्केति गम्यते । हेतौ वा हि शब्दः । विचित्रशक्ति-त्वादेव हि जीवात्मनि तदप्रसक्तिरुपपाद्या । तत्परमात्मन्यपि समानमिति ।

लोकप्रमाणसिद्धानामग्निजलादीनामन्योन्यविलक्षणौष्ण्यशैत्यलक्षणस्वभावयोगवत् स्वेतरसमस्तवस्तुविसजातीयस्य ब्रह्मणोऽपि सकलेतरविलक्षणशक्तियोगस्य सम्भवाच्च । तत एव कृत्स्नैकदेशविकल्पोऽपि न कल्पते । 'तत्सर्वं व्याप्य नारायणः स्थितः', 'तेनेदं पूर्णम्' इत्यादिप्रत्येकपर्याप्तवृत्तिप्रतिपादकश्रुतेः कुतर्केणानिवार्यत्वात् । वैशेषिकमते घटत्वादेरनेकेषु घटेषु प्रत्येकपर्याप्तवृत्तेः, एकस्यैव घटद्रव्यस्य स्वावयवानेक-कपालेषु पर्याप्तवृत्तेश्चाभ्युपगमाच्च । चेतनानां कृमिकदेवादिशरीरप्रतिसम्बन्धित्वस्य तत्तच्छरीरभोग्यफलप्रदकर्मस्वभावमूलत्वेऽपि सौभर्यादेरिव भगवतोऽपि युगपदनेकशरीर-प्रतिसम्बन्धित्वोपपत्तेः चेतनानां युगपद्विजातीयस्थूलसूक्ष्मशरीरप्रतिसम्बन्धित्ववत्

भगवतोऽपि युगपद्विजातीयचिदचिदात्मकानेकशरीरप्रतिसम्बन्धित्वसम्भवाच्च । तस्माद्वि-चित्रशक्तियुक्तस्य चिदचिच्छरीरस्य ब्रह्मणो जगदुपादानत्वमविचाल्यमिति सिद्धान्तितम् ।

अचिद्धर्माप्रसक्तिश्च जीवात्मनि यथा तथा ।
जलादौ न यथौष्ण्यादिशक्त्यश्च तथा परे ॥ (ब्र.प.मा.)

**आत्मनिन्दा**—स्वनिन्दा । (आत्मदोषकथनम् ।)

'आत्मनिन्दामात्मपूजां च वर्जयेत्' (भा.सभा. 41-15)

'धिगशुचिमविनीतं निर्दयं मामलज्जम्' (स्तो.र. 47)

'अमर्यादः क्षुद्रः चलमतिः असूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधेः
अपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥ (स्तो र. 62)

इति आत्मनिन्दा क्रियते । ईदृशोऽपि शरणागतवत्सलं त्वामाश्रितः क्षत्रबन्धुवृत्रा-दिनयात् न विनश्यतीति गूढोऽभिप्रायः । ननु स्वनिन्दापि निषिद्धा । सत्यम्; न तु सर्वत्र । यथा खलु 'आञ्जनेयादेः स्वप्रशंसा क्वचिद्गुणः, तथा आत्मनिन्दापि-एतस्य स्वदैन्यख्यापनस्थले' इति । (स्तो. भा.)

'अमर्यादः' इत्यादिना अनुसन्धानम् अस्मत् शिक्षणार्थमेव । आत्मावसाद-हेतुभूतात्मनिन्दा वर्जनीया । स्वगर्वापनोदनफला तु उपादेया ॥

**आत्मनिवेदनम्**—स्वात्मसमर्पणम् ।

'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्'॥ (भाग. 7-5-23,24)

अहं मदीयक्षेत्रपुत्रकलत्रादिकं सर्वं :परमात्मशेषभूतम् । नात्र विषये मम

स्वामित्वं विद्यते इति परमात्मनि अत्यन्तपारतन्त्र्यविशिष्टशेषत्वानुसन्धानपूर्वक-स्वात्मसमर्पणम् ॥ (सं.अ.)

(अधिकमात्मसमर्पणपदे ।)

**आत्मनोऽन्तरः**—अचिद्विियुक्तजीवान्तर्यामी परमात्मा ।

'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरम्, य आत्मानमन्तरो यमयति, स त आत्मा अन्तर्याम्यमृतः'। (बृ.उ.मा.पा. 5-7-22)

'आत्मनि तिष्ठन् इत्युक्ते 'वेद्यामग्निस्तिष्ठति,' 'तिले तैलं तिष्ठति' इतिवत् बहिरबहिः स्थितिसाधारण्यात् तद्वैशद्यार्थमाह—**आत्मनोऽन्तर** इति । 'अन्तरो यमयति' इत्यनेन शरीरलक्षणमुक्तम् । तस्मात् तन्नियाम्यं तच्छरीरमित्यर्थः ।

न च 'शिलापुत्रकस्य शरीरम्' इतिवदयं निर्देशः ; अपवादकाभावे व्यतिरेकनिर्देश-स्वारस्यभङ्गायोगात् । 'यस्य पृथिवी शरीरम्' इति व्यतिरेकनिर्देशस्वारस्यभङ्गा-भावस्य प्रकरणसिद्धत्वात् तदपवादाभावे तत्राप्यौपचारिकत्वाश्रयणायोगात् । अधिकर-णाधिकर्तव्यभाव-व्याप्यव्यापकभाव-अज्ञप्राज्ञभाव-नियाम्यनियन्तृभावरूपविरुद्धधर्मैः स्वार-स्यभङ्गस्यात्यर्थमपोदितत्वाच्च । **य आत्मनीति** । पर्यायेण परिशुद्धात्मनो भगवच्छ-रीरत्वमुच्यते ; नक्षत्रचन्द्रादित्यादीनामचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात् ; 'यः सर्वेषु भूतेषु तिष्ठन्' इत्यनुक्तानामपि संसृष्टजीवानां परमात्मशरीर-त्वस्य पृथगुक्तत्वाच्च ।

न च भूतशब्दः पृथिव्याद्यचिन्मात्रपरः, 'यस्य पृथिवी शरीरम्' इत्यादिना पृथिव्यादिभूतानां पृथगुक्तत्वात् । कारणावस्थमपि भगवतः शरीरम्, शरीरी च नारायणाख्यो देवताविशेषः ॥ (श्र.प्र. I-2-59,60)

वेद्या उपरि स्थितिरग्नेः ; तैलं तु तिलेऽन्यथा । बहिः—अभावदेशावच्छेदेन । अबहिः—तद्भिन्नदेशरूपभावदेशावच्छेदेन । 'अन्तर्बहिश्च तत् सर्वम्' इति श्रुतिवत् उभयस्य विवक्षितत्वान्नान्यतरवाक्यवैयर्थ्यम् । अन्यथा नोभयलाभवैशद्यमित्येकः पक्षः ।

पक्षान्तरं तु शरीरात्मभावं प्रति बहिः स्थितेः प्रयोजकत्वाभावात् 'तिष्ठन्' इति अबहिरित्यर्थविवक्षेति ज्ञापनाय 'अन्तर' इति वाक्यमिति । यं न वेदेत्यंशवत् शरीरात्मभावं प्रत्यनुपयुक्तमपि तत्त्वं कथ्यत इति प्रथमपक्षाशयः । (टी.)

आत्मनि तिष्ठन् तदन्तर्गतश्चेत्यादिना अन्तः प्रविश्य नियन्तृत्वरूपशरीरित्वं परमात्मनः प्रत्यपादि ॥

**आत्मन्यासः**—आत्मत्यागः ।

'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इत्यत्र 'त्यागेनैकेऽमृतत्वमानशुः' इति श्रुतिविवक्षितात्मत्याग एव न्यास इति मुक्तिहेतुन्यासनिरूपणान्तरं 'तेषां तु तपसां न्यासमतिरिक्तं तपश्रुतम्' इत्यहिर्बुध्न्यसंहितोक्तिः युक्तैवेति सिद्धम् । एतदनन्तरम्—

'समित्साधनकादीनां यज्ञानां न्यासमात्मनः ।
नमसा योऽकरोद्देवे स स्वध्वर इतीरितः' ॥

इत्युक्तम् । अत्र 'यस्समिधा य आहुती यो वेधेन ददाश, मर्तोऽग्नये यो नमसास्वध्वरः' इति ऋग्वेद (8-19-5) श्रुतिः मूलम् ॥ (गू.सं. 13)

**आत्मन्वी**—शरीरी (परमात्मा) ।

[आत्मन् शब्दात् 'तदस्त्यास्त्यस्मिन्' इत्यर्थे विनिप्रत्ययः छान्दसः । आत्मशब्दश्च—शरीरपरः ]

'नैवेह किञ्चनाग्र आसीत् । मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्युः । तन्मनोऽकुरुत आत्मन्वी स्यामिति' (बृ. उ. 3-2-1)

सः मृत्युः तमश्शरीरकः परमात्मा । अहम् **आत्मन्वी**—शरीरी, चेतनाचेतनप्रपञ्चशरीरकः, स्यामिति—सङ्कल्पं मनः कृतवानित्यर्थः ॥ (रं.भा.)

**आत्मपूजा**—स्वप्रशंसा । (आत्महत्या तुल्या) ।

'आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम्' ॥ (भा.सभा. 41-15)

ननु स्वप्रशंसापि निषिद्धा । सत्यं, न तु सर्वत्र । यथा खलु आञ्जनेयादेः स्वप्रशंसा क्वचिद्गुणः । तथा आत्मनिन्दापि क्वचित् स्वदैन्यख्यापनस्थले इति ।

(स्तो.भा. 47)

[तथात्मपूजापि क्वचित् दोषपरिहारार्थकर्तव्या एव, तद्यथा—अभिमन्युवधानन्तरं युधिष्ठिरार्जुनसंवादे युधिष्ठिरः अर्जुनं प्रति चुक्रोध–]

त्वष्ट्रा कृतं वाहमकूजनाक्षं
शुभं समास्थाय कपिध्वजं त्वम् ।
खड्गं गृहीत्वा हेमचित्रं समिद्धं
धनुश्चेदं गाण्डिवं तालमात्रम् ॥
स केशवेनोह्यमानः कथं नु
कर्णाद्भीतो व्यपयातोऽसि पार्थ ॥
धनुश्चैतत् केशवाय प्रदाय ।
यन्ताभविष्यस्त्वं रणे चेद्दुरात्मन् ॥ इत्यादिना ।

[ ततोऽर्जुनः धर्मजवचनं श्रुत्वा—]

न चाभिनन्दामि तवाधिराज्यं
यतस्त्वमक्षेष्वहिताय सक्तः ।
स्वयं कृत्वा पापमनार्यजुष्ट-
मेभिर्युद्धे तर्तुमिच्छस्यरींस्तु ॥
अक्षेषु दोषा बहवो विधर्माः
श्रुतास्त्वया सहदेवोऽब्रवीद्यान् ।
तानैषि संतर्तुमसाधुजुष्टान्
येन स्म सर्वे निरयं प्रपन्नाः ॥
त्वं देविता त्वत्कृते राज्यनाशः
त्वत्सम्भवं व्यसनं नो नरेन्द्र ।

मास्मान्क्रूरैः वाक्प्रतोदैस्तुद त्वं
भूयो राजन् कोपयन्नल्पभाग्यान् ॥ (भा.कर्ण.अ. 48,49)

इत्यादिना तं निनिन्द। ततः कृष्णवचनाच्छान्तः परं खेदमवाप। ततः अकृत्यकरणप्रायश्चित्तार्थमात्महत्यां चिकीर्षत्यर्जुने भगवान् श्रीकृष्णः एतत्प्रायश्चित्ततया 'आत्मस्तुतिं कुरु, सापि स्तुतिः आत्महत्यातुल्या' इत्युपदिदेश। ततोऽर्जुनेनात्मस्तुतिः कृता। अनया स्तुत्या सः निर्दोषी अभूत्। एवञ्च आत्महत्यास्थानापन्नात्मपूजापि प्रायश्चित्तरूपतामभजत्।

**आत्मप्राप्तिः**—स्वस्वरूपमात्रानुभवः (कैवल्यम्)।

(स्वस्वरूपाविर्भावपूर्वकपरमात्मानुभवस्तु मोक्ष इत्युच्यते।)

तापत्रयातुराः स्वस्वरूपं ज्ञानानन्दादिरूपमिति शास्त्रेण ज्ञात्वा योगाभ्यासेन परमात्मशरीरतया स्थितमात्मस्वरूपं साक्षात्कुर्वन्ति। ततः 'अहं परमात्मशेषभूतः' इति स्वस्वरूपमेव प्राधान्येनोपासते। ततः परमात्मानुग्रहेणार्चिरादिमार्गेण देशविशेषं गत्वा स्वस्वरूपमात्रानुभवेनैव तृप्यन्ति च। एतादृशस्य तु संसारसम्बन्धवत् भगवदनुभवोऽपि नास्तीति उभयभ्रष्टतैवेति केचित् आचार्या मन्यन्ते। भगवदुपासकास्तु विशेष्यतया भगवन्तमेव ध्यायन्तीति विशेषः। तेषां साक्षान्मोक्ष एव। (सं.अ.)

अन्ये तु कार्याधिकरणे—'परं ब्रह्मोपासीनान् आत्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान् उभयविधान् अर्चिरादिगणो नयति। पञ्चाग्निविदोऽपि अर्चिरादिना गतिश्रवणात्, अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च' इति भाषितत्वात् अर्चिरादिना गतस्य ब्रह्मानुभवाभावे कारणाभावेन प्राणविद्यानिष्ठविषयकमिदं कैवल्यं, तच्च प्रकृतिमण्डले यत्र कोणे वा स्यादित्यभिप्रयन्ति।

यद्यपि आत्मोपासकस्यापि भगवच्छेषत्वज्ञानं शास्त्रतः सिद्धम्, तथापि प्रधानतः स्वस्वरूपमात्रमेव चिन्तितमिति फलतोऽनुमेयम्। अत्र निदानं तु कर्मविशेष एवेति बोध्यम्। परन्तु सर्वैरप्यभिज्ञैः एतादृश कैवल्यं नापेक्ष्यत एवेति तत्त्वम्॥

**आत्मबन्धनः**—आत्मबन्धकः (कर्मविशेषः)।

ज्ञानप्रतिबन्धकः। (वि.को.)

अत्र आत्मशब्दः बुद्धिपरः बन्धनशब्दश्च नन्द्यादित्वात् कर्तरि ल्युप्रत्ययान्त इति भावः। अतः बुद्धेः प्रतिबन्धकतामादायैव जीवात्मबन्धकत्वं सुवचम् ॥

**आत्मबुद्धिप्रकाशः**—स्वविषयकबुद्धिप्रकाशहेतुः परमात्मा।

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तं देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' ॥ (श्वे.उ. 6-18)

'पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः' इति वशीकार्यपरम्पराविश्रान्तिभूमिभूतभगवद्वशीकरणोपायभूतप्रपदनमन्त्रमाह—**यो ब्रह्माणमिति**। यः स्वनाभिपद्मे ब्रह्माणमुत्पाद्य, तस्य वेदप्रदानेन जगत्सर्गशक्तिमाहितवान्, तं स्वविषयबुद्धिप्रकाशहेतुं मुमुक्षुरहं शरणं प्रपद्य इत्यर्थः। आत्मबुद्धेः प्रकाशः यस्मात्, सः आत्मबुद्धिप्रकाशः यस्मात्, सः आत्मबुद्धिप्रकाशः। तद्विषय (परमात्मविषय) बुद्धिस्फुरणस्य तदनुग्रहायत्तत्वात् इत्यर्थः। (रं. भा.)

भक्त्या भगवतः प्राप्यत्वमुक्तम्। प्रपत्त्यापि प्राप्योऽयमिति रहस्योपदेशः क्रियते—**यो ब्रह्माणमिति प्रपदनमन्त्रमिति**। मन्त्ररत्नवत् अस्यापि 'प्रपद्ये' इति उत्तमपुरुषवर्तमानापदेशघटितत्वात् प्रदपने करणमन्त्रत्वम्। भक्त्यङ्गस्वतन्त्रोभयविधप्रपत्तिपरमिदमविशेषात् इति स्तोत्रभाष्यादितो ज्ञेयम्।

आत्मबुद्धिप्रकाशमिति पदेन मधुकैटभापहृतवेदपुनरर्पणविहितोऽनुग्रहोऽपि सूच्यते। आत्मपदं स्वपर्यायत्वात् देवपरम्। यथायथं ज्ञानदर्शनप्राप्तिहेतुर्हि सः। (टी.)

अनेन सद्बुद्धिप्रदानमेव भगवतोऽत्यन्तानुग्रह इति सूचितम्। तदुक्तम्—

'न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्' ॥ इति ॥

**आत्मबुद्धिप्रसादजम्**—विविक्तात्मस्वरूपानुभवजन्यम् (सात्त्विकसुखम्) ।

'यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्' ॥ (गी. 18-37)

**यत् तत्सुखम्, अग्रे**—यागोपक्रमवेलायां ब्रह्मायाससाध्यत्वात् विविक्तस्वरूपस्याननुभूतत्वाच्च, **विषमिव**—दुःखमिव भवति, **परिणामे**—विपाके अभ्यासबलेन विविक्तात्मस्वरूपाविर्भावे **अमृतोपमम्**—(अमृतसदृशं) भवति, तच्च **आत्मबुद्धिप्रसादजम्**—आत्मविषया बुद्धिः आत्मबुद्धिः, तस्याः निवृत्तसकलेतरविषयत्वं प्रसादः निवृत्तसकलेतरविषयबुद्ध्या विविक्तस्वभावात्मानुभवजनितं सुखममृतोपमं भवति; तत् सुखं सात्त्विकं प्रोक्तम् । (गी. भा.)

बुद्धेरयोग्यविषयसंसर्गरूपकालुष्यनिवृत्तिर्हि प्रसाद इत्यभिप्रायेणाह—**निवृत्तसकलेतरविषयत्वमिति** । जरामरणादिनिवर्तकत्वात् भोग्यतमत्वेन हातुमशक्यत्वाच्चामृतोपमत्वम् । परशेषतैकरसस्य स्वरूपस्य यथावदाविर्भावे परमात्मानुभवसुखस्यान्तर्नीतत्वादिह पृथगनुक्तिः ॥ (ता. चं.)

**आत्मभवात्माभूतम्**—चतुर्मुखशरीरजन्यम् ।

आत्मभवः-ब्रह्मा तच्छरीरोद्भूतम् । (वि. को.)
प्राथमिकः आत्मशब्दः परमात्मपरः, द्वितीयः शरीरपर इति विवेकः ॥

**आत्मभावः**—आत्मनः स्वभावः न तु स्वरूपैक्यम् ।

'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मनश्शक्त्या लोहमाकर्षको यथा' ॥ (वि·पु. 6-7-30)

(अत्र आत्मभावशब्देन आत्मनो भावः आत्मत्वम् इत्यर्थविवक्षया मुक्तौ स्वरूपैक्यं परे वदन्ति तद्विमर्शयति)

**आत्मभावमिति । विकार्यमिति**—अनाद्यविद्या कर्मवासनादेहैर्बद्धस्यात्मनो भगवज्ज्ञानेन तदवस्थानाशः सर्वभावनानाशश्च आत्यन्तिकलयशब्दवाच्याः । एवं विकार्य

अवस्थाहं आत्मानं चिन्तितं तत् ब्रह्मात्मभावं नयति। आत्मनो भाव:—स्वभाव: आत्मभाव: सत्यकामत्वादि: । 'जक्षन् क्रीडन्' इत्यादि व्यापारश्च ब्राह्मेणजैमिनिरुपन्यासादिभ्य इत्यादिसूत्रै: व्यक्तस्य मुक्तस्य ब्रह्मण: क्रीडादीनामाविर्भाव उक्त: । अत्रापि उक्तं निर्वाणमय एवायमात्मेत्यादि । वक्ष्यति च—

'प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावन:' । इति । (वि. चि.)

मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्—

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता: ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥

इति । इहापि—

'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मन: शक्त्या लोहमाकर्षको यथा' ॥

इति । आत्मभावम्—आत्मन: स्वभावम् । न हि आकर्षकस्वरूपापत्तिराकृष्यमाणस्य । वक्ष्यति च, 'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च', 'भोगमात्रसाम्यलिङ्गाच्च', 'मुक्तोपसृप्यव्यपदेशाच्च' इति । वृत्तिरपि, 'जगद्व्यापारवर्जं समानो ज्योतिषा' इति । द्रमिडभाष्यकारश्च, 'देवतासायुज्यादशरीरस्यपि देवतावत् सर्वार्थसिद्धि: स्यात्' इत्याह । श्रुतयश्च—'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति', 'ब्रह्मविदाप्नोति परम्....सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'एतमानन्दमयमात्मानमुपसंक्रम्य, इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन', 'स तत्र पर्येति', 'रसो वै स: । रसं ह्येवायं लब्ध्वानन्दी भवति', 'यथा नद्य: स्यन्दमाना: समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्त: परात्परं पुरुषमुपैति दिव्यम्', 'तदा विद्वान् पुण्यपापे विधूय निरञ्जन: परमं साम्यमुपैति' इत्याद्या: ॥ (श्री.भा. I-248,249)

'ब्रह्मवेद ब्रह्मैव भवति' इत्यादिवाक्यनिर्वाहं बहुश्रुत्यन्तराविरोधेन वक्ष्यन्,

मुक्तस्य साम्यापत्तिमाह—**मुक्तस्येति** । तत्रैक्यश्रुतेः प्रतिकूलार्था साम्यश्रुतिः दर्शयिष्यते इति मत्वा, व्याख्येयतया प्रकृतस्योपबृंहणवचनस्य सजातीयं पराभिमतार्थप्रतिकूलार्थं स्मृतिवचनं दर्शयति—**इदमिति**। मुक्तपरत्ववैशद्यायोपादानं **सर्गेऽपीति** । न केवलं शास्त्रान्तरे, अत्रापि मुक्तस्य भेदप्रतिपत्तिरस्तीत्याह—**इहापीति** । इह—योगप्रकरणे योगसंक्षेपकथनारम्भ इत्यर्थः । 'संक्षेपविस्तराभ्यां तु किमन्यत् क्रियतां तव ' इति ह्युक्तम् । आत्मनः शक्त्या **विकार्यम्**—अवस्थान्तरं नेयम्, ध्यायिनमेनं तद्ब्रह्म आत्मभावं नयति, आत्मनः शक्त्या विकार्यं लोहमाकर्षको यथेत्यन्वयः ।

आकर्षको वन्हिः ; दोषमाकर्षतीति व्युत्पत्त्या ।

'यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ' ॥

इति हि उत्तरत्र वक्ष्यते ; श्रीविष्णुधर्मे च—

'यथाग्निसङ्गात् कनकमपदोषं प्रजायते ' इति । सोऽग्निः **आत्मभावम्**—आत्मनः स्वभावम्, निर्दोषत्वं लोहं नयति ; तथेत्यर्थः। अयं सम्यगर्थः । यद्वा आत्मशब्दः स्ववाची सन् अन्ययोगव्यतिरेकपरः । यथाऽग्निः लोहम् **आत्मभावम्**—स्वभावम्,स्वतः सिद्धरूपं नयति, तद्वदित्यर्थः। यद्वा **आकर्षकः** अयस्कान्तः, **लोहमात्मभावं नयति**—स्वव्यापार लोहं कारयति, स्वमनुकारयति ; 'स्थितः स्थिता-मुच्चलितः प्रयाताम् ' इतिवत् । अयस्कान्तस्तिष्ठति; चेत् लोहस्तिष्ठति ; धावति चेत्, तमनुधावति । एवं 'कामान्नी कामरूप्यनुसञ्चरन् ', 'सर्वेषु कामचारो भवति ' इत्यादिश्रुत्यनुगुणं परमात्मा उपासकं स्वचेष्टामनुकारयति ; समानचेष्टितं करोति इत्यर्थः ।

यद्वा आत्मशब्दः स्ववाची निष्कृष्टस्वरूपपरः) । उपासकं परमात्मा आत्मभावं नयति—प्रकृतिसम्बन्धराहित्येन शुद्धतां नयति, केवलतां नयति । यथा अयस्कान्तो दारुनिमग्नं लोहं तस्माद्दारुणा उद्धृत्य केवलतां नयति, तद्वदित्यर्थः ।

यद्वा—'भूः प्राप्तावात्मनेपदी ' इति वचनात् **भावशब्दः** प्राप्तिवचनः ।

प्राप्तिं नयति, यथा लोहमयस्कान्तः स्वप्राप्तिं नयतीत्यर्थः । प्राप्तिं नयतीति निर्देशः 'ओदनपाकं पचति' इतिवत् । जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तम् ; जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तम् ; जीवस्य बन्ध-मोक्षयोः ज्ञानसङ्कोचविकासरूप-विकारार्हत्वात् । (श्रु. प्र.)

'निरञ्जनं परमं साम्यमुपैति' इत्यत्र साम्यशब्दः सादृश्यमेवाभिधत्ते न त्वैक्यं तत्र स्वारस्याभावात् । सादृश्य एव हि समशब्दस्य प्रसिद्धिप्राचुर्याच्चात्मभावशब्दः परमात्मसादृश्यमेवाभिधत्ते ॥

**आत्मभावस्थः**—मनो विषयः ।

'तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता'॥ (गी. 10–11)

**आत्मभावस्थः**—तेषां मनोवृत्तौ विषयतयावस्थितः । (गी. भा.)

आत्मभावशब्दस्यात्र आत्मत्व-स्वस्वभावादिपरत्वे अधिकप्रयोजनं नास्ति ; मनोवृत्तिविषयत्वं तु बुद्धियोगस्यात्यन्तोपयुक्तमिति भावः ॥ (ता. चं.)

**आत्ममदः**—स्वोत्कर्षनिबन्धनगर्वः (मुमुक्षुभिः त्याज्येषु प्रधानभूतः) ।

वेदान्तिभिः विस्मर्तव्येषु आत्मोत्कर्षः प्राधान्येन परिगणितः । अन्यथा प्रपत्तिपरिकरभूतकार्पण्यं हीयेत । 'अकिञ्चनोऽनन्यगतिः शरण्य त्वत्पादमूलं शरणं प्रपद्ये' इति स्तोत्ररत्नोक्त शरणागत्यधिकारकोटिप्रविष्टाकिञ्चन्यानुसन्धानरूपकार्पण्यस्या-सिद्धेः । अतः तत्सिद्धये आत्ममदः त्याज्य एवेति भावः ॥

**आत्ममाया**—१. परमात्मसङ्कल्परूपज्ञानम् ।

'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया'॥ (गी. 4-6)

अजत्वाव्ययत्व-सर्वेश्वरत्वत्वादि सर्वं पारमेश्वरं प्रकारमजहदेव स्वां प्रकृतिमधि-ष्ठाय आत्ममायया सम्भवामि । प्रकृतिः स्वभावः, स्वमेव स्वभावमधिष्ठाय स्वेनैव

रूपेण स्वेच्छया सम्भवामीत्यर्थः । स्वरूपं हि 'आदित्यवर्णं तमसः परस्तात्', 'क्षयन्तमस्य रजसः पराके', 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः', 'तस्मिन्नयं पुरुषो मनोमयः, अमृतो हिरण्मयः', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि,' 'भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसः', 'माहारजनं वासः' इत्यादि-श्रुतिसिद्धम् । आत्ममायया-आत्मीयया मायया । 'माया वयुनं ज्ञानम्' इति ज्ञानपर्यायोऽत्र मायाशब्दः । तथा चाभियुक्तप्रयोगः 'मायया सततं वेत्ति प्राणिनां च शुभाशुभम्' इति । आत्मीयेन ज्ञानेन-आत्मसङ्कल्पेन इत्यर्थः । अतः अपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वमैशं स्वभावमजहत् स्वमेव रूपं देवमनुष्यादिसजातीयसंस्थानं कुर्वन्नात्मसङ्कल्पेन देवादिरूपस्सम्भवामि । तदिदमाह– 'अजायमानो बहुधा विजायते' इति श्रुतिः । इतरपुरुषसाधारणं जन्माकुर्वन् देवादिरूपेण स्वसङ्कल्पेनोक्त प्रक्रियया जायत इत्यर्थः । (गी.भा.)

षष्ठीसमासे स्वस्वामित्वलक्षणस्सम्बन्धोऽत्र विवक्षित इत्याह—**आत्मीययेति**। 'माया वयुनं ज्ञानम्' इति निघण्टूपादानम् । स्वेच्छावतरणप्रकरणे स एवार्थ उचित इति भावः । निघण्टुसिद्धमर्थं तन्मूलभूताभियुक्तप्रयोगेण द्रढयति—**तथा चेति**। 'मायया वेत्ति' इति निर्देशादियं माया निघण्टुसिद्धं ज्ञानमेव ; परप्रसिद्धमायायाः तत्त्वार्थप्रकाशकत्वाभावादिति भावः ।

एतेन प्रकृतिशब्दस्यात्र त्रिगुणात्मकप्रकृतिविषयत्वं मायाशब्दस्य मिथ्यार्थपरत्वं च शङ्करोक्तं प्रत्युक्तम् । 'आत्ममायया' इत्यस्य न परमार्थतो लोकवदिति व्यवच्छेदश्चायुक्तः, अन्येषामपि जन्मनस्तन्मते मिथ्यात्वाद्यविशेषात् ।

ज्ञानमात्रस्य कथमवतारहेतुत्वम् ? तथा सति सर्वदा अवतारप्रसङ्गादित्यत्राह— **आत्मसङ्कल्पेनेत्यर्थ इति**। **समस्तकल्याणगुणात्मकत्वम्** इत्यादिना—

'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
'इच्छागृहीताभिमतोरुदेहस्संसाधिताशेषजगद्धितोऽसौ' ॥

इत्यादि स्मारितम् । 'अजायमानः' इति सामान्यनिषेधो 'बहुधा विजायते' इति विशेषविधानसन्निधानात् सङ्कुचितविषयः । अतो विरोधे शान्ते तात्पर्यान्तरं न कल्प्यम् । (ता.चं.)

२. भगवदधिष्ठिता विचित्रकार्यकरणी पारमार्थिकी प्रकृतिः ।

'दैवी ह्येषा गुणमयी मम माया दुरत्यया' ॥ (गी. 7-14)

ममैषा गुणमयी सत्त्वरजस्तमोमयी माया यस्माद्दैवी-देवेन क्रीडाप्रवृत्तेन मयैव निर्मिता ; तस्मात् सर्वैः दुरत्यया दुरतिक्रमा । अस्याः मायाशब्दवाच्यत्वमासुरराक्षसास्त्रादीनामिव विचित्रकार्यकरत्वेन ; यथा च—

'ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम् ।
आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम् ॥
तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमेकैकश्येन सूदितम्' ॥

इत्यादौ । अतो मायाशब्दो न मिथ्यार्थवाची । ऐन्द्रजालिकादिष्वपि केनचिन्मन्त्रौषधादिना मिथ्यार्थविषयायाः पारमार्थिक्या एव बुद्धेरुत्पादकत्वेन मायावीति प्रयोगः । तथा—मन्त्रौषधादिरेव च तत्र माया ; सर्वप्रयोगेषु अनुगतस्यैव शब्दार्थत्वात् । मिथ्यार्थेषु मायाशब्दप्रयोगो मायाकार्यबुद्धिविषयत्वेन औपचारिकः ; 'मञ्चाः क्रोशन्ति' इतिवत् । एषा गुणमयी पारमार्थिकी भगवन्मायैव, 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इत्यादिषु अभिधीयते ।

अस्याः कार्यं भगवत्स्वरूपतिरोधानम्, स्वस्वरूपभोग्यत्वबुद्धिश्च । अतो भगवन्मायया मोहितं सर्वं जगत् भगवन्तमनवधिकातिशयानन्दस्वरूपं नाभिजानाति ।
(गी. भा.)

मायाशब्दस्य पराभिमतमर्थं दूषयिष्यन् स्वाभिमतमर्थं तावदाह **अस्या इति** ।

सत्येष्वेवासुरराक्षसास्त्रादिषु मायाशब्दप्रयोगो न मिथ्यात्वनिबन्धन इति भावः। **यथाचेति**। 'तेन मायासहस्रम्' इत्यत्र न मिथ्यार्थविषयत्वमुत्प्रेक्षितुमपि शक्यम् मिथ्याभूतस्य शस्त्रस्य निषूदनीयत्वाभावादिति भावः। **आदिशब्देन** 'माया सततं वेत्ति प्राणिनां च शुभाशुभम्', 'देवमायेव निर्मिता' इत्यादिप्रयोगसंग्रहः। अपि च दण्डनीतौ सामाद्युपायचतुष्टयादन्ये मायोपेक्षेन्द्रजालरूपाः अमुख्याः त्रय उपाया उपदिष्टाः ; तत्र **माया**—अन्यथाभूतस्य वस्तुनोऽन्यथाकरणशक्तिः ; **इन्द्रजालं** तु तथा-प्रतिभासनशक्तिरिति विभागः। तस्मात् सत्यविषय एव मायाशब्द इत्यभिप्रायेणाह **अत इति**। मायाशब्दप्रयोगस्यसत्यविषयत्वादित्यर्थः।

ननु मिथ्याभूतार्थप्रदर्शकेषु तत्संबन्धात् मायाविशब्दः प्रयुज्यते। अतो मायाशब्दो मिथ्यार्थेऽपि प्रयुक्त इत्यत्राह **ऐन्द्रजालिकेति**। असत्यत्ववत् असत्योत्पादकत्व-मपि न मायाशब्दप्रवृत्तिनिमित्तमिति दर्शयितुं **पारमार्थिक्या एवेत्युक्तम्**। भ्रान्ति-ज्ञानमपि स्वरूपतः सत्यम् ; आरोपितस्तु विषयो मिथ्येत्युच्यते। तथाऽप्यन्ततो मिथ्यार्थसंबन्धो निमित्तमित्यत्राह—**तथेति**। मन्त्रौषधादेर्मिथ्यार्थस्य च सन्निधाने किं विशेषनियामकमित्यत्राह—**सर्वेति**। न ह्येकशक्त्यैव निर्वाहे संभवति अनेकशक्ति-कल्पना युक्तेति भावः। मिथ्याभूतेष्वेवार्थेषुमायेयमिति प्रयोगो भवति, तत्र च विचित्रकार्यकरत्वाभावान्मिथ्यात्वमेव निमित्तमाश्रयणीयमित्यत्राह—**तत्रेति**।

अयं भावः—यत्र सम्बन्धाद्गुणयोगाद्वा प्रयोगो दुर्निर्वहः ; तत्र हि शक्त्यन्तर-कल्पनागौरवं सह्यम्। संभवति चात्र परंपरया सम्बन्धः, मायाकार्यज्ञानविषयत्वात्। न च मिथ्यात्वे प्रवृत्तिनिमित्ततया स्वीकृते अस्त्रादिषु तत्सम्बन्धगन्धः। मिथ्यार्थस्य च गुणाभावादेव तद्गुणयोगो दूरनिरस्तः। अपि च मिथ्याभूतेषु शुक्तिकारजतादिषु तत्प्रयोगाभावात् मिथ्यात्वविशेषे निष्कृष्यमाणे अस्मदुक्त एव विशेषेऽन्तर्भवति इति।

"त्वं हि लोकगतिर्देव न त्वां केचित् प्रजानते।<br>
ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम्" ॥

"योगनिद्रा महामाया" इत्यादिष्वपि भगवतो विचित्रकार्यविशेषोपयोगितया वा प्रकृतितत्त्वाभिमानिदेवतात्वादिरूपेण वा मायेत्युक्तम्। अतो युक्तं विचित्रकार्यकरत्व-मेव मायाशब्दप्रवृत्तिनिमित्तमिति ।

श्रुतावपि विचित्रसृष्ट्युपादाने प्रकृतौ सत्यायामेव मायाशब्दः प्रयुक्त इत्याह—**एषेति ।** महेश्वरशब्दस्यात्र रुद्रविषयत्वभ्रमव्युदासाय भगवच्छब्दः। श्वेताश्व-तरोपनिषदपि पुरुषसूक्तप्रत्यभिज्ञानमहापुरुषशब्दसत्त्वप्रवर्तकत्वादिभिर्भगवद्विषयतयैव प्रतीयते। महेश्वरशिवादिशब्दास्तु तस्मिन् अवयवशक्त्या गुणयोगेन वा प्रवृत्ताः, रुद्रस्यान्यत्र कार्यत्वकर्मवश्यत्वसंप्रतिपत्तेरिति भावः। 'मायां तु प्रकृतिं विद्यात्' इति न तत्र प्रकृत्यनुवादेन मायात्वं विधीयते ; किन्तु मायाशब्दार्थानुवादेन प्रकृतित्व मिति वाक्यस्वारस्यावगतम् ; पूर्वत्र 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्यभिहिते केयं मायेत्याकांक्षायां प्रवृत्तत्वादिति भावः ।

तथा च मायाशब्दः ज्ञानवाची । क्वचित् प्रकृतिपरोपीति सिद्धम् । 'दैवी ह्येषा' इति सत्त्वादिगुणमय्या एव तरितव्यतोक्तेः प्रकृतिपरः ; न तु मिथ्यावाची । तरणं सत्याया एव ; न तु मिथ्याभूतायाः। प्रकृतौ मायाशब्दप्रयोगनिमित्तं तु विचित्रार्थसर्गकरत्वेनैवेति सम्यक् उपपादितमाचार्यपादैः ।।

**आत्मयोनिः**—(स. ना. 985)

दुग्धेनेव सितावलयमात्मना भोक्तारं मिश्रयतीति आत्मयोनिः । (वि.स.भा.) दुग्धेनेव सितावलयं शर्कराविशेषम् आत्मना स्वात्मना यौति भोक्तारं मिश्रयति इति वा, आत्मानं भोक्तारं स्वात्माना यौतीति वात्मयोनिः । (वि. स.निर्व.)

भोक्तारमात्मनां नित्यं यो यो जयति सर्वदा ।
आत्मयोनिस्स चैवोक्तो वस्वर्णस्सुखभोगदः ।। (वि. स.नि.)

**आत्मयोनिः**—१. जीवानामन्तर्यामिभूतः परः आत्मा ।

'स विश्वकृत् विश्वविदात्मयोनिः'। (श्वे.उ. 6-16)

आत्मा जीवात्मा योनिः स्थानम् (अन्तर्यामितया) यस्य, सः आत्मयोनिः– परमात्मा । (रं. भा)

२. आत्मनां जीवानां योनिः उत्पत्तिकारणं ब्रह्म ।

३. स्वयम्भूः (अनन्यकारणकः परमात्मा) ।

' आत्मैव योनिः कारणमिति विग्रहः ॥

**आत्मरतिः**—१. परमात्मनि आसक्तः ।

(आत्मनि परमात्मन्येव रतिः यस्येति)

' स वा एष एवं पश्यन् एवं मन्वानः एवं विजानन् आत्मरतिः आत्मक्रीडः आत्ममिथुनः आत्माऽऽनन्दः स स्वराड् भवति ' (छां.उ. 7-25-2)

आत्मशब्दो विभूतिगुणविशिष्टब्रह्मपरः । रतिः स्रक्चन्दनादिजन्याप्रीतिः । (श्रु.प्र. 1-3-7)

२. जीवस्वरूपाभिमुखः ।

' यस्त्वात्मरतिरेव स्यात् ' । (गी. 3-17)

रतिशब्दोऽत्र आभिमुख्यविषयः तृप्त्यादेः पृथङ्निर्देशात् । (ता.चं)

आत्मनि ब्रह्मणि रति, प्रीतिर्यस्य, आत्मा-ब्रह्म-रतिः-अनुकूलविषयः यस्य, स इति वा । यस्य रतिः आत्मन्येव सः । (वि. को.)

वस्त्राभरणचन्दनकुसुमादीनां तांबूलादिजनितं सुखं परमात्मानुभवे अन्तर्गततया अनुभवति मुक्तः । मुक्तस्य वस्त्रादिजनितं सुखं सर्वं परमात्मानुभवान्तर्भूतम् इति यावत् ॥ (सं. अ.)

**आत्मलाभः**—स्वस्वरूपसाक्षात्कारपूर्वकं जीवस्य परमात्मप्राप्तिः ।

[आत्मनः लाभ इति विग्रहेण ' कर्मकर्तृव्यपदेशाच्च ' (ब्र.सू. 1-2-4) इति सूत्रोक्तरीत्या प्राप्तुः प्राप्यस्य च भेदः स्वरसतः प्रतीयते ; अथापि परमतप्रक्रियां प्रदर्श्य आपस्तम्बसूत्रानुसारेणैव सिद्धान्तः समर्थ्यते ।]

पुत्रवित्तादिलाभो हि परो दृष्टो लोके । - किमात्मलाभेन? इत्यत आह—

'आत्मलाभान्न परं विद्यते' इति । (आप.ध.सू. 1-8-2)

**आत्मलाभात्**—आत्मनः परस्य स्वरूपप्रतिपत्तेः **न परं** लाभान्तरं **विद्यते** । तथा विचारितं बृहदारण्यके 'तदेतत् प्रेयः पुत्रात्' इत्यादिना ॥ (व्या.)

किं पुनरात्मा प्रयत्नेन लब्धव्यः? ओमित्याह—आत्मलाभात् परमुत्कृष्टं लाभान्तरं नास्ति । तस्मात् तस्य लाभाय यत्न आस्थेय—इति । कः पुनरसावात्मा? प्रत्यगात्मा । नन्वसौ नित्यलब्धः । न हि स्वयमेव स्वस्याऽलब्धो भवति । सत्यम्; प्रकृतिमेलनात् तद्धर्मतामुपगतो विनष्टस्वरूप इव भवति । प्रकृत्या हि नित्यसम्बद्धः पुरुषः । तथाविधश्च सम्बन्धो यथा परस्परं विवेको न ज्ञायते । अन्योन्यधर्माश्चान्योन्यत्राऽध्यस्यन्ते । यथा क्षीरोदके सम्पृक्ते न ज्ञायते विवेकः, इयत् क्षीरमियदुदकमिति; अमुष्मिन्नवकाशे क्षीरममुष्मिन्नवकाश उदकमिति । यथा वा अग्न्ययोगोलकयोः अभिसम्बद्धयोः येऽग्निधर्मा उष्णत्व-भास्वरत्वादयः, ते अयोगोलकेऽध्यस्यन्ते । ये वा अयोगोलकधर्माः काठिन्यदैर्घ्यादयः तेऽग्नावध्यस्यन्ते एवं हि तत्र प्रतिपत्तिः एकं वस्तु उष्णं दीर्घं भास्वरं कठिनमिति । तद्वदिहापि पुरुषधर्माः चैतन्यादयः प्रकृतावध्यस्यन्ते । प्रकृतिधर्माश्च सुखदुःखमोह-परिणामादयः पुरुषे । ततश्च एकं वस्तु चेतनं सुखादिकलिलं परिणामीति व्यवहारः ।

वस्तुतस्तु तस्मिन् सङ्घाते अचेतनांशः परिणामी । चेतनांशस्तु तमनुधावति । येन येन रूपेण परिणमति तामप्यवस्थामनुप्रविशति तद्वदिहापि । तदिदमुच्यते 'तत्सृष्ट्वा, तदेवानुप्राविशत्' इति । सर्गेऽप्यात्मनः कर्तृत्वमिदमेव यदुत भोक्तृतया निमित्तत्वम् । तदेवं स्वभावतः स्वच्छोऽप्यात्मा प्रकृत्या सहाभेदमापन्नः तद्धर्मा भवति । एवं तद्विकारेण महता तद्विकारेण अहङ्कारेण इत्याशरीराद्द्रष्टव्यम् । 'स्थूलोऽहं कृशोऽहं देवोऽहं मनुष्योऽहं तिर्यगहम्' इति ।

तस्यैवंगतस्य अपेक्षितव्यः स्वरूपलाभः नीचैरिव वर्धितस्य राजपुत्रस्य ।

तद्यथा—शबरादिभिः बाल्यात्प्रभृति स्वसुतैस्सह संवर्धितो राजपुत्रः तज्जातीयमात्मानमवगमयन्मात्रा स्वरूपे कथिते लब्धस्वरूप इव भवति। तथा प्रकृत्या वेश्ययेव स्वरूपान्तरं नीत आत्मा मातृस्थानीयया तत्त्वमसीति श्रुत्या स्वभावं नीयते। यदेवंविधं परिशुद्धवस्तु तदेव त्वमसि, यथा मन्यसे 'मनुष्योऽहं दुःख्यहम्' इत्यादि न तथेति। यथा य एवंभूतो राजा त्वमसीति राजपुत्रः।

ननु तत्त्वमसीति ब्रह्मणा तादात्म्यमुच्यते। को ब्रूते? नेति। ब्रह्मापि नान्यदात्मनः। किं पुनरयमात्मा एकः? आहोस्विन्नाना? किमनेन ज्ञानेन? त्वं तावदेवंविधश्चिदेकरसो नित्यनिर्मलः संसर्गात् कलुषतामिव गतः। तद्वियोगस्ते मोक्षः। त्वयि मुक्ते यद्यन्ये सन्ति ते संसरिष्यन्ति। का ते क्षतिः? अथ न सन्ति तथापि कस्ते लाभ इत्यलमियता। (व्या.)

इदन्तु आपस्तम्बेनैव निरस्तम्। 'वेदानिमं लोकममुञ्च परित्यज्याऽऽत्मानमन्विच्छेत्', 'बुद्धे क्षेमप्रापणम्', 'तच्छास्त्रैर्विप्रतिषिद्धम्', 'बुद्धे चेत् क्षेमप्रापणम्, इहैव न दुःखमुपलभेत', 'एतेन परं व्याख्यातम्' इति। अनेन ज्ञानमात्रात् मोक्षश्च निरस्तः। अतः सकलभेदनिवृत्तिरूपा मुक्तिः जीवतो न सम्भवति। (श्री.भा. 1–2–153, 154)

वेदशब्देन त्रिवर्गसाधनकर्माणि उच्यन्ते, तत्फलमुच्यते—**इमं लोकममुञ्चेति।** **बुद्धे**—वाक्यार्थज्ञाने जाते सति, **क्षेमप्रापणम्**—मोक्षः। **तच्छास्त्रैर्विप्रतिषिद्धम्**—शास्त्रैरिति बहुवचनस्यायम्भावः वाक्यार्थज्ञानोत्तरभाव्युपासनविधिपरैः 'एवं वर्तयन् यावदायुषम्' इत्याप्रयाणादनुवृत्तिपरैः मोक्षस्य शरीरपातमात्रसापेक्षत्वपरैः, 'तयोर्ध्वमायन्नमृतत्वमेति' इति नाडीविशेषनिष्क्रमणपरैः अर्चिरादिमार्गेण देशविशेषप्राप्तिपरैश्चानेकैः शास्त्रैर्विरोध इति। विप्रतिषिद्धम्—विशेषेण प्रतिषिद्धम्॥ (श्रु.प्र.)

**आत्मलाभे राजकुमारन्यायः—**

समन्वयाध्याये त्वयं पर्यशोधि श्रीभाष्यकारैः—यथा च कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनात् निष्क्रान्तो मार्गात् भ्रष्टो नष्ट इति राज्ञा विज्ञातः

स्वयञ्चाज्ञातपितृकः केनचित् द्विजवर्येण वर्धितः अधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याण-गुणाकरस्तिष्ठन् , पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यपरा-क्रमादिगुणसम्पन्नः त्वमेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठति ' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत्— तदानीमेव, ' अहं तावत् जीवतः पुत्रः ; मत्पिता च सर्वसम्पत्समृद्धः' इति निरतिशयहर्षसमन्वितो भवति । राजा च स्वपुत्रं जीवन्त-मरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वा अवाप्तसमस्तपुरुषार्थो भवति । पश्चात् तदुपादाने च प्रयतते । पश्चात् तावुभौ संगच्छेते चेति ।।

' उभौ संगच्छेते ' इत्यनेन जीवस्य परमात्मनश्च परस्परलाभः प्रत्यबोधि ।

अयञ्च न्यायः बृहदारण्यकोपनिषद्भाष्ये शङ्कराचार्यैरपि प्रत्यपादि । (द्रमिडभाष्यकारसंप्रदायादागतोऽयमिति चानन्दगिरिः)

परन्तु उपसंहारे अद्वैतानुसारेण राजैव संपन्न इति च,न्यरूपि ।

विशिष्टाद्वैते जीवपरयोः राज-तत्कुमारस्थानीययोः शरीरशरीरिभावनिबन्धन-भेदस्य तात्त्विकतया राजसादृश्यमेव कुमारे इत्युपापीपदन् श्रीभाष्यकाराः ।

**आत्मलोकावरणः**—जीवात्मगतधर्मभूतज्ञानावारककर्मविशेषः ।

('लोकृदर्शने' इत्यस्माद्धातोः लोक्यते अनेन इति करणार्थे घञ्प्रत्ययः । ज्ञानमिति यावत्, तत् आव्रियते अनेन इति करणार्थे ल्युटि, तस्यानादेशः । 'भावार्थ-कल्युट एव नपुंसकता' इत्युक्तत्वात् अत्र पुल्लिङ्गनिर्देशः ।)

आत्मनो धर्मभूतज्ञानावारकं (कर्म) । आत्मनो लोकः धर्मभूतज्ञानम् ।

(वि. को.)

**आत्मवञ्चकः**—आत्मापहारी ।

'देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ।
यो नाद्रियते त्वत्पादौ सशोच्यो ह्यात्मवञ्चकः ' ।। (भाग-10-63-41)

निरवधिककृपावता हरिणा दत्तं भगवदाराधनोपयुक्तं भगवन्मायातरणसाधनं देहं लब्ध्वापि इन्द्रियारामो भगवच्छरणौ यो न सेवते सः आत्मापहारी ।

'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा '॥

इति वचनमत्रानुसन्धेयम् । (वी.)

तदुक्तम्—

'महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ।
प्राप्तुं दुःखोदधेः पारं त्वर यावन्न भिद्यते ॥ इति ॥

**आत्मवत्ता**—अध्यवसायविशेषः ।

(आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।)

'कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥' (रा. अयो. 1-11)

असंख्येयमपि 'शतंसहस्रमयुतं सर्वमानन्त्यवाचकम्' इत्युक्तेः । न स्मरति न चिन्तयति ; कः पुनः कोपस्यावकाशः इति भावः । उभयत्र हेतुमह—**आत्मवत्तयेति** । वशीकृतमनस्कतया इत्यर्थः ।

यद्वा आत्मवत्तया ज्ञानवत्तया, 'उदारास्सर्व एवैते' 'न कश्चिन्नापराध्यति' इत्येवमध्यवसायवत्तया इत्यर्थः ॥ (गो. व्या.)

'ज्ञानी त्वात्मैव मे मतम्—तदायत्तधारणोऽहमिति मन्ये । कस्मादेवम् ? यस्मादयं मया विनात्मधारणासम्भावनया मामेवानुत्तमं प्राप्यमास्थितः ; अतः तेन विना ममाप्यात्मधारणं न सम्भवति ; ततो ममात्मा हि सः' इति गीताभाष्योक्त दिशा (7-18) ज्ञानिविषयेऽत्यन्तबहुमतिपुरस्सरं परमात्मा स्वभक्तं स्वात्मत्वेन बहुमन्यते ।

तथा 'वासुदेव एव मम परमं प्राप्यं प्रापकश्चेति ज्ञानी उपास्ते' इत्यध्यवसायश्चानेन क्रोडीकृतः । अत्रात्मशब्दः अध्यवसायरूपबुद्धिविशेषवाची, । तद्वान् आत्मवान् तस्य भावः आत्मवत्तेति विग्रहः । अतः आत्मवत्त्वं च पूर्वोक्ताध्यवसाय एवेति गोविन्दराज हृदयम् ।

**आत्मवर्त्मात्मा**—वेदस्यात्मा ।

आत्मवर्त्मनः स्वप्रापकमार्गस्य वेदस्यात्मा ।

स्वप्रापकमार्गावबोधित्वात् वेदोपि तथोच्यते इति भावः ।

**आत्मवशः**—आत्माधीनः ।

'यद्यदात्मवशं तु स्यात् तत्तत्सेवेत यत्नतः ।
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥' (मनुस्मृतिः)

'वशो जनस्पृहायत्तेष्वायत्तत्वं प्रभुत्वयोः' इति च नैघण्टुकाः ॥

**आत्मवान्**—(स. ना. 85)

तदायत्तस्वरूपप्रवृत्त्यादिकतया स्वस्य स्वभूताः तत्कर्तारोऽप्यात्मानोऽस्य सन्तीत्यात्मवान् ॥ (वि. स. निर्व)

एषामात्मशरीरादिनिरासादथवाऽऽत्मवान् ।
स्वे महिम्नि प्रतिष्ठानादात्मवानभिधीयते ॥ (वि. स. नि)

**आत्मवान्**—1. ब्रह्मज्ञानेनात्मसत्तावान् ।

'अत सातत्यगमने' इति धातोः 'सातिभ्यां मनिन्मनिणौ' (उ.सू. 592) इति सूत्रेण मनिण्प्रत्ययः, वृद्धौ, 'नेड्वशि कृति' (पा. सू. 7-2-94) इति इडभावे च व्युत्पादितादात्मन् शब्दात् 'तदस्यास्त्यस्मिन्' (पा.सू. 5-2-94) इति मतुप् । 'न लोपः प्रातिपदिकान्तस्य' (पा. सू 8-2-7) इति नलोपः 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' (पा. सू. 8-2-9) इति मतोर्मस्य वः । 'अत्वसन्तस्य च' (पा. सू. 6-4-14) इति दीर्घः, 'उगिदचाम्' (पा. सू. 7-1-70) इति नुमि च आत्मवान् इति ।

[आत्मा अस्यास्तीत्यर्थे—

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।

संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः '॥ इति श्लोकवार्तिकेन संसर्गे मतुप् ।

'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः ।' (तै. आ. 30) इत्युक्तरीत्या

ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सदसद्भावौ दर्शयतीति भाष्योक्तेः ब्रह्मज्ञानेनैवात्मनः सत्तेति भावः]

2 प्रशस्तमनाः । (अत्र प्रशंसायां मतुप् ।)

'उवाचेदं स धैर्येण धारयन्सत्त्वमात्मवान्' (रा. अयो. 22-2)

वश्यमनस्क इति यावत् । (गो. रा.)

(अत्र आत्मशब्दः मनोवाची ।

1 धैर्यवान्, 2 यत्नवान्, 3 समाहितचित्तः । (वि. को.)

आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इत्यमरः ॥

**आत्मविदः शोकतरणम्**—परब्रह्मविषयकोपासनरूपज्ञानविशेषस्य संसारतरणहेतुता ।

'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् । श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि । तं मा भगवान् शोकस्य पारं तारयत्विति ।' (छां. उ. 7-1-3)

**सोऽहम्**—अहमेतत् सर्वं जानन्नपि, **मन्त्रविदेवास्मि**—शब्दब्रह्मनिष्ठ एवास्मि । यद्वा मन्त्रप्रधानकर्मनिष्ठ इति वार्थः । **नात्मविदस्मि**—न परब्रह्मवित् । आत्मशब्दस्य तस्मिन्नेव मुख्यत्वात् । जीवस्य तु आपेक्षिकात्मत्वेन निरङ्कुशात्मत्वाभावाच्च । मन्त्रवित्त्वात् आत्मवित्त्वे किमधिकं स्यादित्यत्राह—**श्रुतं....इति** ।

**भगवद्दृशेभ्यः**—भवादृशेभ्यः महद्भ्यः, आत्मवित् शोकं संसारं तरति इति मे श्रुतमेव हि । 'मे' इति सम्बन्धसामान्ये षष्ठी । मया श्रुतमित्यर्थः । **सोऽहं ........तारयतु इति** । एतादृशविद्यासम्पन्नोऽप्यहम् आत्मज्ञानराहित्यात् शोकान्तरे पतितोऽस्मि । तं तादृशं मां भगवान् आत्मज्ञानेन शोकार्णवस्य पारं तारयतु । (रं.भा.)

शरीरप्रतिसम्बन्धित्वं हि आत्मत्वम् । तच्च जीवपरसाधारणमपि सर्वशरीर प्रतिसम्बन्धित्वं परमात्मन एवेत्यभिप्रायेण मुख्यत्वमित्युक्तम् ।

अत्र 'शोकस्य पारं तारयतु' इत्युक्तिस्वारस्यात् जगतः सत्यत्वम्, तरितव्यता च सत्यस्यैवेति वाक्यजन्यज्ञानमात्रात् न मुक्तिः; किन्तु ईश्वरप्रसादादेवेति च सूच्यते । तत्प्रसादश्च असकृदावृत्तज्ञानविशेषादेवेति पूर्वापरप्रकरणसिद्धम् ॥

**आत्मविद्या**—ब्रह्मविद्याप्रदायिनी लक्ष्मीः ।

'यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ' ॥ (वि.पु.1-9-120)

'विद्यासहायवन्तं मामादित्यस्थं सनातनम्' इति सर्वविद्याप्रवर्तकतया तत्तद्विद्यात्वेन निर्दिष्टा सम्यज्ज्ञानव्यवसायोपायादिप्रदाने विशेषाधिकारवती अनुग्रहैकस्वभावा श्रीः । (श. ग.भा. 98)

अत्र विद्याप्रदायिनी श्रीः विद्यात्वेनाभिधीयते 'आयुर्घृतम्' इतिवत् ॥

**आत्मविनिग्रहः**—मनोनिग्रहः ।

'अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ' ॥ (गी. 13-7)

आत्मस्वरूपव्यतिरिक्तविषयेभ्यो मनसो निवर्तनम् । (गी. भा.)

निग्राह्यत्वसामर्थ्यादत्र आत्मशब्दो मनोविषयः । अत एव परोक्तं संघातपरत्वमयुक्तम् । स्वभावेन सर्वतः प्रवृत्तस्य निग्रहश्च अनर्थान्निवर्तनम्; तदाह—**आत्मस्वरूपेति** । (ता.चं.)

**आत्मविनिग्रहः**—आत्मनः उपकारकतया आत्मशब्दवाच्यस्य कार्यकारण-संघातस्य, **विनिग्रहः**—स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्गे एव निरोधः । (शं.भा.)

'मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ' ॥ (गी. 17–16)

मनोवृत्तेः ध्येयविषये अवस्थापनम् । (गी.भा.)

**आत्मविनिग्रहः** इति अप्राप्तविषयविनिवारणं हि प्राप्तविषयैकाग्र्यार्थमित्यभि-प्रायेणाह—**ध्येयविषये अवस्थापनम् इति** । (ता. चं.)

**आत्मविभूतिः**—परमात्मनियाम्यं वस्तु ।

['आप्नोति' इति व्युत्पत्त्या सर्वचराचरस्य सर्वात्मना आधारः-नियन्ता-शेषी च यः, सः सर्वशरीरी परमात्मैव । असङ्कोचेन सर्वान्तःप्रविश्य नियन्तृत्वरूपप्रवृत्तिनिमित्तस्य परमात्मन्यैव सम्भवात् । विभूतिशब्दे कर्मणि क्तिप्रत्ययः बहुलग्रहणात् । विभवनम्-नियमनम् ; तस्य विषयः इति यावत् ।

हन्त ते कथयिष्यामि विभूतीरात्मनश्शुभाः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ (गी. 10-19)

हे कुरुश्रेष्ठ ! मदीयाः कल्याणीर्विभूतीः प्राधान्यतः ते कथयिष्यामि । प्राधान्यशब्देन उत्कर्षो विवक्षितः ; 'पुरोधसां च मुख्यं माम्' इति वक्ष्यते । जगति उत्कृष्टाः काश्चन विभूतीर्वक्ष्यामि । विस्तरेण वक्तुं श्रोतुं च न शक्यते ; तासामानन्त्यात् । विभूतित्वं नाम नियाम्यत्वम् , सर्वेषां भूतानां बुद्ध्यादयः पृथग्विधा भावा मत्त एव भवन्तीत्युक्त्वा, 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः' इति प्रतिपादनात् ; तथा तत्र योगशब्दनिर्दिष्टं स्रष्टृत्वादिकं विभूतिशब्दनिर्दिष्टं तत्प्रवर्त्यत्व-मिति ह्युक्तम् । पुनश्च—

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।। इति । (गी.भा.)

**विभूतित्वं नामेति** । नियन्तव्यवस्त्वन्तरविषयो विभूतिशब्दो विभवनकर्मपरः । अन्यत्र च 'ब्रह्मा दक्षादयः कालः', 'विष्णुर्मन्वादयः कालः' 'रुद्रः कालान्तकाद्याश्च'

इत्यादिषु 'जनार्दनविभूतयः' इति नियन्तव्येषु विभूतिशब्दो दृष्ट इति भावः। कुत इत्यत्राह—सर्वेषामिति। प्रस्तुतं तादधीन्यं ह्येतच्छब्देन परामृश्यत इति भावः। समनन्तरश्लोकेनापि तस्य श्लोकस्य तदर्थपरत्वं दर्शयति—तथेति।

नन्वस्य श्लोकस्य व्याख्याने पूर्वं 'सौशील्यवात्सल्यसौन्दर्यादिकल्याणगुणयोगम्' इत्युक्तम्। इह तु योगशब्दनिर्दिष्टं स्रष्टृत्वादिकमुच्यते; तत्कथं घटते? इत्थम्। उभयत्रोभयमप्यादिशब्देन संगृहीतमित्येकार्थत्वात्। अत एव हि—'एतां विभूतिं योगं च' इत्यत्र 'हेयप्रत्यनीककल्याणगुणगणरूपं योगं च' इति प्रयोजकेन संगृहीतम्। 'एतां विभूतिम्' इत्यादेः पूर्वन्नियमनपरत्वेन व्याख्यानेऽपि अत्र तदुपादानं समृद्ध्याद्यर्थान्तरव्युदासेन सोपसर्गधात्वर्थव्यञ्जनार्थम्। 'विस्तरेणात्मनो योगं विभूतिं च' इत्यत्र तु 'याभिर्विभूतिभिः' इति तत्पूर्वप्रश्नवाक्यस्थस्वारस्यात् नियमनार्थतोक्ता। अतः प्रश्नोत्तरपरयोरीषद्वैरूप्यं सह्यम्॥ (ता. चं.)

**आत्मविभूतिभावः**—विभूतिविभूतिमद्भावः शरीरात्मसम्बन्धः।

(अत्र विभूतिशब्दः नियाम्यपरः। आत्मा च विभूतिश्च आत्मविभूती, तयोः भावः आत्मविभूतिभावः। अत्र समासोत्तरभावशब्देन संम्बन्धः अभिधीयते।)

अवरात्मनोऽपीदमेव शरीरं प्रत्यात्मत्वम्; यत् व्याप्य साक्षात् प्रवृत्त्यादिषु नियच्छति। एवं परमात्मा सर्वमिति विशेषः। दारागारकेदारादिविलक्षणेन अत्यन्तपारतन्त्र्येण अन्तरङ्गो हि देहस्य आत्मविभूतिभावः। (वि.स.भा-8)

कृत्स्नस्य चिदचिदात्मकस्य प्रपञ्चस्य ब्रह्मणश्च शरीरात्मभावः सम्बन्धः श्रुतिभिरुक्तः। स हि नियतः आधाराधेयभावः, नियतः नियाम्यनियामकभावः, नियतः शेषशेषिभावो वा। तेन च सम्बन्धेन दारागारकेदारादिषु विद्यमानात् पारतन्त्र्याद्विलक्षणं पारतन्त्र्यं प्रतीयते॥ (द.उ. 197)

**आत्मविशुद्धिः**—क्षेत्रज्ञस्य सर्वबन्धनिवृत्तिः।

'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' (याज्ञ.स्मृ. 3-34)
'उपविश्याऽऽसने युंज्याद्योगमात्मविशुद्धये।' (गी. 6-12)

आत्मविशुद्धये बन्धनिवृत्तये योगं युंज्यात् आत्मावलोकनं कुर्वीत। (गी. भा.)

शुद्धान्तःकरणस्य साक्षात्कारसाध्या हि आत्मविशुद्धिर्मोक्ष एवेत्यभिप्रायेण **बन्धनिवृत्तये**— इत्युक्तम् । 'अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः' इति कर्मबन्धो ह्यात्मनामशुद्धिरुच्यते योगं युञ्जीतेत्ये तत् 'ओदनपाकं पचति' इति वदित्यभिप्रायेण— आत्मावलोकनं कुर्यादित्युक्तम् । (ता.चं.)

परमात्मशेषतैकरसतया स्वरूपावलोकने सति भक्तियोगेन प्रपत्त्यावा कर्मक्षये हि विशुद्धिरिति भावः ॥

**आत्मवेदनः** — स्वयंप्रकाशः आत्मा ।

दारुण्यग्निर्यथातैलं तिले तद्वत्पुमानपि ।
प्रधानेऽवस्थितो व्यापी चेतनात्माऽऽत्मवेदनः ॥ (वि.पु. 2-7-28)

[वेदना—प्रकाशः, आत्मनैव प्रकाशः यस्य इति विग्रहः विवक्षितः ]

**दारुणीति** । **चेतनात्मा**—ज्ञातृस्वरूपः, **आत्मवेदनः**—स्वयंप्रकाशः । दारुणीत्यादिना दुर्विवेचत्वमुक्तम् ॥ ( वि चि.)

**आत्मशब्दः**—नियन्तृतया व्याप्तिविशेषवचनः योगरूढः ।

(आप्नोति नियन्तृतयेति हि व्युत्पत्तिः । अत्र प्रयोजनस्य हेतुत्वविवक्षया तृतीया ।)

" आत्मा वा इदमेक एवाग्र आसीत् " । (ऐ.उ. 1-1-1)

" आत्मन आकाशः सम्भूतः " । (तै.आ. 1-2)

" य आत्मा अपहतपाप्मा " । (छां.उ. 8-7-1)

[आत्मशब्दस्य चेतनैकान्तत्वं न सम्भवति, 'मृदात्मको घटः' इत्यादि-प्रयोगानुरोधेन अनेकार्थसाधारण्यात् इति शंका समाधीयते ।]

यत्तु-आत्मशब्दश्चैतनैकान्तो न भवति ; 'मृदात्मको घटः' इत्यादिदर्शनादि-त्युक्तम् । तत्रोच्यते यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथापि शरीरप्रतिसंबन्धिनि आत्मशब्दस्य प्रयोगप्राचुर्यात् । 'आत्मा वा इदमेक एवाग्र

आसीत्', 'आत्मन आकाशः सम्भूतः' इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते। यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात् सास्नादिमानेव स्वतः प्रतीयते; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा तथा स्वतःप्राप्तं शरीरप्रति-सम्बन्धिचेतनाभिधानमेव, 'स ईक्षत लोकान्नु सृजा इति', 'सोऽकामयत। बहु स्यां प्रजायेय' इत्यादि तत्तद्वाक्यविशेष एव स्थिरीकुर्वन्ति। (श्री भा. 1-1-23)

स्वतः प्राप्त्या आत्मशब्दो विशेषवाचीत्यर्थः। प्रकृतब्रह्मवाचितच्छब्द-सामानाधिकरण्याच्च न स्वरूपपरत्वमिति अर्थसिद्धम्। (श्रु.प्र.)

आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः। आप्नोतीति ह्यात्मा स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति। अतः सोऽपि तस्यैव शब्दः। (श्री.भा. 1-3-1)

आत्मशब्दो न व्याप्तृमात्रवाची; किन्तु व्याप्तृविशेषवाची। योगरूढत्वात्। न हि गगनादिषु आत्मशब्दप्रयोगः। अतो नियन्तृरूपव्याप्तृविशेषवाचीत्यर्थः। (श्रु.प्र)

षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्च-<br>व्यावृत्ते विश्वहेतौ प्रकरणनियमान्नामवृत्त्या नमन्ति ॥ (अ.सा. 96)

ब्रह्मशब्दः आत्मशब्दः पुरुषशब्दश्च त्रयोऽपि भगवदसाधारण्येन सुप्रसिद्धा लोके वेदे च। ब्रह्मशब्दस्तावत् 'ब्रह्म परिबृढं सर्वतः' इति; आत्मशब्दोऽपि 'आत्मन आकाशः सम्भूतः' इति पुरुषशब्दस्तु 'पुरुष एवेदं सर्वम्' इति। एवं त्रयोऽपि शब्दाः योगतो लोक-वेदप्रसिद्धरूढिविशेषाच्च परमपुरुष एव श्रीनिवासे विशेषवृत्त्या वर्तन्ते। (चि.म.)

चेतनैकान्तः आत्मशब्दश्च असङ्कोचेन सर्वशरीरप्रतिसम्बन्धित्वरूपपुष्कल-प्रवृत्तिनिमित्तमादाय परमात्मन्येव मुख्यवृत्तः। तत्तच्छरीरप्रतिसम्बन्धत्वमात्रमादाय जीवात्मन्यपि प्रयुज्यते।

न च तावता जीवात्मनि आत्मशब्दः लाक्षणिकः । 'गङ्गायां घोषः' इत्यादौ तु गङ्गाशब्दप्रवृत्तिनिमित्तस्य तीरे सर्वथा असम्भवात् लक्षणा ; अत्र तु कात्स्न्र्येन आत्मशब्दप्रवृत्तिनिमित्तस्यासम्भवेऽपि तदेकदेशस्य सम्भवाच्च न लक्षणा इति भावः । अत एव 'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' इति श्रुतिः, अन्तः प्रविश्य सर्वशासनादेव परमात्मनः सर्वात्मत्वं प्रत्यपीपदत् । एतेन केवलनियन्तृत्वं राज्ञि, केवल व्याप्तिश्च गगने इति नृप-नभोव्यावृत्तिः ॥

**आत्मशब्दाच्च**—(ब्र.सू. 3-3-15)

आनन्दाद्यधिकरणे पंचमं सूत्रम् ।

आनन्दमयस्य 'तस्य प्रियमेव शिरः' इत्यादिना शिरःपक्षाद्यवयवविशेष-प्रतीत्या ब्रह्मत्वं न प्रतीयते इति शंका ; पूर्वम् 'प्रियशिरस्त्वाद्यप्राप्तिः उपचयापचयौ हि भेदे' इति सूत्रेण निरासि । सैव शंका आत्मनः निरवयवत्वप्रसिद्धिमुपजीव्य अनेन सूत्रेणापि व्यावर्त्यते ।

'अन्योऽन्तर आत्मा आनन्दमयः' इत्यात्मशब्दाच्च प्रियशिरस्त्वादयो न ब्रह्म-स्वरूपधर्माः, शिरःपक्षादयो हि नात्मधर्माः अतः प्रियमोदादिरूपेण विभज्य शिरः पक्षादित्वेन रूपयित्वा आनन्दमयं ब्रह्म सुखप्रतिपत्त्यर्थं बुद्धौ आरोप्यत इति भावः ।

आत्मानन्दमयश्चेति श्रौतादेवात्मशब्दतः ।
शिर आदेरभावाच्चाप्यात्मनो रूपणं हि तत् ॥ (ब्र.प. मा.)

**आत्मशरीरभावः**—चेतनाचेतनयोः परमात्मनश्च शरीरशरीरिसम्बन्धः ।

अयमेव आत्मशरीरभावः, पृथक्सिद्ध्यनर्हाधाराधेयभावः, नियन्तृनियाम्यभावः, शेषशेषिभावश्च । सर्वात्मना आधारतया, नियन्तृतया, शेषितया च, अप्नोतीत्यात्मा सर्वात्मना-आधेयतया, नियाम्यतया, शेषतया च-अपृथक्सिद्धं प्रकारभूतमिति, 'आकारश्शरीरम्' इति च उच्यते । एवमेव हि जीवात्मनः स्वशरीरसम्बन्धः । एवमेव परमात्मनः सर्वशरीरत्वेन सर्वशब्दवाच्यत्वम् ॥ (वे.सं. 185)

चिदचिद्वस्तुनोश्शरीरत्वम्, परमात्मनः शरीरित्वं च अनुपपन्नम्; शरीर-शरीरिलक्षणाभावात्, 'चेष्टाभोगेन्द्रियाश्रयो हि शरीरम्' इत्यत्राह—**अयमेव इति** । पृथक्सिद्ध्यनर्हशब्दः प्रतिपदमन्वेति, तेन पदेन गृहक्षेत्रघटपटादिव्यावृत्तिः, 'अत्र शरीरात्मलक्षणयोस्सहोक्त्या शरीरम् आत्मा च प्रतिसम्बन्धिनिरूप्यपदार्थः' इति दर्शितं भवति । तत्र किम् शरीरत्वम् किम् आत्मत्वम् इति शंकायाम् विभज्य दर्शयति—**सर्वात्मना इति** । सर्वात्मना—यावद्द्रव्यभावितयेत्यर्थः । आत्म-शब्दावयवार्थस्य शरीरशरीरिलक्षणौपयिकत्वमभिप्रेत्याह—**आप्नोति इति** । द्रव्यत्वे सति आधेयतयेत्यध्याहारेण योजयितव्यम् । आधेयत्व नियाम्यत्व—शेषत्वविशेषणम् सर्वात्मना इति पदम्, अपृथक्सिद्धम् इति पदम् प्रकारविशेषणम्, सर्वात्मनाधेयत्वा-दिभिः अपृथक्सिद्धप्रकारत्वादित्यर्थः । **'आकारश्शरीरम्'** इति चोच्यते इति जातिगुणयोरप्याकारत्वम्, अपृथक्सिद्धप्रकारत्वात्, शरीरमपि—अपृथक्सिद्धप्रकारत्वा-दाकारशब्दवाच्यम्, द्रव्यत्वाच्छरीरशब्दवाच्यम् इत्यर्थः ।

अयमर्थः—'द्विपात्त्वं शरीरत्वम्, चतुष्पात्त्वं शरीरत्वमिति शरीरलक्षणं किमिति न स्यात्, द्विपात्त्वचतुष्पात्त्वादिविभागाभावेन सर्वत्र शरीरशब्दप्रयोगा-विशेषात्' इति चेत्, तर्हि लोके वेदे च यत्र शरीरशब्दप्रयोगः, तत्र सर्वत्रानुगते लक्षणे वाच्ये, कतिपयप्रयोगविषयाऽननुगतत्वादव्याप्तं लक्षणमुक्त्वा प्रयोगविशेषेष्वमुख्यत्वा-श्रयणमयुक्तम्, तस्मात् चेष्टेन्द्रियार्थाश्रयत्वम् अव्याप्तमिति, सर्वप्रयोगानुगतं लक्षण-मिदमेव साधीयः' इति ।

यत्तु भाष्योक्तशरीरलक्षणग्रन्थेऽर्थजातमुक्तम्, तत्र अपेक्षितांश इहानुसन्धेयः, व्याप्यत्वे सति (सर्वात्मना) स्वार्थे धारयितुं शक्यं शरीरम् इति शरीरलक्षणम् । व्याप्तत्वे सति यावद्द्रव्यभावितया स्वार्थे धारयितुं शक्त आत्मा इति शरीरिलक्षणम् । स्वार्थ-शक्यपदाभ्याम्, उत्पतनादिव्यापाराणां रुग्णदेहनियमनस्य चाभावात् असम्भवाव्याप्ति-शंकापरिहारः, घटपटादिव्यावृत्त्यर्थम् व्याप्यत्वे सति इत्युक्तम् । परकायप्रविष्टं प्रति परकायस्य देहत्वव्यावृत्त्यर्थं 'सर्वात्मना' इति पदम् । आत्मनो धर्मभूतज्ञानम्,

रत्नदीपादेः प्रभा च शरीरं स्यादिति, तद्व्यावृत्त्यर्थं च व्याप्यत्वे सति इत्युक्तम् । अतएव शरीरलक्षणेपि व्यावर्त्यम् स्पष्टतरम् । (ता. दी.)

अतएव सिद्धान्ते प्रधानप्रतितन्त्रतया अयं स्वीक्रियते । अनेनैव सम्बन्ध-विशेषेणाभेदश्रुतीनां भेदश्रुत्यविरोधेन निर्वाहः सुकर एवेति भावः ॥

**आत्मसम्भाविताः**—स्वप्रशंसापराः (आसुरीसम्पद्विशिष्टाः)

आत्मसम्भाविताः स्तब्धाः धनमानमदान्विताः । (गी. 16–17)

आत्मनैव सम्भाविताः । आत्मनैवात्मानं संभावयन्तीत्यर्थः । (गी. भा.)

आत्मसंभाविताः इत्यत्र परसंभावनाप्रसंगरहिततया 'अब्भक्षः' इतिवत् अवधारणगर्भतामाह–**आत्मनैव संभाविता इति** । आत्मप्रशंसादिरूपदोषव्यक्त्यर्थमाह–**आत्मनैवात्मानमिति** । परैस्संभाविता अपि हि सन्तो लज्जन्ते ॥ (ता. चं)

**आत्मसंवेद्यम्**—स्वयम्प्रकाशम् (आत्मस्वरूपम्) ।

'वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्' । (वि.पु. 6–7–53)

**आत्मसंवेद्यम्**—स्वयंप्रकाशम् । **ज्ञानम्**—ज्ञानगुणैकनिरूपणीयम् । 'तद्गुण-सारत्वात्' इति ह्युक्तम् । ज्ञानस्वरूपत्वं तु आत्मसंवेद्यमित्यनेन दर्शितं ब्रह्मात्मकत्वात् ब्रह्मसंज्ञितमित्युक्तं यदेवं रूपं ज्ञानं तत् ब्रह्मसंज्ञितमित्यन्वयः । (वि.चि.)

सिद्धान्ते ज्ञानस्वरूपः ज्ञानगुणकश्च आत्मा ; स्वेनैव स्वयं प्रकाशते ; न त्वन्यापेक्षया इति भावः । स्वयंप्रकाशत्ववादिनां सर्वेषां मते स्वस्यैव ग्राहकत्वं ग्राह्यत्वं च योयुज्यते ।

विस्तरस्तु आत्मनः स्वयं ज्योतिष्ट्वम् इति पदे ॥

**आत्मसंश्रयः**—अनन्याधारः परमात्मा ।

1. सर्वेषां वस्तूनां स्वयमात्मभूतस्सन् तेषामाधारः ।

2. अनन्याधारः (अनेन इतरेषामाधारवत् स्वस्यापि अन्यः आधारः स्यादितिशङ्का निरस्ता) । (सं.अ.)

आद्ये सर्वेषामात्मभूतः यः स एव संश्रयश्चेति । कर्मधारयसमासः ।

द्वितीये आत्मैव संश्रयः आधारः यस्य, इति बहुव्रीहिः विवक्षितः ॥

**आत्मसंस्थस्यैव ज्ञेयता**—जीवात्मनि अन्तर्यामितया संस्थितस्य ब्रह्मण एवोपास्यता ।

' एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ।

भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ' ॥

वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।

स भूय एवेन्धनयोनिगृह्यः तद्वोभयं वै प्रणवेन देहे ॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।

ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥

तिलेषु तैलं दधनीव सर्पिः आपः स्रोतस्स्वरणीषु चाग्निः ।

एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥

सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।

आत्मविद्या तपोमूलं तद्ब्रह्मोपनिषत्परम् ॥ (श्वे.उ. 1–12....16)

**एतत् ज्ञेयं....किञ्चित्**—एवम्भूतं परं ब्रह्म आत्मन्यन्तर्यामितया संस्थितं ज्ञेयम् । ज्ञातवतश्च ज्ञातव्यान्तरं नावशिष्यते । **भोक्ता....ब्रह्ममेतत्** । भोक्तृशरीरकत्वं भोग्यशरीरकत्वमपहतपाप्मत्वादिविशिष्टसत्यज्ञानादिस्वरूपत्वमिति विधात्रयविशिष्टं ब्रह्म ज्ञातव्यम् ' इति वेदार्थसंग्रहे वर्णितम् ।

केचित्तु ' भोक्ता भोग्यं प्रेरितेत्येतत् त्रिविधं प्रोक्तमेतत् सर्वं मत्वा ब्रह्म भवति मुक्तो भवतीत्यर्थः इति वदन्ति । प्रेरितेति वक्तव्ये प्रेरितारमिति छान्दसं रूपम् ।

ननु ' एतत् ज्ञेयं नित्यमेवात्मसंस्थम् ' इत्यनुपपन्नम् । आत्मसंस्थस्य परस्यानुपलम्भात् इत्याशंक्य, यथा अरणिगतस्य वह्नेः प्रत्यक्षेणानुपलम्भेऽपि मथने धूमोपलम्भात् न तत्सत्ता अपह्नवार्हा एवं प्रत्यक्षाद्यग्राह्यस्याप्यात्मसंस्थस्य परमात्मनः प्रणवनिर्मथने उपलभ्यमानत्वात् न तत्सत्ता अपह्नवार्हा इत्याह—**वह्नेरिति** । **योनिगतस्य**—कारणभूतारणिगतस्य **मूर्तिः**—स्वरूपं प्रत्यक्षेण न दृश्यते । लिङ्गं तु दृश्यते । पश्चान्मथने सति इन्धयोनितयेन्धनप्रभवतया गृह्यते । तद्वत् प्रणवेन परमात्मशरीरभूते जीवे

शोध्यमाने पूर्वमप्रतीतस्यान्तर्यामिणः सूक्ष्मवस्त्राञ्चलान्तर्गतमाणिक्यवत् प्रत्यग्वस्त्वन्तर्गतस्योपलब्धिर्भवतीत्यर्थः । **तद्वोभयम्**—इत्यत्र वाशब्दः इवार्थः ।

प्रणवेन प्रकाशप्रकारमेव दर्शयति—**आत्मानमिति** । स्वात्मनि प्रणवेन ध्यायमाने तदन्तर्गत आत्मा निगूढवत् स्थितः प्रकाशत इत्यर्थः । तदेव प्रपञ्चयति **तिलेषु....पश्यति इति** । यथा तिलादिस्थिततैलादिकं यन्त्रपीडनाद्युपायेन गृह्यते, एवं सत्यतपोलक्षणोपायेन परमात्मा गृह्यत इत्यर्थः । **सर्वव्यापिनमिति** । क्षीरार्पितसर्पिस्समतया सर्वव्याप्तमात्मानं प्रत्यगात्मविद्यया तपसा च ज्ञेयमुपनिषदां परं-प्रतिपाद्यं तत् परं ब्रह्म विद्यादित्यर्थः ॥ (रं.भा.)

**आत्मसंस्थितः**—स्वनिष्ठः (स्वतन्त्रः)

'परः पराणां परमः परमात्माऽऽत्मसंस्थितः । (वि.पु. 1-2-10)

सर्वेषां आत्मत्वेन सर्ववस्तुभिर्विशिष्टः । यद्वा-आत्मत्वेन संस्थिततया सर्वशरीरकत्वात् स्वस्मिन् पर्यवस्थितः-स्वनिष्ठः। अन्यत् सर्वं तन्निष्ठम् ; शरीरतया विशेषणत्वात् । अतः सर्वपर्यवसानभूमिः स्वनिष्ठ इति वस्त्वपरिच्छेद उक्तः । 'सर्ववस्तुसामानाधिकरण्यार्हत्वं' हि वस्त्वपरिच्छेदः । 'इदमिदं न भवतीति' हि वस्तुपरिच्छेदः । यद्वा-नित्यत्वविभुत्वव्यतिरिक्तगुणैः समाभ्यधिकरहितत्वं वस्त्वपरिच्छेदः । स्वनिष्ठं परमात्मानमपेक्ष्य तन्निष्ठानामन्येषां समत्वाभ्यधिकत्वसम्भवादात्मसंस्थित इत्यनेन वस्त्वपरिच्छेदसिद्धिः ॥ (श्रु. प्र. I-216)

**आत्मसमर्पणम्**—आत्मात्मीययोः परमात्मनि समर्पणम् ।

(अयमेव आत्मनिक्षेप, आत्मनिवेदनम्, शरणागतिः, प्रपत्तिः, भरसमर्पणमिति व्यवह्रियते । आत्मसमर्पणं शरणवरणं चान्योन्यं संहितम् ।)

'वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथा तथाविधः ।
तदयं तव पादपद्मयोः अहमद्यैव मया समर्पितः ॥
मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव ।
नियतस्वमिति प्रबुद्धधीरथवा किन्नु समर्पयामि ते' ॥ (स्तो.र.52,53)

अत्र पूर्वम्—'अयमद्येव मया समर्पितः' इत्यनेन आत्मसमर्पणं कृतम्। ततः 'नियतस्वमिति निश्चितज्ञानवानहं ते किं नु समर्पयामि' इति समर्पणीयवस्तुनि स्वात्म्यं नास्ति, समर्पणीयः समर्पकश्च कः ? समर्पणेऽपि स्वातन्त्र्यं नास्ति। संसारभीत्या समर्पणं, स्वरूपयाथात्म्यज्ञानतः अनुशयश्च इत्येतद्द्वयं यावन्मोक्षमनुवर्तनीयमिति भावः। (पे.व्या.)

'त्वं मेऽहं मे' इति चावयोरनादिर्विवाद इदानीमपि न शान्त इत्यत्र स्वामित्वि-त्यादिभिः प्रागपि संक्षिप्तं, 'तद्वा एतदनुज्ञाक्षरं यद्धि किं चानुजानात्योमित्येव तदाह' इति छान्दोग्याधीतानुज्ञाक्षरप्रदर्शितशेषत्वाभ्युपगमेनोत्तरमाह—**वपुरादिष्विति**। आदिशब्द इन्द्रियादिसंग्रहार्थः। यथोक्तमात्मसिद्धौ—

'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतःसुखी॥ इति॥

योऽपि कोऽपि वा—अहं वपुरादिषु यः कश्चित् स्याम्। प्रमाणसिद्धस्याहमर्थस्य सारभूते त्वच्छेषत्वे मम निर्बन्धः। सामान्यतश्च स्वानुगुणसारग्रहणम् उच्यते—

'यावानर्थ उदपाने सर्वतः संप्लुतोदके'।

'बहुभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः।
सर्वतस्सारमादद्यात् पुष्पेभ्य इव षट्पदः'॥

इत्यादिभिः। अत्र देहात्मभ्रमाद्यनुवृत्तिर्भवतु वा मा वा, 'योऽहमस्मि स सन् यजे' इति न्यायमिहाश्रयामीति भावः। तथापि ज्ञातृत्वकर्तृत्वभोक्तृत्वादिविवेकमन्तरेण कथम् उपायानुष्ठानं फलितं वा स्यादित्यत्राह—**गुणतोऽसानि यथा तथाविध इति**। अणुत्व-विभुत्व-मध्यपरिमाणत्वजडत्वाजडत्व-नित्यज्ञानत्व—करणाधीनज्ञानत्वादिविवेकोऽत्र नातीवापेक्षितः। अपेक्षितत्वेऽप्यात्मस्वरूपप्रकारयोरत्यन्तपरिज्ञाने मम शक्तिर्नास्ति। स्वतस्सर्वज्ञः त्वमेव योऽसौ यत्प्रकारश्चेति मन्यसे स तथाऽहमिति सामान्यतः प्रवुद्धोऽहमिति भावः।

**तत्**—एतावतापि प्रस्तुतशास्त्रार्थविरोधाभावादिति यावत्। **अयमहम्**—त्वदनुसंहितयथावस्थिताकारशरणवरणानुगुणार्थित्वसामर्थ्यवानहमित्यर्थः। आत्मस्वरूप-

निरूपणदशायामहंशब्दप्रयोगादहमर्थ एवात्मेति स्थापितं भवति । **तव पादपद्मयोः समर्पितः**—'यस्यास्मि न तमन्तरेमि' इति न्यायात् त्वच्छेषत्वेन न्यस्त इत्यर्थः । **मया**—त्वद्दत्तकरणकलेवरबुद्धिश्रद्धाकार्पण्यादिशालिना । स्मर्यते हि—

विचित्रा देहसम्पत्तिरीश्वराय निवेदितुम् ।
पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ।

इति । इतः परं त्वया सह विवादो मे न भविष्यति इत्यभिप्रायेणाह—**अद्यैवेति** । अत्र यदि क्षणिकमेव मम स्वरूपम्, तथापि तस्मिन्नेव क्षणे निक्षिप्त इति केषांचित् व्याख्यानं त्वतिवादमात्रम् । एवं मुमुक्षूणामात्मात्मीयं सर्वं भगवच्छेषत्वेनानुसन्धेयमिति निवृत्तिधर्मसारो निष्कृष्टः ॥

ननु मया समर्पित इत्यत्र स्वशेषत्वानुसन्धानपूर्वकं स्वाधीनकर्तृत्वबुद्ध्या समर्पयसि चेत्—

'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा' ॥

इत्युक्तात्मापहारादिदोषः परिहृतो न स्यादित्यत्र स्वोक्ताभिप्रेतं विवृणोति—**मम नाथेति** । अत्र जीवपरमात्मयाथात्म्यविषयः प्रमाणगतः पदद्वये प्रतिसन्धेयः । **यदस्तीति** स्वानुभवनिश्चतया प्रमाणसिद्धगुणविग्रहादिसर्वसंग्रहः । **ममेति** व्यतिरेकोक्त्या देहात्मभ्रमादिः परिहृतः । त्र्यक्षरब्रह्मणि तृतीयाक्षरविवक्षितं विविक्तात्मस्वरूपमाह—**योऽस्म्यहमिति** ।

**सकलं तत्**—आत्मात्मीयं तत्सर्वम् । हिशब्देन प्रमाणप्रसिद्धिः द्योत्यते । **तव**—सर्वकारणतया सर्वरक्षकतया च प्रथमाक्षरप्रकृत्युक्तस्य । एवकारेण मध्यमाक्षरसिद्धमनन्यार्हत्वं प्रकाश्यते । **माधव**—श्रीयः पते । एतेन निरुपाधिकसर्वशेषित्वं सूच्यते । चतुर्थीविवक्षितमाह—**नियतस्वमिति** । नित्यशेषभूतमित्यर्थः । **इति प्रबुद्धधीः**—एवं त्वत्प्रसादसन्धुक्षितैः शास्त्रैः विकसितबुद्धिरिति भावः । शङ्कितदोषव्यवच्छेदाभिप्रायेणाह—**अथवेति** ।

**किन्तु समर्पयामि ते**—सर्वस्वामिनः सर्वेश्वरस्य तव पूर्वमशेषभूतं मयेदानीं स्वातन्त्र्यस्वामित्वाभिमानपूर्वकं शेषीकर्तव्यं न किंचिदस्ति। अतः पूर्वश्लोककृतं समर्पणं त्वच्छेषत्वप्रतिपत्तिमात्ररूपम् ; न तु मदीयस्य त्वच्छेषत्वापादनरूपमिति भावः। अत्र पूर्वकृतस्वरूपसमर्पणानुशयेन तदेव प्रतिक्षिप्यत इति पक्षस्त्वप्रतिबुद्धानामात्मसमर्पणमभिप्रेत्योक्तिः। अस्य तु यामुनाचार्यस्य प्रागेव प्रतिबुद्धत्वादस्मदुक्तैव गमनिका। न खल्वद्यैव मया समर्पित इत्युक्तेरनन्तरमस्य तत्त्वप्रतिबोधः। एवं भरसमर्पणरूपप्रपत्तिपरः पूर्वश्लोकः। अयं तु तत्त्वविदां तस्यैवाकर्तव्यत्वस्थापनार्थ इति पक्षोऽपि 'नियतस्वमिति प्रबुद्धधीः', 'अवबोधितवानिमां यथा' इत्यदिभिः न सङ्गच्छते। भरन्यासविधायकशास्त्रैश्च विरुध्येत। सम्बन्धज्ञानमात्रमेव प्रपत्तिरिति वादश्चात एव निरस्तो लोकविरुद्धश्च।

'अप्रपन्नेऽपि सम्बन्धबुद्धिर्दासे हि दृश्यते।
अमित्रे गत्यभावेन प्रपन्नेऽपि न दास्यधीः' ॥

अन्यथा 'तां त्वां दास' इति 'प्रपन्न' इति चेत्यादिभिरपि विरुध्येत। अतो मुमुक्षूणां भरसमर्पणरूपप्रपत्तौ सम्बन्धज्ञानमधिकारकोटौ स्थितत्वाऽनुष्ठानकालेऽपि फलसङ्गकर्तृत्वादित्यागवत् तिष्ठतीति मन्तव्यम् ॥ (स्तो. भा.)

['त्वमेवोपायभूतो मे भव' इति प्रार्थनायाः शरणागतित्वोक्तिः अङ्गेषु प्रार्थनायाः प्राधान्याभिप्रायेण। अन्यथा—'आनुकूल्यस्य सङ्कल्पः इत्यादिना षड्विधा शरणागतिः' इत्युक्तिः व्याहता भवेत्।

उपायः स्वप्राप्तेरुपनिषदधीतस्स भगवान्
प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती।

अभीष्टे दुस्साधे स्वत इतरतो वाऽवचन तत्
भरन्यासं याञ्चान्वितमभिवदन्ति प्रपदनम् ॥
इतः पश्चादस्मद्यतननिरपेक्षेण भवता
समर्थ्योऽसावर्थस्त्विति मतिविशेषं तमविदुः ॥

अकृते तु भरन्यासे रक्षापेक्षणमात्रतः ।
पश्चात् स्वयत्नविरतिः न प्रसिद्ध्यति लोकवत् ॥
त्राणे स्वामित्वमौचित्यं न्यासाद्याः सहकारिणः ।
प्रधानहेतुः स्वातन्त्र्यविशिष्टा करुणा विभो ' ॥

इत्यादि वेदान्ताचार्योक्तरीत्या प्रपदनं परमात्मप्रसादं प्रत्येव कारणम् । प्रसन्नः स एव मुक्तेः साक्षादुपायः इति करणम् । अत एव त्वमेवोपाय इत्यस्य नानुपपत्तिः । प्रपदनस्य बुद्धिविशेषरूपत्वमेव इति च न श्रुतिविरोधः । प्रपदनानन्तरं स्वरक्षण-स्वव्यापाराभावेनास्य सिद्धोपायनिष्ठता च ।

भक्तेरिव अस्यापि प्रसादद्वारा मोक्षसाधनत्वं वर्तते । अस्य आनुकूल्य-सङ्कल्पादि पञ्चाङ्गानि । महाविश्वासपूर्वकप्रार्थनान्वितभरसमर्पणमेव अङ्गीति परे प्राहुः ।]

' त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता ....इत्युक्त-प्रकारेण प्रार्थनारूपबुद्धिरेव शरणागतिः । अत्र ' त्वमेव ' इत्येवकारेणानुकूल्यादीनां निरपेक्षता बोध्यते । उपायभूतः प्राप्यश्च सर्वेश्वरः नित्यः सर्वज्ञः सर्वशक्तश्चेति, पुरोडाशादेरिव स्वरूपोत्पत्तौ, प्रयाजादेरिव फलोत्पत्तौ चाङ्गनिरपेक्षतया आनुकूल्यादीन् अङ्गतया नापेक्षते ।

अतः ' मद्रक्षणे मयि किञ्चिदपि साधनं नास्ति, त्वमेव रक्षकः ' इत्येव प्रार्थना अलम् । अन्यथा आत्मसमर्पणस्योपायत्वे ' त्वमेव ' इत्यवधारणं विरुध्येत इति लोकाचार्याः अभिप्रयन्ति ॥ (सं.अ.)

आत्मसात्—परमात्माधीनम् ।

(' तदधीनवचने ' (पा. सू. 5-4-54) इति सूत्रेण अधीनम् इत्यर्थे सातिप्रत्ययः ।)

' अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ' ॥ (स्तो.र. 48)

**आत्मसात्कुरु**—दासभूतं मामुपायोपेयान्तरवैमुख्यकरणेन स्वकैङ्कर्यैकरसं कुरुष्व इत्याशयः। 'धिगशुचिम्' इति पूर्वोक्तस्वात्मतिरस्कारानुवृत्त्या आत्मन्यनादरद्योतनायात्र मामित्यनुक्तिः ॥ (स्तो.भा.)

**आत्मसिद्धिः**—आत्मनः स्वरूपप्रकाशः स्वयमेव ।

सिद्धिशब्दः न उत्पत्तिवाची ; आत्मनः नित्यत्वात् । प्रकाशवाचीति भावः ।

2. सिद्धित्रयेऽन्यतमः भगवद्यामुनमुनिना कृतो ग्रन्थः ॥

**आत्मस्वरूपम्**—ज्ञाता अहमर्थः

[ज्ञप्तिमात्रमिति परे । ज्ञानाश्रयः ज्ञानस्वरूपश्चेति सिद्धान्तिनः ।] अत्र निर्विशेषाद्वैतिनस्त्वेवमाहुः—

ननु च—अहं जानामीति ज्ञातृता प्रतीतिसिद्धा । नैवम् ; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य ; अनुभूतेः स्वात्मनि कर्तृत्वायोगात् । अतो 'मनुष्योऽहम्' इति अत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तम् । ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम् । तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थं अविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति ? दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम् । सुषुप्तिमूर्छादौ अहम्प्रत्ययापायेऽप्यात्मानुभवदर्शनेन नात्मनोऽहम्प्रत्ययगोचरत्वम् । कर्तृत्वे अहम्प्रयत्ययगोचरत्वे च आत्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहम्प्रत्ययगोचरात् कर्तृतया प्रसिद्धात् देहात् तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामणिकानां प्रसिद्धमेव ; तथाऽहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् इति ।

(श्री.भा. I–109, 110)

'अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।
अहम्बुद्ध्या परागर्थात् प्रत्यगर्थो न भिद्यते ॥
विज्ञातारमरे केन, जानात्येवेति च श्रुतिः ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः ॥

नात्मा श्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
ज्ञोऽत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ' ॥

किञ्च—अहंप्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्र, अहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनम्, ' जननी मे वन्ध्या ' इतिवत् व्याहतार्थञ्च । न चासौ ज्ञाता अहमर्थोऽन्याधीनप्रकाशः ; स्वयंप्रकाशत्वात् । चैतन्यस्वभावता हि स्वयंप्रकाशता । यः प्रकाशस्वभावः सोऽनन्याधीनप्रकाशः दीपवत् ।

न हि दीपादेः स्वप्रभावलनिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वञ्च । किं तर्हि ? दीपः प्रकाशस्वभावः अन्यानपि प्रकाशयति स्वप्रभया ।

एतदुक्तं भवति-यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते ।............... एवमात्मा चिद्रूप एव चैतन्यगुणक इति । चिद्रूपता हि स्वयंप्रकाशता ।

तथा हि श्रुतयः—' स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव........' इत्याद्याः ॥ (श्री.भा. I-147-154)

अहमित्येवात्मनस्स्वरूपमिति स्वरूपज्ञानरूपोऽहम्प्रत्ययो नाज्ञत्वमापादयति ; कुतः ? संसारित्वम् । अपि तु ; तद्विरोधित्वान्नाशयत्येव ।

ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि—' तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्चेति ', ' अहमेकः प्रथममासं वर्तामि च भविष्यामि च ' इत्यादि ।

सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव, ' हन्ताऽहमिमास्तिस्रो देवताः, ' ' बहुस्यां प्रजायेय, ' ' स ईक्षत लोकान्नु सृजा ' इति । तथा—' यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः, ' ' अहमात्मा गुडाकेश ', ' न त्वेवाहं जातु नासम् ', ' अहं

कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा', 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते'६ 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्,' 'अहं बीजप्रदःपिता', 'वेदाहं समतीतानि' इत्यादिषु।

यद्यहमित्येवात्मनः स्वरूपम्; कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते, 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इति। उच्यते। स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात् तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम्। अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते। स त्वनात्मनि देहेऽहम्भावकरणहेतुत्वेनाहङ्कार इत्युच्यते। अस्य त्वहङ्कारशब्दस्य अभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या। अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते। तस्माद्बाधकापेताऽहम्बुद्धिः साक्षादात्मगोचरैव। शरीरगोचरा त्वहम्बुद्धिरविद्यैव। यथोक्तं भगवता पराशरेण—'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या' इति। यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्; न ज्ञातृत्वप्रतिभासः। तस्मात् ज्ञाताऽहमर्थ एवात्मा। तदुक्तम्—

'अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात्।
अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते'॥ इति। (श्री.भा. I–171-173)

अहमिति व्यवहारबुद्ध्यर्हमेवात्मनः स्वरूपम्। अहंप्रत्ययस्याज्ञत्वादिप्रयोजकत्वदूषणेनाज्ञत्वादेरविद्यान्वय एव उपाधिरित्यर्थादुक्तं भवति। (श्रु.प्र.)

तदुक्तमधिकरणसारावल्याम्—(229)

कैश्चिज्ज्ञानत्वमात्रं कथितमुपधिजा ज्ञातृतैवात्मनोऽन्यैः
तत्र श्रुत्यादिबाधं प्रथयति विविधं ज्ञोऽत इत्यादिसूत्रैः।
पूर्वन्यायादमुष्मिन् जनिलयरहिते नित्यबोधेऽत्र चोक्ते
संकोचाद्यर्हबुद्धेर्विकृतिवचनमप्यस्य सद्वारकं स्यात्॥ इति।

अत्र मृषावादिनः प्राहुः—ज्ञानमात्रमेवात्मतत्त्वमिति । कणचरणाक्षपादपक्ष-निक्षिप्तचेतसस्तु जडस्वरूपमप्यात्मतत्त्वमागन्तुकचैतन्यगुणकमिति प्रतिपेदिरे । तदिदं पक्षद्वयमप्यनूद्य प्रतिक्षिपति—**कैश्चिदित्यादिना । उपाधिजा ज्ञातृता**—देहाद्युपाधि-प्रयुक्तेत्यर्थः । तत्र द्वयोरपि पक्षयोः श्रुत्यादिबाधं 'ज्ञोऽत' इत्यादिसूत्रैः सूत्रकारो विविधं प्रथयति इत्यन्वयः । ज्ञ इति ज्ञातृवाचिपदम् । तेन ज्ञानस्वरूपस्यैवात्मनो ज्ञातृत्वमेव स्वभाव इत्युक्तं भवति । एकजातीययोरेव द्रव्ययोः आश्रयाश्रयिभावः संभवति इति प्रथमसूत्र एवोक्तमिति भाष्यकारैरेव स्पष्टमभिहितम् ।

ननु जीवस्वरूपनित्यत्वे तस्य च धर्मभूतज्ञाने स्वाभाविकतया नित्यत्वेन भवद्भि-रङ्गीकृतेसति स्वरूपस्वभावाभ्यां जीवस्य कार्यत्वाभावात् कथं वेदान्तेषु जीवोत्पत्तिवादा निर्वाह्या इत्याशंक्याह—**पूर्वेति** । पूर्वाधिकरणोक्तप्रक्रियया जीवनित्यत्वे सति, एतदधिकरणप्रक्रियया तज्ज्ञाननित्यत्वे च सति ज्ञानसंकोचविकासाभ्यामुत्पत्तिविनाश-व्यवहारो घटत इत्यर्थः । अत्र ज्ञानस्य संकोचविकासार्हत्वं 'प्रदीपवदावेशः' इत्यादिषु सूत्रकारैरेव साधयिष्यते । (चिं. म.)

तदेतदात्मस्वरूपम् । देहेन्द्रियमनःप्राणबुद्धिविलक्षणम्, अजडम्, आनन्दरूपं, नित्यम्, अणु, अव्यक्तम्, अचिन्त्यं, निरवयवं, निर्विकारं, ज्ञानाश्रयभूतम्, ईश्वरस्य नियाम्यं, धार्यं, शेषभूतं च ।

आत्मस्वरूपस्य देहादिविलक्षणत्वं कथमिति चेत् इत्थम् ।

देहादीनाम् 'मम देहादयः' इति आत्मनो भिन्नतया भानात्, इदंत्वेन भानात्, आत्मनश्च अहंत्वेनभासमानत्वात्, एतेषां कदाचिद्भासमानत्वात्, कदाचिद-भानाच्च, आत्मनस्सदाभासमानत्वाच्च । एतेषां बहुत्वात्, आत्मन एकत्वाच्च एतेभ्यो विलक्षण आत्मेत्यङ्गीकर्तव्यम् ।....अजडत्वं नाम-ज्ञानमन्तरापि स्वतोभासमानत्वम् ।

आनन्दरूपत्वञ्च सुखरूपत्वम् । सुप्तोत्थितस्य 'सुखमहमस्वाप्सम्' इति परामर्शदर्शनात् सुखरूप आत्मा भवति ।

नित्यत्वं नाम—सदावर्तमानत्वम् ।.... ।

अणुत्वं कथमिति चेत्? हृदय प्रदेशादुत्क्रामति । गच्छत्यागच्छति चेति शास्त्रे प्रतिपादनात् अणुरात्मा भवति.... ।

अव्यक्तत्वं नाम-घटपटादिग्राहकैश्चक्षुरादिभिरव्यङ्ग्यत्वम् ।

अचिन्त्यत्वं नाम- अचित्सजातीयतया चिन्तनानर्हत्वम् ।

निरवयवत्वं नाम—अवयव-समुदायानात्मकत्वम् ।

निर्विकारत्वम्—अचिद्विकाररहिततया सदैकरूपत्वम्........ ।

ज्ञानाश्रयत्वं नाम__ज्ञानाधारत्वम् । कर्तृत्वं च ईश्वराधीनम् ।

नियाम्यत्वं नाम—ईश्वरबुद्ध्यधीनसर्वव्यापारवत्त्वम् ।

धार्यत्वं नाम—तत्स्वरूपसंकल्पव्यतिरेकनियतस्वसत्ताव्यतिरेकवत्त्वम् ।

शेषत्वं नाम—चन्दनकुसुमताम्बूलादिवत्तस्य यथेष्टविनियोगार्हत्वम् ।

(त. त्र. 11-84)

नास्य आत्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपम् । यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति, न रसान्तरम्, तथैवेति ॥ (शं भा. 3-2-16)

**आत्मस्वरूपभेदः**—जीवात्मनां स्वाभाविकः भेदः ।

भिन्ना जीवाः स्वतस्स्युः प्रतिनियततया धीस्मृतीच्छासुखादेः
चेतोभेदाद्व्यवस्था न तु भवति यथा देहबाह्याक्षभेदात् ।
नित्यान् भिन्नांश्च जीवन्कथयति निगमस्तद्धि नोपाधितस्स्यात्
आत्माद्वैतश्रुतीनामितरहृदयता तत्रतत्रैव सिद्धा ॥ (त. मु. 80)

जीवः परस्य ब्रह्मणः औपाधिकांशः । घटाकाशमहाकाशवत्तयोर्भेदः । जीवानां मिथो भेदस्तु घटकरकाद्याकाशवदिति पक्षं दूषयति—**भिन्ना** इति । **स्वतः**—न तूपाधितः । ननु कोऽयं प्रतिनियमः? न तावद्बुद्ध्यादीनां स्वरूपभेदः,

एकस्मिन्नप्यात्मनि तदुपगमात् । नापि भिन्नाधारत्वम्, तस्यैव साध्यत्वात् अत एव नासाधारण्यम्, तत्खल्वाश्रयभेदसापेक्षम् । नापि परस्परप्रतिसन्धानाभावः, परस्परभावस्यैवासिद्धेरिति ।

अत्रब्रूमः—यथा एकशरीरावच्छिन्नबुद्ध्यादीनाम् एकाश्रयतयैव प्रतिसन्धानं न तथा शरीरान्तरजानाम् । अन्यथा गुरुशिष्यभावादयोऽपि न स्युः । तदेवं गम्यते—चैत्रात्मा मैत्रतादात्म्यरहितः, तदनुभवजन्मस्मृत्यनाधारत्वात्, कदाचिदपि तद्गतसुखादि प्रतिसन्धानरहितत्वादित्यादि अत्र परोक्तामन्यथासिद्धिं परिहरति—**चेतोभेदादिति** । 'तु'रव धारणे । अस्ति हि कल्पभेदेन चेतोभेदः । सन्ति च कल्पादौ जातिस्मराः, 'स्वयमागतविज्ञाना' इत्यादेः । तत्र प्रतिबन्ध्यभिप्रायेणाह—**यथेति** । न हि देहभेदे प्रतिसन्धानाभावः, पूर्वजन्माभ्यस्तप्रतिसन्धानदृष्टेः । न च बाह्येन्द्रियभेदे सर्वधीविरोधात् । तद्वच्चेतोभेदोऽपि न व्यवस्थाहेतुरिति । ईश्वरान्मिथश्च जीवानां निरुपाधिकभेदः, 'पृथगात्मानं प्रेरितारं च मत्वा', 'जुष्टं यदा पश्यत्यन्यमीशम्', 'नित्यो नित्यानाम्' इत्यादिश्रुतिस्वारस्यसिद्ध इत्याह—**नित्यानिति** । मुक्तावपि भेदश्रुतिमभिप्रेत्याह—**तद्धीति** ।

ननु 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इत्यादिभिर्जीवब्रह्मतादात्म्ये सिद्धे भेदस्यौपाधिकत्वं ग्राह्यमित्यत्राह—**आत्माद्वैतेति** । अयंभावः—शरीरशरीरिभावेन सामानाधिकरण्यं स्थापयिष्यते । आस्तामेतत् । तथा यूपादित्यसामानाधिकरण्यं प्रत्यक्षविरोधादन्यपरं, तथेहापि स्वरूपैक्यविधानं तावदशक्यमिति । **तत्रतत्रेति** वीप्सायाः क्वचिद्विशिष्टवृत्तिः क्वचित्तूपचार इत्यादितात्पर्यभेदस्सूच्यते । (स. सि.)

**आत्मस्वरूपभेदेऽपि एकोक्तेः निर्वाहः**—विभिन्ने जीवस्वरूपे ऐक्यवचनानामुपपत्तिप्रकारः ।

सौभर्यादिक्षेत्रज्ञव्यतिरिक्तेषु आत्मा प्रतिक्षेत्रं भिन्नः; स्मृत्यनुभवसुखदुःखकरणप्रयत्नादिप्रतिनियमात् । उक्तं हि न्यायसूत्रे 'नानात्मानो व्यवस्थातः' इति ।

सांख्यैरप्युक्तम्—

'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥' इति ।

एवं जीवबहुत्वे प्रामाणिके सति ऐक्यवचनानां निर्वाहप्रकारं स्वरूपैक्ये दोषञ्चाह ।

जीवाद्वैतवचनानि तु प्रकारैक्यविषयाणि । प्रकारैक्येऽपि हि एकादिशब्दाः प्रयुज्यन्ते यथा 'अयमयञ्च' 'एको व्रीहिः' इति । 'रामसुग्रीवयोरैक्यम्' इत्यादि च भाव्यम् । ततश्चायं संग्रहः—

अविरोधान्तरङ्गत्वजातिभोगाद्यभेदतः ।
एकोक्तिरपृथक्सिद्धेर्देशकालदशादिभिः ॥

साम्यञ्च सर्वजीवानां स्वरूपतः; मुक्त्यवस्थायां गुणतोऽपि चेति श्रुतिस्मृत्यादि-सिद्धम् । तत्र जीवभेदनिषेधवचनान्यपि प्रामाणिकस्वरूपभेदव्यतिरिक्तदेहात्माभिमान-निबन्धनदेवत्वादिभेदनिषेधपराणि। कण्ठोक्तेन च देवत्वादिनिषेधेन तेषामैकार्थ्यमुचितम्।

किञ्च निर्विशेषात्मैक्यवादिनोऽपि बन्धमोक्षयोरविशेषः प्रसज्यते । तत्त्वत इदानीमपि निरस्ताविद्यत्वात् , अतत्त्वतस्तदानीमपि तद्व्यवहारोपपत्तेः । व्यपदिश्यते हि शुकादिषु मुक्तेष्वपि हि जगति संसारः । किञ्च—

'भ्रान्त्या सर्वभ्रमोच्छेदे नोच्छेदस्तत्त्वतो भवेत् ।
प्रमयात्त्वपसिद्धान्ताद्वैतभङ्गादिसम्भवः ॥

विस्तरेण च परस्तात् दूषयिष्यामः । भास्करमते तु नित्यसर्वज्ञस्य उपाधि-योग एव परिहास्यः । उपाधिभिः छेदनाद्ययोगेन ब्रह्मण एव संसारित्वानपायः । उपाधिसंचारे प्रतिक्षणं बन्धमोक्षप्रसङ्गः । सौभर्यादिवत् उपाधिभेदेऽपि प्रतिसन्धानस्य दुस्त्यजत्वात् । छेदाभ्युपगमे च अच्छेद्यवादविरोधः । एवं सकलपदार्थभिन्नाभिन्न-सच्चिद्ब्रह्मवादोऽपि दूष्यः । बद्धस्यापि प्रलये मुक्ताविशेषसदापत्त्यभिधानात् । मुक्तस्यापि सर्वज्ञस्य सृष्टौ सर्वहेयतादात्म्यानुसन्धानेन अनन्तसंसारयोगात् । अतो बन्धमोक्षाविशेष

एव-- अस्माकमविद्यानिवृत्तिर्नाम भावान्तरं भविष्यत्येव। तच्च धीविशेषविकासादिरूपम्। प्रीयमाणपरमपुरुषपरिग्रहविशेषादिश्च। परेषान्तु निखिलमिदमाविलमिति।

'ब्रह्मवेद ब्रह्मैव भवति' इत्यादिकमित्थमेव ब्रह्मतादात्म्यापरोक्ष्यकृतम्। मुक्तब्रह्मणोः तादात्म्यं शरीरशरीरिभावात्। तदापरोक्ष्यञ्चशाश्वतमेव। तदपरोक्षधियो यावदात्मभावित्वात्। अतः सिद्धं ईश्वरात् परस्परञ्च भिन्ना जीवा इति॥

(व्या.सि 134-138)

**जीवाद्वैतवचनानित्विति**—'यद्यन्योऽस्ति परः कोऽपि' 'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्' इत्यादीनि वचनानि इत्यर्थः। **प्रकारैक्यविषयाणीति**—सर्वेषामपि ज्ञानैकाकारत्वभगवच्छरीरत्वरूप**प्रकारैक्यविषयाणि** इत्यर्थः। **अविरोधान्तरङ्गत्वेति**—राज्ञोर्विरोधशमनमात्रेण तयोरैक्यमिति व्यवहारात्, **अन्तरंगत्वमात्रेण** रामसुग्रीवयोरैक्यव्यवहारात्, जात्यैक्यमात्रेण 'एको व्रीहिरिति' व्यवहारदर्शनादविरोधादीनामैक्योक्तिनियामकत्वं द्रष्टव्यम्। (टी)

स च प्रतिशरीरं भिन्नः। एकपरिमाणेष्वनेकेषु सुवर्णघटेषु 'एको घट' इति प्रतीतिवद्व्रीहिराशौ 'एको व्रीहिः' इतिवच्च ज्ञानैकाकारतयैकत्वव्यवहारः। न तु स्वरूपैक्यम्। प्रमाणविरोधात्॥ (य.दी. 72)

सोभर्यादिशरीरेषु एकत्रैवाणुरात्मा स्वधर्मभूतज्ञानद्वारा सर्वत्राधितिष्ठति योगमहिम्नेति अन्यत्र तु प्रतिशरीरंभिन्नानां प्रकारैक्यनिबन्धनैव एकोक्तिरिति सिद्धम्॥

**आत्मस्वरूपलक्षणम्**—जीवेश्वरस्वरूपलक्षणम्।

'अल्पपरिमाणत्वे सति ज्ञातृत्वम्, शेषत्वे सति ज्ञातृत्वम्' इत्यादि जीवलक्षणम्

(न्या.सि. 181)

**अल्पपरिमाणत्वे सतीति**। अपकृष्टपरिमाणवत्त्वे सतीत्यर्थः। इदं चेश्वरवारणाय। **ज्ञातृत्वमिति**। अपृथक्सिद्धिसम्बन्धेन ज्ञानवत्त्वमित्यर्थः। इदञ्च घटादिवारणाय। अपृथक्सिद्धिसम्बन्धेनेत्यनेन विषयतासंबन्धेन ज्ञानवत्त्वमादाय न

तद्दोषतादवस्थ्यम् । **शेषत्वे सतीति** । अत्रापि सत्यन्तमीश्वरवारणाय । विशेष्यं घटादिवारणाय । शेषत्वमिह स्वाभाविकं ग्राह्यम् । तेनैच्छिकभागवतशेषत्ववति भगवति नातिप्रसंगः । अनुगृहीतं हि श्रीमद्रहस्यत्रयसारे, 'स्वेच्छयैव परेशस्य तादधीन्यबलात्तु नः । भगवद्भक्तशेषत्वम्' इति । स्वाभाविकत्वं च स्वसमानाधिकरणेच्छानधीनत्वम् । देवीगतभगच्छेषत्वस्याप्युभयेच्छाधीनतायाः चतुःश्लोक्यधिकारे सिद्धान्तितत्वात् न तत्रातिप्रसङ्गः । **इत्यादीति** । आदिपदेन अणुत्वे सति ज्ञातृत्वम्, स्वाभाविकाधेयत्वे सति ज्ञातृत्वमित्यादेः संग्रहः । (र. पे)

ईश्वरतापर्याप्त्यधिकरणापेक्षया शेषत्वस्य विवक्षितत्वात् ईश्वरत्वस्य व्यासज्यवृत्तित्वेन लक्ष्म्या ईश्वरतापर्याप्त्यधिकरणापेक्षया शेषत्वाभावान्नातिव्याप्तिः । लक्ष्म्या जीवान्तर्भाव पक्षे तु न दोषः । (टी.)

[ तु शब्देन स्वानभिमतिं सूचयति ]

शेषत्वे सति ज्ञातृत्वमात्मनां लक्षणम् । (त त्र. 121)

शेषत्वं जीवलक्षणमितिस्वीकारे अचित्यतिव्याप्तिः स्यात् । ज्ञातृत्वमात्रस्य जीवलक्षणस्वीकारे ईश्वरेऽतिव्याप्तिः । अतएवोक्तम्—शेषत्वेसति ज्ञातृत्वमिति जीवलक्षणम् । (व्या.)

सर्वेश्वरत्वम्, व्यापकत्वे सति चेतनत्वं, सर्वशेषित्वं, सर्वकर्मसमाराध्यत्वं, सर्वफलप्रदत्वं, सर्वाधारत्वं, सर्वकार्योत्पादकत्वं, स्वज्ञानस्वेतरसमस्तद्रव्यशरीरकत्वं, स्वतस्सत्यसङ्कल्पत्वादिकञ्च ईश्वरलक्षणम् । (न्या. सि. 180)

**स्वज्ञानस्वेतरेति** ईश्वरधर्मभूतज्ञानस्य द्रव्यत्वेऽपि न तं प्रति शरीरत्वम्; चैतन्यविशिष्टधार्यत्वादेरेव शरीरलक्षणत्वेन चैतन्ये तद्विशिष्टधार्यत्वाभावात् । अतोऽसंभववारणाय **स्वज्ञानेत्युक्तम्** । **सत्यसङ्कल्पत्वादिकमिति** आदिशब्देन स्वतोऽपहतपाप्मत्वमुमुक्षूपास्यत्वादिकं विवक्षितम् । (टी.)

**आत्मस्वरूपवैविध्यम्**—आत्मस्वरूपस्यैकरूपत्वेऽपि बद्ध-मुक्त-नित्यभेदेन त्रैविध्यम् ।

संसारिणो बद्धा इत्युच्यन्ते । उच्छिन्नसंसारबन्धाः मुक्ता इत्युच्यन्ते । कदाप्यनाघ्रातसंसाराः शेषशेषाशनादयो नित्या इत्युच्यन्ते । (त.त्र. 90)

आत्मनां सामान्यतया त्रयो भेदा भवन्ति बद्धो मुक्तो नित्यश्चेति । अयं विभागः शब्दान्तरेण—प्रकृतिसंसर्गवान् ; प्रकृतिसंसर्गप्रध्वंसाभाववान्, प्रकृतिसंसर्गात्यन्ताभाववांश्चेति वक्तुं शक्यते । बद्धमाह—**संसारिण इति** । प्रकृतेः सम्बन्धे जाते जीवः संसरति । ततः सः पुण्यपापादिकं कर्म करोति । तेनैव कर्मणा जीवस्य 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः', इति श्रुत्युक्तं स्वाभाविकस्वरूपं तिरोधीयते । तेन संकुचितज्ञानवान् सः क्लेशकर्मविपाकाशयैर्दूषितान्तःकरणः पूर्वकृतकर्मपरिपाकरूपं सुखदुःखादिकमनुभवति । प्रकृतेः संसर्गादेव सः अनात्मन्यात्मबुद्धिं अस्वे स्वमतिञ्च करोति । प्रकृतिसंसर्गजन्यः संसारः, तज्जन्यैः कर्मभिः देहसम्बन्धः, ततो मिथ्याज्ञानं, तस्मात् कर्माणि, तैश्च देहसम्बन्ध इति चक्रवत् सदा परिवर्तमानोऽनादिः ।

'समाने जीवे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः'

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' ।

इत्यादिषु श्रुतिषु जीवस्य बद्धावस्था वर्णिता ।

बद्धो जीवः स्वकृतपुण्यपापरूपकर्मानुसारेणैव विविधविचित्रसाध्वसाधुरूपां योनिमधिगच्छति । तथा च श्रुतिः—'साधुकारी साधुर्भवति पापकारी पापोभवति, पुण्यः पुण्येन कर्मणा पापः पापेन' 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं, क्षत्रिययोनिं, वैश्ययोनिं वा ; अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' इत्यादिकाः । बद्धजीवैर्गृह्यमाणं शरीरं देव-तिर्यक्-मनुष्य-स्थावरभेदेन जरायुजाण्डज-स्वेदजोद्भिजभेदेन वा चतुर्धा भवति ।

**उच्छिन्नसंसारे**त्यादिना मुक्तान् वर्णयति । मुक्तत्वं नाम-प्रकृतिसंसर्गप्रध्वंसाभाववत्त्वम् । अयमाशयः- 'परिक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' इत्यादि श्रुत्यनुसारेण तापत्रयाभितप्तोजनः यदा संसारान्निर्विण्णो भवति तदा सत्सन्तानप्रसूतसदाचारनिष्ठवेदविदाचार्यस्य सविधे गत्वा श्रवणादिद्वारा ।

'प्राप्यस्य ब्रह्मणोरूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायं फलं चैव तथा प्राप्तिविरोधि च' ॥

इति सच्छास्त्रोक्तरीत्याऽर्थपञ्चकविज्ञानेनात्मपरमात्मस्वरूपं ज्ञात्वा भगवत्प्राप्तिरूपमोक्षस्यावाप्तये तैलधारावदविच्छिन्नस्मृतिसन्तानरूपां साङ्गां भक्तिम् ।

'आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः' ।

इत्युक्तरीत्या प्रपत्तिं स्वीकृत्य एतच्छरीरावसाने प्रारब्धकर्मजन्यशरीरावसाने वा सुषुम्नानाड्या निर्गत्य

'मुक्तोर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुमद्
ग्लौर्विद्युद्वरुणेन्द्रधातृमहितः सीमान्तसिन्ध्वाप्लुतः ॥
श्रीवैकुण्ठमुपेत्यनित्यमजडंस्तस्मिन् परब्रह्मणः
सायुज्यं समवाप्यनन्दति समं तेनैव धन्यः पुमान् ॥

इत्यभियुक्तोक्त्यनुसारेण तैस्तैरातिवाहिकैः तेषु तेषु लोकेषु नीतः तत्र तत्र पूजितः सन् सीमान्तसिन्धुं तीर्त्वा श्रीवैकुण्ठलोकमुपेत्य भगवन्तं श्रियःपतिं साक्षात्कृत्य आविर्भूतगुणाष्टकः भगवच्चरणपरि चरणैकभोगो जीवो मुक्तः ।

**कदाप्यनाघ्रातसंसारा** इत्यादिना नित्यान् वर्णयति प्रकृतिसंसर्गात्यन्ताभाववन्तो जीवा नित्या इत्युच्यन्ते । ते च शेष, शेषाशन-विष्वक्सेनप्रभृतयः सन्ति । तथाहि 'तद्विष्णोः परमं पदं सदापश्यन्ति सूरयः' 'यत्रपूर्वेसाध्याः सन्ति देवाः' इत्यादिषु श्रुतिषु ।

'वैकुण्ठे तु परे लोके नित्यत्वेन व्यवस्थिताः ।
पश्यन्ति च सदा देवं नेत्रैर्ज्ञानेन चामराः' ॥

इत्यादिका स्मृतयश्च नित्यान् वर्णयन्ति । तत्रापि—'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'अस्येशाना जगतो विष्णुपत्नी' 'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी' 'अन्येषुचावतारेषु विष्णोरेषानपायिनी' 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' । इत्यादिकानि वाक्यानि श्रियमुपवर्णयन्ति । भगवतः सर्ववृत्तिषु यथेष्टविनियोगार्हः— 'निवास शय्यासनापादुकांशकोपधानवर्षातपवारणादिभिः शरीरभेदैस्तवशेषतांगतैर्यथोचितं शेष इतीर्यते जनैः' । इत्यादिना वर्णितः अनन्त एवात्र शेषशब्देनाभिधीयते । **शेषाशन**शब्दः गरुडस्य वाचकः मूलस्थेन आदिशब्देन-सूत्रवतीसखः वैकुण्ठसेनापतिः तद्व्यतिरिक्ताश्च अन्ये भगवतो नित्यपरिकरा ग्राह्याः ॥ (व्या.)

**आत्मस्वरूपस्य तमोगुणाभिभवः**—सुषुप्तौ अहमर्थस्यात्मनः तमोगुणेन विविक्तस्फुटभानाभावः ।

तमोगुणाभिभवात् परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽपि आप्रबोधात् अहमित्येकाकारेणाऽत्मनः स्फुरणात् सुषुप्तावपि नाहम्भावविगमः । भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम् । (श्री.भा. I-166)

**तमोगुणाभिभवात्**—सुषुप्तौ स्वकर्मोपात्तत्रिगुणद्रव्यस्थेन तमोगुणेन सविकल्पादि-रूपमनोवृत्तिनिरोधात् ।। (त.टी. 173)

**आत्मस्वरूपस्य देहादिव्यतिरेकनिरूपणम्**—देहेन्द्रिय मनः-प्राण-धीभ्यो विलक्षणः जीवात्मा ।

'देहेन्द्रियमनः प्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी' ॥ (आ.सि. 3)

[देहव्यतिरेकनिरूपणम्]

अल्पपरिमाणत्वे सति ज्ञातृत्वम्, शेषत्वे सति ज्ञातृत्वम्, इत्यादिलक्षण-विशिष्टो जीवः । स तावन्न देहः; प्रत्येकसमुदायचैतन्यादि विकल्पानुपपत्तेः शरीरभेद इवाभिप्रायभेदप्रसङ्गात्, व्यतिरेकप्रत्ययात् सङ्घातत्वादिहेतुभिश्च। अवयविनश्च

न च एतादृशः कश्चित् भ्रमो दृश्यते । कथञ्च सम्पर्के सत्यपि द्वयोर्ज्ञातृत्वमौष्ण्यवत् तात्त्विकमनभ्युपगच्छतस्तदध्यासः ? धर्मधर्मिभावस्य लोके दृष्टत्वात्, इह तदध्यासात् ज्ञातृत्वभ्रम इति चेत्; कुत्र धर्मत्वाध्यासः ? कुत्र वा धर्मित्वाध्यासः ? इति नियामकाभावात् वैपरीत्यमपि स्यात् । क्वचित् धर्मिभेदाग्रहः क्वचित् धर्मभेदाग्रह इति तौ नियामकाविति चेन्न ; ज्ञप्तेः स्वयम्प्रकाशायाः स्वरूपातिरिक्तागृहीतभेदानभ्युपगमात् । अभ्युपगमे वा सधर्मत्वापातात् । भेदाग्रहायोगादेव अहंकाराभिव्यङ्ग्यत्वमपि निरस्तम् । यथाहुर्भगवद्यामुनमुनयः—

'शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः ।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥
व्यङ्क्तृव्यङ्ग्यत्वमन्योऽन्यं न च स्यात् प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे' ॥ इति (न्या.सि.113-121)

[ अतः सिद्धमात्मैव ज्ञाता अहंप्रत्ययविषयः देहादिविलक्षण इति । ]

देवादीनां 'मम देहादय' इति आत्मनो भिन्नतया भानात्, इदन्त्वेन भानात्, आत्मनश्च अहंत्वेन भासमानत्वात्, एतेषां कदाचिद्भासमानत्वात्, कदाचिदभानाच्च, आत्मनः सदा भासमानत्वाच्च, एतेषां बहुत्वात्, आत्मन एकत्वाच्च एतेभ्यो विलक्षण आत्मा इत्यङ्गीकर्तव्यम् । (त. त्र. 15)

तदेतदुक्तं तत्त्वमुक्ताकलापे (71-72-73)

यो मे हस्तादिवर्ष्मेत्यवयवनिवहाद्भाति भिन्नस्स एकः
प्रत्येकं चेतनत्वे बहुरिह कलहो वीतरागो न जातः ।
तत्संघातातिरिक्तेऽप्यवयविनि कथं तेष्वसिद्धा मतिस्स्यात्
संघातत्वादिभिर्वा घट इव तदचित्स्यान्ममात्मेत्यगत्या ॥
स्याद्भासौ चर्मदृष्टेरयमहमिति धीर्देह एवात्मजुष्टे
निष्टप्ते लोहपिण्डे हुतवहमतिवद्भेदकाख्यातिमूला ।

श्रुत्यर्थापत्तिभिश्च श्रुतिभिरपि च नस्सर्वदोषोज्झिताभिः
देही देहान्तराप्तिक्षम इह विदितस्संविदानन्दरूपः ॥
बाह्याक्षेभ्योऽन्य आत्मा तदखिलविषयप्रत्यभिज्ञातुरैक्यात्
कर्तुः स्मृत्यादिकार्ये करणमिति मनो मानसिद्धं ततोऽन्यत् ।
प्राणास्संघातरूपा वपुरुदितनयान्न ध्रुवं चेतयन्ते
ज्ञानं च ज्ञातृधर्मः क्षणिकमपि च वस्तेन नास्यात्मभावः ॥ इति ।

'स्थूलोऽहं कृशोऽहम्' इति पण्डितपामरसाधारणव्यवहारेण देह एवात्मा इति स्वीकरणीयमिति प्रधानपूर्वपक्षः। अत्र 'मम गृहम्' इत्यादाविव 'मम देह' इत्यपि सर्वसाधारणव्यवहारानुरोधेन देहातिरिक्तात्मनः सद्भावोऽङ्गीकरणीयः खलु। चार्वाकमतेऽपि 'मम देहः' इत्यत्र अनुपपत्तिः विद्यत एव। तत्र 'राहोः शिरः' इतिवत् औपाधिकभेदमाश्रित्य उपपत्तिः कल्पनीया।

सिद्धान्तेतु न काप्यनुपपत्तिः। 'मम आत्मा' इत्यत्र का गतिः? इति प्रत्यवस्थाने 'घटस्य स्वरूपम्' इत्यादिवत् प्रयोगः सूपपादः। घटपदं जात्यादिविशिष्टपरम्; स्वरूपं तु विशेष्यमात्रम् इति यथा तत्र भेदः उपपाद्यते, तद्वदेव 'ममात्मा' इत्यत्रापि आत्मपदं विशेष्यभूतस्वरूपपरं, विशिष्टपरोऽस्मच्छब्दः इति विवक्षया भेदप्रतीतिः निर्वाह्या ॥

**आत्मस्वरूपस्य देहपरिमाणत्वभङ्गः**—जीवात्मनां स्वशरीरसमानपरिमाणवत्वनिरासः।

जीवोऽसंख्यातप्रदेशो देहपरिमाण इति हि जैनाः प्रवदन्ति। तत्र हस्त्यादिशरीरे अवस्थितस्य आत्मनः ततो न्यूनपरिमाणे पिपीलिकाशरीरे प्रविशतोऽल्पदेशव्यापित्वेन अपरिपूर्णता प्रसज्यते।

न च सङ्कोचविकासरूपावस्थान्तरापत्त्याऽपि विरोधः परिहर्तुं शक्यते। विकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्गात्।

(ननु सिद्धान्तेधर्मभूतज्ञानस्य संकोचाद्यभ्युपगमे कथं नित्यत्वादि? स्वरूपेणनित्यस्य निरुपाधिकधर्मत्वादितिब्रूमः। तव तु जीवस्वरूपमेव संकोचादि भागिति तस्यालोकस्येवानित्यत्वादिः दुष्परिहर एव।)

जीवस्य यदन्त्यं परिमाणं मोक्षावस्थागतं तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वात् आत्मनश्च मोक्षावस्थस्य तत्परिमाणस्य चोभयोर्नित्यत्वात् तदेवात्मनःस्वाभविकं परिमाणमिति पूर्वमपि तस्मादविशेषः स्यात् । अतो देहपरिमाणत्वमात्मनो न स्यादित्यसङ्गतमेवेदमार्हतमतम् । (श्री.भा. 2-2-32;34 )

तदुक्तं तत्त्वमुक्ताकलापे-(93)

नात्मा देहानुरूपं विविधपरिणतिर्निर्विकारोक्तिबाधात्

स्थूलोऽहं मूर्ध्नि जातं सुखमिति च मतिस्तस्य देहात्ममोहात् ।

नानादेहश्च योगी प्रसजति भिदुरः पुंसि देहप्रमाणे

मुक्तौ देहात्ययात्स्यात्परिमितिविरहस्तत्प्रयुक्तेऽस्य माने ॥

जैनास्त्वाहुः—सर्वाणि द्रव्याणि पर्यायवन्ति, आत्माऽपि द्रव्यम् , अतः सोऽपि तत्तद्भोगायतनानुगुणाणुत्वमहत्त्वादिपर्यायवानिति ; तान् प्रतिक्षिपति—**नात्मेति** । यो यद्भोगायतनवर्ती स तत्समपरिमाण इति नियमस्तावन्न दृष्टः ; न च कल्प्यः, कल्पकासिद्धेरिति भावः । नैगमिकाभीष्टं हेतुमाह—**निर्विकारेति** । वृद्धिह्रासौ देहस्यावेवोच्येते ; आत्मनि तु न क्वचित्, प्रत्युतान्यथा ।

ननु 'स्थूलोऽहं, कृशोऽहम् ' इति सामानाधिकरण्यात्, 'मूर्ध्नि मे सुखम्' इत्यादिना सर्वावयवेषु अहमर्थवृत्तिदर्शनाच्च परिमितिभेदः कल्प्यः इत्यत्राह—**स्थूल इति** । सामानाधिकरण्यं तावत् 'गौरोऽहम्' इत्यादिष्वपि अस्तीत्यनेकान्तम् । देहद्वारैव आत्मनि गौरत्वादिवादः, भ्रमाद्वा ; तथेहापि । देहावयवेषु सुखाद्युत्पत्तिधियश्च देहात्मभ्रमेण । सर्वत्र सन्निधानारोपात् सत्सन्निधानेऽपि भ्रमाङ्गीकारः ।

ननु 'एकां शाखां जीवो जहाति' इत्यादिना छान्दोग्ये जीवस्य वृद्धिसङ्कोचौ श्रूयेते । तन्न ; क्षेत्रादिष्विवाभिमानत्यागेनापि तदुपपत्तेः । तत्र तत्र अभिमानसदसद्भावौ च कर्मनियतौ । खण्डितारोपितशाखाप्ररोहस्तु तादात्विकजीवान्तराभिमानात् । छिन्नजन्त्ववयवविकम्पः प्राणांशक्षोभमात्रात्, न हि तत्र वेदनायां प्रमाणमस्ति । बाधान्तरमाह—**नानादेह इति** । एकस्मिन्नेव काले योगिनां विरुद्ध-

धर्माध्यासेन स्वरूपभेदः प्रसज्येत । प्रसङ्गान्तरमाह—**मुक्ताविति** । देहप्रयुक्ते पुंसः परिमाणे मुक्तिदशायां देहाभावादात्मनः परिमाणविरहः स्यात्, तथा च गुणवद्द्रव्यत्वमेव हीयेत । अपरिमितस्यापि द्रव्यत्वं केचिदिच्छन्तीति चेन्न ; विभुत्वप्रसङ्गादिति ॥ (स. सि.)

**आत्मस्वरूपस्य नित्यत्वाभावशङ्कानिरासः**—जीवस्वरूपस्य नित्यत्वस्थापनम् ।

एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभागि-
त्याम्नातं तेन जीवोऽप्यचिदिव जनिमानित्यनध्येतृ चोद्यम् ।
तन्नित्यत्वं हि साङ्गश्रुतिशतपठितं सृष्टिवादः पुनः स्या-
द्देहादिद्वारतोऽस्येत्यवहितमनसामाविरस्त्यैकरस्यम् ॥ (त. मु. 86)

जीवानां स्वरूपतः सृष्टिसंहृतिविषयत्वमनूद्य दूषयति—**एकमिति** । **जनिमानिति** लयोपलक्षणम् । इदं कतिपयाध्येतुस्तात्पर्यानभिज्ञस्य वा चोद्यम् । साङ्गशब्दः सोपबृंहणपरः । (नित्यत्वे) 'अजो नित्यः शाश्वतोऽयं पुराणः', 'प्रकृतिं पुरुषं चैव' इत्यादिश्रुतिस्मृतिशतमिह भाव्यम् । 'तोयेन जीवान् व्यससर्ज', 'पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' इत्यादिसृष्टिलयवादौ 'ब्राह्मणो जायते' 'क्षत्रियो जायते' (म्रियते) इति अद्यतनजन्मादिवत् निर्वाह्यौ । प्राकृतिकनैमित्तिकसृष्ट्यादावप्यचिदुपष्टम्भेन निर्वाह इहादिशब्दग्राह्यः । **अवहितमनसाम्**—श्रुतितात्पर्यैकाग्रमनसाम् इत्यर्थः ।

(स. सि.)

नित्यत्वं नाम सदा वर्तमानत्वम् सदा वर्तते चेत् जन्ममरणे कथं भवत इति चेत् देहसम्बन्धोजन्म, देहवियोगो मरणम् । (त. त्र. 28)

**आत्मस्वरूपस्य नित्यनिर्लिप्तता**—शुद्धात्मस्वरूपं नित्यनिर्लिप्तम् ।

'आत्मा नित्यनिर्लिप्तः' इति हि शास्त्रं बोधयति । तथात्वे 'प्रकृतिः कर्त्री, पुरुषस्तु पुष्करपलाशवत् निर्लिप्तः' इति सांख्यमतमेव स्वीकृतमिव भाति । तदानीमात्मनः संसारः आरोपित एव स्यादिति विरोधं परिहरति 'निर्लेप' इत्यादिना ।

निर्लेपवचनम् अच्छिद्रतविकाराभावपरम् ? न तु संसारनिबन्धनतापत्रयस्यारोपप्रतिपादन-परम् । (वि. प, 375)

एवंरूपस्य तस्याध्यासमूलो भ्रमोपि न सम्भवति । अध्यासभ्रमयोरपि विकारत्वात्' (प्रथमभ्रमोऽध्यासः ; तन्मूला अन्ये भ्रमशब्दवाच्याः) इति भाष्योक्तदिशा सांख्यमते आरोप एव दुर्निरूपः । अतः स्वतः शुद्धस्यापि प्रकृतिसंसर्गनिबन्धनः संसारः तात्त्विक एव इति भावः ।।

**आत्मस्वरूपस्य निश्चलत्वम्**—आत्मनः विषयान्तरसंसर्गाभावः ।

'यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ।।' (गी. 6–19)

निवातस्थो दीपो यथा नेङ्गते–न चलति ; अचलः सप्रभस्तिष्ठति ; यतचित्तस्य–निवृत्तसकलेतरमनोवृत्तेर्योगिनः—आत्मनि योगं युञ्जतः आत्मस्वरूपस्य सोपमा ; निवातस्थतया निश्चलसप्रभदीपवन्निवृत्तसकलेतरमनोवृत्तितया निश्चलो ज्ञानप्रभ आत्मा तिष्ठति । (गी. भा.)

अयमभिप्रायः—'उपमा' इति दृष्टान्तगतं साधर्म्यमत्र निर्दिश्यते । तस्मात् 'यथा' इत्यनेन सोपमेत्यस्यान्वयः उपपन्नः । प्रभायाश्च प्रतिधर्मोऽत्र ज्ञानम् । आत्मनो निश्चलत्वं चात्र स्वप्रभाभूतज्ञानस्य विविधप्रसरणनिवृत्तिः । सा च बाह्यविषयेषु मनोवृत्तेरेव अभावात् संसारदशायां च ज्ञानस्येन्द्रियद्वारैव प्रसरणादिति । **स्मृता**— समाधिदशासन्दर्शिभिर्योगिभिरिति शेषः ।। (ता. चं.)

**आत्मस्वरूपस्य पञ्चविंशत्वम्**—पञ्चविंशतितमः जीवात्मा । (तत्त्वपरिगणने)

'पञ्चविंशो ह्यात्मा' इत्यादिकाः श्रुतयः ।
भूतानि च कवर्गेण चवर्गेणेन्द्रियाणि च ।।
टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा ।
मनः प्रकारेणैवोक्तं फकारेण त्वहङ्कृतिः ।।

वकारेण भकारेण महान् प्रकृतिरुच्यते ।
आत्मा तु स मकारेण पञ्चविंशः प्रकीर्तितः ॥' (तत्त्वसागरसहिता)

मकारः—' मन ज्ञाने, मनु अवबोधने, मस परिमाणे ' इत्येतेभ्यः कर्तरि भावे च यथायथम् औणादिके क्विप्प्रत्यये बहुलग्रहणेन तस्य डित्वे, टिलोपे सति ज्ञानवाची ज्ञानगुणकवाची, परिमाणवाची च भवतीति ज्ञानरूपः ज्ञानगुणकः अणुभूतो जीवः तेन मकारेण बोध्यते ।

ज्ञाधिकरणे ज्ञानरूपत्वं ज्ञानगुणकता अणुत्वञ्च प्रसाधितानि । अनेन अचेतनभूतचतुर्विंशतितत्त्वापेक्षया अतिरिक्तत्वं जीवस्य प्रादर्शि । पञ्चविंशाति-रिक्तनिषेधपराणां निर्वाहस्तु भगवता व्यासेन मोक्षधर्मेऽभिहितः—

'अन्यश्च राजन् स परः तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः' ॥ इति ।

सूत्रितञ्च—'अवस्थितेरिति काशकृत्स्नः' इति । अत एव 'तं षड्विंशक-मित्याहुः सप्तविंशमथापरे' इति श्रुत्या परमात्मानं षड्विंशं-सप्तविंशमितिच परिगणयन्ति ॥

**आत्मस्वरूपस्य परमात्मापृथक्सिद्धत्वम्**—जीवस्वरूपस्यपरमात्मना यावत्सत्तमसम्बन्धानर्हत्वम् ।

(अपृथक्सिद्धत्वाङ्गीकारेण देहात्मनोरिव आत्म-परमात्मस्वरूपैक्यस्य न प्रसङ्गः ।)

यस्य चेतनस्य यद्वस्थनपृथक्सिद्धविशेषणं द्रव्यं तत्तस्य शरीरम् ।....आधेयत्व-विधेयत्वशेषत्वानि अपृथक्सिद्धेः अवान्तरभेदाः इह विवक्षिताः ॥ (न्या.सि. 102)

[' अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा ' इत्यादिभिः अन्तःप्रवेशपूर्वकनियमनं परमात्मनः श्रुतम् । अनेन शरीरशरीरिभावः द्योत्यते । ' सर्वात्मा ' इत्यस्यैव ' अन्तःप्रविष्टः शास्ताजनानाम् ' इति विवरणम् । अनेन सर्वस्यापि परमात्मापृथक्सिद्ध-त्वेन शरीरत्वं श्रुत्यारूढं भवति । आत्मप्रतिसम्बन्धित्वं हि शरीरत्वम् ।

बृहदारण्यकोपनिषदि 'यस्य पृथिवी शरीरम्' इत्यादिना, 'यस्यात्मा शरीरम्' इत्यन्तेन परमात्मनः जगतश्च शरीरशरीरिभावः स्पष्टं श्रूयते च। द्वाविंशतिवारमभ्यस्त इति सो मुख्य एव। शरीरशरीरिणोरपृथक्सिद्धिश्च सर्वाविगीताच।

किञ्च 'नेह नानास्ति किञ्चन' इत्यनया श्रुत्या जगतः परमात्मनश्च अपृथक्सिद्धिः स्थाप्यते। तथा हि 'विनञ्भ्यां नानाञौ न सह' (पा.सू. 5-2-27) (असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ स्तः) इत्यनेन नानाशब्दस्य पृथग्भूत-मित्यर्थः पाणिनिसूत्रारूढ एव। तथा च इह जगति नाना परमात्मपृथग्भूतं किञ्चन न इति जगतः अपृथक्सिद्धिः स्वरसतः सिध्यत्येव। अनेन आत्मनामपि अपृथक्सिद्धिः बोधिता। अत एव गीयते—नानाशब्दपर्यायेण विनाशब्देन—'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इति।

अत एव—'यत्र हि द्वैतमिव भवति', 'नेह नानास्ति किञ्चन', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति', 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इति भेदनिषेधो बहुधा दृश्यत इति तत् कृत्स्नस्य जगतः ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेन ऐक्यात् तत्प्रत्यनीकनानात्वं प्रतिषिध्यते' इति भाषितम्।

अपि च चिदचिद्विशिष्टब्रह्मस्वरूप एव सर्वेषामन्तर्भावात् तद्बहिर्भूतं किञ्चिदपि नास्त्येवेति विशिष्टाद्वैते न काप्यनुपपत्तिः।

इदञ्चात्मवस्तु गृहक्षेत्रकलत्रादिवत् पृथक्सिद्ध्यादियोग्यं न भवति; किन्तु शरीरवत्तदयोग्यम्। (त त्र 88)

शेषभूतानां वस्तूनां स्थितिः पृथक्सिद्धत्वरूपा-अपृथक्सिद्धत्वरूपेति द्वेधा भवति। येषां शेषिणासहैव सत्ता सिद्धिः उपलब्धिश्च भवति ते तदपृथक्सिद्धाः। ये तथा न भवन्ति ते पृथक्सिद्धाः। अस्मिन् वाक्ये पृथक्सिद्धेभ्यो गृहक्षेत्र-कलत्रादिभ्यः पृथक्त्वसाधनाय इदं च आत्मवस्तु इत्यादिना उक्तम्। दृष्टान्तस्तु देहः। देहो हि आत्मना सहैव सिध्यति उपलभ्यते च। आत्मानं विना क्षणमप्यविकृतं न हि तिष्ठति; देहत्यागसमकालादेव तस्मिन् विकारः प्रारभ्यते।

अत एवायमात्मनः अपृथक्सिद्धः शेषभूतः। गृहादिकमपि आत्मनः शेषभूतम्। अथापि तेषामात्मनः पृथग्भवति स्थित्यादिकम्। अत एव तत् पृथक्सिद्धमिति कथ्यते।

आत्मापि परमात्मनः शरीरत्वात् परमात्मनः अपृथक्सिद्धः शेषः। अत एव आत्मनः परमात्मना सहैव स्थित्यादिकं भवति। (व्या)

**आत्मस्वरूपस्य परस्मात् भेदाभावशङ्कानिरासः**—'परस्माद्ब्रह्मणः आत्मस्वरूपस्य देवादिरूपभेदाभावः ; न तु तयोरैक्यम्।

[स्वरूपैक्यमित्यापातप्रतीतिं व्यावर्तयति]

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति'॥ (वि. पु. 6-7-96)

विभेदः—विविधो भेदः, देवतिर्यङ्मनुष्यस्थावरात्मकः। यथोक्तं शौनकेनापि, 'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः' इति। आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गते सति हेत्वभावादसन्तं परस्मात् ब्रह्मणः आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः। 'अविद्या कर्मसंज्ञाऽन्या' इति ह्यत्रैवोक्तम्। (श्री. भा. I-255)

भेदस्य देवादिरूपत्वे प्रमाणान्तरमाह—**यथोक्तमिति**। **मिथ्याज्ञानम्**—आत्मविषयभ्रान्तिज्ञानम्। तत् कर्मद्वारा उत्तरोत्तरदेवादिभेदहेतुरित्यर्थः। अस्योत्तरार्धम्—'देवतिर्यङ्मनुष्याख्यस्तथैव नृप नारकः' इति। ब्रह्मण इति पदस्य पञ्चम्यन्तत्वसूचनाय **परस्मादित्युक्तम्**। उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तम् ; चशब्दाभावात्। अनन्तरपूर्वश्लोके परमात्मना भवत्यभेदीति परमात्मनः प्रतियोगितया निर्देशाच्च। अत एव समानाधिकरणषष्ठ्यन्तत्वमप्ययुक्तम् ; पूर्वप्रपञ्चितार्थविरोधाच्च। पञ्चम्यन्तत्वं षष्ठ्यन्तत्वं च विपर्ययेण स्यादिति चेन्न ; परब्रह्मणोऽपि हेयार्हत्वापत्तेः स्वाभाविकत्वप्रसंगात्। अतः **परस्मात् ब्रह्मण** इत्युक्तम्। **असन्तम्**—सच्छब्दः परमार्थपर्यायः, 'अनाशी परमार्थश्च' इति अत्रैव

ह्युक्तम्—अनित्यमित्यर्थः। तेन स्वाभाविकनित्यभेदव्यावृत्तिः। अनित्यत्वं कादाचित्कत्वम्। अनित्यत्वात् हेत्वपेक्षो देवादिभेदः। तं कः करिष्यति; न कश्चिदपि। **हेत्वभावात्**—कर्मरूपहेत्वभावादित्यर्थः। न केवलमेकार्थविषये 'बाह्यकर्मवृतिप्रजः', 'अज्ञानकृतो भवेत्', इत्यज्ञानकर्मशब्दयोः प्रयोगादज्ञानशब्दस्य कर्मार्थत्वम्; अस्मिन् प्रकरणे च कण्ठोक्तमित्याह **अविद्या कर्मसंज्ञाऽन्येति ह्यत्रैवोक्तमिति**—आत्मन औपाधिकभेदः उपाध्यपगमे नश्यतीति श्लोकार्थः। उपाध्यभावादविद्यमानं भेदं क उत्पादयेदिति वाऽर्थः।

अयं श्लोको मृषावादिनामत्यन्तास्वरसः, तथा हि—'विभेदजनके' इत्यत्र 'जनक'शब्द उत्पादके स्वरसः; न त्वध्यासहेतौ। **अज्ञान**शब्दस्य अनिर्वचनीयपरत्वं लोकतः शास्त्रतश्च न व्युत्पन्नम्। कर्मवाचित्वव्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता। **नाश**शब्दस्य बाधवाचित्वममुख्यम्। असन्तमिति पदञ्च व्यवच्छेद्याभावादफलम्; सतो भेदस्यानभ्युपगमात्। तदभ्युपगमे हि तत्साफल्यम्। **करिष्यति** इति पदमपि अस्वरसम्; अध्यासवाचित्वाभावात्। (श्रु. प्र.)

आत्मनां ब्रह्मणश्च प्रतीयमानः परस्परभेदः मिथ्याज्ञाननिबन्धन एव। तत्त्वज्ञानेन निरस्ते त्वज्ञाने भेदज्ञानं व्यावर्तिनमतः उभयोः स्वरूपैक्यमेवेति एतच्छ्लोक तात्पर्यमिति परे।

पूर्वापरप्रकरणानुरोधेन कर्मनिबन्धनदेवादिरूपभेद एवात्र नश्यति; न तु स्वरूपगतभेदः इति निरणायि। अत्रैव विष्णुपुराणे जीवब्रह्मणोः स्वाभाविकभेदः पूर्वं स्थापितः। अत्र तु भेदः नास्तीत्युच्यते इति चेत् पूर्वापरव्याहतिरिति भावः।

**आत्मस्वरूपस्य प्रत्यक्त्वादिना भानम्**—प्रत्यक्त्वैकत्वानुकूलत्वविशिष्टतया अहमिति भानम्।

स्वापादिदशास्वपि सविशेषोऽनुभवः अस्तीति पूर्वमुक्तम्। स तु आत्मानुभवः। स च सविशेष एव। (श्री. भा. I–140)

**आत्मानुभवः**—न अनुभूत्यनुभवः। अनुभूतिविरहे स आत्मा निर्विशेषः; स्यात् इत्यत्राह—**स चेति**। प्रत्यक्त्वानुकूलत्वविशिष्ट इत्यर्थः। (श्रु.प्र.)

[अत्रायं विवेक:—प्रत्यक्त्वैकत्वानुकूलत्वविशिष्टतया आत्मनः स्वरूपेण सर्वदा भानम् । नित्यत्वाणुत्वादिधर्मविशिष्टतया तु तस्य सुषुप्तिभिन्नकाले धर्मभूतज्ञानेन भानम् । तत्र प्रत्यक्त्वम्—अहन्त्वम् । (स्वस्मै भासमानत्वम् ।) 'अहं वा, अनहं वा, एकोऽहमनेको वा, अनुकूलो वा प्रतिकूलो वा' इति संशयस्य कदाप्यनुदयात् तेषां त्रयाणां धर्माणां धर्मिणा सदा भानम् । अन्येषां निरूपितस्वरूपविशेषणधर्माणां तु संशयोऽपि कदाचित् भवतीति धर्मभूतज्ञानेनैव भानम् ।

तदुक्तं विरोधपरिहारे—(21) (आत्मगत) मन्दानुकूल्यं [सामान्यतः अनुकूलत्वम्] निर्विकारस्वरूपप्रकाशेनैव सर्वदा भासते । स्वाभाविकतीव्रानुकूल्यं तु अनादिकर्ममूलभगवत्सङ्कल्पविशेषेण तिरोहितं सत् योगादिदशायां (आदिपदेनमुक्तिदशायां) धर्मभूतज्ञानेनैव अनुभूयते इति]

आत्मा हि स्वयं स्वात्मानमेव स्वस्मा एव प्रकाशयति । एवंप्रकाशमानत्वमेव अहंत्वलक्षणं प्रत्यक्त्वम् । अहमिति प्रकाशदशायां अनुकूलत्वमपि सर्वदा स्वस्मिन् भासते, न कदाचिदपि प्रतिकूलत्वमिति सुखरूपत्वम् । कदाचित् क्रोधाद्यावेशदशायां स्वस्यापि स्वरूपं दुःखरूपमिव भासेत । तदेतत् औपाधिकम्, न स्वाभाविकम् । एवमेकत्वमपि सदा भासते । ततश्च प्रत्यक्त्वैकत्वानुकूलत्वानि आत्मस्वरूपान्तर्गतानि धर्मिभास्यानीति निर्णयः । ततश्च स्वस्य परस्य वा कस्यचित्प्रकाशरूपज्ञानपदप्रवृत्तिनिमित्तस्य सत्त्वात् ज्ञानस्वरूपः, ज्ञानगुणकश्च ।

स्वापदशायामपि प्रत्यक्त्वैकत्वानुकूलत्वप्रकारेण स्वानुभवोऽस्ति । स एव संस्कारस्थानापन्नः प्रबोधदशायां सुखमहमस्वाप्समिति प्रत्यवमर्शस्य हेतुर्भवति । अस्मिन् परामर्शे सुखत्वमहंत्वं स्वापः पूर्वकालश्चेत्यर्थचतुष्टयमवभासते । 'मन्दमगच्छं' 'मधुरमगायम्' इत्यादिषु परामर्शेषु गमनगानसमानकालीनमान्द्यमाधुर्यभानवत् स्वापसमकालीने सुखत्वाहन्त्वे भासेते, प्रतीतिस्वारस्यात् । ज्ञानसामान्याभावरूपः स्वापः पूर्वः कालश्च 'प्रातः चत्वरे गजो नास्ति' इत्यादिपरामर्शेषु, 'प्रातस्त्वया किं चत्वरे गजो दृष्टः'? इति प्रश्नानन्तरकालभाविषु यथा. योग्यार्थाननुस्मरणलिङ्गेन गजाभावो

अनुमीयते, चत्वरादिकं संस्कारमहिम्ना भासते ; तथा अत्रापि भासते इति निर्णयः ।

स्वापेऽहन्त्वस्य भाने मामप्यहं न ज्ञातवान् इति परामर्शः कथमिति शङ्कायां ब्राह्मण्यादिविशिष्टदेहादिविषयोऽत्रास्मदुल्लेख इति समाधिः ।. (द.उ. 220-221)

**आत्मस्वरूपस्य शाश्वतधर्मौ**—आत्मनः स्वरूपतः नित्यत्ववत् प्रत्यक्त्वज्ञत्वे ।

द्रव्यं सर्वं हि नित्यं कथितमवयविद्रव्यभङ्गेन पूर्वं
नित्यत्वं सूत्रकारः पुनरपि पुरुषे किं विशिष्याभिधत्ते ।
सत्यं नामान्तरार्हामिह नुदति दशां चेतनस्यानुपाधेः
प्रत्यक्त्वज्ञत्वधर्मौ तदिह नियमितौ शाश्वतौ क्षेत्रिणोऽपि' ॥ (अ.सा. 225)

अयमर्थः—यदा हि जीवः कर्मवशाद्देहसम्बन्धमनियमेन परिगृह्णाति तदा सर्वदापि प्रत्यक्त्वज्ञत्वधर्मौ स्वरूपं न मुञ्चतः । तेन स्वरूपे नामान्तरभजनार्हावस्थावत्त्वाभावाज्जीवस्य नित्यत्वम्, प्राकृतस्य द्रव्यस्य स्वरूप एव नामान्तरभजनार्हावस्थाभाक्त्वादनित्यत्वमिति विभागः । प्रत्येतुः प्रत्येतव्यादव्यतिरेकः **प्रत्यक्त्वम्** । तच्च स्वस्मै भासमानत्वम् । परतः स्वधर्मेण ज्ञानेन स्वस्मैभासमानत्वमिति न्यायवादिनः । वयं तु ब्रूमः—परतः स्वतश्च स्वस्मै भासमानत्वमिति, परतः स्वधर्मभूतज्ञानेन स्वतः स्वात्मनेति । अहमहमितिस्वात्मप्रकाशः स्वरूपेण, अत्र सुप्तोऽहमीदृशोऽहमिति विशेषाकारविशिष्टप्रकाशो धर्मभूतज्ञानेनेति विभागो द्रष्टव्यः । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ज्ञानस्य नित्यत्वेन श्रुतिप्रतिपन्नत्वात् 'यथा न क्रियते ज्योत्स्ना' इति स्मृत्याचोपबृम्हितत्त्वाच्चनित्यत्वमपि सिद्धमेव । अतः प्रत्यग्ज्ञातेति नाम्नोरन्यथाकरणाभावाज्जीवनित्यत्वमिति द्रष्टव्यम् ॥

(चिं. म )

**आत्मस्वरूपस्य सार्वकालिकं भानम्**—अहमित्येकाकारेणात्मनः स्फुरणम् ।

[अहमिति न शब्दानुकारः ; एतद्वाच्यार्थानुकारः । जीवात्मनां सुषुप्तौ अहमर्थस्फुरणमस्तीति साधयितुम् 'वेदान्तावलम्बिभिः सर्वैः स्वयंज्योतिष्ट्वश्रुत्यनुसारात् सुषुप्तावात्मस्फुरणमभ्युपेत्यम् । तत्र, 'नाहं खल्वयमेवं सम्प्रत्यात्मानं जानाति

अयमहमस्मीति' इति श्रुत्या, 'मामप्यहं न ज्ञातवान्' इति परामर्शाच्च नाहमर्थानुभवः । अतोऽनुभूतिस्फुरणमेव तदानीम् इति शंकायामहमर्थस्याविशदस्फुरणमस्तीति सोपपत्तिकं प्रतिजानीते तम इत्यादिना ।]

तमोगुणाभिभवात् परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽपि आप्रबोधात् अहमित्येकाकारेणाऽऽत्मनः स्फुरणात् सुषुप्तावपि नाहम्भावविगमः । भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम् । न हि सुषुप्तोत्थितः कश्चित् अहम्भावविद्युक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठे इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति । एवं हि सुप्तोत्थितस्य परामर्शः, सुखमहमस्वाप्समिति । अनेनैव प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवाऽऽत्मनः सुखित्वं ज्ञातृत्वञ्च ज्ञायते ।

न च वाच्यम्—यथेदानीं सुखं भवति तथा तदानीमस्वाप्समित्येषा प्रतिपत्तिरिति—अतद्रूपत्वात् प्रतिपत्तेः । न चाहमर्थस्याऽऽत्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसन्धानानुपपत्तिः ; यतः सुषुप्तिदशायाः प्रागनुभूतं वस्तु सुप्तोत्थितः, मयेदं कृतम्, मयेदमनुभूतम्, अहमेतदवोचमिति परामृशति ।

एतावन्तं कालं न किञ्चिदहमज्ञासिषमिति च परामृशतीति चेत्—ततः किम् । न किञ्चिदिति कृत्स्नप्रतिषेध इति चेत्—न ; नाहमवेदिषमिति वेदितुरहमर्थस्यैवानुवृत्तेः । वेद्यविषयो हि स प्रतिषेधः । न किंचिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात् । सुषुप्तिसमये त्वनुसन्धीयमानमहमर्थमात्मानं ज्ञातारम् अहमिति परामृश्य, न किञ्चिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने, तस्मिन् काले निषिद्ध्यमानाया वित्तेः सिद्धिम् अनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव, 'न किञ्चिदहमवेदिषम्' इति परामर्शेन साधयंस्तमिममर्थं देवानामेव साधयतु ।

मामप्यहं न ज्ञातवानित्यहमर्थस्यापि तदानीमननुसन्धानं प्रतीयत इति चेत्—स्वानुभवस्ववचनयोर्विरोधमपि न जानन्ति भवन्तः। अहं मां न ज्ञातवानिति ह्यनुभववचने । मामिति किं निषिद्ध्यत इति चेत्—साधु पृष्टं भवता । तदुच्यते । अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते ; अपि तु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य वर्णा-

श्रमादिविशिष्टता । अहं मां न ज्ञातवानित्युक्ते विषयो विवेचनीयः । जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः । स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः । अत्र सुप्तोऽहम् , ईदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः ।

किञ्च—सुषुप्तावात्मा अज्ञानसाक्षित्वेनाऽऽस्ते इति हि भवदीया प्रक्रिया । साक्षित्वञ्च साक्षाज्ज्ञातृत्वमेव । न ह्यजानतः साक्षित्वम् । ज्ञातैव हि लोकवेदयोः साक्षीति व्यपदिश्यते ; न ज्ञानमात्रम् । स्मरति च भगवान् पाणिनिः ; 'साक्षाद्द्रष्टरि संज्ञायाम्' इति साक्षाज्ज्ञातर्येव साक्षिशब्दम् । स चायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत । आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति स्वापाद्यवस्थास्वपि आत्मा प्रकाशमानः अहमित्येवावभासत इति सिद्धम् ।

### मोक्षदशायामपि अहमर्थभानम्

यत्तु—मोक्षदशायामहमर्थो नानुवर्तते—इति ; तदपेशलम् । तथासति आत्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । न चाहमर्थो धर्ममात्रम् ; येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत । प्रत्युत स्वरूपमेवाहमर्थ आत्मनः । ज्ञानं तु तस्य धर्मः ; 'अहं जानामि', 'ज्ञानं मे जातम्' इति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव ।

अपि च यः परमार्थतो भ्रान्त्या वा आध्यात्मिकादिदुःखैर्दुःखितया स्वात्मानमनुसन्धत्ते, 'अहं दुःखी' इति, 'सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते । स साधनानुष्ठानेन यदि अहमेव न भविष्यामीत्यवगच्छेत् , अपसर्पेदेवासौ मोक्षकथाप्रस्तावात् । ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात् । अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्—किमनेन ? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठते

इति मत्वा न हि कश्चित् बुद्धिपूर्वकारी प्रयतते । अतोऽहमर्थस्यैव ज्ञातृतया सिद्धयतः प्रत्यगात्मत्वम् ।

स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते स्वस्मै स्वयं प्रकाशमानत्वात् । यो यः स्वस्मै प्रकाशते, स सर्वः अहमित्येव प्रकाशते ; यथा तथाऽवभासमानत्वेनो-भयवादिसंमतः संसार्यात्मा । यः पुनरहमिति न चकास्ति, नासौ स्वस्मै प्रकाशते, यथा घटादिः । स्वस्मै प्रकाशते चायं मुक्तात्मा । स तस्मादहमित्येव प्रकाशते ।

न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः मोक्षविरोधात् ; अज्ञत्वाद्यहेतुत्वाच्चाहम्प्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवात्मनस्स्वरूपमिति स्वरूपज्ञानरूपोऽहम्प्रत्ययो नाज्ञत्वमापादयति ; कुतः ? ; संसारित्वम् । अपि तु तद्विरोधित्वान्नाशयत्येव ।

ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभव-दर्शनाच्च । श्रूयते हि—'तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य-श्चेति', 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च' इत्यादि । सकलेतराज्ञान-विरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव, 'हन्ताऽहमि-मास्तिस्रो देवताः,' 'बहु स्यां प्रजायेय', 'स ईक्षत लोकान्नु सृजा' इति ।

(श्री.भा. I-166-169)

अहमिति न शब्दानुकारः; अपित्वेतद्वाच्यार्थानुकारः । प्रत्यक्त्वाकारेण स्फुरणादित्यर्थः । एकशब्देन अहम्भावाविगमो विवक्षितः यद्वा **एकाकारेण**—सर्वात्म-साधारणाकारेणेत्यर्थः । प्रत्यक्त्वादिको हि सर्वात्मसाधारणः । सुखदुःखादयो देवत्वादयश्च न हि सर्वात्मसाधारणाः । सुषुप्तौ भासमान आत्मन्यहंभावः साध्यः तथा स्फुरणं हेतुः । विशदावभासाभावादहमर्थस्फुरणं नास्तीत्यत्राह **भवदभिमताया अनुभूतेरपीति**। न केवलमहमर्थस्फुरण एव अवैशद्यदोषः ; अनुभूतिस्फुरणेऽपि स त्वया वाच्यः । अतो विशदावभासाभावात् नास्तित्वं चेत् , ज्ञस्यात्मनोऽपि तदानीं स्फुरणं न स्यात् । 'ज्ञातृज्ञेयोपश्लेषविरहात् स्फुटानवभासः' इति हि तदभ्युपगम इत्यभिप्रायः ।

मृषावादिभिर्बाह्यन्तरैरपि जागरितावस्थायामेव अविशदावभासो निर्विकल्पकेऽङ्गीकृतः । ते यदि विशदावभासाभावादहमर्थास्फुरणं ब्रूयुः, तत्रापि—निर्विकल्पके पृथक्पृथग्वस्तुमात्रावभासाभ्युपगमो नोपपद्यते । अविशदवस्तुमात्रावभासः परैरप्रामणिको निर्विकल्पके स्वीकृतः ; अत्र तु, 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इत्यादिश्रुत्यनुसारादविशदावभासः प्रामाणिकः स्वीकृत इति भिदा । अतः सुषुप्तावात्मस्फुरणाभ्युपगमे अविशदावभासाभ्युपगमे च तुल्येऽपि मृषावादिमतादपि स्वपक्षे प्रमाणानुगुण्यं विवक्षुः परपक्षे प्रमाणाननुगुणत्वं दर्शयति **नहीति** । **अहम्भाववियुक्त अर्थान्तरप्रत्यनीकाकारा**—ज्ञातृज्ञेयादिसमस्तविशेषरहितेत्यर्थः । प्रत्यक्त्वसिद्ध्यर्थं **ज्ञप्तिरहमिति** अत्राहंशब्दोपादानम् । स्वपक्षे परामर्शानुगुण्यमाह **एवं हीति** । अयं परामर्शः सुषुप्तिकाले सुखरूपतयाऽनुभूतात्मगोचरः । अतीतकालसम्बन्ध-स्वापौ तु पूर्वकालानुभूतार्थप्रत्यभिज्ञान-योग्यानुपलब्धिभ्यामनुमेयौ । स्वतोऽनुकूलतयाऽवभासमानस्याहमर्थस्याऽऽनुमानिककाल-स्वापवैशिष्ट्यगोचरप्रत्यभिज्ञाविशेषोऽयं परामर्शः **सुखमहमस्वाप्समिति**........ ।

'सुखमहमस्वाप्सम्' इति परामर्शे 'सुखम्' इत्यनेन तदानीमनुकूलतया भानमनुसंहितं भवति । अहमित्यनेन स्वस्मैभासमानत्वरूपप्रत्यक्त्वं चानुसंहितं भवति । यथा 'मन्दमगच्छम्', 'मधुरमगायम्' इति परामर्शेन पूर्वं गमनगानाभ्यां सह तदानीन्तनं मान्द्यं माधुर्यं चानुसंहितं भवति, तद्वदित्यर्थः । स्वस्मै स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण **सुखित्वमित्युक्तम्** ; स्वस्मै भासत इति भासनप्रतिसम्बन्धित्वरूपप्रत्यक्त्वाभिप्रायेण **ज्ञातृत्वमित्युक्तम्** ; न तु धर्मभूतज्ञानस्फुरणात् । तत्तु, 'विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव ; न सर्वेषां सर्वदा तथैव' इति भाष्यस्वारस्यविरुद्धम् । 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति सूत्रस्वारस्यविरुद्धञ्च । अस्मरणनियमाद्युपपत्तिविरुद्धञ्च । संसारदशायां मनोव्यापारविरहेऽपि ज्ञानस्यात्मविषयत्वम्, 'तच्चेन्द्रियद्वारेण व्यवस्थितम्' इति भाष्यस्वारस्यविरुद्धं च । अन्यथैषां सूत्रभाष्यवचसां संकोचः स्यात् । स च संकोचकाभावादनुपपन्नः ।

तस्मात् तदानीमात्मा प्रत्यक्त्वेनानुकूलत्वेनानुसंहित इति परामर्शफलितार्थः । 'सुखमहमस्वाप्स'मिति सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथमात्मविशेषणत्व-मुच्यत इति चेन्नैवम् । क्रियायाः सुखाश्रयत्वायोगेन पुरुषद्वारा क्रियाविशेषणत्वस्य युक्तत्वादिति । आत्मनस्तदानीं 'न किञ्चिदवेदिषम्' इत्यज्ञानसाक्षित्वेन स्थितिं वदता अज्ञानाश्रयभूताहमर्थानुभवोऽभ्युपगन्तव्यः ; यथा 'प्रातश्चत्वरे गजो नासी'दिति परामर्शे, पूर्वं गजाभावाश्रयभूतं चत्वरमनुसंहितं भवति, तद्वत् । अस्वाप्समिति परामर्शेन 'मन्दमगच्छ'मित्यत्र गमनवत् स्वापोऽपि तदाऽनुसंहितस्स्यादिति चेन्न ; यथा प्रातश्चत्वरे गजो नासीदित्यत्र पूर्वं गजाभावाननुसन्धानेऽप्येवं परामर्शोपपत्तिः, तद्वत् सकलज्ञाननिवृत्तिरूपस्वापस्य तदानीमननुसंहितत्वेप्येवं परामर्शोपपत्तेः । तत्र हि प्रातश्चत्वरमेवानुभूतम्, न गजाभावः ; प्रतियोगिभूतगजास्मरणात् । पश्चात् 'गजः किं स्थितः' इति पृष्टेन योग्यार्थाननुस्मरणलिङ्गेन अभावोऽनुमीयते ; तद्वत् सकलज्ञाननिवृत्तिरूपस्वापोऽपि योग्याननुस्मरणलिङ्गेनानुमीयते । ननु 'सुखमह-मस्वाप्स'मिति परामर्शस्वरूपे सति स्वापादेस्तदानीमननुभवः सुखित्वादेरनुभवश्च कथमुच्यते ? सर्वमप्यनुभूतं स्यात् ; न वा स्यात् । नैतत् । 'सुखमहमस्वाप्स'मित्यत्र यस्मिन्नंशे प्रतीतिस्वारस्यापवादकमस्ति, तद्विषयप्रतिपत्तिस्वारस्यभङ्गेऽप्यनपोदितांश-विषयप्रतिपत्तिस्वारस्यभङ्गायोगात् । तत्र स्वापदशायां योऽर्थो नानुभवितुं शक्यः, तद्विषयप्रतिपत्तिस्वारस्यं भज्यते । यस्तु तदानीमनुभवयोग्यः, तद्विषयप्रतिपत्तिस्वारस्यं तिष्ठत्येव। बाह्यान्तःकरणजन्यसमस्तज्ञानाभावरूपत्वात् स्वापः तदाऽनुसन्धातुं न शक्यते। अनुसन्धानमस्तीति चेत्—स्वाप एव न स्यात् ; ऐन्द्रियकसमस्तज्ञाननिवृत्त्यभावात् । नैवं सुखादेः प्रतिपत्त्यनुपपत्तिरिति यथोक्त एवार्थः । (श्रु. प्र.)

जाग्रदवस्थायाम् 'अहमत्रैवास्मि' इत्यादिव्यवहारानुरोधेन अहन्त्वेन भानमिति सुविदितम् । इदन्तु अन्तःकरणवृत्तिनिबन्धनम् । अन्तःकरणस्यैव अहमर्थत्वम् इति यद्यपि कैश्चिदुच्येत, तथापि सौषुप्तिकानुभवपरामर्शपरे 'सुखमहमस्वाप्सम्' इति प्रत्यभिज्ञाविशेषात् अहन्त्वेनैव (प्रत्यक्त्वेन) आत्मनः भानमङ्गीकरणीयम् । तदानी-मन्तःकरणस्य परमते विनाशात् अहमर्थत्वम् अन्तःकरणस्येति वक्तुं न शक्यते हि ।

अतः सुषुप्तौ श्रुत्याद्यनुरोधेन अनुभवानुरोधेन च आत्मनः सार्वकालिकं स्वरूप-निबन्धनम् अहमिति भानं अप्रतिहतमेव । मुक्तानां परब्रह्मणश्चैवमेवेति च सप्रमाणं स्थापितम् ॥

**आत्मस्वरूपस्य सुखित्वज्ञातृत्वभानम्**—अहमर्थस्यात्मनः अनुकूलत्व-प्रत्यक्त्वभानम् ।

एवं हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति । अनेनैव प्रत्यवमर्शेन तदानीमपि अहमर्थस्यैव आत्मनः सुखित्वं ज्ञातृत्वञ्च ज्ञायते । (श्री-भा. I–167)

स्वस्मै स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण **सुखित्वमित्युक्तम्** । स्वस्मै भासत इति भासनप्रतिसम्बन्धित्वरूपप्रत्यक्त्वाभिप्रायेण **ज्ञातृत्वमित्युक्तम्**; न तु धर्मभूतज्ञानस्फुरणात् । तत्तु 'विषयप्रकाशनवेलाया ज्ञातुरात्मनस्तथैव ; न सर्वेषां सर्वदा तथैव' इति भाष्यस्वारस्यविरुद्धम् । (श्रु.प्र.)

आनन्दरूपत्वञ्च सुखरूपत्वम् । सुप्तोत्थितस्य 'सुखमहमस्वाप्सम्' इति परामर्शदर्शनात् सुखरूप आत्मा भवति । (त.त्र. 24)

आत्मनः सुखरूपतया तस्यानन्दस्वरूपत्वम्। स्वभावत एवानुकूलतया प्रतीयमानता हि आत्मनः सुखरूपत्वे प्रमाणम् । अनुकूलं ज्ञानं सुखमित्याहुरप्याकरग्रन्थेषु। सुप्तोत्थितः पुरुषः परामृशति—'सुखमहमस्वाप्सम' इति । सुषुप्तौ कस्यचन विषयस्य ग्रहणं न हि भवति, आत्मैव सुखरूपेणावभासते । तथैव सुप्तोत्थितः स्मरति। आह च तथा—

'अनुकूलं सुखं दुःखं प्रतिकूलमिति स्थिते ।
स्वात्मा स्वस्यानुकूलो हि आत्मसाक्षिक एव सः ॥

अतः सुखरूप एवात्मा ।

न च 'सुखमहमस्वाप्सम्' इति प्रत्यभिज्ञावाक्यस्य 'इदानीं यथा सुखी तथाऽहमस्वाप्सम्' इत्यर्थः करणीयः 'मन्दमगच्छम्' 'मधुरमगायम्' इत्यादि-प्रतिपत्तीनामर्थस्य तुल्यत्वात् अस्यापि प्रतिपत्तेरर्थस्य । अस्यैवार्थस्य समर्थनं कुर्वन्तः

श्रीभाष्यकारा अप्याहुः—एवं हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति । अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः, सुखित्वं, ज्ञातृत्वं च ज्ञायते । 'आश्चर्यवत् पश्यति कश्चिदेनम्' 'ज्ञानानन्दमयस्त्वात्मा, ज्ञानानन्दैकलक्षणम्' इत्यादिकाः स्मृतयश्चात्मनो ज्ञानानन्दमयत्वं प्रतिपादयन्ति ॥ (व्या.)

**आत्मस्वरूपस्य स्वतः सुखित्वम्**—आत्मा स्वतः सुखी ।

'देहेन्द्रियमनः प्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतस्सुखी' ॥ (आ.सि. 3)

स्वतः सुखी चायमात्मा । उपाधिवशात् संसरति (न्या.सि. 138)

'अयमात्मा सुखी' इत्यात्मविशेषस्य सुखित्वविधाने शरीररहितस्यात्मनः वैषयिकसुखासम्भवात् तादृशसुखोपयुक्तमनुष्यादिपिण्डविशिष्टत्वमर्थतः सिद्ध्यति ।
(श्रु.प्र. I-2-80)

सिद्धान्ते–येन ज्ञानविशेषेण सुखं जायते इति परैरुच्यते, तादृशानुकूलज्ञानविशेष एव सुखम् । एतादृशसुखं स्वरूपानुबन्धी धर्मभूतज्ञानविशेष एव । एतदभिप्रायेण स्वतःसुखीत्युक्तम् । ऐहिकविषयानुभवनिबन्धनसुखन्तु शरीरसापेक्षम् इति व्यासार्याणामाशयः ॥

**आत्मस्वरूपस्य स्वयंज्योतिष्ट्वम्**—आत्मनः स्वयंप्रकाशत्वम् ।

'याज्ञवल्क्य किञ्ज्योतिरयं पुरुष इति । आदित्यज्योतिः सम्राडिति होवाच, आदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । एवमेवैतद्याज्ञवल्क्य ।

अस्तमित आदित्ये........याज्ञवल्क्य ।

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवायं पुरुष इति । आत्मैवास्य ज्योतिर्भवतीति, आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ।

कतम आत्मेति । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुषः ।
(बृ उ. 6-3-2....7)

'योगक्षेमार्थमीश्वरमभिगच्छेत्' इति स्मृत्यनुसारेण कदाचिज्जनकसमीपं याज्ञवल्क्यो गतः । सः याज्ञवल्क्यः मार्गे गच्छन् एवं चिन्तितवान् । किमिति ? किञ्चिदपि अध्यात्मविषये न वक्ष्यामीति । एवं कृतसङ्कल्पोऽपि याज्ञवल्क्यो जनकेन पृष्टं सर्वमपि प्रवक्तुमुपचक्रमे इत्याख्यायिकामाचष्टे। तदानीं जनकश्च वैदेहो याज्ञवल्क्यश्च अग्निहोत्रविषये संवादं कृतवन्तौ । तस्य जनकस्य कर्मविषयकं विज्ञानवैशिष्ट्य-मुपलभ्य परितुष्टो याज्ञवल्क्यः तस्मै 'इष्टं वृणीष्व' इत्यवोचत् ।

सः जनकः 'अपेक्षितांशान् प्रक्ष्यामि तस्योत्तरं दातव्यम्' इति वरं वृतवान् । तं च वरं याज्ञवल्क्यः तस्मै ददौ । तेन वरप्रदानसामर्थ्येन, अनाचिख्यासुमपि याज्ञवल्क्यं तूष्णीं स्थितमपि सम्राडेव प्रथमं पप्रच्छेत्यर्थः ।

प्रश्नमेवाह—**याज्ञवल्क्य किं ज्योतिरयं पुरुषः** इति । किञ्ज्योतिरिति बहुव्रीहिः । अस्य पुरुषस्य आसनगमनकर्मनिवृत्त्यादिसाधनभूतं ज्योतिः किमिति प्रश्नार्थः ।

उत्तरमाह—**आदित्यज्योतिः सम्राडिति होवाच** । याज्ञवल्क्य इति शेषः । हे सम्राट् ! अयं पुरुषः आदित्यज्योतिरिति होवाच याज्ञवल्क्यः। आदित्यो ज्योतिर्यस्य स तथोक्तः । तदुपपादयति—**आदित्येनेति** । आदित्येनैवायं ज्योतिषा **आस्ते** उपविशति, **पल्ययते**—'उपसर्गस्यायतौ' इति लत्वम्, पर्ययते—इतस्ततो गमनं करोति, लौकिकं वैदिकं वा कर्म कुरुते ।

('एवमेव आदित्येऽस्तमिते किं ज्योतिः ? चन्द्रमसि अस्तमिते किं ज्योतिः ? इत्यादिक्रमेण गच्छन् अन्ते आत्मैवास्य ज्योतिरिति उपसंहृतम् । अनेन स्वयंप्रकाशत्वं श्रुतम् ।)

'आत्मैवास्य ज्योतिः' इत्यत्र आत्मज्योतिश्शब्दाभ्यां निर्दिश्यमानपुरुषस्वरूपं

किमिति पृच्छति जनकः **कतम आत्मेति** । हृत्कमलमध्यगतः प्राणशब्दितेन्द्रियमुख्य-प्राणमध्यगः विज्ञानधर्मको ज्योतिश्शब्दितप्रकाशकस्वरूपः पुरुषो जीव इत्युत्तरमाह—**योऽयमिति** । अत्र ' विज्ञानमय ' इति प्राचुर्यार्थमयटा आत्मनो धर्मभूतज्ञानव्यतिरेक उक्तः। **प्राणेष्विति** पृथङ्निर्देशादिन्द्रियमुख्यप्राणव्यतिरेकोऽपि सिद्धः । अत्र ज्योतिश्शब्दितात्मनो ज्ञानस्वरूपस्य विज्ञानमयत्वोक्त्या धर्मभूतज्ञानद्वारा भासकत्वम्, आदित्यादीनामिव तेजोरूपाणां प्रभाद्वारा ज्योतिष्ट्वमिति भावः । (रं.भा.)

सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः ।
सर्वे पदार्थास्तेनात्मा निरपेक्षस्वसिद्धिकः ॥

न हि कश्चित्पदार्थः स्वप्रकाशायासाधारणजातीयार्थान्तरापेक्षो दृष्टः । न खलु घटः स्वसिद्धये घटान्तरमपेक्षते ; अपेक्षते तु विजातीयमालोकादि । एवमालोकोऽपि प्रकाशमानो नालोकान्तरमपेक्षते ; नापि स्वापेक्षप्रकाशं घटादिकमपेक्षते । अपेक्षते तु विजातीयमिन्द्रियम् । एवमिन्द्रियमपि नेन्द्रियान्तरं स्वापेक्षप्रकाशमालोकादि घटं वाऽपेक्षते । अपेक्षते तु विजातीयं संवेदनम् । एवं संवेदनमपि संविदन्तरं स्वाधीनसिद्धिकम् इन्द्रियादिकं वा नापेक्षते स्वसिद्धौ । अपेक्षते तु विजातीयं स्वाश्रयभूतं स्वतन्त्रमात्मानम् । एवमात्माप्यात्मान्तरं स्वाधीनसिद्धिसंविदम् इन्द्रियादिकमपि स्वापरोक्षे नापेक्षत इत्यनन्यापेक्षा ह्यात्मस्वरूपसिद्धिः । (आ.सि. 160)

स्वस्य चास्य स्वयंप्रकाशत्वम् । परस्य तु तज्ज्ञानविषयतयैव प्रकाशते । स्वस्यापि प्रमाणान्तरावसेयाणुत्व-शेषत्व-नियाम्यत्व-नित्यत्वादिविशिष्टरूपेण ज्ञानविषयत्वमस्त्येव । अहमिति प्रत्यक्त्वैकत्वविशिष्टतया तु स्वप्रकाशता सर्वदा । योगदशायां तु यथावस्थितापूर्वाकारविशिष्टतया यौगिकप्रत्यक्षेण साक्षात्क्रियते ।

स्वयंप्रकाशत्वादौ श्रुतिः सुप्रसिद्धा । यद्यपि ' सत्यं ज्ञानम् ' इत्यत्र अन्तोदात्तत्वबलात् ज्ञानकर्तृत्वार्थकत्वमङ्गीकार्यम् । यद्यपि ' विज्ञानघनः ' इत्यत्र रसघन दृष्टान्तस्वारस्यात् ज्ञानव्याप्तत्वं विवक्षितम्, यद्यपि ' विज्ञानं

यज्ञं तनुते ' इत्यादिषु तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् , तथापि ' एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ' इत्यत्र विज्ञानात्मशब्दस्वारस्यात् विशेषतः सामान्यतश्च प्रपञ्चितस्य ज्ञातृत्वस्य पुनर्वचने प्रयोजनाभावाच्च ज्ञानस्वरूपत्वं सिद्धम् । तथा च ' अत्रायं पुरुषः स्वयंज्योतिर्भवति, कतम आत्मा ? योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ' इत्यादिभिश्च स्वयंप्रकाशत्वं स्वरससिद्धमङ्गीकार्यम् । अनुमितिस्तु आत्मा स्वयंप्रकाशः, ज्ञानत्वात् ; धर्मभूतज्ञानवत् , इति श्रीविष्णुचित्तैरुक्तम् । अधीकर्मतया प्रकाशमानत्व-ज्ञानात्मसम्बन्ध-प्रतिसम्बन्धित्वादीनि परम् अबाधितानि वरदविष्णुमिश्रोक्तानि ।

' स्वस्यैव भासको दीपः स्वात्मनोऽन्यस्य च प्रभा ।
एवं भेदोऽस्ति साम्येऽपि ज्ञानयोर्धर्मधर्मिणोः ॥
प्रत्यक्स्वयंप्रभसुखे नित्यं पुंसि व्यवस्थिते ।
अस्वाप्सं सुखमित्यादौ कालाद्यंशेऽनुमास्थितिः ॥
अगायं मधुरं मन्दमगामित्येवमादिषु ।
माधुर्यादिवदत्रापि सुखं भाति तदातनम् ' ॥

ज्ञानस्य सम्बन्धिशब्दतया व्युत्पत्तिमात्रम् , प्रवृत्तिनिमित्तं तु कस्यचित् व्यवहारानुगुण्ये निरपेक्षहेतुत्वम् । तदेव स्वस्येति निरूपितं स्वयंप्रकाशत्वमिति न साध्याविशेषोऽपि । विषयाश्रयवैशिष्ट्यनिर्बन्धो धर्मभूतज्ञाने । धर्मिज्ञानस्यापि विशिष्टत्वात् परमतादतिरेकः । अस्य तु अविनाशित्वे युक्तयः ।

' अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ' इत्यादिना भगवद्गीतायामुक्ताः । व्यञ्जिताश्च तद्भाष्ये । अनित्यत्वेऽस्य अकृताऽभ्यागमकृतविप्रणाशादिप्रसङ्गश्च ।

(न्या.सि. 198–203)

**स्वयंप्रकाशता**—स्वनिरूपितविषयता । **स्वयम्**—स्वनिरूपिता **प्रकाशः**—विषयता यस्य, इति व्युत्पत्त्या स्वयंप्रकाशशब्देन स्वनिरूपितविषयतावतो बोधनात् । तथा च आत्मनिष्ठा स्वनिरूपिता या विशेष्यतारूपा विषयता, सा प्रत्यक्त्वादिसम्बन्ध-निष्ठसांसर्गिकविषयतानिरूपिता इत्युक्तं भवति । प्रत्यक्त्वादीनां धर्मिभास्यत्वपक्षे

तु प्रत्यक्त्वादिनिष्ठप्रकारत्वापृथक्सिद्धिसम्बन्धनिष्ठसांसर्गिकविषयतयोरपि धर्मिनिरूपितत्व-मेवेति बोध्यम् । (र.पे.)

**आत्मस्वरूपस्य स्वयंप्रकाशत्वेऽपि देहात्मभ्रमोपपत्तिः**—अहन्त्वभानस्य देहात्मभ्रम-विरोधित्वशङ्कानिरासः ।

देहादिषु 'स्थूलोऽहम्' इत्यादिभ्रमः आनुभाविकः । अहन्त्वेन सदाभास-मानस्य देहात्मभ्रमः कथं घटेत ? इत्यत्राह—

इदं जीवात्माख्यं तत्त्वं स्वतः सर्वानुभवसिद्धम् । तथाहि—देहेन्द्रियमनः प्राणबुद्ध्यादिषु समुदाये एकदेशे वा अहमित्यात्मबुद्धिः सर्वेषां स्वस्वानुभवसिद्धा । सा भ्रमरूपा । सर्वेष्वपि भ्रमेषु विशेष्यं गृह्यते । तत्र विद्यमानोऽसाधारणो धर्मः न गृह्यते । एवं देहात्मभ्रमेऽपि विशेष्यतया आत्मा प्रकाशते । अतः आत्म-स्वरूपे न विप्रतिपत्तिः । किन्तु शास्त्रेण तद्विवेकः क्रियते ; न त्वज्ञातमात्मस्वरूपं बोध्यते । देहेन्द्रियादिवैलक्षण्यं तु स्वयंप्रकाशत्वं नित्यत्वं नानात्वमणुत्वमनुकूलत्वं प्रत्येकमेकत्वं चेत्यादि । क्वचिदुच्यमानं व्यापित्वमपि निरतिशयसूक्ष्मतया सर्वा-चेतनान्तःप्रवेशयोग्यतारूपव्यापित्वम् । आत्मनोऽनुकूलत्वादेव आत्मत्वेन भ्रमविषये देहे कस्यापि अवस्थायां न प्रतिकूलतयावगतिः । (द.उ. 219)

शुक्त्यादौ रजतादिभ्रमस्थले यथा विशेष्यस्येदन्त्वेन भानेऽपि शुक्तित्वाद्य-साधारणधर्माभानात् भ्रमोपपत्तिः । तथैवात्रापि आत्मनः अहन्त्वेन रूपेण भानेऽपि तस्य तदसाधारणधर्मतया ज्ञानाभावेन भेदाग्रहात् भ्रमः सूपपादः इति भावः ॥

**आत्मस्वरूपस्य स्वातन्त्र्यम्**—जीवात्मनः स्वेच्छानुगुणप्रवृत्तिसामर्थ्ये सति अनिवार्यत्वम् ।

'परात्तु तच्छ्रुतेः' इत्यनेन जीवस्य कर्तृत्वं परमपुरुषाधीनमेव इति साधितम्, तथा च परतन्त्रस्य अस्य स्वातन्त्र्यं कथं योयुज्यते ? इति शङ्कायामाह—

भगवान्-पुरुषोत्तमः अवाप्तसमस्तकामः सर्वज्ञः सर्वेश्वरः सत्यसङ्कल्पः स्वमा-हात्म्यानुगुणलीलाप्रवृत्तः एतानि कर्माणि समीचीनानि, एतानि असमीचीनानीति कर्मद्वैविध्यं संविधाय तदुपादानोचितदेहेन्द्रियादिकं, तन्नियमनशक्तिं च सर्वेषां

क्षेत्रज्ञानां सामान्येन प्रदिश्य, स्वशासनावबोधिशास्त्रं च प्रदर्श्य, तदुपसंहारार्थं च अन्तरात्मतयाऽनुप्रविश्य, अनुमन्तृतया च नियच्छंस्तिष्ठति । क्षेत्रज्ञास्तु तदाहितशक्तयः तत्प्रदिष्टकरणकलेवरादिकाः तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददते । ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैः वर्धयते ; शासनातिवर्तिनं च तद्विपर्ययैः योजयति ॥ (श्री.भा. 2-2-3)

अनेन अमात्यदत्तस्वातन्त्र्यवत् परमात्मना दत्तं स्वातन्त्र्यमिति प्रत्यबोधि ।

**आत्मस्वरूपस्यानन्तत्वम्**—जीवानामसंख्यातत्वम् ।

द्वैतवादिनाऽपि बद्धमुक्तव्यवस्था दुरुपपादा ; अतीतानां कल्पानामानन्त्यादेकैकस्मिन् कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसम्भवादमुक्तानुपपत्तेः । अनन्तत्वादात्मनाममुक्ताश्च सन्तीति चेत्, किमिदमनन्तत्वम् ? असंख्येयत्वमिति चेन्न ; भूयस्त्वादल्पज्ञैरसङ्ख्येयत्वेऽपीश्वरस्य सर्वज्ञस्य सङ्ख्येया एव । तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात् । आत्मनां निस्संख्यत्वादीश्वरस्याविद्यमानसंख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेत्, भिन्नत्वे संख्याविधुरत्वं नोपपद्यते । आत्मानः संख्यावन्तः भिन्नत्वात् ; माषसर्षपघटपटादिवत् । भिन्नत्वे चात्मनाम्, घटादिवत् जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते । (श्री.भा. 2-1-15)

देशकालाद्यपरिच्छेदस्यानन्तशब्देन विवक्षितत्वव्यावृत्त्यर्थ**मसंख्येयत्व**मित्युक्तम् । भिन्नत्वेन संख्यावत्त्वं साधयति—**आत्मान** इति । **माषसर्षपघटपटादिव**दिति । सङ्ख्यावत्तारतम्येऽपि संख्यावत्त्वमविशिष्टमिति भावः । भिन्नत्वे दूषणान्तरं चाह—**भिन्नत्वे चेति** । अत्र व्यतिरेकित्रयं विवक्षितम्—आत्मा न भिन्नः, आत्मत्वात् ; यद्भिन्नं न तदात्मा ; यथा घटादिः । आत्मा न भिन्नः, अजडत्वात् ; यद्भिन्नं न तद्जडम्, यथा घटादिः । आत्मा न भिन्नः, अक्षयित्वात् ; यद्भिन्नं न तदक्षयि, यथा घटादिरिति । (श्रु॰ प्र.)

यत्तु भेदपक्षेऽप्यतीतकल्पानामानन्त्यात् सर्वेषामात्मनां मुक्तत्वेन बद्धासम्भवात् बद्धमुक्तव्यवस्था न संभवतीति ; तत् आत्मानन्त्येन परिहृतम् । यस्त्वात्मनां भिन्नत्वे

माषसर्षपघटपटादिवत् संख्यावत्त्वमवर्जनीयमिति—तत्र घटादीनामप्यनन्तत्वात् दृष्टान्तः साध्यविकलः स्यात् । 'दश घटाः', 'सहस्रं माषाः' इति संख्यावत्त्वं दृश्यत इति चेत्, सत्यम् ; तत्तु न घटादिस्वरूपगतम् ; अपि तु, देशकालाद्युपाधिमद्घटादिगतम् । तादृशं तु संख्यावत्त्वमात्मनामभ्युपगच्छामः । न च तावता सर्वमुक्तिप्रसङ्गः ; आत्मस्वरूपानन्त्यात् । (श्री. भा. 2-1-15)

यथा माषसर्षपादिष्वेकैकजातीया एवानन्ताः, समुदिताश्चानन्ताः ; तथा बद्धाश्चानन्ताः, मुक्ताश्च अनन्ताः, समुदिताश्च सर्वे चेतना अनन्ता इत्यर्थः । सर्वेषामात्मनामेकत्वसंख्या प्रत्येकमस्त्येव । अतो न संख्यावत्त्वमात्रं निषिध्यते । द्वित्वादिसंख्याया अवधिरेव निषिध्यते । अतीतकल्पानामानन्त्यादेकस्मिन् कल्पे एकघटसद्भावेऽपि घटानामानन्त्यं सिद्धमिति साध्यविकलता दृष्टान्तस्य । किं देशकालकर्माद्युपाध्यवच्छिन्ना घटाः सपक्षीकृताः, उत कृत्स्नघटाः ? तत्रानन्तरपक्षे साध्यविकलता । आद्येऽपि देशाद्यवच्छेदप्रयुक्तत्वात् सोपाधिकत्वम् । सपक्षदर्शनानुगुण्येन पक्षेऽपि साध्यधर्मस्य वक्तव्यत्वादुपाध्यवच्छिन्नचेतनानां संख्यावत्त्वं साध्यं स्यात् ; तदा सिद्धसाध्यता । किमेतदण्डान्तर्वर्तिनां चेतनानामवधिमत्संख्यावत्त्वं साध्यम् ? उत सर्वेषाम् ? प्रथमे सिद्धसाध्यता । अन्यत्र धर्मिग्राहकप्रमाणबाधः । अतीताण्डानां तदन्तर्वर्तिनां चेतनानां च सद्भावे प्रमाणं वक्तव्यम् ; नो चेत्, आश्रयैकदेशासिद्धिप्रसङ्गात् । प्रमाणं च शास्त्रम् । तच्च तान् अनन्तत्वेन प्रतिपादयतीति तद्विरुद्धत्वात् कालात्ययापदिष्ट इत्यर्थः। विगीतः कालः सावधिः ; कालत्वात्, माससंवत्सरादिवदिति वक्तुं शक्यत्वेऽप्यतीतकल्पानामानन्त्यं हि शास्त्रबलादभ्युपगतम् । तथा संख्यावत्त्वसाधकहेतोः शास्त्रबाधात् चेतनानन्त्यमभ्युपगन्तव्यमित्यर्थः । दृष्टान्तस्य साध्यविकलत्वं कण्ठोक्तम् ; विकल्पमुखेन सोपाधिकत्वकालात्ययापदेशसिद्धसाधनता अभिप्रेताः । घटसर्षपादिव्यक्तिबाहुल्यानां परस्परं संख्यावधिन्यूनाधिकभावे सत्यपि तथात्वेन तेषामानन्त्यं दर्शयितुं **'दश घटाः', 'सहस्रं माषाः'** इत्युक्तम् । **देशकालाद्युपाधिमदिति** । अत्र आदिशब्देन कर्ता विवक्षितः ; एतत्कुलालनिर्मिता

घटा दशेत्यपि वक्तुं शक्यत्वात् । **आत्मस्वरूपानन्त्यादिति** । देशाद्युपाधिराहित्ये आत्मस्वरूपमात्रस्यासंख्येयत्वादित्यर्थः । (श्रु. प्र.)

(नित्यमुक्तबद्धेति) त्रिप्रकारकाश्चेमे जीवाः पृथक्पृथगसंख्यत्वमावहन्ति । एवं बद्धा अपि असंख्याः, मुक्ता अप्यसंख्याः, नित्या अप्यसंख्याः भवन्तीत्यर्थः । न च भेदवतां घटमाषादीनां संख्यावत्त्ववज्जीवानामपि संख्यावत्त्वं स्वीकर्तव्यमिति वाच्यम्, जीवानां संख्याया अज्ञातत्वात् । न च जीवानां संख्याया अस्माभिरज्ञानेऽपि सर्वज्ञेनेश्वरेण तस्या ज्ञातत्वात् । अन्यथेश्वरस्य सर्वज्ञत्वं प्रच्यवेदिति वाच्यम् । 'यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञतायाः विदुः' इत्यभियुक्तोक्त्यनुसारेणेश्वरोऽपि जीवान् असंख्यत्वेनैवावैति ॥ (त. त्र. व्या. 105-106)

**आत्मस्वरूपे आनुकूल्यभेदः**—मन्दतीव्रानुकूल्यमिति विभागः—

(संसारदशायामात्मगतानुकूल्यं मन्दम् । योगदशायां मोक्षदशायाञ्च तीव्रं भासते तदेतत् उपपादयति ।)

अहमिति प्रत्यक्त्वैकत्वविशिष्टतया तु स्वप्रकाशता सर्वदा । योगदशायां तु यथावस्थितापूर्वाकारविशिष्टतया यौगिकप्रत्यक्षेण साक्षात्क्रियते। तदिदमुक्तमात्मसिद्धौ—

'एवमात्मा स्वतःसिद्ध्यन् आगमेनानुमानतः ।
योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाशते' ॥ इति ॥ (न्या.सि. 199-200)

(विरोधपरिहारग्रन्थे—धर्मिज्ञानेन सर्वदा प्रकाशमानमानुकूल्यम् । तीव्रानुकूल्यं तु भगवत्सङ्कल्पतिरोहिततया योगनिष्पत्तिकैवल्यदशासु धर्मभूतज्ञानमात्रभास्यम् इत्यानुकूल्यद्वित्वस्य आचार्यैरेव समर्थितत्वात् तीव्रानुकूल्यस्य धर्मभूतज्ञानमात्रभास्यत्वमुपपद्यते । )

ननु आत्मस्वरूपज्ञाने भासमानं मन्दानुकूल्यं किं स्वाभाविकं, उत औपाधिकम् ? नाद्यः ; सर्ववस्तूनां मन्दानुकूल्यप्रातिकूल्योदासीनत्वानां कर्मकृतत्वस्य श्रीमद्रहस्यत्रयसारे तत्वत्रयचिन्तनाधिकारे प्रतिपादितत्वात् । न च मोक्षदशायामपि कस्तूरी-

-चम्पककुंकुमाद्यपेक्षया दुर्गन्धलशुनादौ मन्दानुकूल्यं भासत इत्यकामेनापि स्वीकर्तव्यमिति वाच्यम् ; तस्यासम्प्रतिपत्तेः । मुक्तान् ईश्वरं प्रति च सर्वेषामत्यन्तानुकूलतयैवोपलब्धेः ।

किञ्च मोक्षे स्वरूपभूतज्ञानेन मन्दानुकूल्यभानं धर्मभूतज्ञानेन तीव्रानुकूल्यभानञ्च विरुद्धम् । नह्येकमेव वस्तु उत्कृष्टानुकूलतया भासमानं मन्दानुकूलतयाऽपि भासमानं दृष्टम् । नचैकमेव वस्तु दर्शनस्पर्शनाभ्यां आनुकूल्यतारतम्यवत्तया उपलब्धमिति वाच्यम् ; तत्र दर्शनस्पर्शनाभ्यां गृह्यमाणयोः रूपस्पर्शयोरेव आनुकूल्यतारतम्योपलम्भात् । इतरथा सप्तभङ्गया किमपराद्धम् ।

न द्वितीयः ; कर्मकृतमन्दानुकूल्यस्य मोक्षदशाऽव्यावृत्तस्य स्वरूपज्ञानभास्यत्वाऽसम्भवादिति चेदुच्यते ; स्वस्यैव सुषुप्तिदशायां मन्दानुकूल्यभानं तावत् दुरपह्नवम् ।

न च तत् स्वाभाविकमिति शक्यते वक्तुम् ; आत्मनो मन्दानुकूल्यस्वभावत्वानभ्युपगमात् । न च तत् धर्मभूतज्ञानवेद्यम् ; तस्य इन्द्रियाधीनप्रसरणत्वेन सुषुप्तिदशायामसम्भवात् । अतः कर्माधीनमन्दानुकूल्यमात्मस्वरूपाद्भिन्नमपि स्वरूपज्ञानेन भास्यत इति अकामेनापि स्वीकर्तव्यम् ।

मुक्तौ च स्वरूपज्ञानस्य नित्यस्य सत्त्वेऽपि वेद्यस्य मन्दानुकूल्यस्याभावान्न तदुल्लेखः । यथा नित्यस्यापि ईश्वरज्ञानस्य तत्तद्वस्तुवर्तमानत्वविषयकस्य न तदतीतदशायां तदुल्लेख इत्यलमतिप्रसङ्गेनेति ।

अत्रेदं बोध्यम्—धर्मिज्ञानस्य संसारदशायां आनुकूल्यभासकत्वम् , मुक्तिदशायां तदभाव इत्यभ्युपगमे धर्मिज्ञानस्य संसारदशायां विकासः मुक्तिदशायां संकोच इत्यापद्येत । ततश्च तस्यैकरूपत्वसिद्धान्तविरोधः, न हि ज्ञानस्य तत्तद्वस्तुप्रकाशकत्वाभावातिरिक्तः संकोचो नाम कश्चिदस्ति । न चैवंसतीश्वरज्ञानस्य तत्तद्वस्तुवर्तमानत्वविषयकस्य तदतीतत्वदशायां तद्वर्तमानत्वविषयकत्वे भ्रान्तित्वप्रसङ्गेन तदविषयकत्वावश्यंभावात् संकोचप्रसङ्ग इति वाच्यम् ; यत ईश्वरज्ञानस्य सर्वविषयकतया तत्तद्वस्तुनि विद्यमानाः सर्वेऽपि धर्मास्तद्विषया इत्यविवादम् ।

तत्र वर्तमानत्वं शब्दप्रयोगाधिकरणकालवृत्तित्वम् । अतीतत्वं शब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगित्वम् । भविष्यत्वं शब्दप्रयोगाधिकरणकालवृत्तिप्रागभाव-प्रतियोगित्वम् । ततश्चैकवस्तुनिष्ठतत्तत्कालवृत्तित्वम्, तत्तत्कालवृत्तिध्वंसप्रतियोगित्वम्, तत्तत्कालवृत्तिप्रागभावप्रतियोगित्वञ्च ईश्वरज्ञाने सर्वदा विषयः । न हि यद्वस्तुनि यादृशकालवृत्तित्वरूपं वर्तमानत्वं, तद्वस्तुनि तादृशकालवृत्तित्वमीश्वरज्ञानं कदाचिन्न विषयीकरोति । यदा तद्वस्तुनोऽतीतत्वम्, तत्कालवृत्तित्वं तद्वस्तुनः कदाचिदपि नास्तीति तद्वस्तुनि तत्प्रकारत्वमीश्वरज्ञानस्य कदाऽपि नास्त्येव । अतो यद्विषयकत्वमीश्वरज्ञानेऽस्ति, तद्विषयकत्वं तत्र सर्वदा अस्त्येवेति न काचिदनुपपत्तिः ।

किञ्च मुक्तिदशायां मन्दानुकूल्यभानविरहे, मन्दानुकूल्यं निर्विकारस्वरूपप्रकाशेन सदा भासमानम्, तीव्रानुकूलत्वं तु अनादिकर्ममूलभगवत्सङ्कल्पविशेषेण तिरोहितमिति विरोधपरिहारश्रीसूक्तिविरोधः । मुक्तिदशायां तीव्रानुकूल्यभानस्य तच्छ्रीसूक्त्या लाभात् । अतः इत्थं वाच्यम्—आत्मस्वरूपस्य वैषयिकसुखापेक्षया उत्कृष्टसुखरूपत्वं स्वाभाविकाकार इति हि सिद्धान्तसम्प्रतिपन्नोऽर्थः । अनेन च सुखत्वं वैषयिकसुखापेक्षया उत्कर्षश्च इत्याकारद्वयं स्वाभाविकमित्युक्तं भवति । तत्र सुखत्वमात्रं धर्मिस्वरूपेण वा स्वयंप्रकाशतया वा सर्वदा भासते । वैषयिकसुखापेक्षया उत्कर्षस्तु अनादिकर्ममूल-भगवत्सङ्कल्पविशेषेण तिरोहितस्सन् योगादिदशायां धर्मभूतज्ञानेन अनुभूयते । तत्र विरोधपरिहारश्रीसूक्तौ 'मन्दानुकूलम्' इत्यनेन उक्तोत्कर्षाविशेषितं सुखत्वं विवक्षितम् । 'निर्विकारस्वरूपप्रकाशेन' इत्यस्य तादृशसुखत्वस्य धर्मिभास्यत्वपक्षे धर्मिस्वरूपप्रकाशे-नेत्यर्थः । स्वयंप्रकाशत्वपक्षे तु स्वात्मप्रकाशेनेत्यर्थः 'तीव्रानुकूलत्वम्' इत्यनेन अनुकूलत्वशब्दितसुखत्वसमानाधिकरणतीव्रत्वशब्दित उत्कर्ष एव विवक्षित इति न कोऽपि विरोध इति ॥ (र.पे.)

**आत्मस्वरूपाणां भेदकाकारः**—मुक्तौ ज्ञानतः सर्वेषां एकरूपत्वेपि व्यावर्तकाकारः प्रत्यक्त्वं पराक्त्वञ्च ।

'नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्' इत्यादि-श्रुतिभ्यः ईश्वराद्भेदस्यात्मनां बहुत्वनित्यत्वयोश्चाभिधीयमानत्वात् ।

एवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति ज्ञानस्वरूपत्वेन सर्वेषामेकरूपत्वेऽपि भेदकाकारः आत्मयाथात्म्यवेदनक्षमैरवगम्यते । (श्री.भा. 2-3-43)

अत्र नित्यो नित्यानामित्यादिश्रुतिः 'यदाग्नेयोऽष्टाकपालः' इतिवत् विशिष्ट-विधिपरा ; 'तद्गुणास्तु विधीयेरन् अविभागाद्विधानार्थे न चेदन्येन शिष्टाः' इति न्यायात् ।

जीवानां परस्परभेदस्य लोकसिद्धत्वान्न तत् शास्त्रप्रतिपाद्यमिति चेत्, भेदस्य स्वाभाविकत्वमलौकिकम् । तस्मान्नित्यानामेव बहुत्वशास्त्रैकसमधिगम्यमिति जीवानां स्वाभाविकभेदः शास्त्रप्रतिपाद्य एवेति नित्यो नित्यानामिति वाक्यसामर्थ्यं हेतुतयाऽऽह— **ईश्वरादिति** । एवं भेदनित्यत्वे मुक्तौ देवादिभेदकाकाराभावात् कथं भेदो ज्ञायत इत्यत्राह—**एवं नित्यानामिति । ज्ञानस्वरूपत्वेन सर्वेषामेकरूपत्वेऽपीति** । अनेन जीवाद्वैतपरवाक्यानां आकारैक्यपरत्वं दर्शितम् । प्रत्यक्त्वेन—पराक्त्वेन च भेदो गृह्यत इत्यर्थः । (श्रु.प्र.)

एवं सत्यसङ्कल्पत्वात् सङ्कल्पभेदोपि भेदको भवति । मुक्तावपि स्वस्मै एव अहमर्थभानं नान्यस्मै इति भावः ॥

**आत्मस्वरूपात् प्रेरितुः पृथक्त्वज्ञानम्**—जीवात्मपरमात्मनोः वैलक्षण्यज्ञानम् । (मुक्तिसाधनम्)

'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' । (श्वे.उ. 1-6)

[ 'ऐक्यज्ञानस्यापवर्गोपायत्वेन परमार्थविषयत्वात्, तत्रैव तात्पर्यमिति तदानु-गुण्येन श्रुत्यन्तरं नेयम्' इत्यभिप्रायेण चोदयति ।]

ननु च 'तत्त्वमसि श्वेतकेतो तस्य तावदेव चिरम्' इत्यैक्यज्ञानमेव परमपुरुषार्थ-लक्षणमोक्षसाधनमिति गम्यते, नैतदेवम्-'पृथगात्मानं प्रेरितारञ्च मत्त्वा जुष्टस्ततस्ते-नामृतत्वमेति' इति । आत्मानं प्रेरितारञ्च-अन्तर्यामिणं पृथक् मत्त्वा ततः पृथक्त्व-ज्ञानात्-हेतोः तेन-परमात्मना जुष्टः अमृतत्वमेति इति साक्षात् अमृतत्वप्राप्तिसाधनम् आत्मनो नियन्तुश्च पृथग्भावज्ञानमित्यवगम्यते ।

'ऐक्यवाक्यविरोधात्, एतत्, अपरमार्थसगुणब्रह्मप्राप्तिविषयमित्यभ्युपगन्तव्यम्' इति चेत् पृथक्त्वज्ञानस्यैव साक्षादमृतत्वप्राप्तिसाधनत्वश्रवणात् विपरीतं कस्मान्नभवति।

एतदुक्तं भवति– 'द्वयोस्तुल्ययोर्विरोधे सति अविरोधेन तयोर्विषयो विवेचनीयः' इति। कथमविरोधः इति चेत् 'अन्तर्यामिरूपेणावस्थितस्य परस्य ब्रह्मणः शरीरतया प्रकारत्वात् जीवात्मनः, तत्प्रकारं ब्रह्मैव त्वम् इति शब्देनाभिधीयते तथैव ज्ञातव्यम्' इति तस्य वाक्यस्यार्थः। एवंभूताज्जीवात्, तदात्मतयावस्थितस्य परमात्मनो निखिलदोषरहिततया, सत्यसंकल्पत्वाद्यनवधिकातिशयासंख्येयकल्याणगुणाकरत्वेन च, यः पृथग्भावः,–सोऽनुसन्धेयः इति अस्य वाक्यस्य विषयः'। इत्ययमर्थः पूर्वमेवासकृदुक्तः।

'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' इति, 'भोग्यभूतस्य वस्तुनः अचेतनत्वम्, परमार्थत्वम्, सततविकारास्पदत्वम्' इत्यादयस्स्वभावाः–'भोक्तुः जीवात्मनश्च, अमलापरिच्छिन्नज्ञानानन्दस्वभावस्यैव, अनादिकर्मरूपाविद्याकृतनानाविधज्ञानसंकोचविकासौ, भोग्यभूताऽचिद्वस्तुसंसर्गश्च परमात्मोपासनात् मोक्षश्च' इत्यादयःस्वभावाः।

एवंभूतभोक्तृभोग्ययोरन्तर्यामिरूपेण अवस्थानम्, स्वरूपेण च अपरिमितगुणौघाश्रयत्वेनावस्थानमिति परस्य ब्रह्मणः त्रिविधावस्थानं ज्ञातव्यमित्यर्थः। 'तत्त्वमसि' इति सद्विद्यायाम् 'उपास्यं ब्रह्म सगुणम्, सगुणब्रह्मप्राप्तिश्च फलम्' इत्यभियुक्तैः पूर्वाचार्यैर्व्याख्यातम्॥ (वे.सं.214-218)

ननु 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति आत्माधिकरणन्यायेन 'अहं ब्रह्मास्मी'त्येवोपासनं मुक्तिसाधनमिति निरधारि। प्रकृते तु पृथक्त्वज्ञानं मुक्तिसाधनमित्युक्तिः कथं घटेत इति चेत्—

अत्र समाधीयते—'अथ योऽन्यां देवतामुपास्ते, अन्योऽसौ अन्योऽहमस्मीति। न स वेद; अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत' इति अन्यत्वानुसन्धाननिषेधपूर्वकमात्म-

त्वानुसन्धानं विहितम् । अहमिति स्वात्मतयानुसन्धानात् अन्यत्वानुसन्धाननिषेधो रक्षितः । स्वशरीरात् स्वात्मनः अधिकत्वानुसन्धानवत् स्वात्मनोऽपि परमात्मनः अधिकत्वानुसन्धानात् पृथक्त्वानुसन्धानविधानं च रक्षितम् । इत्यात्मत्वाधिकरण भाष्योक्तेः 'मदपेक्षया परमात्माऽन्यः' इत्युपासने 'अन्योऽसौ अन्योऽहमस्मि' इति निषेधस्यावकाशः आपतति । अतः तथा नानुसन्धीयते । 'अह'मित्यनुसन्धाने तु जीवपरमात्मनोः आत्मशरीरभावः अन्तर्गत एव । तन्निबन्धनमेवात्र अहंत्वेनानुसन्धानम् ; न तु स्वरूपैक्यनिबन्धनम् । श्रुतौ 'आत्मेत्येवोपासीत' इति श्रवणेऽपि देहात्मभावस्थले शरीरप्रतिसम्बन्धिनः आत्मनः लोके अहन्त्वेनैव हि अनुसन्धानम् । तद्वत् सर्वशरीरप्रतिसम्बन्धिनः सर्वात्मभूतब्रह्मणोऽपि अहन्त्वेनैवानुसन्धानं योयुज्यते । अत्र तु आत्मशरीरभावे आत्मनः शरीरस्य च पृथक्त्वं निराबाधम् । पृथक्त्वाभावे आत्मशरीरभाव एव न घटते इति पृथक्त्वम् आत्मत्वं च परस्परं सुघटितमेवेति बोध्यम् ॥

### आत्मस्वरूपाविर्भावस्य पुरुषार्थत्वसमर्थनम्—

[आत्मस्वरूपस्य यथावस्थितस्य योगसाक्षात्कारेण अनुभूतत्वात् मुक्तौ अपूर्वांशाभावात् स्वरूपाविर्भावस्य पुरुषार्थत्वं नास्तीति शङ्कां वारयति—]

प्रायस्स्वस्मिन्स्वदेहिन्यनघगुणनिधौ तद्विभूतिद्वये वा
दृष्टं यत्स्यात्समाधौ भवति पृषतवत्तद्धि मुक्तानुभूतेः ।
कृत्स्नं तच्छर्करौघव्यतिकरितसुधासिन्धुवत् स्वादुभूतं
तस्मात्स्वात्मप्रकाशे न फलमिति वदन् कूपकूर्मो घृणार्हः ॥ (अ.सा. 522)

अत्र कश्चिच्चोदयति 'वेदान्तवादिनामात्माविर्भावो मोक्ष इति सर्वसम्मतम् । तथा च यथा चिन्मात्रब्रह्मवादिनामपूर्वद्रष्टव्याभावात् पुरुषार्थाभावः, तथा भवतामपि सम्पद्याविर्भाव इति नित्यस्वयम्प्रकाशात्मस्वरूपाविर्भावस्य पुरुषार्थत्वं वदतां पुरुषार्थाभावोऽविशिष्टः, यद्यपि जीवातिरिक्तः परमात्मा द्रष्टव्यतया भवद्भिरङ्गीक्रियते सोऽपि

योगदशायां दृष्ट एव ; तथा च मोक्षदशायां विशेषतो द्रष्टव्याभावात् पुरुषार्थाभाव इति समानमेतत्' इति । तदेतत्प्रतिक्षिपति—**प्राय इति** ।

अयमर्थः–जीवस्वरूपसामान्यमहमिति सर्वलोकविदितम् । तथापि स जीवो विभुर्वा अणुर्वा भगवच्छेषभूतो वा अन्यशेषो वा ; स्वतन्त्रो वा , परतन्त्रो वा ; ज्ञानरूपो वा ; जडरूपो वा ; ज्ञानगुणको वा ; निर्गुणो वा ; आनन्दात्मको वा ; आनन्दस्वरूपो वा ; स च क्षणिकसन्तानमात्र, उत स्थिरः ; स्थिरत्वेऽप्यामोक्षस्थायी अथवा अनुदयास्तमयस्स च कल्पितो वा अकल्पितो वा ; भिन्नो वा ; अभिन्नो वा ; भिन्नाभिन्नो वा ; इति वहुधा बम्भ्रम्यमाणैर्वादिभिरन्यथान्यथा अभिधानादनवधारित-स्वरूप एव । तथा च तत्स्वरूपं भगवच्छेषत्वादिना मुक्तिदशायामेव विशेषतोऽव-लोक्यते । आस्तामिदं जीवस्वरूपं नेदमेवास्माकं मुक्तिदशायां प्रकाश्यम् ; अपि तु तदन्तर्यामी पुरुषोत्तमः । तदिदमाह—**स्वदेहिनीति** ।

'यस्यात्मा शरीरम्' 'अन्तःप्रविष्टश्शास्ता जनानाम्' इति निगमशत-निगदितेन सर्वशरीरत्वेनावगन्तव्यः । तत्स्वरूपमपि श्रवणदशायां यावदवगम्यते ; न तावदेव मननदशायाम् । यच्च मननदशायामप्यवगम्यते न तावन्मात्रमेव निदिध्यासनदशायाम् । यच्च निदिध्यासनारम्भे यमनियमासनप्राणायामप्रत्याहाराद्यव-स्थायामवलोक्यतेऽतोऽप्यधिकमेव किञ्चित्समाधिदशायाम् । यदुच्यते 'तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' इति, अत्राप्यपहतपाप्मत्वादिगुणाष्टका-विर्भावे सत्यपि समाध्यवस्थावलम्बनीयं सकलमपि सौख्यं वैकुण्ठवासिनो देवीभूषणायुध-परिजनपरिच्छदादिसकलविशेषणविशिष्टस्य सर्वतः परिवृढस्य 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति विभूतिद्वयाधिपत्येन निर्णीतस्य भगवतोऽनुभवसिन्धौ पृषतलवायते । तेनोभयविभूतिविशिष्टपरब्रह्मानुभूतेरुत्तरकालभावित्वेन पुरुषार्थत्वं युज्यत इति भावः ।

ननु पूर्वं दुःखत्वेन दृष्टमेव पश्चादपि दृश्यते कथं तस्य पुरुषार्थत्वमित्याशंक्याह—**कृत्स्नमिति** । भगवद्विभूत्यन्तर्गतं वस्तु स्वभावतः प्रतिकूलमेव किञ्चिन्नास्ति ; अपि तु, पित्तोपहतस्य क्षीरमिव कर्मानुबन्धादेतावन्तं कालं प्रतिकूलतया भाता सेयं

विभूतिः, नित्यविभूतेस्तु भानमेव नाभूत् परञ्ज्योतिरुपसम्पन्नस्य तु सा चेयञ्च विभूतिद्वयं भगवच्छेषत्वानुसन्धानाविर्भावेन निरतिशयसुखात्मकतया भाति । तत्र दृष्टान्तमाह—**शर्करेति** । **विभूतिद्वयमत्र सुधासिन्धुः शर्करौघः** पुनरपहत-पाप्मत्वादिगुणाष्टकविशिष्टो भगवान् । अथवा भगवानेव **सुधासिन्धुः** अपहत-पाप्मत्वादिगुणाष्टकपूर्वकाप्राकृत-देवीभूषणायुधपरिजनपरिच्छददेशविशेषादयश्‍**शर्करास्था**-नीयाः । तथा च सकलविशेषणसम्पन्नस्य श्रीनिवासस्य भगवतो वैकुण्ठवासिनो-ऽनन्तगरुडविष्वक्सेनादिभिरन्तरङ्गपरिकरैरनवरतसेव्यमानस्य नित्यसेवाहेवाकिनामस्माकं पुरुषार्थाभावमनुवदन्नत्यन्ताप्रसिद्धदेशवासित्वादशेषप्रमाणविशेषानुपलम्भेन **कूपोदरकूर्म** इत्यपहसन्त्याचार्याः । तस्मादति**घृणार्हः** कृपायोग्यः । अनर्थप्रवणजनाः खल्वात्म-विद्भिरनुग्राह्याः स्मर्यते हि—

> ' आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् ।
> सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम् ' ॥ इति ॥ (चिं.म.)

तथा च पूर्वमननुभूतविभूतिद्वय सकलकल्याणगुणदिव्यमङ्गळविग्रहविशिष्टपरब्रह्मानु-भवाविर्भावप्रदर्शनेन पुरुषार्थत्वं समर्थितम् ॥

**आत्मस्वरूपे ज्ञाप्याकारः**—जीवात्मस्वरूपे प्राधान्येन ज्ञाप्यं देहातिरिक्तज्ञानैकाकारत्वम् , भग-वच्छेषतैकरसत्वं च ।

जीवात्मनः स्वयमसङ्कुचितापरिच्छिन्ननिर्मलज्ञानस्वरूपास्सन्तः, कर्मरूपाविद्या-वेष्टिताः, तत्तत्कर्मानुरूपज्ञानसङ्कोचमापन्नाः ब्रह्मादिस्तम्बपर्यन्तविविधविचित्रदेहेषु प्रविष्टाः, तत्तद्देहोचितलब्धज्ञानप्रसराः, तत्तद्देहात्माभिमानिनः, तदुचितकर्माणि कुर्वाणाः, तदनुगुणसुखदुःखोपभोगरूपसंसारप्रवाहं प्रतिपद्यन्ते । एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यते इति । तदर्थं प्रथममेषां देवादिभेदरहितज्ञानैकाका-रतया सर्वेषां साम्यं प्रतिपाद्य, तस्यापि स्वरूपस्य भगवच्छेषतैकस्वरूपैकरसतया भग-वदात्मकता प्रतिपाद्यते । ( वे. सं. 194–196)

भक्तियोगनिष्ठस्यापि तन्निष्पत्त्यर्थं तदङ्गत्वेन प्रपत्तेरपेक्षितत्वात् ; प्रपत्तिनिष्ठस्य स्वतन्त्रतया उपायत्वाच्च **प्रपत्तिमन्तरेण नोपपद्यते** इत्युक्तम् ।

न हि देहस्यैवात्मत्वे मोक्षोपायापेक्षा ? देहातिरिक्तत्वेऽपि भगवच्छेषतैकरसत्वे सिद्धे हि तत्प्राप्त्यपेक्षा । तस्मात् प्रथमज्ञाप्यं देहातिरिक्तज्ञानैकाकारत्वं भगवच्छेषतैकरसत्वं चात्मन इत्यर्थः ॥ (ता.दी.)

**आत्मस्वरूपे तारतम्योपपत्तिः**—अणुभूते जीवस्वरूपे तारतम्यभावेऽपि धर्मभूतज्ञाननिबन्धनं तारतम्यम् ।

'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तयातिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल तारतम्येन वर्तते' ॥ (वि. पु. 6-7-61, 66)

[भावरूपमविद्या चेत्–तिरोधानम् । तिरोधानभूतया तया स्वरूपभूतप्रकाश–नाशः प्रसजेत् ; विशिष्टाद्वैतिनां तु अविद्यारूपेण कर्मणा धर्मभूतज्ञान-प्रकाशः सङ्कुचितः । तेन देवादिरूपात्माभिमानो भवतीति धर्मभूतज्ञाननिबन्धनं तारतम्यं न स्वरूपतः इत्युपपादयति ।]

स्वरूपस्य प्रकाशरूपत्वात् प्रकाशनिवृत्तिरूपं तिरोधानं स्वरूपनाशः स्यात् परमते । विशिष्टाद्वैतिनां मते तु आत्मधर्मभूतज्ञानसङ्कोचः तिरोधिरिति धर्मिस्वरूपस्य ज्ञानस्य च नित्यत्वमुपपद्यते । तेन सङ्कोचेन भ्रमविरोध्याकाराग्रहणात् भ्रमोऽपि उपपद्यते इत्यर्थः ।

ननु भ्रमविरोध्याकारो नाम असाधारणधर्मः । आत्मनो असाधारणबुद्धिसुखे-च्छादयो गृह्यन्ते इति भ्रमो नोपपद्यत इति चेन्न, असाधारणधर्मस्य भ्रमविरोधित्वे द्वय-मपेक्षितम् । स्वरूपज्ञानम्, असाधारणत्वेन ज्ञानं च । शुक्तित्वादयोऽपि अन्यत्र

असाधारणत्वेन ज्ञाता एव हि भ्रमविरोधिनः ! अध्यासात् असाधारणत्वाग्रहणम्, असाधारणत्वाग्रहणात् अध्यासः इति परस्पराश्रयो न दोषः स्यात् बीजाङ्कुरन्यायात् इति । एवं तर्केणैव परिहार उक्तः । स्वोक्ता तर्कसरणिः प्रमाणानुसारिणी इति दर्शयति—**अविद्या कर्मेति। तारतम्येन वर्तते** इत्यनेन ज्ञानस्य सङ्कोचविकासौ सिद्धौ ।

न हि अणुमात्रस्य स्वरूपस्य तारतम्यम् । तस्मात् धर्मभूतज्ञानद्वारकमेव आत्मनः तारतम्यमिति । ज्ञानद्वारकत्वं च तत्रैव उपरितनश्लोकैः विवृतम् ।

(ता.दी. 119-120)

आनन्दतीर्थीयास्तु जीवानां परस्परमत्यन्तसूक्ष्मतया स्वरूपे एव तारतम्यमङ्गीकुर्वन्ति । अत एव ते आनन्दतारतम्यवादिनः; आनन्दस्य स्वरूपाभिन्नत्वादिति विमर्शकाः अभिप्रयन्ति ॥

**आत्मस्वरूपे नित्यसंसारित्वादिभेदः**—व्यक्तिविशेषे नित्यसंसारित्वम्; सर्वेषामपि मुक्तियोग्यतेति मतभेदः ।

[कतिपयजीवानां मुक्तियोग्यता नास्त्येव । ते नित्यसंसारिणः इत्येकः पक्षः । सर्वेषामविशेषेण मुक्तियोग्यता वर्तते इत्यपरः पक्षः । द्वितीयपक्षे एव स्वाभिसन्धिञ्च द्योतयति ग्रन्थकारः ।]

स्वतस्सुखी च अयमात्मा । उपाधिवशात् संसरति । स द्विधा—संसारी असंसारी चेति । पुण्यपापादिमान् पूर्वः । तच्छून्यः इतरः । पूर्वोऽपि द्विधा-नित्यसंसारी भाविसंसारविरहश्चेति । तत्र इतःपूर्वमनन्तकल्पेष्विव परस्तादपि हेत्वनागमनात् संसाराविच्छेदसम्भवात् पूर्वः । मानं तु लीलाविभूतिनित्यत्वोक्तिः । 'क्षिपाम्यजस्रम्, न क्षमामि कदाचन' इत्यादिकमपि तदुत्तम्भकम् ।

केचित्तु—'विलम्बातिरेकपराणि तानि; न तु कस्यचिदपि नित्यः संसारः । अविरुद्धयोः असंसर्गस्य कालविप्रकर्षनियमेन व्याप्तेः । अन्यथा मोक्षसाधने 'स किमहम्'? इति सन्देहात् अप्रवृत्तिप्रसङ्गात्' इति वर्णयन्ति ।

इतःपूर्वमनागतैतच्छरीराद्युपनिपातवत् , तद्धेतूपनिपातात् भाविसंसारविरहोपपत्तिः । प्रमाणञ्च ब्रह्मविदो मोक्षवचनानि । (न्या.सि. 138–139)

सर्वस्यापि जन्तोरनादौ कालचक्रे कदाचित् मोक्षहेतूपनिपातावश्यम्भावेन नित्यसंसारिणोऽसम्भव इत्याशङ्क्याह— **इतः पूर्वमिति** । 'निश्शेषात्मापवर्गे विरतविरहिणो विश्वकर्ता तदा स्यात्', ततश्च 'अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः' इत्यादिप्रमाणविरोधः स्यादिति भावः । अविरुद्धयोर्यत्र असंसर्गनियमः । स **कालविप्रकर्षेण** व्याप्तः, यथा–पटकुङ्कुमरागयोः । **कालविप्रकर्षो** भिन्नकालत्वम् । प्रकृते च भिन्नकालभूतत्वाभावात् जीव-मुक्तिकारणयोः संसर्गोऽवश्यंभावीत्यर्थः ।

अयं भावः—न तावत् जीवमुक्तिहेत्वोर्भावाभावयोरिव स्वभावविरोधः, येन तयोः असन्निधाननियमः स्यात् । नापि हिमवद्विन्ध्ययोरिव भिन्नदेशत्वनियमः । ततश्च अविरुद्धयोः जीवमुक्तिहेत्वोरसन्निधानस्य कालविप्रकर्षव्याप्तत्वात् नित्ये च जीवे कालविप्रकर्षाभावात् न असन्निधाननियम इति ।

ननु जीवविशेषो मोक्षहेतुविरुद्धोऽस्तु इत्याशंक्याह–**अन्यथेति**। **अप्रवृत्तीति**— किमहं मोक्षस्वरूपयोग्यो वा ? नित्यसंसारी वा ? इति शङ्कायां मोक्षोपायानुष्ठानादौ प्रवृत्तिर्न स्यादित्यर्थः ।

ननु इतःपूर्वम् अनन्तेष्वपि कल्पेषु अज्ञाता मोक्षोपायसिद्धिः इतःपरं कथमुत्पद्यताम् ? ततश्च कस्यापि मुमुक्षा नोत्पत्तुमर्हतीत्याशंक्य—

'कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे
तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा' ॥

इति श्लोकार्थमभिप्रयन्नाह—**इतः पूर्वमिति** । **मोक्षवचनानीति**—इतरथा 'ब्रह्मविदाप्नोति परम्' इत्यादीनामनुष्ठापकत्वाभावेन जरद्गवादिवाक्यतुल्यत्वं स्यादिति भावः (टी) ।

तदेतदुक्तं तत्त्वमुक्ताकलापेऽपि— (97)

‘ कश्चिच्चेन्नित्यबद्धः किमयमहमिति स्यान्मुमुक्षोरुपेक्षा
मैवं युक्तस्य मुक्तिर्भवति दृढमिति प्रत्ययात्तत्प्रवृत्तेः ।
नो चेत्स्यामन्त्यमुक्तः किमहमिति न केऽप्यद्य मुक्तौ यतेरन्
सर्गस्थित्यादिसन्तत्यविरतिरत इत्येवमेकेऽन्यथाऽन्ये’ ॥

इह सयूथ्याः परे च केचिदाहुः–इतःपूर्वमिव कारणाभावात् केचित्पश्चादपि न मोक्ष्यन्ते । ‘एकं पादं नोद्धरति स्वलीलार्थं समुद्धरंस्तं चेत्’, ‘सततं च मृत्युजन्मनाऽमृतं भवेत्’, ‘क्षिपाम्यजस्रमशुभान्....मामप्राप्यैव’ इत्यादिभिरेतत्सिद्धम् । तस्मिन् पक्षे बाधकं शङ्कते—**कश्चिदिति** । सन्देहेऽपि प्रवृत्तिस्सम्भवतीत्यभिप्रायेण प्रतिवक्ति—**मैवमिति** ।

अयं भावः—

स्वरूपे योग्यभावेऽपि सहकार्यव्यवस्थितेः ।
विमुक्तिर्मम सिध्येद्वा न वेति विचिकित्सते ॥
अनिर्धार्यापि यः कश्चित्तथ्यमात्ममनोरथः ।
पाक्षिके फलभूयस्त्वे सांयात्रिकवदीहते ॥
यथाकथञ्चिदारब्धेऽप्यापवर्गिकवर्त्मनि ।
प्रसीदन्नीश्वरो बुद्धिं प्रयच्छेन्निश्चलामिति ॥

उपायविधानशास्त्रार्थनिश्चयात् स्वस्य च तदानुगुण्यदर्शनात् निस्संशयोऽपि कश्चित्प्रवर्तेतेत्याह—**युक्तस्येति** । अन्यथा कथञ्चिन्निष्फलप्रयत्नोऽप्यस्तीति निश्चयात्स किमहमिति कृष्यादावपि न प्रवर्तेत इति भावः । नो चेदित्यादिनाऽपि प्रतिबन्द्यन्तरोक्तिः । स्वात्मन्यमुक्तत्वशङ्कायामपि कृतांशः फलिष्यत्येवेति शास्त्रतोऽवगमात् प्रवर्तेत इति चेत्; एवं नित्यबद्धसद्भावनिश्चयेऽपि स्वयं निवृत्तिधर्मयोग्यतया दृष्टः कृतमपि फलिष्यतीति किं न प्रवर्तेत ? एवं नित्यबद्धे सम्भवति ‘अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा’ इत्यादिशास्त्रस्यार्थवत्त्वसिद्धिरित्याह—**सर्गेति** । अयमेव सिद्धान्त इति निश्चयव्युदासायाह—**इत्येवमेके** इति । पक्षान्तरमाह—**अन्यथाऽन्य** इति।

स्वरूपयोग्यानां शुकादिवत् कदाचित् सहकार्यागमान्मुक्तिः स्यादेव, 'तदा संसारपान्थस्य याति मोहश्रमः शमम्' इत्यादेः सङ्कोचकाभावादिति भावः । (स.सि.)

'निश्शेषात्मापवर्गे विरतविहरणो विश्वकर्ता तदा स्यात्
नित्यं चेत्कोऽपि दुःख्येन्निरुपधिकदयाहानिरस्येति चेन्न ।
पक्षः पूर्वो यदि स्याद्विहरणविरतिः स्वेच्छया नैव दोषः
शिष्टे पक्षे निरुद्धा निरुपधिकदया कुत्रचिन्नित्यमस्तु' ।। (त.मु. 98)

द्वयोरपि पक्षयोर्दोषमाशंक्य प्रत्याह—**निश्शेषेति** । उत्तरार्धे पक्षद्वयदोषपरिहारार्थम् । पुरुषान्तरप्रतिरोधादिना लीलाविरतौ हि दोषः; न तु स्वेच्छया, प्रवृत्तिवन्निवृत्तेरप्यैच्छिकत्वात् । क्वचिन्नित्यं दयारोधोऽपि, तत्तज्जीवकर्मवशात् । अतः प्रतिबन्धरहितेषु सावकाशा कृपा, अल्पव्याजेनानन्तापराधसहनाच्च । (स.सि.)

एवमाचार्यैः पक्षद्वयमुपपादितम्; अथापि 'अन्यथाऽन्ये' इत्युक्त सर्वमुक्तिपक्षे एव नैर्भर्यं ज्ञायते—

आरम्भणाधिकरणभाष्ये तु जीवानामानन्त्यं (असंख्यातत्वं) स्थापितम् । एतदनुरोधेन सर्गस्थित्यादिव्यापाराणामविरतिः इत्येव गम्यते । परं तु कतिपयजीवानां नित्यसंसारित्वमेव, कदाचिदपि तेषां मुक्तियोग्यता नास्त्येव इति नियमः श्रीभाष्यकाराणामनभिमत एव । जीवसामान्यस्यापि मुक्तियोग्यता वर्तत एव । पुण्यपरिपाकवशात् यदा तत्साधनसम्पत्तिः, तदा मुक्तिः भविष्यत्येवेत्याशयः ।

अत एव श्रूयते—

'सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्' (श्वे.उ. 3-17)
'निवासः शरणं सुहृत् गतिः नारायणः' इति । (सुबा. 6)

एवमेवोपबृंहितमिदं गीतासु—

'पिताहमस्य जगतो माता धाता पितामहः ।
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्' ।। इति ।

**आत्मस्वरूपे वृद्धिसंकोचाभावः**—जीवात्मस्वरूपस्य वृद्धिक्षयाभावः ।

ननु 'एकां शाखां जीवो जहाति', 'अथ सा शुष्यति' इत्यादिना छान्दोग्ये जीवस्य वृद्धिसंकोचौ श्रूयेते ; तन्न, क्षेत्रादिष्विवाभिमानत्यागेनापि तदुपपत्तेः । तत्रतत्राभिमानसदसद्भावौ च कर्मनियतौ । खण्डितारोपितशाखाप्ररोहस्तु तादात्विकजीवान्तराभिमानात् । छिन्नजन्त्ववयवविकम्पः प्राणांशक्षोभमात्रात्, न हि तत्र वेदनायां प्रमाणमस्ति । (स.सि. 93)

एवं च धर्मभूतज्ञानसंकोचविकासनिबन्धन एव जीवसंकोचविकासव्यवहारः इति भावः ।

**आत्महा**—आत्महन्ता ब्रह्मज्ञानहीनः ।

(आत्मानं हतवान् इत्यर्थे हनः कर्तरि क्विप् ।)

'ये के चात्महनो जनाः' (ई. उ. 3)

**आत्महनः**—'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' इत्याम्नातामसत्कल्पतां स्वात्मानं नयन्तः ; देहपातमुखेन । पातकवर्गोपलक्षणमिदम् । (वे.भा.)

ब्रह्मज्ञानहीनाः काम्यकर्मादिनिष्ठा इत्यर्थः । (कू. भा.)

आत्मानं घ्नन्ति, नाशयन्तीत्यात्महनः स्वस्वरूप परस्वरूपयाथात्म्याज्ञानविपरीतज्ञानाभ्यामात्मानम् 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' इत्युक्तमसत्कल्पत्वलक्षणं स्वरूपनाशं प्रापयन्तः । श्रुत्यन्तरैकार्थ्यात् प्रकरणानुरोधाच्चाज्ञत्वलक्षणमात्महन्तृत्वमेवेह विवक्षितम् । (श्री.रं.भा.)

**आत्महिंसनम्**—देहवियोगः ।

प्रायश्चित्तविशेषेषु सर्वस्वारादिकेषु च ।
नात्महिंसनदोषोऽस्ति तथाऽऽर्तशरणागतौ ।। (सं.वि. 267)

यथा प्रायश्चित्तविशेषेषु, सर्वस्वाराख्यकर्मणि च शास्त्रविहितत्वात् आत्महिंसनं न दोषाय ; तथैव मोक्षार्थम् आर्तप्रपत्तावपीति भावः । यथा च सामान्यतो

हिंसानिषेधेऽपि हिंसाविशेषस्य कर्तव्यतोक्तिः; न च तत्र शास्त्रभेदः तद्वत् अत एव एकादश्याद्युपवासेनापि नात्महिंसा ।

**आत्मा—1.** सर्वान्तःप्रविश्य नियन्ता परमात्मा ।

[अततीत्यात्मा । अत सातत्यगमने इत्यतः 'सातिभ्यां मनिन्मनिणौ' (उ.सू. 592) इति सूत्रेण कर्तरि मनिण्प्रत्ययः । नियन्तृतया आप्नोतीत्यात्मेति भाष्योक्तेः 'आप्लृ-व्याप्तौ' इत्यस्मादपि 'उणादयो बहुलम्' इत्यनेन मनिन् प्रत्यये पकारस्य तकारादेशश्च ।

'अन्तःप्रविष्टः शास्ता जनानाम् सर्वात्मा' (तै.आर. 3-11)

अत्र श्रुतौ 'सर्वात्मा' इति व्याख्येयम्, 'अन्तःप्रविष्टः शास्ता' इति विवरणपरमिति श्रुतप्रकाशिकाचार्याः । स्वाभाविकज्ञानाधिकरणं ज्ञानरूपं चात्मा । स द्विविधः, जीवात्मा परमात्मा चेति । प्रकरणानुरोधेन तत्र तत्र विशिष्य व्यपदिश्यते । परमात्मनः विभुत्वं सर्वशेषित्वम् । जीवस्य तु स्वरूपतः अणुत्वेऽपि मुक्तिकाले परमात्मसङ्कल्पात् धर्मभूतज्ञानस्य विकासो जनिष्यति ।]

'आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किञ्चन मिषत्' ॥
(ऐ.उ. 1-1)

भोग्यभोगस्थान-तदुपकरणविलक्षणप्रत्यगात्म-तदात्मभूतपरमात्मस्वरूपप्रतिपादनाय इन्द्रादिपदानामपि हेयत्वप्रदर्शनाय च प्रकरणमारभ्यते—**आत्मा वा इति** । इदं जगत् सृष्टेः प्राक् एक आत्मैवासीत् । 'तमः परे देव एकीभवति' इत्युक्तरीत्या परमात्मना अविभक्ततमोवस्थमेवासीत् इत्यर्थः । ब्रह्मादिषु जगत्कारणभूतेषु सत्सु कथमेक एवासीत्? इत्युच्यते—**नान्यदिति** । **किञ्चन**—किमपि । निर्व्यापारमेवासीत् । अनेन करणकलेबरादिराहित्यमभिप्रेतम् । 'एको ह वै नारायण आसीत् । न ब्रह्मा, नेशानः' इत्यादिश्रुत्यर्थोऽनुसन्धेयः ॥ (रं.भा.)

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावः तस्मादात्मेति कथ्यते' ॥ (लिङ्ग. पु. 96)

आप्नोति, आदत्ते, अत्ति, अततीति आत्मा । आप्तिः–यथार्थज्ञानं व्याप्तिश्च । आदत्ते-कारणात् कार्यमाविर्भावयति ; आराधनञ्च कर्म प्रतिगृह्णाति । अत्ति–भुङ्क्ते, संहरति । अतति–सततमस्ति, नित्य इति ; सर्वदा रक्षणायावतरति वा इत्यात्मा परमात्मा । (टी.)

2. जीवात्मा ।

' देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ' ॥ (आ.सि 3)

देह इति । निरूपणीयतया उपक्षिप्तेषु घटकीभूत आत्मा देहादितो विलक्षणः स्वयंप्रकाशः नित्यः सूक्ष्मतया सर्वत्राचिद्वस्तुनि व्याप्तिक्षमः प्रतिशरीरं भिन्नः आनन्द-स्वभाव इत्यर्थः । (व्या.)

[ अनेन देहेन्द्रियमनःप्राणधीभ्यो विलक्षणः स्वाभाविकानन्दरूपः आनन्द-गुणकश्च जीवात्मा इति बोधितम् । ]

*यच्चाप्नोतीत्यादिवचनं जीवपरतयापि योजयितुं शक्यम्—*

तत्तच्छरीरमात्रं नियन्तृतया आप्नोति, भोग्यान् आदत्ते, अत्ति—तान् भुंक्ते, सन्ततोभावश्च । अस्य भावः–धर्मः ज्ञानं, सन्ततः व्यापकः इत्यनेन धर्मभूतज्ञानस्य मुक्तौ व्यापकत्वात् तन्निबन्धनमेवाणोरप्यात्मनः व्याप्तिरिति ॥

3. शरीरम् ।

' आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुर्मनीषिणः ' (क.उ. 3-4)
' आत्मैवास्य कर्म । आत्मना हि कर्म करोति ' । (बृ उ, 3-4-17)

अत्रात्मशब्दः शरीरपरः । (रं. भा.)

'आत्मना हि कर्म करोति ' इति कर्तारं प्रति साधनतया तृतीयया निर्देशात् आत्मशब्दः साधनपरः । ' शरीरमाद्यं खलु धर्मसाधनम् ' । चेष्टाश्रयत्वं च शरीर-लक्षणमिति शरीरं कर्मेति निर्दिश्यते । (टि.)

4. बुद्धिः ।

'एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना' । (गी. 3-43)

**आत्मानम्**—मनः, **आत्मना**—बुद्ध्या कर्मयोगेऽवस्थाप्य (कामरूपं शत्रुं जहि ।)
(गी. भा)

5. मनः ।

'दशेमे पुरुषे प्राणाः, आत्मैकादशः । (बृ.उ.5-9-4)

**आत्मा**—मन इत्यर्थः । (रं. भा.)

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ (गी. 6-5)

आत्मना—मनसा । (गी. भा.)

6. स्वरूपम् ।

'मृदात्मको घटः' इत्यादिव्यवहारात् ।

7. मध्यमो देहभागः ।

'अपान उत्तरः पक्षः । आकाश आत्मा' (तै.आन. 26)

*आकाशस्थितः समानाख्यो वायुः प्राणविशेष एव आत्मा ; मध्यस्थत्वात् मध्यमाङ्गस्य आत्मत्वश्रवणात् । (आ.भा.)*

1. अहङ्कारः 2. चित्तम् 3. देहान्तर्गत आकाशः 4. सङ्कल्पः 5. स्वभावः 6. हृदयम् 7. स्वम् ॥ (वि.को.)

**आत्मात्मीयभरन्यासः**—स्वस्वरूपस्य स्वीयरक्षणभरस्य च परमात्मनि समर्पणं—प्रपत्तिः ।

'आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते' (ल.तं. 17-18)

परमपुरुषचरणारविन्दयुगलन्यस्तात्मात्मीयः । (वे.सं. 227)

भगवति न्यस्त भरत्वमाह—**परमेति** । (ता. दी.)

एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यत इति । (वे.सं. 196)

भक्तियोगनिष्ठस्यापि तन्निष्पत्त्यर्थं, तदङ्गत्वेन प्रपत्तेरपेक्षितत्वात्, प्रपत्तिनिष्ठस्य स्वतन्त्रतयोपायत्वाच्च प्रपत्तिमन्तरेण नोपपद्यत इत्युक्तम् । (ता. दी)

त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहम् ।
प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥ (स्तो.र. 60)

**प्रपन्नश्च**—' त्वत्पादमूलं शरणं प्रपद्ये ' इति यथा हृदयमहृदयं वा भावित-भरन्यासः । (र.रक्षा)

तदुक्तमाचार्यपादैः न्यासदशके—(1-2-3-4-10)

' अहं मद्रक्षणभरो मद्रक्षणफलं तथा ।
न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः' ॥
न्यस्याम्यकिञ्चनः श्रीमन्ननुकूलोऽन्यवर्जितः ।
विश्वासप्रार्थनापूर्वमात्मरक्षाभरं त्वयि ॥
स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधिया स्वार्थं स्वस्मिन्न्यस्यति मां स्वयम् ॥
श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः ।
एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥
श्रीमान्नियतपञ्चाङ्गं मद्रक्षणभरार्पणम् ।
अचीकरत्स्वयं स्वस्मिन्नतोऽहमिह निर्भरः ' ॥ इति ॥

अत्रानुसन्धाने स्वार्थमिति फलसङ्गत्यागः, ख्यातिलाभपूजार्थत्यागश्च । स्वयं न्यस्यतीति स्वकर्तृत्वत्यागः, ' उपायतां परित्यज्य न्यसेद्देवे तु तामभीः ' इति यामुनमुन्युक्तदिशा स्वभरत्वेन न्यासे उपायत्वबुद्धित्याग इत्येते अर्थाः अत्रानुसंहिता भवन्ति । अत्र स्वयमिति मातुः स्तनन्धये इव चेतनरक्षणे तस्य रतिः व्यज्यते । तस्माद्रक्षापेक्षादिकं स्तनन्धयस्य स्तन्यपानव्यापारवदपेक्षणीयमेवेति सूच्यते इति सारविवरणीकाराः ।

' त्राणे स्वामित्वमौचित्यं न्यासाद्याः सहकारिणः ।
प्रधानहेतुः स्वातन्त्र्यविशिष्टा करुणा विभोः ' ॥

इत्युक्तदिशा त्राणे परमात्मनः निर्हेतुककृपैव प्रधानम् । तस्याः भक्तिप्रपत्त्यन्यतरं सहकरोति । भक्तियोगनिष्ठस्तु आप्रयाणं भक्तियोगं कुर्यादेव । तादृश रक्षणभरं

परमात्मन्येव न्यस्यतां प्रपन्नानां तत्स्थाने स्वयमेव स्थित्वा रक्षको भवति। तदुपरि स्वरक्षणार्थं स्वव्यापारं भक्तियोगनिष्ठे इवात्र नापेक्षते। अत एव 'सिद्धोपायनिष्ठाः' इति न्यस्तभराः व्यवह्रियन्ते। भक्तियोगनिष्ठानामपि परमात्मैव करणम्। यद्व्यापारादनन्तरमव्यवधानेन क्रियासिद्धिः (फलसिद्धिः), तदेव 'साधकतमं करणम्' इति महाभाष्यकारनिर्णयात्। तथा च प्रसन्नः भगवानेव करणमिति न भरन्यासस्य भक्तेर्वा करणतेति प्रपत्तेरनुपायत्ववादः प्रववृते इति भावः।

अत एवाभिहितमाचार्यपादैः रहस्यत्रयसारे सिद्धोपायशोधनाधिकारे—

प्रसादनस्योपायत्वे शास्त्रीयेऽपि फलं प्रति।
कर्तृत्वाव्यवधानाद्यैः सिद्धोपायप्रधानता॥
स्वतन्त्रन्यासनिष्ठानां सिद्धोपाये विभौ स्थितिः।
पश्चात् स्वयत्नविरतिव्यक्त्यै प्रोक्ता विशेषतः॥
अतो यदर्थं स्वभरः सिद्धोपाये निवेशितः।
तदर्थं शान्तयत्नोऽसौ सिद्धोपायं प्रतीक्षते॥
भाष्यादौ संप्रदाये चोपायत्वं ब्रह्मणि स्थितम्।
अतः श्रीराममिश्राद्यैः भरन्यासविवक्षया।
स्वप्रवृत्तिनिवृत्त्यंशः प्रपत्तिरिति लक्षितः॥
अकृते तु भरन्यासे रक्षापेक्षणमात्रतः।
पश्चात् स्वयत्नविरतिः न प्रसिद्ध्यति लोकवत्॥
आकिञ्चन्यभरन्यासोपायत्वप्रार्थनात्मनाम्।
त्रयाणां सौहृदं सूक्ष्मं यः पश्यति स पश्यति॥ इति॥

तथा चाव्यवहितसाधनं भक्ति-प्रपत्तिभ्यां प्रसन्न ईश्वर एवेति सर्वसंप्रतिपन्नम्। एतेन प्रसादद्वारा मुक्तिहेतुत्वं भक्तेरिव प्रपत्तेरप्यव्याहतमेवेति च बोद्धव्यम्—एतच्च पूर्वोक्ततात्पर्यदीपिकायां स्पष्टम्।

**आत्माद्वैतम्**—जीवब्रह्मैक्यम् ।

[ब्रह्मैकमेव उपाधिभेदेन जीवानां भेदः इति पूर्वपक्षे, सर्वं ब्रह्मापृथक्सिद्धमिति पृथक्सिद्धभेदस्यैव निषेधात् जीव-ब्रह्मणोः भेदेऽपि शरीरशरीरिभावनिबन्धनसामानाधिकरण्येन सर्वमात्मैवाभूत्, इति नानुपपन्नमिति स्थापयति ।]

'यत्र हि द्वैतमिव भवति, तदितर इतरं जिघ्रति, तदितर इतरं पश्यति, तदितर इतरं शृणोति, तदितर इतरमभिवदति, तदितर इतरं मनुते, तदितर इतरं विजानाति । यत्र वा अस्य सर्वमात्मैवाभूत्, तत् केन कं जिघ्रेत्, तत्केन कं पश्येत्, तत्केन कं शृणुयात्, तत्केन कमभिवदेत्, तत्केन कं मन्वीत, तत्केन कं विजानीयात्' ॥

(बृ.उ. 4–4–14)

**यत्र**—यस्यामवस्थायाम्, **हि**—प्रसिद्धम्, **द्वैतमिव भवति**—स्वनिष्ठतया परमात्मनः पृथगिव भवति इत्यर्थः । स्वतन्त्र इव भवतीति यावत् । स्वातन्त्र्यस्याप्रामाणिकत्वद्योतनार्थं इवशब्दः । **तत्**—तस्यां दशायाम्, **इतरः**—परमात्मनो भिन्नात्मकः; पृथक्सिद्ध इति यावत्, **इतरम्**—भिन्नात्मकं परमात्मनः पृथक्सिद्धं विषयं पश्यति । अत्र इतरेणेत्यध्याहार्यम् । उत्तरत्र, 'तत् केन किं जिघ्रेत्' इति दर्शनात् । **इतरेण**—स्वतन्त्रेण करणेन जिघ्रतीत्यर्थः । अत्र 'जिघ्रति, पश्यति, शृणोति, मनुते, विजानाति' इत्युक्तं सर्वज्ञानेन्द्रियवृत्त्युपलक्षणम् । तत्र 'मनुते' इति मनोवृत्तिरुक्ता, 'विजानाति' इति बुद्धिवृत्तिरिति तयोर्भेदः । 'अभिवदति' इत्युक्तो वागिन्द्रियव्यापारः सर्वकर्मेन्द्रियव्यापारोपलक्षणार्थं इति द्रष्टव्यम् ।

**यत्र**—यदा, **अस्य**—जीवस्य सर्वं वस्तु, **आत्मैवाभूत्**—परमात्मापृथक्सिद्धमेकात्मकमेवाभूत्, तदा **केन**—भिन्नात्मकेन करणेन, **कम्**—भिन्नात्मकं विषयं जिघ्रेदित्यर्थः । अत्र कः इत्यध्याहार्यम्; 'तदितर इतरं पश्यति' इति पूर्वमुक्तत्वात् । **कः**—भिन्नात्मकः स्वतन्त्रः कर्ता जिघ्रेदित्यर्थः । अत्र **किंशब्दः** **इतरशब्दश्च** सर्वत्र स्वतन्त्रतत्प्रतिक्षेपपरः। अत्र सदैकात्मकस्य जगतः कालभेदेन भिन्नाभिन्नात्मकत्वयोः

परमात्मपृथक्सिद्ध्यपृथक्सिद्धिरूपयोरसम्भवात् **आत्मैवाभूत्** इत्यस्य एकात्मकत्वेन ज्ञानमभूदिति, **द्वैतमिव भवति** इत्यस्य भिन्नात्मकत्वेन ज्ञातं भवति इति चैवार्थो वक्तव्यः। तथा च यस्यात्मभेदप्रतीतिः कियत्यप्यस्ति, तस्य कर्तृ-कर्म-करणेषु भिन्नात्मकत्व-प्रतीतिरनुवर्तते। यस्यात्मभेदप्रतीतिर्यदा सर्वथा नास्ति, तदा विरुद्धधर्मवत्तत्त्वाप्रतीतेः कर्तृ-कर्म-करणेषु भिन्नात्मकतया प्रतीतिः सर्वथा नास्तीति पर्यवसितोऽर्थः। (रं.भा.)

'यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।
तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः'॥ (ई. उ. 7)

आकृतिव्यक्त्योरिव गुणगुणिनोरिव चात्यन्तभिन्नयोरेव जगद्ब्रह्मणोरेकत्वं विभागानर्हसम्बन्धविशेषं पश्यतः विशदतममनुध्यायत इत्यर्थः। 'रामसुग्रीवयोरैक्यं देव्येवं समजायत' इत्यादिष्विव इहाप्येकशब्दस्य सम्बन्धविशेष एवार्थो विवक्षितुं युक्त इति भावः। एवञ्च सत्याह—**सर्वाणि भूतान्यात्मैवाभूदिति**—परमात्मैव सर्वभूतशरीरकः प्रतीतोऽभूदित्यर्थः। **तत्र**—तदा प्रणिधानसमये, **को मोहः**—स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न सम्भवति। **कः शोकः**—परमात्मविभूतितयावगते सर्वस्मिन् निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादेरपि न कश्चिच्छोकः स्यादित्यर्थः। यथाह—

'अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन।
मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यते'॥ इति॥

अत्र केचित् 'सर्वाणि भूतान्यात्मैवाभूत्' इति बाधार्थे सामानाधिकरण्यम्, तथा चात्मैव सर्वाणि भूतानि, आत्मव्यतिरिक्तानि सर्वाणि न सन्ति इत्यर्थः। यथा 'चोरः स्थाणुः' इति; 'स्थाणुरेवायं न चोरः' इति हि तस्यार्थः, तथेहापीत्यर्थः।

अन्ये तु 'नरपतिरेव सर्वे लोकाः' इतिवदौपचारिकमिदं सामानाधिकरण्यम्, 'नरपत्यधीनास्सर्वे जनाः' इति हि तत्र निर्वाहः, तद्वदिहापि परमात्माधीनानि सर्वाणि भूतानीति भावं वर्णयन्ति।

अपरे तु 'घटशरावादयः सर्वे मृत्पिण्ड एव' इतिवत् जगद्ब्रह्मणोरेकद्रव्यत्वं परिकल्प्यैवेदं सामानाधिकरण्यं निर्वाह्यमित्याचक्षते ।

सिद्धान्तस्तु—'देवोऽहं मनुष्योऽहम्' इत्यादिवत् शरीरात्मभावसम्बन्धेनैव जगद्ब्रह्मसामानाधिकरण्यनिर्वाहे सम्भवति सति बाधोपचारस्वरूपैक्यपक्षाः वैदिकैः बहिष्कार्याः—इति । (कृ. भा.)

'कृत्स्नस्य जगतः तदात्मकतां च प्रतिपाद्य, 'एवंभूतब्रह्मात्मकस्त्वमसि' इति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात्' इति भाष्येण (परोक्त) आत्माद्वैतपक्षे प्रबुद्धस्य गुरोः भ्रान्तिसिद्धं शिष्यं प्रति उपदेशानुपपत्तिः सूच्यते । (त टी. 192)

तदुक्तं तत्त्वमुक्ताकलापे—(४०)

नित्यान् भिन्नांश्च जीवान् कथयति निगमः तद्धि नोपाधितः स्यात्

आत्माद्वैतश्रुतीनां इतरहृदयता तत्रतत्रैव सिद्धा ॥ इति ॥

ननु—'अयमात्मा ब्रह्म', 'तत्त्वमसि' इत्यादिभिर्जीवब्रह्मतादात्म्ये सिद्धे भेदस्यौपाधिकत्वं ग्राह्यमित्यत्राह—**आत्माद्वैतेति** । अयं भावः—शरीरशरीरिभावेन सामानाधिकरण्यं स्थापयिष्यते । आस्तामेतत् । यथा यूपादित्यसामानाधिकरण्यं प्रत्यक्षविरोधादन्यपरं, तथेहापि स्वरूपैक्यविधानं तावदशक्यमिति । **तत्रतत्रेति** वीप्सायाः क्वचिद्विशिष्टवृत्तिः क्वचिदुपचार इत्यादितात्पर्यभेदस्सूच्यते ॥ (स. सि.)

अत्र चेदमवधेयम्—'यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं विजानीयात्' इति बृहदारण्यकोपनिषद्वाक्यं कृत्स्नमेकार्थकमिति मन्वानाः परिणामाद्वैतिनः भर्तृप्रपञ्चादयः द्वैताद्वैतवादमातिष्ठन्ते स्म । यत्र त्वित्याद्युत्तरभागमेव प्राधान्येनावलम्बमानाः विवर्ताद्वैतवादिनस्सर्वेऽपि सत्यताद्वयं प्रकल्प्य निर्विशेषचिन्मात्रस्य पारमार्थिकसत्यतामातस्थिरे । नवीनास्तु (आनन्दतीर्थीयाः) 'यत्र हि' इत्यादिपूर्वभागमेव प्रधानं मन्वानाः जगद्ब्रह्मणोः अभेदनिषेधपरतां प्रकल्पयन्तः द्वैतवादमातिष्ठन्ते स्म ।

विशिष्टाद्वैतवादिनस्तु—पूर्वोक्तमतत्रयमपि न श्रुतितात्पर्यविषयः ; किन्तु उत्तरवाक्यस्य प्राधान्यं समुचितम् , 'यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनुपश्यतः' इति ईशावास्यवाक्ये 'एकत्वमनुपश्यत' इत्युक्तेः; बृहदारण्यकस्यापि शुक्लयजुर्वेदान्तर्गतत्वात् । ऐतरेयोपनिषदुपक्रमे—'एष पन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इति श्रुतिपर्यालोचनायामपि कर्मकाण्डब्रह्मकाण्डप्रतिपाद्यार्थजातस्य सर्वस्यापि एकरूपमेव सत्यत्वं विवक्षितमिति प्रतीयते । सविशेषब्रह्मपरिणामाद्वैतिनः बृहदारण्यकव्याख्यातुः प्राचीनस्य भर्तृप्रपञ्चस्यापि कृत्स्नस्य वेदस्यैकरूपमेव प्रामाण्यमभिमतमिति ज्ञायते ।

'एकदेशस्यचामात्वे वेदस्याप्यप्रमाणता ।
सर्वनाशो भवेदेवं सर्वाप्रामाण्यहेतुतः' ॥

इति सुरेश्वराचार्यैः वार्तिके भर्तृप्रपञ्चसम्मतार्थस्य प्रकटीकरणात् । भास्करो यादवप्रकाशश्च कर्मब्रह्मणोरेकरूपसत्यतामभिप्रेत्य कर्मब्रह्मकाण्डयोरेकरूपं प्रामाण्यं मन्येते । एवंस्थिते 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं विजानीयात्' इति वाक्यखण्डे, ईशावास्ये 'यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः' इति वाक्यात् पूर्वम् 'ईशावास्यम्' 'सर्वाणि भूतान्यात्मन्येवानुपश्यति' उत्तरत्र च 'तदन्तरस्य सर्वस्य' 'याथातथ्यतोऽर्थान् व्यदधात्' इत्युक्तेः आत्मन् शब्देनान्तर्यामी विवक्षितः । बृहदारण्यके अन्तर्यामिब्राह्मणे [शाखाभेदेन चतुर्विंशति ] कृत्वः अभ्यासेनाप्ययमर्थः प्रतिष्ठितो भवति । 'अन्तःप्रविष्टश्शास्ताजनानां सर्वात्मा' इति यजुरारण्यकश्रुत्याऽप्ययमर्थो विशदीकृतः—इति वर्णयन्ति ।

एवं पूर्वोदाहृतश्रुतिवाक्ये शब्दान्तरं विहायात्मन्शब्दनिवेशेनैवायमर्थस्स्वरसतः सिद्ध्यति । तदिदं सर्वमभिसन्धाय देवादिशब्दानां गवादिशब्दन्यायेन चिदचिद्रूपस्य जगतः ब्रह्मणश्चापृथक्सिद्धिसम्बन्धनिबन्धन एवैकत्वव्यपदेशः, तत्र तत्र समानाधिकरणव्यपदेशः, भेदनिषेधश्चेति श्रुतिस्वरससिद्धं वृत्तिकारसम्मतञ्चार्थमेवोपपादयन्तः वेदार्थसंग्रहे, श्रीभाष्ये, श्रीगीताभाष्ये च परकीयसिद्धान्तार्थान् सम्यगेव पर्यालोचयामासुः श्रीमद्रामानुजाचार्याः इति ॥ (गू.सं.उपो.)

आत्माद्वैतभङ्गवादः — (श. दू—36)

[पूर्वं जीवब्रह्मैक्यमादायात्माद्वैतं प्रस्तुतम् इदानीं सर्वशरीरेष्वेक एव आत्मा इतिरीत्या आत्माद्वैतं विचार्यते ]

यदुच्यते तावत् आत्माद्वैतवादिभिः—एक एवात्मा देहाद्युपाधिभेदेन बहुधा प्रतिभाति तरङ्गचन्द्रवत्, सोभर्यादिवच्च । तथा च प्रयोगाः—1) विगीतानि शरीराणि मय्येवात्मवन्ति; शरीरत्वात्, संप्रतिपन्नमच्छरीरवत् । 2) सर्वं जाग्रच्छरीरं मदविद्याकल्पितम्; शरीरत्वात्, कल्पितत्वाद्वा, स्वप्नदृष्टमच्छरीरवत् । 3) सर्वोऽप्यात्मा अहमेव; चेतनत्वात्, अहमिव । 4) सर्वाणि सुखदुःखानि मयैव भुज्यन्ते; सुखदुःखत्वात्, मत्सुखदुःखवत् । 5) विगीतानि शरीराणि देवदत्तात्मना आत्मवन्ति; शरीरत्वात, संप्रतिपन्नदेवदत्तशरीरवत् इति । एवं सहस्रशोऽनुमानानि विभज्य प्रयोज्यानि । विप्रतिपन्न· शरीरभेदो अनेकात्मनिरपेक्षः; शरीरभेदत्वात्, सौभरिशरीरभेदवत् । एवमनुमानान्तराण्यपि करणभेदादिपक्षीकारेण भाव्यानि । एवमनभ्युपगमे कल्पनागौरवप्रसङ्ग इति ।

ननु पण्डितत्व-मूर्खत्व-सुखित्वादिविरुद्धधर्माध्यासात् भेदः सिद्धः, तथा च अक्षपादैः सूत्रितम्—'नानाऽऽत्मानो व्यवस्थातः' (न्या. सू. 3-2-19) इति । उक्तं च त्वदासन्नैः सांख्यैरपि—'जन्मजरामरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव' इति । सत्यपि च विरुद्धधर्मे यद्यभेदः, तदा सत्यमिथ्यैक्यादिकमपि स्यादिति शून्याद्वैतमेव स्यादिति चेन्न, तेषां विरुद्धत्वाभावात् । सहानवस्थानलक्षणो ह्यत्र विरोधः अभिमतः, 'स चाधिकरणभेदे सिद्धे; तत्सिद्धिश्च विरुद्धधर्माध्यासात्' इत्यन्योन्याश्रयणात् ।

न चैवं घटपटादिष्वपि विरोधपरिहारे सर्वभेदविलय इति वाच्यम्; तेषु स्वरूपभेदस्यैव स्फुटतरमुपलभ्यमानत्वात्, अन्ततः इष्टप्रसङ्गरूपत्वाच्च । अत एवानुमानानां प्रत्यक्षबाधोऽपि परिहृतः । अत्र परस्परसुखादिप्रतिसन्धानप्रसङ्गो बाधक इति चेन्न; एकेनानुभूतानामेव क्वचिदप्रतिसन्धानदर्शनात् ।

न हि जन्मान्तरानुभूतेषु एकस्मिन्नपि वा जन्मनि चिरकालदृष्टेषु पूर्वेदिवसभुक्तव्यञ्जनादिषु वा सर्वेषां पुरुषाणां तत्तत्प्रतिसन्धानमुपलभामहे। संस्कारप्रमोषात्तदपटुत्वाद्वा तत्र प्रतिसन्धानाभावः, ये पुनरप्रमुषितस्फुटतरसंस्कारास्ते जातिस्मरादयो जन्मान्तरानुभूतमेतज्जन्मानुभूतं च प्रतिसन्दधत इति चेन्न; अत्राप्यविद्यावैचित्र्यादुपाधिभेदप्रतिनियततया वा प्रतिसन्धानाभावः प्राकृतानाम्। तत्त्वविदस्तु प्रह्लादवामदेवादयः प्रतिसन्दधतीति तुल्यम्। यथोक्तम्—

'सर्वगत्वादनन्तस्य स एवाहमवस्थितः।
मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने'॥

इत्यादि। श्रुतिश्च—'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र' इति। आदिभरत-ऋभु निदाघादिवृत्तान्तेषु च व्यक्तोऽयं पन्थाः।

अत्रोच्यते—यदुक्तं विगीतानि शरीराणि मयैवात्मवन्तीति, तत्र मयेति किमहमर्थो विवक्षितः? उत तदनुबन्धिनी संवित्? उत तदुभयोत्तीर्णः कश्चित्तयोरपि साक्षी?

नाद्यः, एकस्मिन्नपि शरीरे भवद्भिरहमर्थस्यात्मत्वानभ्युपगमेन तद्दृष्टान्तस्य साध्यविकलत्वात्। पक्षस्य चाप्रसिद्धविशेषणत्वात्। अनात्मनाऽऽत्मवन्तीति प्रतिज्ञाविरोधापत्तेः। स्वसिद्धान्तविरुद्धाहमर्थात्मत्व-तदभेदसङ्कथनेन अपसिद्धान्तप्रसङ्गाच्च।

न द्वितीयः, अस्माभिस्तस्याः क्वचिदप्यात्मत्वानभ्युपगमेन साध्यविकलत्वादेव। तथैवाप्रसिद्धविशेषणत्वमपि, सर्वत्र संविन्मात्रस्यास्माभिरात्मत्वप्रतिक्षेपात्। तथैव च विरोधः, अनहमर्थेन संविदा आत्मवन्तीति प्रतिज्ञानात्।

नापि तृतीयः, भवदभिमतस्य साक्षिणोऽस्माभिरन्यत्र प्रतिक्षेपात्। अस्मदिष्टेन तु सर्वाध्यक्षेणेश्वरेणात्मवन्तीति साधने सिद्धसाधनात्। जीवाधिष्ठितान्यपि हि शरीराणि परमात्मनाऽऽत्मवन्त्येव, तस्य सर्वशरीरत्वात्। सद्वारकमिति तु विशेषः। एवमुत्तरेष्वपि प्रयोगेषु अस्मच्छब्दविकल्पेन दूषणमूह्यम्।

विशेषतोऽपि ब्रूमः —यत्तु मदविद्याकल्पितमिति साध्यते, तत्रापि दृष्टान्तस्य साध्यविकलतैव, स्वप्नदृष्टानामपि पदार्थानामीश्वरसृष्टत्वस्य श्रुतिसिद्धत्वात् ।

'न तत्र रथा न रथयोगा न पन्थानो भवन्ति; अथ रथान् रथयोगान्पथः सृजते, स हि कर्ता ' इतीश्वरकर्तृत्वश्रवणात् । समर्थितं चैतत् ' सन्ध्ये सृष्टिराह हि ' इत्यस्मिन्नधिकरणे । मदविद्याकल्पितमित्यस्य साध्यस्य प्रपञ्चसत्यत्वप्रतिपादनेन बाधोऽपि द्रष्टव्यः । तेनैव कल्पितत्वादिति हेतोरसिद्धिश्च ।

यत्तु—' सर्वोऽप्यात्माऽहमेव, चेतनत्वात् ' इति तत्राहमर्थत्वमात्रसाधने सिद्धसाधनता । स्वतादात्म्यसाधने वक्ष्यमाणेन विरुद्धधर्माध्यासेन बाधः । चेतनत्वात् इति हेतोः स्वपक्षेणासिद्धिः, दृष्टान्तस्य साधनविकलता च । चिद्रूपत्वमात्रस्य हेतुत्वे धर्मभूतज्ञानेनानैकान्तः । त्वत्पक्षे वृत्तिज्ञानेनापि । वैशेषिकादिमतेनासिद्धिश्च । आत्मत्वादिति प्रयोगेऽपि चेतनत्वचिद्रूपत्वादिविकल्पेन दूषणमूह्यम् । आत्मत्वजातिमत्त्वादिति विवक्षायां नानात्मवादप्रसङ्गः ; व्यक्तिभेदनान्तरीयकत्वाज्जातेः ।

यत्तु ' सर्वाणि सुखदुःखानि मयैव भुज्यन्ते ' इति, तत्र स्वहृदयविसंवादस्तावत् ; यदि च सर्वाणि दुःखानि स्वेनैव भुज्यन्ते, तर्हि कथं परहिंसादिप्रवृत्तिः । न हि स्वसुखोच्छेदाय स्वदुःखोत्पादनाय वा प्रेक्षावन्तः प्रवर्तेरन् । अद्वैतदर्शिनां न तथा प्रवर्तनमिति चेन्न ; सर्वतत्त्वोपदेशिना भगवता वासुदेवेनापि स्वयमेव वा धनञ्जयादिमुखेन वा परपीडादर्शनात् । नित्यमुक्तत्वेनास्पृष्टसुखदुःखस्यात्मनः तद्भोक्तृत्वासम्भवादपसिद्धान्तश्च । अत एव दृष्टान्ते साध्यवैकल्यञ्च । अथ परमतेन भोक्तृत्वमन्वारुह्य उच्येत, तदाऽपि तन्मतेनाहमर्थस्यैवात्मत्वात्तदद्वैतसाधने भवतः कथमात्माद्वैतसिद्धिः ?

अस्मच्छब्दानुबन्धेन यान्यन्यान्यैक्यसाधने ।
प्रयुक्तान्यनुमानानि तेषामेषा निराक्रिया ॥

यत्तु पण्डितत्व-मूर्खत्वादीनां विरुद्धत्वं नास्ति, ' अधिकरणभेदे सिद्धे सहानवस्थानलक्षणविरुद्धत्वम्, ततश्च सः' इत्यन्योन्याश्रयणादिति । तत्किं क्वचिद्विरोधमभ्युपगम्य सोऽत्र नास्तीत्युच्यते ? उत क्वचिदपि विरोधाभावमभिमत्य ?

नाद्यः ; अविशेषात् । न हि सितासितादिभेदात् ज्ञानाज्ञानादिभेदस्य वैषम्यं पश्यामः । अधिकरणस्वरूपभेदस्य स्फुटोपलम्भाद्वैषम्यं सिद्धमिति चेन्न, असिद्धेः । न हि वैषम्यानुपलम्भेऽपि वस्तूनां भेदस्सिध्यति, तस्यैव तत्त्वात् । अन्यथा वैधर्म्याग्रहेऽपि स्वरूपोपलम्भमात्रेण भेदसिद्धौ संशयविपर्ययोच्छेदप्रसङ्गात् । अथ पुनर्वैधर्म्योपलम्भवेलायां स्वरूपभेदोऽप्यन्यः प्रतीयत इत्यभिमन्यसे, तर्ह्यत्रापि तथाऽनुमन्यस्व ।

नापि द्वितीयः ; अविवादप्रसङ्गात् । न हि स्वसिद्धान्ताविरोधिनि परमते विवादसम्भवः । अन्यथा स्वसिद्धान्तवादिभिरपि विवादप्रसङ्गात् । अनेकान्तवादस्य च साम्राज्यापातात् ।

किञ्च —

स्थिरीकृतो विरोधस्स्याद्विरोधं प्रतिरुन्धता ।
विरोधाप्रतिरोधे हि विरोधो निरुपद्रवः ॥

विरोधोद्घाटनं मुक्त्वा किन्नु दूषणमुच्यते ।
सर्वत्रैवाविरोधे तु भवेत्सर्वविरोधिता ॥

यत्तु प्रलपितम्, घटपटादिष्वपि विरोधपरिहाराद्भेदविलय इत्यत्र इष्टप्रसङ्गत्वमिति ; तत् स्वसिद्धान्तोच्छेदायोक्तम् ; सर्वाद्वैते सत्यमिथ्यार्थविभागभङ्गप्रसङ्गात् । सर्वमिथ्यात्वस्य च भवद्भिरनभ्युपगमात् । विरोधमुत्सृज्य सत्यमिथ्याविभागस्य दुरुपपादत्वाच्च ।

एवञ्च विरोधसिद्धावनुमानादिसिद्धपरप्रतियोगिकभेदस्य स्वात्मनि प्रत्यक्षबाधोऽपि सिद्धः । अत एव परस्परप्रतिसन्धानप्रसङ्गोऽपि निरुपद्रवः । पटुप्रत्ययाभ्यासादराहितातिशयतादात्विकसंस्कारवशेन प्रतिसन्धानप्रसङ्गे सति न जन्मान्तराद्युदाहरणावकाशः ।

यत्तु परस्परान्यत्वोपालम्भे जल्पितम्, परस्याप्रत्यक्षत्वे तद्गतान्यत्वमपि न प्रत्यक्षयितुं शक्यमिति ; तस्य किं प्रत्यक्षनिर्बन्धेन ? अनुमानतोऽपि तत्सिद्ध्युपपत्तेः । स्वात्मनि तदन्यत्वस्य प्रत्यक्षत्वे स्वप्रतियोगिकतद्गतान्यत्वस्यानुमातुं शक्यत्वात् । यो यद्गतान्यत्वप्रतियोगी, स ततोऽन्यः ; यथा—'सव्यहस्ताद्दक्षिणहस्त' इति हस्तस्थत्वात् व्याप्तेः । यत्तत्रोत्तरम्परः प्रतीयमानोऽन्यतया वा, अनन्यतया वा, सामान्यतो वेति ; तत्रान्यतयैवेति ब्रूमः। यद्यपि तत्र न प्रत्यक्षम्, तथाऽपि मुखविकासाद्यनुमितेन हर्षादिना स्वस्मिन्ननुपलभ्यमानत्वेन स्वस्मादन्यतयैवानुमातुं शक्यते । दर्शितं च सुखदुःख-तदभावादीनां यथोपलम्भं विरुद्धत्वम् । अत एव सामान्यतः प्रथमप्रतीतावप्यनन्तरं विरुद्धधर्मोपलम्भेनापि भेदानुमितिः सिद्धा । एतेन प्रतिसन्धान-तदभावयोः कथं सामानाधिकरण्यमित्यत्र तदभावासिद्धिवचनमपि प्रत्युक्तम् । तदभावसिद्धावपि उपाधिभेदेन तदुपपत्तिस्तु प्रागेव दूषिता ।

यत्तु प्रतिसन्धान-तदभावविरोधशमनाय प्रदेशवर्तिसंयोगादिकमुदाहृतम् ; तद्वि-वक्षितमजानतैवोक्तम् । न हि वयं प्रतिसन्धानस्वरूपस्य सर्वत्र वृत्तिं प्रसञ्जयामः ; आत्मवैभववादिनो हि प्रदेशवर्तिन एव ज्ञानादिगुणान् वदन्ति । यत्र क्वचित् प्रदेशेऽनु-भवोत्पत्तावपि तदन्येनापि प्रदेशेन प्रतिसन्धानादिकमवर्जनीयमेव । अन्यथा 'दक्षिण-हस्तेन स्पृष्टं सव्यहस्तेन स्पृशामि' इति प्रतिसन्धानं न स्यात् । सौभरिप्रति-सन्धानमपि दूरमपास्येत । तत्रापि प्रादेशिकप्रतिसन्धानोत्पत्त्या प्रतिसन्धानाभावस्य वक्तुं शक्यत्वात् । तस्मादाश्रयणविषयीकरणयोः अविशेषभ्रमात् संयोगादिनिदर्शनम् ।

यत्तत्रोक्तम्—ब्रह्माज्ञानवादे तावत्पूर्वं मुक्ता एव न सन्ति, शुकादिमोक्षोऽपि स्वप्नदृष्टपुरुषमोक्षवन्मिथ्येति, तत्र तावदद्वैतविद्योपदेशिनां त्वदाचार्याणामपि मोक्षस्य मिथ्यात्वे स्वयं कथं मोक्षमन्विच्छसि ? कथं वा शिष्यांश्च प्रेरयसि ? आमोक्षाज्जीव-वच्छरीरं किमित्यपरिज्ञानादिति चेन्न, सर्वशरीराणामेकात्माधिष्ठितत्वे मिथ्यात्वे चाविशिष्टे तत्तदधिष्ठाने च प्रतिभासमात्रसिद्धेः द्रष्टृदृश्यशरीरविशेषासिद्धेः । ततश्च पश्चात्तनोऽपि मोक्षो मिथ्याभूत इति कथमद्यतनाद्विशेषः ? तस्मात् न कदाचिदपि मोक्ष इति वा न

कदाचिदपि बन्ध इति वा स्यात् । इष्टमेवैतदुभयमपीति चेन्न ; पूर्वत्र नित्यबन्धप्रसङ्गेन निवर्तयितुमशक्यत्वात्, उत्तरत्र निवर्त्याभावाच्च बन्धनिवर्तनोपायोपदेशादिपरशास्त्रनैरर्थक्यादिप्रसङ्गात् । जीवाज्ञानवादे तु ब्रह्मणो बन्धानभ्युपगमात् ब्रह्मव्यतिरिक्तस्य च मिथ्यात्वात् केवलं बाधिताबाधितव्यवस्थेत्येव स्यात्, न तु बद्धमुक्तव्यवस्था । अथ ब्रह्मप्रतिबिम्बस्थानीयानामपि जीवानां ब्रह्मत्वम्, तदा ब्रह्माज्ञानवादप्रसङ्गे प्रतिपादित एव दोष इति ।

विस्तरस्तु तत्रैव (शतदूषण्यां) द्रष्टव्यः ॥

**आत्मानुभवः**—अहमर्थात्मानुभवः सविशेष एव ।

[केवलैव संवित् आत्मानुभव इति परे । स्वापादिदशायां सिद्धान्तिनापि संविदः नित्यत्वेन स्वीकारात् तदा विषयसम्बन्धाभावाच्च निर्विशेषा संवित् स्वीकरणीयेत्यापत्तिं परिहरति]

ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम् । सत्यमुक्तम् । स त्वात्मानुभवः । स च सविशेष एवेति स्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते । केवलैव संवित् आत्मानुभव इति चेत्, न ; सा च साश्रयेति ह्युपपादयिष्यते । (श्री.भा. I-140)

सविशेषोऽनुभवः स्वापादिदशासु अस्तीत्युक्तमिति तदालम्ब्य व्याघाताभिप्रायेण चोदयति—**नन्विति** । अत्राह—**सत्यमुक्तमिति** । **स त्वात्मानुभवः**। नानुभूत्यनुभव इत्यर्थः। अनुभूतिविरहे स आत्मा निर्विशेषः स्यादित्यत्राह—**स चेति**। प्रत्यक्त्वानुकूलत्वविशिष्ट इत्यर्थः । इह किं निषिध्यत इत्यत्राह—**इह त्विति** । शब्दान्तरेणास्मन्मतमङ्गीकृतमिति शङ्कते **केवलैव संविदात्मानुभव इति चेदिति** । **आत्मानुभवे**—केवलात्मानुभवदशायाम् । स्वापादिदशायां या संवित् त्वया नित्यतया अभ्युपेता, सा प्रसरणाभावेन विषयावच्छेदविरहात् तदानीं केवला निर्विशेषा अस्मदुक्तैव स्यादिति । परिहरति—**सा चेति** । सा च—धर्मभूता संवित् । विषयविरहिताऽपि साश्रयेत्यर्थः ।

केवलैवेत्यादेरेवं वार्थः—आत्मानुभवरूपा आत्मस्फुरणरूपा या संवित्, सा केवलैवेति चेत्—अस्मदुक्तसकलविषयादिविशेषशून्यैवेति चेदित्यर्थः। परिहरति सा चेति। सा—धर्मिस्फुरणरूपा या संवित्; सा साश्रयेति वक्ष्यते। स्फुरणं हि स्फुरतो धर्मः। यथा प्रभाश्रयस्य दीपस्य धर्मिणः औज्ज्वल्यं दीपाख्यधर्मिगतो धर्मः, तद्वदित्यर्थः। धर्मिस्वरूपभूतज्ञानस्य स्फुरणं नित्यम्। तच्च भासमानता; व्यवहारानुगुण्यम्। धर्मभूतज्ञानस्य स्फुरणं विषयसम्बन्धजन्यं तदानीमेव; न त्वन्यदा। तत एव हि विषयप्रकाशनवेलायामिति पूर्वमुक्तम्। 'पुंस्त्वादिवत्त्वस्य' इत्यत्र च वक्ष्यते। स्वापादौ तु तस्य सर्वविषयसंबन्धार्हता प्रतिबद्धा, वह्नेर्दाहकत्वशक्तिवत्। अतो न तदा स्फुरणम्॥ (श्रु. प्र.)

अयमत्र शङ्कितुराशयः—निर्विषया निराश्रया नित्या स्वप्रकाशा संविदादिपदाभिधेयाऽनुभूतिरेकैव लोकोत्तरा आत्मपदवाच्या। सा हि अन्तःकरणवृत्तिद्वारा कदाचिद्विषयसंसर्गवतीव भवति। वृत्तिविगमे स्वापादिदशासु स्वप्रकाशा चकास्ति इति।

समाधातुरभिप्रायस्तु—प्रदीपस्थानीयस्यात्मनः प्रभास्थानीया स्वप्रकाशा संविदनुभूत्यादिपदाभिधेया स्वरूपतो नित्यापि सङ्कोच-विकासलक्षणप्रसरणभेदाधीनोदयविलयव्यपदेशवती। अत एवानेकाऽनित्या साश्रया सविषया स्वापादिदशायां विषयसंसर्गविरहादनवभासमाना प्रत्यात्मनियता। प्रभाश्रयप्रदीपस्थानीया त्वात्मपदवाच्या सदा स्वप्रकाशा संविलक्षणा स्वापादिदशास्वप्यनुभूयते। सोऽप्यनुभवः आत्मानुभवपदवाच्यः स्फुरणलक्षणः स्फुरत आत्मनः धर्मरूपः प्रभाश्रयप्रदीपस्येव औज्वल्यस्थानीयः नित्यः स्वाश्रयविषयकः। एतादृशश्च विकारः आत्मनः तत्त्वान्तरापत्त्यनापादकः वस्तुस्वभावायत्तः अतिशयाधायकः भूषणभूतः शास्त्रतोऽनुभवतश्च स्वीकृत इति। अत्र सिद्धान्त्यभिमतधर्मभूतज्ञानस्य पूर्वपक्ष्यभिमतात्मभूतज्ञानस्य च प्रक्रियायां समानायामपि विकारस्य पारमार्थ्यापारमार्थ्ये विशेषभूते। (द. उ.)

स्वापादिदशासु निर्विषया निराश्रया संविदेव प्रकाशते। केवलैव संवित् आत्मानुभव इति परे। सिद्धान्ते तु स्वापादिष्वपि सविशेष एवात्मानुभवः।

धर्मभूतज्ञानस्य संविदः स्वरूपतः सद्भावेन विषयसम्बन्धाभावेऽपि आत्मानमाश्रित्यैव स्थितेः साश्रयत्वात् सविशेषतैव । तदाश्रयधर्मिज्ञानमात्मपदवाच्यम् । तस्य सविशेषत्वन्तु प्रत्यक्त्वानुकूलत्वादिना भानादेवेति निर्विषया निराश्रया संवित् नास्त्येवेत्युच्यते । तथा च अहमर्थात्मनः सार्वकालिकः अनुभवः सविशेष एवेति सिद्धम् ॥ -

**आत्मानुभूतिः** — भगवच्छेषतया जीवस्वरूपसाक्षात्कारः ।

ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते ।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते ॥ (गी.सं. 2)

'आत्मानुभूतिसिद्ध्यर्थे' इत्याद्युक्तप्रकारेण वैषयिकानन्दविलक्षणस्वेतरसमस्तवैतृष्ण्यावहसुखस्वभावप्रत्यगात्मसाक्षात्कारविशेषरूपसिद्धिविशेषप्रयोजने इत्यर्थः ।

(गी सं. र.)

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥

कर्मयोग-ज्ञानयोग-अष्टाङ्गयोगैः भगवच्छेषतैकरसतया आत्मसाक्षात्कारे उत्पन्ने, परमपुरुषार्थभगवदनुभवोपायभूतभक्तियोगे अधिकरोतीति, स्वात्मावलोकनं भगवत्साक्षात्कारप्रयोजकं भवति ।

अन्तःस्थितरत्नावलोकनार्थं, तद्ग्रथनवस्त्रदर्शनवत् स्वान्तर्यामिदर्शनार्थं तच्छरीरभूतजीवात्मसाक्षात्कारः उपयुज्यते ॥ (र.त्र.सा. 1-4-81)

तदेतदात्मावलोकनमाविर्भूतापरिच्छिन्नज्ञानैकाकारभगवच्छेषतैकस्वभावात्मस्वरूपसाक्षात्कारलक्षणं भगवद्व्यतिरिक्तसर्ववस्तुषु तृणवदनादरणीयतामापादयत् उभयलिङ्गे उभयविभूतिमति स्वामिन्यत्यर्थप्रियानुभवरूपां परां भक्तिमुत्पादयति । तद्यथा—बाल्ये बालक्रीडाप्रसङ्गेन नरेन्द्रभवनान्निष्क्रान्तस्य मार्गाद्भ्रष्टस्य व्याधगृहीतस्य पक्कणे

वर्तमानस्य राजकुमारस्याप्तोपदेशात् आत्मनस्तथात्वं मत्वा विमृशतः स्वात्मनि राजसाम्यमङ्गप्रत्यङ्गादिषु पश्यतः तस्मिन् यथा पितृत्वप्रीतिः निरतिशया जायते एवमस्माकमपि यथोपदेशं भगवच्छेषभूते स्वात्मनि तत्साम्याकारेण साक्षात्कृते प्रीतिरूपा भक्तिः स्वयमेवोत्पद्यत इति ॥ (द. उ. 237)

आत्मापहारः—देहात्मभ्रमः—परमात्मशेषत्वेपि स्वतन्त्रभ्रमश्च ।

'अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसम्भूतिबीजमेतत् द्विधा स्थितम् ॥
योऽन्यथा सन्तमात्मानम् अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा' ॥

इत्युक्तेः जीवतत्त्वं परमात्मने एव निरुपाधिक शेषभूतं, परमात्मने शेषभूतमेवेति, अन्ययोगायोगव्यवच्छेदाभ्यां मूलमन्त्रघटक प्रणवेन निर्धारितम् । अस्य शेषत्वस्य सम्बन्धरूपतया सम्बन्धिस्वरूपे निरूपिते सति निरूपितस्वरूपविशेषणता ।

अणुत्वे सति चेतनत्वमिव, स्वतः परमात्मशेषत्वेसति चेतनत्वमिति जीवलक्षणोक्तौ तु इदं शेषत्वं स्वरूपनिरूपकमेतिबोध्यम् । (सं.वि. 86)

तदुक्तं— 'निश्चिते परशेषत्वे शेषं सम्परिपूर्यते ।
अनिश्चिते पुनस्तस्मिन् अन्यत्सर्वमसत्समम्' ॥ इति ।

आत्मनोर्जीवपरयोरपहारस्यबाह्य इव न क्रियारूपत्वसम्भवः, अपि तु ज्ञानविशेषरूपभ्रान्तित्वमेव युज्यते बाह्यकरणाद्यगोचरसूक्ष्मवस्तुरूपत्वात्तयोः ।

अत्र—नास्तीश्वरः—विष्णोरन्य ईश्वरः इत्यादिभ्रम ईश्वरापहारः । 'जीवो नास्ति—विष्णोरन्यस्य स शेषः—स स्वतन्त्रः' इत्यादिर्जीवापहारः । इहाचेतनविभूत्यपहारोऽपि विवक्षितः ।

स च तस्यामन्यशेषत्वस्वशेषत्वादिभ्रमरूपो भवति । भगवत्तदनुबन्धिषु रागः, शब्दादिबहिर्विषयेषु द्वेषश्च स्थाने भवेत् । (प.भं.व्या. 11-12)

विस्तरस्तु आत्मचौर्यपदे द्रष्टव्यम् ।।

**आत्मापहारनिष्कृतिः**—आत्मचौर्यप्रायश्चित्तं स्वरक्षाभरसमर्पणम् ।

[आत्मापहारोऽत्र स्वपरात्मतत्वान्यथाज्ञानविपरीतज्ञानरूपः । तस्य निष्कृतिः प्रायश्चित्तम् ।]

जितकौस्तुभचौर्यस्य सम्राजस्सर्वपाप्मनाम् ।
शिष्टं ह्यात्मापहारस्य निष्कृतिः स्वभरार्पणम् ॥
परशेषत्वधीमात्रमधिकारविशेषकम् ।
पश्चादात्मापहारस्य निरोधाय च कल्पते ।। (र त्र सा. I-512)

निरतिशयभोग्यत्वेन ब्रह्मानुभवितृत्व-प्रत्यक्त्वाभ्यां कौस्तुभादप्युत्कृष्टमात्मानम् अहं ममेति यः अपहरति, सः कौस्तुभचोरादप्यधिकः इति 'जितकौस्तुभचौर्यः' इत्युच्यते । तस्य, सर्वपाप्मनाम्—महापातकिनामपि सम्राजः—अधिपतेः योऽयमात्मापहारः, तस्य निष्कृतिः—प्रायश्चित्तं, स्वभरार्पणं हि शिष्टं 'मुमुक्षुर्वै शरणमहं प्रपद्ये', 'मामेकं शरणं व्रज' इत्यादिना शिष्टं-विहितम् ।

सम्बन्धज्ञानमात्रस्य मोक्षहेतुत्वे शास्त्रश्रवणवेलायामेव तस्य सिद्धत्वात् बुद्धे क्षेमप्रापणं तच्छास्त्रैः विप्रतिषिद्धम् ; बुद्धे चेत् क्षेमप्रापणं इहैव दुःखं नोपलभेत इत्युक्तरीत्या वाक्यजन्यज्ञानमोक्षहेतुत्ववादवत् सम्बन्धज्ञानोत्तरक्षण एव मोक्षप्रसंगेन प्रत्यक्षादिबाधात् तदनुपपन्नमिति भावः । गर्भदासेन रत्नादावपहृते, स्वामिना तस्मिन् ज्ञाते तत् पुनःप्रदाय क्षमाऽकरणे सम्बन्धानुसन्धानेऽपि दण्ड एव यथा स्यात् , तथा आत्मापहारनिग्रहनिवृत्त्यै विहितभरन्यासाऽननुष्ठाने संसारनिवृत्तिरेव न स्यादित्यभिप्रयन्नाह—**जितकौस्तुभचौर्येत्यादिना** ।

भरन्यासात् प्रतिबन्धनिवृत्तिश्चेत् शेषत्वज्ञानवैयर्थ्यं स्यादित्यत्राह—**परशेषत्वेति** । काम्यमानभगवदनुभवस्य कैङ्कर्यपर्यन्तत्वरूपविशेषे भविष्यदात्मपहारोत्पत्तिप्रतिबन्धे च शेषत्वज्ञानमुपयुक्तमित्यर्थः ।

ननु 'स्वात्मानं मयि निक्षिपेत्' 'मयिनिक्षिप्तकर्तव्यः' इत्यात्मसमर्पणस्यैव समस्तप्रतिबन्धकनिवर्तकत्वोक्तेः कथं भरसमर्पणस्य मुक्ति प्रतिबन्धनिवर्तकत्वोक्तिः इत्यत्र 'आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते' इत्यादिप्रमाणान्तरानुगुण्यात् समस्त-प्रतिबन्धकनिवर्तकतयोक्तात्मनिक्षेपस्तु शेषत्वादिप्रतिसन्धानविशिष्टाधिकारिविशेषेण कर्तव्य-विशेषस्वरक्षाभरन्यासपर्यन्त एवेति बोध्यम् ॥ (सा.प्र.)

यथात्रस्थितात्मस्वरूपान्यथाप्रतिपत्तिरूपस्याऽऽत्मापहारस्य सर्वपापमूलत्वमुक्तम् ।

'योऽन्यथासन्तमात्मानमन्यथाप्रतिपद्यते ।
किन्तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा' ॥ इति ।

एवं रूपात्मापहारप्रायश्चित्तं च—

'यमो वैवस्वतो राजा यस्तवैष हृदिस्थितः ।
तेन चेदविवादस्ते मागङ्गां मा कुरून् गमः' ॥

इत्युक्तम् ।

अयमर्थः—यमः—प्रशासिता, 'आत्मानमन्तरो यमयति' इति श्रवणात्; वैवस्वतः-सवितृमण्डलमध्यवर्ती राजा-पुण्डरीकाक्षत्व-पीताम्बरत्वादिभिरीश्वरत्वचिन्हैर्विराजमानः, यः—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इति श्रुतिप्रसिद्धः । तवैष हृदिस्थितः—एवम्भूतस्तवाऽन्तरात्मतया स्थितः ; 'स यश्चायं पुरुषे । यश्चाऽसावादित्ये । स एकः' इति श्रुतेः । तेन—उक्तस्वभावयुक्तेन सर्वेश्वरेण, अविवादः—तत्स्वरूपविरुद्धस्वातन्त्र्याभिमानविरहः, चेत्-इदमविवादरूपं शेषत्वज्ञानं दुर्लभमिति भावः । मागंगां मा कुरून् गमः—एतद्भाने सति पापक्षयार्थं पुण्यतीर्थक्षेत्रादिगमनमनपेक्षितमित्यर्थः ॥ (त.दी. 60–62)

**आत्मा प्रकरणात्** (ब्र. सू. 4–4–3)

(सम्पद्याविर्भावाधिकरणे तृतीयं सूत्रम् ।)

'संपद्याविर्भावः स्वेनशब्दात्' इत्यनेन मुक्तौ देवादिवदपूर्वाकारोत्पत्तिः नास्ति ; स्वरूपस्यैवाविर्भाव इत्युक्तम् । तथा सति आत्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात्

स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थावबोधित्वं स्यादिति कृत्वा–देवाद्यवस्थावत् सुखसंबन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिः ; न तु स्वरूपाविर्भावः, इति पूर्वपक्षे प्राप्ते— **तत्रोत्तरम् आह**—

स्वरूपेणैवायमात्मा—अपहतपाप्मत्वादिसत्यसंकल्पत्वपर्यन्तगुणकः इति प्रकरणादवगम्यते ।

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इति हि प्रजापतिवाक्यप्रक्रमः । इदं च प्रकरणं प्रत्यगात्मविषयमिति, 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यत्र प्रतिपादितम् । अतोऽपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्ययाऽविद्यया तिरोहितस्वरूपः परंज्योतिरुपसम्पद्याऽऽविर्भूतस्वरूपो भवति । अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयः स्वाभाविका गुणाः परंज्योतिरुपसम्पन्नस्याविर्भवन्ति ; नोत्पद्यन्ते । यथोक्तं भगवता शौनकेनाऽपि—

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते' ॥ इति ॥

अतो ज्ञानानन्दादिगुणानां कर्मणाऽऽत्मनि संकुचितानां परंज्योतिरुपसम्पद्य कर्मरूपबन्धक्षमे विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं 'सम्पद्याविर्भावः' इति ।

आविर्भूतगुणस्त्वत्र जीवः इत्यवगम्यते ।
य आत्मेत्याद्युपक्रान्तः जीवप्रकरणात्तदा ॥ (ब्र.प.मा.)

**आत्माभिमानः**—शरीरित्वाभिमानः ।

ननु आत्मा अणुपरिमाण इत्युक्तम् ; कथं सौभर्यादेरनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव इत्यत्राह—प्रदीपवदित्यादिना ।

यथा प्रदीपस्यैकस्यैकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः, तथा आत्मनोऽप्येकदेहस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः। यथा च एकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः, तद्वत्।

इयान् विशेषः—अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिः न सम्भवति; मुक्तस्य तु असङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिरिदमिति ग्रहणानुगुणा च नानुपपन्ना। तद्वत् सौभर्यादेरमुक्तस्यापि अनेकशरीरेषु आत्माभिमानो युज्यत एव। अमुक्तस्य कर्म नियामकम्; मुक्तस्य तु स्वेच्छेति विशेषः। (श्री. भा. 4-4-15)

**आत्माभिमानो**—हि शरीरित्वाभिमानः। तदेकप्रवर्त्यं हि शरीरम्। तत्प्रेरकत्वं शरीरित्वम्॥ (श्रु. प्र)

**आत्माभिमानानुगुणः पुरुषार्थः**—आत्माभिमानो यादृशः तदनुगुणैव पुरुषार्थप्रतीतिः।

'आत्माभिमानानुगुणपुरुषार्थव्यवस्थया
भगवत्पारतन्त्र्यादि प्रवुद्धस्य सुखायते' (इत्यभियुक्तोक्तिः)

ननु भगवतः अत्यन्तशेषतैवात्मनोऽनवधिकातिशयं सुखमित्युक्तं, तदेतत् सर्वलोकविरुद्धम्। तथाहि-सर्वेषामेव चेतनानां स्वातन्त्र्यमेवेष्टतमं दृश्यते, पारतन्त्र्यं दुःखतरम्। स्मृतिश्च—'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्'। तथा च—'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इति।

तदिदम्—अनधिगतदेहातिरिक्तात्मस्वरूपाणां शरीरात्माभिमानविजृम्भितम्।

तथा हि—शरीरं हि मनुष्यत्वादिजातिगुणाश्रयपिण्डभूतं स्वतन्त्रं प्रतीयते; तस्मिन्नेवाहमिति संसारिणां प्रतीतिः। आत्माभिमानो यादृशः तदनुगुणैव पुरुषार्थप्रतीतिः। सिंहव्याघ्रवराहमनुष्ययक्षरक्षःपिशाचदेवदानवस्त्रीपुंसव्यवस्थितात्माभिमानानां

सुखानि व्यवस्थितानि, तानि च परस्परविरुद्धानि । तस्मात् आत्माभिमानानुगुण-पुरुषार्थव्यवस्थया सर्वं समाहितम् ।

आत्मस्वरूपस्तु देवादिदेहविलक्षणं ज्ञानैकाकारम्, तच्च परशेषतैकस्वरूपम्; यथावस्थितात्माभिमाने तदनुगुणैव पुरुषार्थप्रतीतिः 'आत्माज्ञानमयोऽमलः' इति स्मृतेः ज्ञानैकाकारता प्रतिपन्ना । 'पतिं विश्वस्य' इत्यादिश्रुतिगणैः परमात्मशेषतैकाकारता च प्रतिपादिता । अतः सिंहव्याघ्रादिशरीरात्माभिमानवत् स्वतन्त्रात्माभिमानोऽपि कर्मकृत-विपरीतात्मज्ञानरूपो वेदितव्यः । अतः कर्मकृतमेव परमपुरुषव्यतिरिक्तविषयाणां सुखत्वम्, अत एव तेषामल्पत्वमस्थिरत्वञ्च । परमपुरुषस्यैव स्वत एव सुखत्वम्, अतः तदेव स्थिरमनवधिकातिशयञ्च । 'कं ब्रह्म, खं ब्रह्म' 'आनन्दो ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । अतः भगवत्पारतन्त्र्यं सुखावहमेव ।

(वे. सं. 404–407)

अत्र सुखत्वं दुःखत्वं च न स्वातन्त्र्य-पारतन्त्र्य प्रयुक्ते; अपि तु कर्मकृत-देहात्माभिमानप्रयुक्ते इति सोपाधिकत्वं प्रादर्शि । (ता.दी)

तदुक्तं रहस्यरक्षायाम्—(106)

परेच्छायत्तभूम्नोऽपि स्वेच्छाया अविघाततः ।
सर्वं परवशं दुःखम् इत्याद्यं नात्र बाधकम् ॥
स्वतः शेषत्वकैङ्कर्ये न कुत्राप्यसुखावहे ।
कर्मजत्वात् तथात्वस्य लोके च व्यभिचारतः ॥
महानन्दमहिम्ना च प्राग्दुःखावेक्षणादपि ।
मोहदुःखे तदा स्याताम् इति मूढस्य जल्पितम् ॥
सुखस्य मोहनत्वं च तामसत्वाद्युपाधिभिः ।
सुखाय च भवेत् क्वापि पूर्वदुःखावमर्शनम् ॥ इति ।

तथा च तत्तदभिमानानुगुणैव पुरुषार्थसिद्धिरिति निराबाधम् । देहात्माभि-मानवतः ऐहिकवैषयिकसुखमेव पुरुषार्थः । भगवच्छेषतैकरसत्वपरिज्ञानवतां तु भगवत्सेवैव परमपुरुषार्थ इति सिद्धम् ॥

**आत्मारामः**—आत्मैव सुखवर्धकः ।

[आत्मैव आरामः यस्य सः]

भवत्सु कुशलप्रश्नः आत्मारामेषु नेष्यते ।
कुशलाकुशला यत्र न सन्ति मतिवृत्तयः ।। (भाग. 4-21-14)

नन्वभ्यागतानां नः कुशलं किं न पृच्छसि ? तत्र आह—**भवत्सु कुशलप्रश्नो नेष्यते** । तत्र हेतुः—**आत्मारामेषु**—ब्रह्मात्मकस्वात्मानुभवैकपरेषु, ननु आत्मारामाणामपि कदाचिदकुशल सम्भावनया कुशलप्रश्न इष्यतां—तत्राह—यत्र आत्मारामेषु कुशलाकुशलरूपा मतिवृत्तय एव न सन्ति, कुशलाकुशलविषयचिन्तनरूपमतिवृत्तयो हि संगकामक्रोधसम्मोहादिजननद्वारा सुखदुःखादि हेतवः—अतः तासामेवाभावात् कुतो भवत्स्वकुशलसंभावनेत्यर्थः । मतिवृत्तीनां च संगादिद्वारा अकुशलनिमित्तत्वं भगवता गीतम्—

'ध्यायतो विषयान्पुंसः संगस्तेषूपजायते ।
संगात्संजायते कामः कामात् क्रोधोभिजायते ।।
क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति' ।। इति । (भाग.वी.)

आरामो हि भोगस्थानभूतः, छायापल्लवपुष्पफलादिभिः स्वगुणैः सुखवर्धकः । तद्वदत्रापि स्वगुणैः अपहतपाप्मत्वज्ञानानन्दादिभिः स्वविषयवादकरणग्रन्थकरणादिक्रीडोत्थापकैः आत्मैव सुखवर्धकः इत्यारामशब्देनोपचर्यते । (ता.चं. 5-24)

**आत्मावास्यम्**—परमात्मना व्याप्यम् ।

'आत्मावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्' (भाग. 8-1-10)

'ईशावास्यमिदं सर्वम्' इत्यादि श्रुतिघटक 'ईट्' शब्दस्थाने आत्मशब्दपाठात् आत्मशब्दः परमात्मपरः । यत् जगत्—चेतनाचेतनात्मकं सर्वमिदं वस्तु, परमात्मना अन्तःप्रविश्य नियमनपूर्वकं भर्त्रा आवास्यम्—अधिष्ठेयम् । (वी.रा.)

एतदनुरोधेन ईशावास्यमिति समस्तपदमेव स्यादिति शङ्का च 'अलम् अन्य-रूढिप्रसङ्गरहितासमस्तपदाध्ययनानभिज्ञश्रोत्रियचोद्योपालम्भेन' इति तत्रत्य भाष्योक्त-दिशा निरासि। पदकाराश्च भिन्नपदत्वेनैवाधीयते ॥

**आत्माश्रयः**—दोष विशेषः।

स्वतः स्वोत्पत्तौ आत्माश्रयदोषप्रसंगः ; प्रयोजनाभावश्च। (श्री भा. 2-2-30)

यत्तु—सिद्धान्ते विशिष्टस्य कार्यत्वे कार्यमात्रस्य ब्रह्मशरीरत्वांगीकारात् ब्रह्मणोऽपि ब्रह्मशरीरत्वापत्तौ आत्माश्रय—इत्युक्तम्। तन्न ; 'यस्य पृथिवीशरीरम्' इत्यादिभिः पृथिव्यादेरेव कार्यस्य शरीरत्वनिश्चयेन ब्रह्मणः तत्प्रसक्तिगन्धाभावात्।

न च पृथिव्यादिशब्दानामपि तच्छरीरकपरमात्मपर्यन्तत्वात् तत्राप्यात्माश्रयो दुर्वार इति वाच्यं ; निष्कर्षकेतरशरीरवाचिशब्दानामेव शरीरिपर्यन्तत्वांगीकारेण—'यस्य पृथिवी शरीरम्' इत्यादिषु निष्कर्षकशरीरशब्दसमानाधिकरणतया श्रुतपृथिव्यादि-पदानां विशिष्टपरत्वाभावेन आत्माश्रयाप्रसक्तेः। किं च—

वृत्त्यर्थसूत्रगा वर्णा यथा न ग्राहकास्तथा।
घटकश्रुतिगाश्शब्दाः न विशिष्टाभिधायिनः ॥

तथाहि—यथा 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यकारादेः सवर्णग्राहका निर्णयेऽपि शास्त्रप्रवृत्त्युपयोगि अजादिसंज्ञानिष्पत्तिप्राग्भावितदर्थवर्णसमवायनिर्देशात्मकेषु 'अइउण्' इत्यादिषु विद्यमानानामकारादीनां सवर्णग्राहकत्वं सवर्णग्राकतावच्छेदकाण्त्वाद्यनवगमादि त्युच्यते ; यथोक्तं कैयटेन 'स्वरसन्धिस्तु न प्रवर्तते, अजादिसंज्ञानाम् अनिष्पादादिति'। (सि चिं. 61)

आत्मानमाश्रयति। स्वस्यस्वापेक्षित्वहेतुकानिष्टप्रसंगरूपे तर्कदोषभेदे। तर्कः पंचविधः। तर्कशब्दे वक्ष्यते, तत्र 'स्वस्य स्वापेक्षित्वेऽनिष्टप्रसंग आत्माश्रयः, स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा। यथा—यद्ययं घटः एतद्घटजन्यः स्यात् तदा एतद्घटानधिकरणक्षणोत्तरवर्ती न स्यात्, यद्ययं घटः एतद्घटवृत्तिः स्यात्तदैतद्घटव्याप्यो न स्यात्, यद्ययं घटं एतद्घटज्ञानाभिन्नः स्यात्, ज्ञान सामग्री जन्यः स्यात् तदा एतद्घटभिन्नः स्यादिति वा सर्वत्रापाद्यम्' इति न्यायसूत्रवृत्तिः ॥ (वाच.)

**आत्माश्रयाभासः**—दोषविशेषः ।

अन्याधीनत्वनियमरहितस्य स्वाधीनतया विरोधापादनमात्माश्रयाभासः ।

यथा— स्वेनैव स्वयं पोष्यते, ज्ञायते च इत्यादौ ; न ह्यत्र कर्मकर्तृविरोधः, स्वरूपतः सिद्धेनातथाभूतेन स्वेनैव स्वस्यैव तथाभावापादनस्य सर्वप्रत्यक्षसिद्धत्वात्, ज्ञानादिषु चैकस्यैवाश्रयत्वविषयत्वयोः सहोपलम्भात् । स्वातिशयापादनानभ्युपगमे स्वज्ञानाभावाभ्युपगमे च दृष्टादृष्टार्थसर्वचेतनप्रवृत्त्यपह्नवप्रसङ्गेन स्ववचनादिविरोधादिति ॥

(न्या.प. 145)

**आत्मेतितूपगच्छन्ति ग्राहयन्ति च**—(ब्र.सू. 4-1-3)

(आत्मत्वोपासनाधिकरणम् ।)

[पूर्वस्मिन्नावृत्यधिकरणे मुक्त्युपायतया असकृदावृत्तमेवोपासनं कर्तव्यमित्युक्तम् । इदानीं आत्मेत्येवोपासीतेतिवाक्ये इति करणात् दृष्टिविधित्वशङ्काव्युदासाय उपासन-प्रकारः निर्णीयते ।]

यद्यपि 'अधिकन्तु भेदनिर्देशात्', 'अधिकोपदेशात्' इत्यादिषु प्रत्यगात्म-नोऽर्थान्तरत्वं ब्रह्मणः प्रतिपादितम् ; तथाऽपि उपासिता 'अहं ब्रह्मास्मि' इत्येवोपासीत । यतः पूर्वे उपासितारः 'त्वं वाऽहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते' इति आत्मेत्येवोपगच्छन्ति । उपासितुः अर्थान्तरमपि ब्रह्म, तनुपासितॄन् स्वात्मभूतं ग्राहयन्ति च शास्त्राणि ।

किमुपास्यं ब्रह्म, उपासितुरन्यत्वेनोपास्यम्, उत उपासितुरात्मत्वेन ? किं युक्तम् ? अन्यत्वेनेति । कुतः ? उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वात् ब्रह्मणः । अर्थान्तरत्वं च 'अधिकन्तु भेदनिर्देशात्', 'अधिकोप देशात्' इत्यादिषु उपपादितम् । यथावस्थितं च ब्रह्म उपास्यम् । अयथोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात् ; 'यथा क्रतुरस्मिन् लोके पुरुषो भवति । तथेतः प्रेत्य भवति' इति न्यायात् । अतोऽन्यत्वेनोपास्यमिति ।

एवं प्राप्तेऽभिधीयते—आत्मेति तु–इति । तुशब्दोऽवधारणे । उपासितु-रात्मेत्येवोपास्यम् । उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा—तथा

स्वात्मनोऽपि परं ब्रह्म। आत्मेत्येवोपासीतेत्यर्थः। कुतः एवं ह्युपगच्छन्ति पूर्वे उपासितारः" 'त्वं वाऽहमस्मि भगवो देवते अहं वै त्वमसि भगवोदेवते' इति। उपासितुरर्थान्तरभूतं ब्रह्म उपासितारः अहमिति कथमभ्युपगच्छन्तीत्यत्राह—**ग्राहयन्ति चेति**। इममर्थमविरुद्धमुपासितॄन् ग्राहयन्ति शास्त्राणि—तान् प्रत्युपपादयन्तीत्यर्थः।

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' इति, तथा 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वम्', 'सर्वं खल्विदं ब्रह्म तज्जलानिति' इति च—सर्वस्य चिदचिद्वस्तुनः तज्जत्वात् तल्लत्वात् तदनत्वात् तन्नियाम्यत्वात् तच्छरीरत्वाच्च सर्वस्यायमात्मा ; अतः स ते आत्मा ; अतो यथा प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वात् 'देवोऽहं मनुष्योऽहमि'त्यनुसन्धानम् ; तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनः तस्याप्यहमित्येवानुसन्धानं युक्तमिति। एवं शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तः 'त्वं वा अहमस्मि भगवो देवते। अहं वै त्वमसि भगवो देवते' इति व्यतिकरेणोक्तवन्तः। मोक्षफलश्रवणाच्च न दृष्टिविधित्वम्।

एवं च 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' 'अकृत्स्नो ह्येषः.........आत्मेत्येवोपासीत', सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' इत्यन्यत्वानुसन्धाननिषेधवचनं, 'पृथगात्मानं प्रेरितारं च मत्वा' इति पृथक्त्वानुसन्धानविधानं चाविरुद्धम्। अहमिति स्वात्मतयाऽनुसन्धानात् अन्यत्वानुसन्धाननिषेधो रक्षितः। स्वशरीरात् स्वात्मनः अधिकत्वानुसन्धानवत् स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात् पृथक्त्वानुसन्धानविधानं च रक्षितम्। अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्, तस्य च ब्रह्मशरीरत्वात् निषेधवाक्ये, 'अकृत्स्नो ह्येषः' इत्युक्तम्। अतः उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम्।

ननु किमर्थमियान् क्लेशः ? 'मम स्वामी' इत्येवानुसन्धीयतामिति चेत्,

व्यक्तिः जीवेशभेदे व्यधिकरणपदैः भावने स्यात्तथाऽपि।
ब्रह्माधीनस्वरूपप्रमितिसुदृढता सिद्ध्येऽहंग्रहोक्तिः ॥

इत्याचार्यानुगृहीतसारावल्युक्तदिशा 'मम स्वामी' इत्यपेक्षया 'अहं ब्रह्म' इति सामानाधिकरण्येन ब्रह्मपरतन्त्रस्वरूपप्रमितिः सुदृढतामेतीति भावः। तथा च 'एका क्रिया द्व्यर्थकरी बभूव' इति न्यायेन शास्त्रानुष्ठानं सर्वथा पारतन्त्र्याध्यवसायश्च सिद्ध्यतः इति भावः।

अत्रोपगच्छन्तीत्यनेन सम्प्रदायः, ग्राहयन्तीत्यनेन तत्र प्रमाणं च प्रादर्शि। अनेन 'मम स्वामी विष्णुः' इत्यादिकं विहाय, 'अहं ब्रह्मास्मि' इत्येवोपासनं कर्तव्यमित्यत्र प्रमाणसम्प्रदायौ न्यरूपिषाताम्।

एतेन प्रमाणानुसारिसंप्रदाय एवोपादेय इति, सर्वत्रात्मनः अहन्त्वेनैव ग्रहणमिति च शिक्षितम्॥

आत्मेत्येव परं ध्येयमुपगच्छन्त्युपासकाः।
त्वं वा अहमस्मीत्यत्र स त आत्मेति बोधनात्॥ (ब्र.प.मा.)

अत्र शङ्कर भाष्यम्—यः शास्त्रोक्तविशेषणः परमात्मा सः किमहमिति ग्रहीतव्यः? किं वा मदन्यः इत्येतद्विचारयति। कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति। उच्यते—

अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगन्तुं सति जीवेश्वरयोः अभेदसम्भवे; इतरथा तु गौणोऽयमभ्युपगन्तव्य इति मन्यते। किं तावत् प्राप्तं नाहमिति ग्राह्यः। न हि अपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुं, विपरीतगुणो वा अपहतपाप्मत्वादिगुणत्वेन। अपहतपाप्मादिगुणश्च परमेश्वरस्तद्विपरीतगुणस्तु शारीरः। ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः। ततः शास्त्रानर्थक्यम्। संसारिणोऽपि ईश्वरात्मत्वे अधिकार्यभावात् शास्त्रानर्थक्यमेव। प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात्कर्तव्यं प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्काममेवं भवतु। न तु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यम् इति।

एवं प्राप्ते ब्रूमः—आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। तथाहि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैतमुपगच्छन्ति—'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि

देवते ' इति । तथाऽन्येऽपि ' अहं ब्रह्मास्मि ' इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि ' एष त आत्मा सर्वान्तरः ' ' एष त आत्माऽन्तर्याम्यमृतः ' ' तत्सत्यं, स आत्मा तत्त्वमसि ' इत्येवमादीनि ।

यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति, तदयुक्तम् ; गौणत्वप्रसङ्गात् , वाक्यवैरूप्याच्च । यत्र हि प्रतीकदृष्टिरभिप्रेयते, सकृदेव तत्र वचनंभवति । यथा—' मनो ब्रह्म ' ' आदित्यो ब्रह्म ' इत्यादि । इह पुनः ' त्वमहमस्म्यहं च त्वमसि ' इत्याह । अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः । भेददृष्ट्यपवादाच्च । तथा हि—' अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद ' ' मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति ' ' सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ' इत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति ।

यत्तूक्तं—न विरुद्धगुणयोरन्योन्यात्मत्वसम्भव—इति, नायं दोषः। विरुद्धगुणताया मिथ्यात्वोपपत्तेः । यत्पुनरुक्तमीश्वराभावप्रसङ्ग इति, तदसत् ; शास्त्रप्रामाण्यादनभ्युपगमाच्च । न हि ईश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः, किं तर्हि संसारिणः संसारित्वापोहेन ईश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवं च सत्यद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता विपरीतगुणता तु ईश्वरस्य मिथ्येति व्यवतिष्ठते ।

यदप्युक्तम्—अधिकार्यभावः प्रत्यक्षादिविरोधश्च—इति, तदप्यसत् ; प्राक्प्रबोधात्संसारित्वाभ्युपगमात् । तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य । ' यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् ' इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग—इति चेत्, न ; इष्टत्वात् । ' अत्र पिताऽपिता भवति ' इत्युपक्रम्य ; ' वेदा अवेदाः ' इति वचनादिष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे । कस्य पुनरयमप्रबोधः ? इति चेत् , यस्त्वं पृच्छसि तस्य त इति वदामः । नन्वहमीश्वर एवोक्तः श्रुत्या, यद्येवं प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोधः । योऽपि दोषश्चोद्यते कैश्चिदविद्यया किलात्मनः सद्वितीयत्वात् अद्वैतानुपपत्तिरिति सोऽपि एतेन प्रत्युक्तः । तस्मात् आत्मेत्येवेश्वरे मनो दधीत —इति ।

अत्रेदमवधेयम् — निर्विशेषाद्वैतानुसारेणात्मशब्दस्य 'मृदात्मको घटः' इत्यादाविव स्वरूपपरतां स्वीकृत्य आत्मेत्येव प्रतिपत्तव्यः इति प्रसाधितम् ।

श्रीभाष्यकारास्तु आत्मशब्दस्यानेकार्थत्वेऽपि गोशब्दवत् शरीरप्रतिसम्बन्धिन्येव प्रसिद्धेः जीवस्वरूपस्याप्यन्तःप्रविश्यनियन्तृतया, परमात्मानं स्वात्मत्वेनैवोपासीतेति निरणैषुः—तथा सति 'ये परं ब्रह्मोपासते, ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते। तानुभयविधान् नयतीति' कार्याधिकरणोक्त सिद्धान्तः विरुद्धःस्यादिति नापादनीयम् । उभयविधोपासनेऽपि ब्रह्मण्येवात्मत्वस्यापरित्यागात् ।

अत्रेदं हृदयमाचार्याणाम् । विशेषणविशेष्यभावव्यत्यासेऽपि, ब्रह्मण एव आत्मत्वोपासनं न परित्यक्तम् । 'ब्रह्मात्मकोऽहं इत्यत्र जीवस्वरूपस्यविशेष्यता— 'अहं ब्रह्म' इत्यत्र तु मदात्मभूतं ब्रह्मेतिप्रतीत्या ब्रह्मणः विशेष्यतेति शाब्दबोधवैलक्षण्येपि एतदधिकरणसिद्धान्तरीत्या ब्रह्मण एवोभयत्र स्वात्मत्वं अनुसंहितमिति न पूर्वापरविरोधः । एतत्सर्वमभिप्रेत्यैव 'त्वं वा अहमस्मि', 'अहं वै त्वमसि' इति पूर्वे उपासितारः उपगच्छन्तीति सम्प्रदायं निरदिशन् इति ॥

**आत्मेश्वरः**—अनन्याधिपतिः परमात्मा ।

'पतिं विश्वस्यात्मेश्वरम्' । (तै.ना.92)

आत्मा स्वमेव ईश्वरो यस्येति बहुव्रीहिः ।

अनेन विश्वस्य पत्युरन्यः ईश्वरो वर्तते वेति प्रस्तुता शङ्का व्युदासि । अतएवात्र आत्मनामीश्वरः इति समासो नाद्रियते ॥

**आत्मैव इदमग्र आसीत् पुरुषविधः**—(बृ.उ. 3-4-1)

(प्रलये सूक्ष्मचिदचिद्विशिष्टपरमपुरुषस्य सद्भावः प्रतिपाद्यतेऽत्र ।)

ननु **आत्मैवेदमग्र आसीत्** इत्युक्तम् । 'यदिदं किञ्च मिथुनमापिपीलिकाभ्यः तत्सर्वमसृजत' इति सृष्टतया निर्दिष्टस्य मिथुनादिरूपस्य प्रपञ्चस्येदंशब्दनिर्दिष्टस्यात्मभिन्नत्वेन 'आत्मैवेदमग्र आसीद्' इति वक्तमयुक्तत्वादित्याशंक्य, इदमादिनामरूप-

भाक्त्वादिदंशब्दवाच्यमपि तच्छरीरं ब्रह्मैव। तस्य च 'आत्मैवेदमग्र आसीत्' इत्यात्मशब्दवाच्यसूक्ष्मचिदचिद्विशिष्टब्रह्माभेद उपपद्यत इत्येतदर्थोऽत्र सन्दर्भ आरभ्यते।

'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत। असौनामाऽय-मिदंरूप इति। तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायम् इदंरूप इति। स एष इह प्रविष्ट आनखाग्रेभ्यः, यथा क्षुरधानेऽवहितः स्यात्....तं न पश्यति अकृत्स्नो हि सः इति।

हशब्दो वृत्तार्थस्मरणे। तदिदं मिथुनादिलक्षणं जगत् तर्हि तदा-सृष्टेः प्राक् अव्याकृतमासीत् अव्यक्तमासीत्, अव्यक्तशरीरकं ब्रह्मासीदित्यर्थः; नामरुपाभ्यां न व्याकृतमिति व्युत्पत्त्या अव्याकृतशब्दस्याव्यक्तवचनत्वात्। अव्यक्तत्वञ्च नामरुपविशिष्ट-तयाऽनभिव्यक्तत्वम्। अव्याकृतशब्दस्य तच्छरीरकब्रह्मपरत्वे युक्तिः समनन्तरमेव स्पष्ट-यिष्यते। तदेव अव्याकृतशरीरं ब्रह्मैव-नामरुपाभ्यामिति इत्थंभावे तृतीया—नामरुपवत्तया व्याक्रियत व्याकृतमासीत्। व्याङ्भ्यामुपसर्गाभ्याम्, विविच्य समन्तात् कृतमासीदित्यर्थः।

तदेव दर्शयति—**असौ नामायमिदंरुप इति**। असौनामा देवमनुष्यादि-नामा, इदंरुपः करचरणादिरुपवानित्येवं अयं पूर्वोक्त आत्मैव व्याक्रियतेत्यर्थः। 'तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदंरुप इति'। अनेन वाक्येन सृष्ट्यादिकालिके अप्रत्यक्षे अव्याकृतनामरूपव्याकरणे सुग्रहत्वाय निदर्शनमुच्यते। तत्—पूर्वं तथा नामरूपाभ्यां व्याकरणाद्धेतोः एतदपि—इदानीमपि इदं उत्पद्यमानं चराचरव्यक्तिजातम्, इदंरूपोऽयं—एतादृशसंस्थानवानयं असौनामा-देवदत्त-यज्ञदत्तादि-नामवानिति नामरूपाभ्यामेव व्याक्रियते। इत्थमेव आदावपि नामरूपाभ्यां व्याकरणमवधेयमित्यर्थः। उभयत्र, असौनामेति छान्दसोऽलुक्। अदोनामेति लिङ्गव्यत्ययोऽपि छान्दसः। ततश्च नामरूपकत्वमव्याकृतशब्दितस्य ब्रह्मणः सिद्धमिति सर्वाणि च नामानि तत्प्रवृत्तिनिमित्तभूतानि च रूपाणि तदीयान्येव। अतः इदमादि-शब्दैरपि तस्यैव निर्देशसम्भवात् आत्मैवेदमग्र आसीदित्यभेदनिर्देशे नानुपपत्तिरिति भावः।

नामरूपाभ्यामेवेत्यत्रैवकारो भिन्नक्रमः। तदेव नामरूपाभ्यां स्वयमेव व्याक्रियतेत्यत्र कर्मकर्तरि लकारः। कर्त्रन्तरापेक्षे गौरवात्; 'तदात्मानं स्वयमकुरुते' त्यनेनैकार्थ्यात्। उक्तञ्च भगवता भाष्यकृता—'तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियतेत्युच्यते' इति।

ननु अव्याकृतमासीदित्यत्र क्तप्रत्ययस्य कर्मार्थकत्वमेव वक्तव्यम्; न तु कर्मकर्त्रर्थकत्वम्। न च कर्मकर्तर्यपि कर्मवद्भावेनक्तप्रत्ययसिद्धिरस्त्विति वाच्यम्—लान्तस्य यः कर्मणा तुल्यक्रियः कर्ता, तस्यैव कर्मवद्भावविधानात्। कृत्यक्तखलर्थेषु कर्मवद्भावाभावात् अवश्यं कर्मण्येवक्तो वक्तव्यः। ततश्च तद्वैरूप्याय व्यक्रियतेत्यत्रापि कर्मण्येव लकारोऽस्त्विति चेन्न—एवकारेण कर्त्रन्तरव्यवच्छेदात् कर्त्रन्तरापेक्षे गौरवाच्च व्याक्रियतेति लकारस्य कर्मकर्तर्येवाभ्युपगन्तव्यात्, वैरूप्यस्यापि सोढव्यत्वात्।

नन्वात्मनः कथं देवमनुष्यादिनामरूपवत्त्वम्, देवमनुष्यादि शरीरे तस्य अवर्तमानत्वादितीमां शंकां व्यवर्तयति **स एस इह प्रविष्ट आनखग्रेभ्यः**। **एषः** अव्याकृतशरीरकः **सः** पूर्वमात्मशब्दितः परमात्मा इह कार्यवर्गे **आनखाग्रेभ्यः प्रविष्टः** कारणावस्थायां चिदचितोर्व्याप्य स्थितत्वात् कार्यावस्थायामपि तयोः परिपूर्ण एव स्थित इत्यर्थः। प्रविष्टः। अन्तर्यामिरूपेणेति शेषः। दृष्टान्तमाह **यथा क्षुरः क्षुरधानेऽवहितः स्याद् विश्वम्भरो वा विश्वम्भरकुलाये**। क्षुरो धीयतेऽस्मिन्निति **क्षुरधानम्** [—अधिकरणे ल्युट्—] क्षुरकोशः। तस्मिन् यथा क्षुरः अवहितः पिहितप्रविष्टः, विश्वं बिभर्ति वैश्वानराग्निरूपेणेति **विश्वम्भरः** अग्निः तस्य विश्वम्भरस्याग्नेः कुलाये नीडे—दारुणीति यावत्—यथा पिहितप्रविष्टः तथा इह प्रविष्ट इति पूर्वेणान्वयः। तन्न पश्यत्यकृत्स्नो हि सः। यस्तिलतैलवत् सर्वस्वरूपव्याप्तं परमात्मानं न पश्यति, सः अकृत्स्नः अपूर्णस्वरूपः। असत्कल्प इति यावत्॥ (रं.भा.)

शंकरभाष्ये तु—

आत्मैव—आत्मेति प्रजापतिः प्रथमोऽण्डजः शरीर्यभिधीयते। वैदिकज्ञानकर्मफलभूतः स एव—किमिदं शरीरभेदजातं तेन प्रजापतिशरीरेणविभक्तम् आत्मैवासीत्

अग्रे प्राक्शरीरान्तरोत्पत्तेः । स च पुरुषविधः पुरुषप्रकारः शिरःपाण्यादिलक्षणो विराट् इत्युक्तम् ।

सिद्धान्ते तु कारणवाक्यगतात्मशब्दः 'आत्मा वा इदमेक एवाग्र आसीत्' नान्यत् किञ्चन मिषत् । इत्यादि ऐतरेय श्रुत्यनुरोधेन जगत्कारण परमात्मपरतया-व्याख्यातः ॥

**आत्म्यम्**—व्याप्यम् । (शरीरम्)

[आत्मशब्दोहि 'अतसातत्यगमने' इति धातुना निष्पन्नो व्यापकवाची । धर्मभूतज्ञानद्वारा व्यापकं आत्मानं अर्हति इत्यर्थे यत् प्रत्ययः । तथा च व्याप्य-मित्यर्थः-शरीरस्यात्मना व्याप्यत्वात् शरीरमिति फलितार्थः—]

'यदाह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलनेऽभयं प्रतिष्ठां विन्दते'।
(तै. आ. 31)

आत्म्यं व्याप्यम्—कर्मकृतशरीरम् । तद्रहितोऽनात्म्यः ॥ (रं. भा.)

**आत्यन्तिकं सुखम्**—पुनर्दुःख सम्भेद रहितं नाशरहितञ्च ।

[अन्तमतिक्रान्तमत्यन्तं, तत्रभव इत्यर्थे अध्यात्मादित्वात् ठञ्प्रत्यये इकादेशश्च।]

'सुखमात्यन्तिकं यत्तत् बुद्धिग्राह्यमतीन्द्रियम्' । (गी. 6–21)

सातिशयनिरतिशयपुरुषार्थविवेकेन तदेकभोग्यतया उत्तरावधिरहितम् ।
(गी. सं. रक्षा.)

फलान्तरोपाधिकनिवृत्तिरहितत्वं पश्चात् यावत्कालमनुवर्तमानत्वं वा आत्यन्ति-कत्वम् ॥ (वि.को.)

अत्यन्तमेव भवति इत्यात्यन्तिकम् अनन्तमित्यर्थः । (शं.भा.)

**आत्यन्तिकसंप्लवः**—(1) आत्यन्तिकप्रलयः । (पुनरावृत्तिरहितः मोक्षः)

यदेवमेतेन विवेकहेतिना मायामयाहंकरणात्मबन्धनम् ।
छित्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमंगसंप्लवम् ॥(भाग. 12–4–34)

विवेकादिसाधनसप्तकानुगृहीतभगवदुपासनरूपेण खड्गेन मायाविकाराहंकार-परिणामरूपदेहसंबन्धरूपम् आत्मनो बन्धं छित्वा अच्युते अनुभवो यस्य सः अवतिष्ठते इति यत्, तमेव आत्यन्तिकं संप्लवं प्रलयमाहुः आत्मयाथात्म्यविदः। (भा.वी.)

2. प्रलयः–नैमित्तिक प्राकृत-आत्यन्तिक भेदेन त्रिविधः।

यथा विष्णुपुराणे—(6-3-2)

सर्वेषामेव भूतानां त्रिविधः प्रतिसंचरः।
नैमित्तिकः प्राकृतिकः तथैवात्यन्तिको लयः॥
ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसञ्चरः।
आत्यन्तिकस्तु मोक्षाख्यः प्राकृतो द्विपरार्धकः॥ इति।

तत्र प्रलयो नाम न स्वरूपोच्छेदः। अपि तु अविभागेनावस्थानम्। तदपि क्षीरे नीरस्येव नामरूपविभागानर्हस्संसर्गः। मोक्षे तु आत्यन्तिके लये देवादिनामरूप-संसर्गविनाश एव। (द. उ. 205)

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥
अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे।
राञ्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥ इति।

गीतोक्तदिशा चतुर्मुखकर्तृकप्रलयः नैमित्तिकः, चतुर्मुखस्यापि लयः प्राकृतः। आत्यन्तिकस्तु मोक्षः इतिः विभागः॥

**आत्यन्तिकीमुक्तिः**—सायुज्यरूपा मुक्तिः।

प्रकृतिसम्बन्धात् मुक्तिः। परमपदप्राप्तिः। (दि.मू.च. 133)

सामीप्य-सालोक्य-सारूप्यरूपमुक्तीनां आत्यन्तिकमुक्तिरूपता नास्तीति भावः। सायुज्यरूपमुक्तौ हि इतरासामन्तर्भावः।

लोकेषु विष्णोर्निवसन्ति केचित् समीपंऋच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥ इत्युक्तेः ।

**आदरादलोपः**–(ब्र. सू. 3–3–39)

कामाद्यधिकरणे द्वितीयंसूत्रम् ।

मोक्षार्थोपासने ब्रह्मणि गुणानामलोपः-अनुसन्धानं कार्यम्, आदरातिशयेन श्रुतिविहितत्त्वात् ।

ब्रह्मणः निर्विशेषतया, मोक्षार्थोपासने पूर्वसूत्रोक्त सत्यकामत्वादिगुणानां लोप एवेति पूर्वपक्षे सिद्धान्तमाह—**आदरादिति** ।

– ब्रह्मगुणत्वेन प्रमाणान्तराप्राप्तानां गुणानामेषां सत्यकामत्वादीनां 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः' 'सर्वस्य वशी सर्वस्येशानः' एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' इत्यादिभिरनयोः श्रुत्योरन्यासु च मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशादेषामलोपः; अपि तु उपसंहार एव कार्यः ।

छान्दोग्ये तावत् 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनमभिधाय 'अथ य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति' इत्यवेदननिन्दा क्रियमाणा गुणविशिष्टवेदनस्यादरं दर्शयति । तथा वाजसनेयके 'सर्वस्य वशी सर्वस्य ईशानः', 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' इति भूयोभूय ऐश्वर्योपदेशाद्गुणेष्वादरः प्रतीयते । एवमन्यत्रापि ।

न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रं प्रतारकवदपारमार्थिकान्निरसनीयान् गुणान् प्रमाणान्तराप्रतिपन्नानादरेणोपदिश्य संसारचक्रपरिवर्तनेन पूर्वमेव बम्भ्रम्यमाणान्मुमुक्षून् भूयोऽपि भ्रमयितुमलम् ।

'नेह नानास्ति किंचन' 'एकधैवानुद्रष्टव्यम्' इति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वात्मादेकधाऽनुदर्शनं विधाय अब्रह्मात्मकत्वेन पूर्वसिद्धनानात्वदर्शनं निषेधति इत्ययमर्थः प्रागेव प्रपंचितः। 'स एष नेतिनेत्यात्मा' इत्यत्र नेतिशब्देन प्रमाणान्तर-प्रतिपन्नं प्रपञ्चाकारं परामृश्य न तथाविधं ब्रह्मेति सर्वात्मभूतस्य ब्रह्मणः प्रपंचविलक्षणत्वं प्रतिपाद्यते। तदेव च अनन्तरमुपपादयति 'अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असंगो न हि सज्यते असितो न व्यथते न रिष्यति' इति। प्रमाणान्तरग्राह्य-विसजातीयत्वात्प्रमाणान्तरेण न गृह्यते। विशरणीयविसजातीयत्वान्न विशीर्यते। एवमुत्तरत्राऽनुसन्धेयम्।

छान्दोग्येऽपि 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिताः' इति सर्वविसजातीयत्वं ब्रह्मणः प्रतिपाद्य तस्मिन् सत्यकामत्वादयो विधीयन्ते।

ननु तत्त्वज्ञानस्यैव मुक्त्युपायतया सत्यकामत्ववशित्वादीनां गुणानां काल्पनिकतया शुक्तिरूप्यवदतात्विकतया मुक्त्युपायभूततत्त्वज्ञाने अनुपसंहार्यतैव। गुणानाम-पारमार्थिकत्वञ्च 'अद्वितीयम्' इत्यनेन स्वगतभेदनिषेधकेन, 'निर्गुणम्' इत्यनेन च गुणानां निषेधावगमात्।

'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति'॥

'एकधैवानुद्रष्टव्यं एतदप्रमेयं ध्रुवम्' इति प्रकृतवाक्येन 'स एष नेति नेत्यात्मा' इत्युत्तरवाक्येन चोपास्यस्य ब्रह्मणो निर्विशेषत्वस्य प्रतीत्या गुणानामभावा-वगमाच्च। 'य इहात्मानमनुविद्य व्रजान्ति एतांश्च सत्यान्कामान्' इति सगुणोपासनं विधाय, तत्फलतया 'जक्षन् क्रीडन्' इत्यादिना सांसारिकफलोक्त्या गुणानां मुक्त्युपायोपासनोपसंहारो न युज्यते।

न चैषां मुक्तभोग्यत्वं सम्भवति। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति मुक्तस्याशरीरत्वप्रियाप्रियराहित्योक्तेः। 'स्वेन रूपेणाभिनिष्पद्यत'

इति स्वरूपाविर्भावफलश्रवणेन तत्क्रतुन्यायेन निर्विशेषस्वरूपस्यैव मुमुक्षूपास्यत्वमिति चेत् , न ।

कारणप्रस्तावादुपादानव्यतिरिक्तनिमित्तसद्भावायत्तसर्वविज्ञानानुपपत्तिपरिहाराय तस्यैव निमित्तत्वसिद्धये निमित्तान्तरनिषेधस्यैवाद्वितीयपदाभिप्रेतत्वौचित्येन तेन पदेन गुणनिषेधकत्वाभावात् । 'सदेव सोम्य' इत्युक्तकारणत्वौपयिकज्ञानशक्त्यादिगुणानां निषेधासंङ्गतेश्च। 'तदैक्षत बहु स्याम्' इत्यादिनोत्तरत्रेक्षणादिगुणोक्तिविरोधाच्च। निर्गुण-मित्यस्य वशित्वादिगुणविशेषप्रापकवाक्यान्तरानुसारेण विहितेतरहेयगुणनिषेधविषयत्वस्यैव न्याय्यत्वाच्च। प्रमाणान्तराप्राप्तानां श्रुत्येकसमधिगतानां श्रुत्यैव निषेधे श्रुतेरुन्मत्तप्रलपित-त्वापाताच्च । ब्रह्मकार्याणां 'सन्मूलास्सोम्येमास्सदायतनास्सत्प्रतिष्ठाः' इत्यादिना प्रमाणान्तराप्राप्तं ब्रह्मात्मकत्व-ब्रह्मकार्यत्वादिकं प्रतिपाद्य तस्यैव निषेध इत्यसम्भवेना-ब्रह्मात्मकनिषेधो 'नेह नानास्ति' इत्यादिनेत्यवश्यवाच्यतया ततोऽपि गुणनिषेधासिद्धेः।

'स एष नेति नेति' इत्यत्रापीतिशब्देन प्रपञ्चप्रकारं परामृश्य स एष आत्मा प्रपञ्चप्रकारो न, प्रपञ्चगतस्वभावो नेति ब्रह्मणि प्रपञ्चवैलक्षण्यप्रतिपादकतया ततो निर्विशेषवस्त्वसिद्धेः । 'अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असंगो न हि सज्यते अव्यथितो न व्यथते' इत्युत्तरत्र प्रपञ्चवैलक्षण्यस्यैव प्रतिपादनाच्च । 'एकधैवानुद्रष्टव्यम्' इत्यत्र प्रकारवाचिधाप्रत्ययेन 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति सूत्रोक्तन्यायेन स्वात्मान्तर्यामित्वरूपात्मत्वैकत्वप्रकारेण ब्रह्म मनसा निर्मलीकृतेन अनुद्रष्टव्यमनुसन्धेयमिति तदर्थतया ततोऽपि निर्विशेषोपासनासिद्धेः ।

'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यते। स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा' इत्यादिना सर्वकर्मविनिर्मुक्तस्य परं ज्योतिरुपसम्पन्नस्य परं ज्योतिरुपसत्तिकार्यतया कीर्त्यमानानां जक्षणादीनां कर्ममूलत्व-सांसारिकफलत्वोक्त्यसम्भवात् । कर्ममूलानां प्राकृतानामेव जक्षणादीनां हेयत्वात् 'तद्यथेह कर्मचितो लोकः क्षीयते । एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रुत्या कर्मकृतानामेव हेयत्वप्रतिपादनात् । अन्यथा आनन्दानुभवत्वाविशेषात् वैषयिकानन्दानुभववत् स्वप्रकाशरूपानन्दानुभवस्यापि हेयत्वापातात् ।

तस्मादकर्मकृतानां परमात्मसम्पत्तिकृतानां जक्षणादीनां न सांसारिकफलत्वमिति कामादिगुणादीनां मुक्त्युपायोपासनोपास्यतया गुणोपसंहारानुपसंहारफलकविद्याभेदाभेदचिन्तोपपन्नेति स्थितम् ॥

वशित्वादिगुणानान्तु वेदनं श्रुतिभिर्विना ।
न भवेदित्यादराच्च ध्येयत्वं त्याज्यता न हि ॥ (ब्र.प.मा.)

शङ्करभाष्ये तु—इदं सूत्रं पृथगधिकरणतया, भोजनलोपेपि द्रव्यान्तरेण अविरुद्धेन प्राणाग्निहोत्रस्यानुष्ठानं न तु तस्य लोपः इति पूर्वपक्षपरतया उपवर्णितम् ।

**आदावप्सृष्टिवादः**—अप्पदमुपलक्षणमिति न विरुद्धः ।

आदावप्सृष्टिवादश्श्रुतिमितमितरन्न प्रतिक्षेप्तुमीष्टे । (त.मु. 13)

ननु 'आपो वा इदमग्रे' 'अप एव ससर्जादौ' इत्यादिश्रुतिस्मृतिदर्शनादग्न्यादेस्सर्वस्याद्भ्य एव सृष्टिस्स्यादित्यत्राह–**आदाविति** । महदादीनामिवाग्नेरप्यद्भ्यः पूर्वभावित्वं बहुश्रुतिस्मृतिसिद्धमतस्तदविरुद्धं दुर्निवारमित्यर्थः । श्रुतिषु च न्यूननिर्देशेष्वनुक्तमधिकमन्यतो ग्राह्यम् ; श्रुतहानायोगात्, अव्यवस्थितन्यूनाधिकसृष्टिकल्पने गौरवाच्च । (स.सि.)

महदादीनामिव 'अग्नेरापः अद्भ्यः पृथिवी' इति अद्भ्यः पूर्वभावित्वं अग्नेः बहुश्रुतिसिद्धं ; अतस्तदविरोधेनार्थो निर्णेतव्यः । न्यूननिर्देशेषु च 'अनुक्तमन्यतोग्राह्यम्' इति न्यायेन अन्यत्रोक्तं च ग्राह्यमेव ॥

**आदि**—1. सर्वसंहर्तृ । (वासुदेवरूपम्)

'विज्ञानादिभावे वा तदप्रतिषेधः' । (ब्र.सू. 2-2-41)

अत्र भक्षणार्थक 'अदधातोः' ताच्छील्ये 'णिनि' प्रत्यये आदिवृद्धौ विशेष्यानुरोधेन 'आदि' इति रूपम् । 'विज्ञानञ्चादि' इति विग्रहः ।

पाञ्चरात्रसंहिताप्रकरणानुरोधेन संकर्षणादिरूपाणां संहारहेतुभूतं मूलकारणं वासुदेवतत्त्वं विवक्षणीयं इत्याशयेन संहारार्थविवक्षया नपुंसकशब्दः प्रायुज्यत भगवता बादरायणेन ।

2. प्रधानम्—'आप्नोति ह वै सर्वान् कामान्, आदिश्च भवति य एवं वेद
(मां.उ. 3-2)

3. कारणम्—'अहमादिश्च मध्यं च भूतानामन्त एव च' (गी. 10-20)

4. प्रथमः—'जन्माद्यस्ययतः' अत्र तु सर्वत्र घुसंज्ञकाद्दा धातोः आङ्पूर्वकात् किप्रत्यये सति, 'कथन्तोघुः' इत्यनेन नित्यपुल्लिङ्गता ।

**आदिकर्ता**—चतुर्मुखस्याप्युत्पत्तिकारणं परमात्मा ।

आदिकर्ता परमपुरुषो हि पूर्वरूपसंस्थानं जगत् स्मृत्वा(ज्ञात्वा) तदाकारमेव जगत् सृजति । वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य चतुर्मुखाय ददातीति श्रुतिस्मृतिभ्याम् आदिकर्ता पूर्ववत्सृजतीत्यवगम्यते ।

श्रुतिस्तावत्—

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इत्यादिका । 'यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै' इति च । स्मृतिरपि—

'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथाभावा युगादिषु' ॥ इति ।
(वे. सा. 1-3-29)

समष्टिसृष्टिः साक्षात् परमपुरुषकर्तृका, व्यष्टिसृष्टिस्तु चतर्मुखद्वारिकेति सर्वस्यापि जगतः कर्ता आदिपुरुषः परमात्मैव—

**आदिकविः**—1. सर्वपुराणप्रोक्ता चतुर्मुखः ।

'जन्माद्यस्ययतोन्वयादितरतश्चार्थेष्वभिज्ञस्स्वराट् तेने ब्रह्म हृदा य आदिकवये-मुह्यन्ति यं सूरयः' । (भाग. 1-1)

आदिकवये चतुर्मुखाय ब्रह-वेदं, यः तेने प्रकाशितवान् । (व्या.)

वाल्मीकिः । आदिकाव्यरामायणकर्ता ।

**आदिक्षेत्रज्ञः**—क्षेत्रज्ञेषु जीवेषु प्रथमः चतुर्मुखः ।

आदिक्षेत्रज्ञत्वात् ब्रह्मणः तस्यापि केषुचिदहस्सु सत्त्वमुद्रिक्तं, केषुचिद्रजः केषुचित्तमः ।

यथोक्तं भगवता 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः' ।। इति ।

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इतिश्रुतेः, ब्रह्मणोपि सृज्यत्वेन शास्त्रवश्यत्वेन च क्षेत्रज्ञत्वं गम्यते ।

**आदित्**—आदिभूतं (परं ब्रह्म) ।

'तत्रैते द्वे ऋचौ भवतः—आदित् प्रत्नस्य रेतसः' । (छां. उ. 3-17-1)

'आदित्पश्यामि' (5-6-1) यजुस्संहितायां आदित्—इत्यस्य अनन्तरं इति व्याख्यातम् । सायणभाष्ये आत्-इत्; इदमव्ययमित्युक्तम् । तदनुरोधेनात्रापि अव्ययानामनेकार्थतया, आदिभूतमिति भाषितम् ।

**आदित्यः**—(स. ना. 39)

अथैषां प्रादुर्भावानामुदाहरणं पूर्णिपुरुषमाह, (आदित्यः); आदित्योऽस्य निवास इति । (वि.स.भा.)

निवासस्सविता यस्य स आदित्यः प्रकीर्तितः ॥ (वि.स.नि.)

**आदित्यः**—(स. ना. 568)

स्ववाचकात् आवर्णात् आत्, इत्यः—प्राप्यः इति आदित्यः । आकारो हि संकर्षणबीजमन्त्रः । भूतपूर्वाऽदितिभावायाः देवक्याः अपत्यमिति वा आदित्यः । (वि.स.भा.)

आता तपरोऽयं असन्देहार्थो निर्देशः, पाक्षिकार्थान्तरलाभार्थश्च । (वि.स.निर्व.)
आवर्णादेव प्राप्यो यः स आदित्यः प्रकीर्तितः ।
अदितिर्देवकी तस्याः आदित्यो वा ह्यपत्यतः ॥ (वि.स.नि.)

**आदित्यः**—द्वादशविधः ।

'विवस्वान्, अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता, विधाता, वरुणः, मित्रः, शक्रः, उरुक्रमः' इति द्वादशादित्याः । (सं. अ.)

1. अदितेः अखण्डिताया भूमेः पतिरित्यादित्यः सर्वेश्वरः । 2. भोक्ता जीवः । 3. वाय्वनन्तरः आतिवाहिकविशेषः । (वि. को.)

**आदित्यगतिन्यायः**—कश्चन न्यायविशेषः ।

यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते, देशान्तरप्राप्त्यनया अनुमीयते, तथा जन्मान्तरकृतकर्म सदपि सूक्ष्मत्वात् प्रत्यक्षेण ग्रहीतुमशक्यं तत्कृतकार्यदर्शनात् अनुमीयते । (मी. को)

सिद्धान्ते तु 'न कर्माविभागादिति चेन्न अनादित्वात् उपपद्यते चाप्युपलभ्यते च' इति सूत्रोक्तरीत्या अकृताभ्यागमकृतविप्रणाशप्रसंगपरिहारार्थं क्षेत्रज्ञानां तत्कर्मप्रवाहाणां च अनादित्वं शास्त्रतः स्वीकृतम । अनुमानन्तु तदनुग्राहकमेव ॥

**आदित्यवर्णः**—कमनीयविग्रहविशिष्टः पुरुषः ।

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।' (श्वे. उ. 3-8)

'सर्वस्य धातारमचिन्त्यरूपम् आदित्यवर्णं तमसः परस्तात्' । (गी. 8-9)

अप्राकृतस्वासाधारणदिव्यरूपः । (गी. भा.)

वर्णयोगस्य स्वरूपेणाघटनात् प्रमाणसिद्धविलक्षणविग्रहद्वारा तद्योगमाह—**अप्राकृतेति** । 'येन सूर्यस्तपति तेजसेद्धः', 'यस्यादित्योभामुपयुज्य भाति', 'तस्य भासा सर्वमिदं विभाति', 'तं देवा ज्योतिषां ज्योतिः' इत्यादिषु निरतिशयदीप्तियोगस्सिद्धः । 'आदित्यवर्णं तमसः परस्तात्' इति श्रुतिखण्डस्यात्र निबन्धः, 'तम आसीत्तमसा गूढमग्रे प्रकेतम्' 'तमसस्तन्महिनाजायतैकम्' 'यदा तमः' इत्यादिश्रुत्यन्तरोपलक्षणार्थः । तेन 'तमसः' इति सर्वकारणभूततमोद्रव्यविवक्षा ।

'तमसः परस्ता'दित्यनेन फलितमप्राकृतत्वम्; तत एव चाकर्माधीनत्वं नित्यत्वं, निरवयवत्वमित्यादि सूचितम् । एतच्छलोकच्छायश्च मानवश्श्लोकः—

'प्रशासितारं सर्वेषामणीयांसमणीयसाम्' ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥ इति ।

अनुकूलाया हितरमणीयत्वाद्याकारेण हिरण्यवर्णत्वरुक्माभत्वादिव्यपदेशः । प्रतिकूलदुष्प्रेक्षत्वप्रकाशातिरेकादिविवक्षया आदित्यवर्णत्वाद्युक्तिः । 'दिवि सूर्य-सहस्रस्य' इत्यादि च वक्ष्यति । एतेनादित्यशब्दस्य नित्यचैतन्यप्रकाशपरत्वं, तमश्शब्दस्य चाज्ञानविषयत्वं परोक्तं निरस्तम् ॥ (ता. चं.)

## आदित्याक्षिस्थाहर्नामकब्रह्मविद्या

(बृहदारण्यके श्रूयते) 'सत्यं ब्रह्मेत्युपक्रम्य' 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेक्षन्नि'त्युपक्रम्य आदित्यमण्डलेऽक्षणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरकत्वेनोपास्यत्वमुक्त्वा, 'तस्योपनिषदहरित्यधिदैवतं' 'तस्योपनिषदहमित्यध्यात्म'मिति द्वे उपनिषदौ, रहस्यनामनी उपासनशेषतया आम्नायेते ।

तेन तत्तत्स्थानविशिष्टतत्तन्नामकब्रह्मणः उपासनं क्रमेण एवम् अभिधीयते । सम्बन्धाधिकरणेन अनयोः स्थानभेदेन विद्याभेदस्थापनपरेण निरूपितं च ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः (ब्र. सू. 4-1-6)

आदित्यादिमतय एव,-कर्मङ्गे उद्गीथादौ आदित्यादिदृष्टयः एव कार्याः; आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः ।

देवताया उत्कर्षाद्दृष्टिविशेषणत्वमुक्तम् । तदुत्कर्षाक्षेपेण कर्मण एवोत्कर्ष-श्शङ्क्यत इत्याक्षेपिका सङ्गतिः ।

'य एवासौ तपति तमुद्गीथमुपासीत' इत्यादि कर्माङ्गाश्रयोपासनेषु किमुद्गीथादौ आदित्यादि दृष्टिः कार्या किं वा आदित्यादिपूद्गीथदृष्टिः कार्येति सन्दिह्य निकृष्टेपूत्कृष्टा दृष्टेर्लोकन्यायसिद्धत्वात् साङ्गस्य कर्मणः फलसाधनत्वेनोत्कृष्टत्वादादित्यादेर्देवतात्वेन

तद्गुणत्वात् 'य एवासौ तपति' इति यत्त्वतत्त्वयोगेन देवताया उद्देश्यत्वावगमात् । 'तमुद्गीथमुपासीत' इति चरमनिर्देशाच्चोद्गीथस्य दृष्टिविशेषणत्वप्रतीतेः, इत्यादौ उद्गीथदृष्टिः कार्येत्याशङ्क्यक्षणध्वंसिनः कर्मणः कालान्तरभाविफलसाधनत्वं वाक्यशेषावगतदेवताप्रीतिद्वारेणेति देवताप्रीत्यर्थत्वेन कर्मणोऽप्रधानत्वात् देवतायाः साक्षात्फलसाधनत्वेनोत्कृष्टतया अर्थस्वभावप्राप्तदेवतादृष्टिविशेषणत्वानुरोधेन यद्वृत्तयोगाद्यस्वारस्यस्य सद्यत्वाच्च उद्गीथादौ आदित्यादिदेवतादृष्टिरेव कार्येति समाहितम् ॥

उद्गीथेषु च कर्माङ्गेष्वादित्यादेर्मतिर्भवेत् ।
आदित्यादिर्हि चोद्गीथात् उत्कृष्टो भवतीत्यतः ॥ (ब्र. प. मा.)

**आदित्यादिमत्यधिकरणम्—(4-1-4)**

'आदित्यादिमतयश्चाङ्ग उपपत्तेः' इति एकसूत्रात्मकमिदमधिकरणम् ।

अस्मिन्नधिकरणे 'उद्गीथादीनां फलसाधनतया उत्कृष्टत्वादादित्यादिषु उद्गीथादिदृष्टिः कार्या इत्याशङ्क्य,

आदित्यादिदेवताराधनद्वारेणैव कर्मणां फलसाधनत्वेन आदित्यादीनामेवोत्कृष्टत्वात् उद्गीथादौ आदित्यादिदृष्टिः कार्येत्युक्तम् ॥

उद्गीथदृष्टिस्तपने तु नीचे श्रेष्ठं हि कर्मैव फलप्रदत्वात् ।
तन्नैव तस्यापि फलप्रदत्वं तत्पूजनत्वादिति नान्यथा स्यात् ॥
(व्या. क. सं.)

**आदित्यान्तर्वर्ती** — पुरुषः नारायणः ।

'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ।' (तै. आ. 32)

'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम' इति आदित्यमण्डलान्तर्वर्तिकमनीयविग्रहयुक्तो यः पुण्डरीकाक्षः, स एव हृदयगुहावर्ती विज्ञानमयादन्तरः । ततश्च पुण्डरीकाक्षत्वादिविग्रहोपेतो नारायणः

एवेत्यर्थः । ततश्च तादृशविग्रहविशिष्टत्वेन हृदयगुहावर्तिनो भगवतो ध्यानं कर्तव्यमिति फलितार्थः ॥ (रं. भा.)

अन्तरादित्यविद्यायां विष्णुरेवाभिधीयते ।
तस्याऽपहतपाप्मत्वपद्माक्षत्वादियोगतः ॥
पुरुषश्रुतिबोध्यत्वात् तथाक्षिद्वययोगतः ।
एवं सुवर्णवर्णत्वात्पापनाशकभावतः ॥
परविद्यान्तरादित्यविद्यापि भगवत्परा ॥

तथाहि—छान्दोग्ये अन्तरादित्यविद्या श्रूयते—

'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति । अत्र पुरुषश्रुतेः भगवदसाधारणपुण्डरीकाक्षत्वाक्षिद्वित्वापहतपाप्मत्वसर्वपापविनाशकत्वो-पास्यत्वधर्मप्रतीतेश्च भगवत्परत्वसिद्धिः ।

तथाहि पुरुषशब्दस्य भगवदसाधारणत्वं बहुशः प्रतिपादितम् । पुण्डरीकाक्षत्वस्य भगवदसाधारणत्वं स्पष्टमेव । अक्षिद्वयमपि नारायणस्यैव । रुद्रस्य त्र्यक्षत्वेन 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति अक्षिद्वयानुवादेन पुण्डरीकसादृश्यविधाना-संभवात् ॥

ननु त्र्यक्षत्वेऽपि रुद्रस्य एकस्याक्ष्णो मुकुलितत्वेनाक्षिद्वयस्यैव रविकरविकसित-पुण्डरीकसादृश्यमिति तत्र तत्सादृश्यविधानमविरुद्धमिति चेत्—तथा सति प्रथममक्षिणि पुण्डरीकसादृश्यं विधाय, ततः पुण्डरीकसदृशाक्षिणी द्वे एवेति द्वित्वस्य विधाने विधेयभेदेन वाक्यभेदप्रसङ्गात् विरम्यव्यापारप्रसङ्गाच्च । आवृत्तिकल्पनायां स एव दोषः । अक्ष्यनुवादेन सादृश्यद्वित्वोभयविधाने बाधापत्तिः, रुद्राक्षिणि द्वित्वाभावात् । 'आप्रणखात् सर्व एव सुवर्ण' इति सुवर्णवर्णत्वमपि भगवत एवासाधारणम् । 'हिरण्यज्योतिः सलिलमध्ये' इत्यादि श्रुतिप्रत्यभिज्ञानात् । तस्याश्च भगवत्परत्वं

तत्रैव भगवदसाधारणसर्वान्तर्यामित्वसर्वनियन्तृत्वादिधर्मप्रतिपादनेन सुव्यक्तम् । 'एष हि सर्वेभ्यः पाप्मभ्यः उदित' इत्यनेनादित्यान्तर्वर्तिनः अपहतपाप्मत्वमुक्तम् । तच्च नारायणस्यैव । 'एष हि सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रुत्या तद्धर्मत्वेन प्रतिपादनात् । अनपहतपाप्मा वाऽहमस्मि नाम मे धेहीति रुद्रस्य अनपहतपाप्मत्वश्रवणाच्च ॥

किञ्चास्यामेव विद्यायां पूर्वत्र 'अथ यदेवादित्यस्य शुक्लं भाः' 'अथ यदेवैतदादित्यस्य शुक्लं भाः, सैवर्क्' 'अथ यन्नीलं परःकृष्णः तदमस्तत्साम' इत्यादित्यान्तर्वर्ती भगवानेवेति स्पष्टमवगम्यते । अथ यन्नीलमित्यत्र नीलशब्देनोक्तस्यादित्यान्तर्वर्तिनः कृष्णशब्देनोक्तेः । अन्यथा कृष्णपदवैयर्थ्यात्, नीलपदेनैव कृष्णद्रव्याभिधानात् । नीलपदोक्तस्य भगवतः कृष्णत्वोपपादनार्थत्वे हि कृष्णपदस्य सप्रयोजनत्वम् । परं कृष्णमिति पाठे लिङ्गव्यत्ययश्छान्दसः । इयं च विद्ययोगार्णवे भगवत्परत्वेनोपबृंहिता—

आदित्यमण्डले तत्र पश्येद्विष्णुं परात्परम् ।
सर्वाधारं वासुदेवमीशानं शिवमच्युतम् ॥
आत्मानं सर्वजगतां पुरुषं हेमरूपिणम् ।
हिरण्यश्मश्रुमीशं च हिरण्मयनखं हरिम् ॥
कप्यासपद्मवन्नेत्रं सृष्टिस्थित्यन्तकारणम् ।
पद्मासनस्थितं सौम्यं प्रबुद्धकमलेक्षणम् ।
ईश्वरं सर्वभूतानां सर्वलोकाभयप्रदम् ॥
विजानन्तं सदा सर्वं धारणाद्धर्ममुत्तमम् ।
भासयन्तं जगत्सर्वं भासयन्तं रविं सदा ॥
त्रयाणां परमं नित्यं भास्करं भास्करोपरि ।
एवंभूतं परं ज्योतिर्दृष्ट्वा लोकैकसाक्षिणम् ॥

बिन्दुनादात्मकं देवमविकारमवस्थितम् ।
अकारप्रतिपाद्यं च भिन्नवद्बहुधा स्थितम् ।।

ध्यानेनानेन सौरेण मुक्तिं यास्यन्ति योगिनः ।। इति ।

किञ्च तैत्तिरीयमहोपनिषदि च भगवत एव आदित्यान्तर्वर्तित्वमवगम्यते 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति । अस्याश्च भगवत्परत्वम्, पूर्वस्मिन् नारायणानुवाके तस्य प्रकृतत्वात् ।

किञ्च आनन्दवल्यां 'स यश्चायं पुरुषे यश्चासावादित्ये स एक' इति यच्छब्दद्वयेन प्रसिद्धवन्निर्दिष्टयोः पुरुषान्तर्वर्त्यादित्यान्तर्वर्तिनोरभेदः श्रूयते । तत्प्रसिद्धिश्च नारायणानुवाकतदुत्तरानुवाकयोः । तयोश्च पुरुषान्तर्वर्तिनारायणपरत्वं स्पष्टमेव । अतस्तस्यैवादित्यान्तर्वर्त्यभेदाभिधानं युक्तमिति 'स यश्चायं पुरुष' इत्यादि वाक्यस्य नारायणपरत्वं सिद्धम् ।। (वे मं.दी. 96-98)

## आदित्यान्तर्वर्तीरुद्र एव स्यादिति शङ्कानिरासः —

तैत्तिरीयोपनिषदि —

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्' इति मन्त्रस्य विरूपाक्षपदसमभिव्याहारेण रुद्रपरत्वं न शङ्कनीयम् ।

अम्भस्यनुवाकस्थेन 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इत्यनेन वाक्येन भगवत्परतया व्याख्यानात् कृष्णपिङ्गलपदसमभिव्याहारेण नारायण-परत्वस्यैव युक्तत्वाच्च । कृष्णपिङ्गलस्य च नारायणत्वं—

'तन्मध्ये दहराकाशं तन्मध्ये सूर्यमण्डलम् ।
तन्मध्ये परमानन्दं वपुषा कृष्णपिङ्गलम् ।।
नारायणं जगन्नाथं वासुदेवमनामयम्' ।

इति योगार्णववचनादवगम्यते । विश्वरूपशब्दस्य भगवति रूढत्वाच्च 'ऋतं सत्यम्' इति मन्त्रस्य नारायणपरत्वसिद्धिः ।

न च—विरूपाक्षत्वस्य रुद्रासाधारणत्वात् तत्परत्वमस्य मन्त्रस्य इति—वाच्यम् ; वाराहे—

तस्य चिन्तयतो नेत्रात्तेजः समभवन्महत् ।
दक्षिणं वन्हिसङ्काशं वामं तुहिनसन्निभम् ॥

इति शीतोष्णत्वेन वैरूप्याभिधानात् भगवतोऽपि विरूपाक्षत्वाविरोधात् । एवं चास्य मन्त्रस्य भगवत्परत्वे निर्णीते सति एतदनुरोधेन तापनीयस्थस्य—

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् ॥
उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः' ॥

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' इति मन्त्रस्य भगवत्परत्वमेव वर्णनीयम् । तत्र उमापतिरित्यत्रोमाशब्देन जगत्सृष्टिहेतुभूतबुध्यात्मकलक्ष्मीरभिधीयते । वराहे—

'पूर्वं नारायणस्त्वेको नासीत्किञ्चिद्धरेः परम्' इत्युपक्रम्य—'लक्ष्मीर्बुध्यात्मिका बभौ' इति प्रकृतायां लक्ष्म्यात्मिकायां बुद्धौ—

उमेति संज्ञया सा तु तथादित्ये उपस्थिता ।
ओमित्येकाक्षरीभूत्वा ससृजे सा जगत्युमा ॥

इत्युमासंज्ञकत्वाभिधानात् । अत्र नृकेसरिविग्रहमिति नृसिंहत्वोक्त्या निर्णीते नारायणपरत्वे शङ्करादिशब्दा अपि तत्परत्वेन व्याख्येयाः ।

किञ्च सुवर्णघर्मानुवाकोऽपि भगवत एवादित्यान्तर्वर्तित्वे प्रमाणम् । श्रीभागवते एकादशस्कन्धे सुवर्णघर्मानुवाकेन महापुरुषविद्ययेति भगवदर्चनायां विनियोगाभिधानेन तस्य भगवत्परत्वात, 'समुद्रेन्तः कवयो विचक्षत' इति समुद्रशायित्वादिभगवल्लिङ्गश्रवणाच्च भगवत्परत्वम् । तस्यादित्यमण्डलान्तर्वर्तिपुरुषपरत्वं च 'अन्तरादित्ये मनसा चरन्तम्' 'सप्त युञ्जन्ति रथमेकचक्रम्' इनि अजस्रं ज्योतिर्नभसा तत्सर्पदेति'

इति तत्रत्यवाक्येन आदित्यान्तर्वर्तिपरमपुरुषाभिधानात् । योगयाज्ञवल्क्यवचनेनापि आदित्यमण्डलान्तर्वर्तिनो नारायणत्वं स्पष्टमवगम्यते । तथाहि—

ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वाऽमृतमुपाश्नुते ।।

हृद्व्योम्नि तपति ह्येष बाह्ये सूर्यस्य चान्तरे ।
अग्नावधूमके ह्येष ज्योतिश्चित्रतरो ह्ययम् ।।

इति वाक्ये विष्णोरेव सूर्यस्य चान्तर इति सूर्यमण्डलान्तर्वर्तित्वं प्रतिपाद्यते । सावित्रीव्याख्यानावसरेऽपि—

सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम् ।
हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम् ।।

इति विष्णोरेव सवितृमण्डलान्तर्वर्तित्वं स्पष्टमभिधीयते । यमस्मृतौ च—'रविमध्ये स्थितः' इत्युपक्रम्य, 'एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः' इत्यभिधानात् । शङ्खस्मृतावपि तथैवाभिधानात् । दत्तात्रेयस्मृतौ च दक्षिणाविधौ—

योऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्व्यवस्थितः ।
सोऽहं नारायणो देवः पुरुषो लोकपावनः ।।

इत्यभिधानाच्च आदित्यान्तर्वर्ती नारायण एव । (वे. मं. दी. 98-100)

नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते, एको ह वै नारायण आसीन्न ब्रह्मा, नेशानः' इत्यादिश्रुतयश्चात्रानुकूलाः ।।

**आदिदेवः**—(स. ना. 336)

यदवरविभूत्या क्रीडति ; तदाह—आदिदेवः । यथा—'संप्रयोज्य वियोज्याऽयं कामकारकरः प्रभुः । क्रीडते भगवान्'

अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान्विष्णुः बालः क्रीडनकैरिव ॥ (वि.स.भा.)

यदवरविभूत्याक्रीडनं ; तदुच्यते–संप्रयोज्य, वियोज्य च कामकारकरणतया, आदिः प्रथमबीजभूतश्चासौ देवः क्रीडंश्चेति—आदिदेवः । (वि.स.विवं.)

यः क्रीडतीत्यादिदेवः पादात्मकविभूतिभिः । (वि.स.नि.)

**आदिदेवः**—(स. ना. 491)

भूतेश्वराणां ब्रह्मयमादीनामपि नियन्ता तेषामपि कारणम् तदभिभवपटुप्रतापश्च, आदिदेवः । (वि. स. भा.)

तेषामप्यादिः कारणं च असौ देवः तदभिभवपटुप्रतापतयाद्योतमानश्चेति (आदिदेवः) (वि. स. निर्व.)

आदिदेवो हि भवति ब्रह्मादिभ्यो यो विशेषतः । (वि. स. नि.)

**आदिदेवः**—जगत्कारणभूतः परमात्मा ।

'पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्' । (गी. 10–12)

आदिदेवो महायोगी यत्राऽऽस्ते मधुसूदनः ।
पुण्यानामपि तत् पुण्यं मा भूत् ते संशयोऽत्र वै ॥

कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् ॥

इति । तथा स्वयमेव ब्रवीषि च—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इत्यादिना 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यन्तेन ॥ (गी. भा.)

आदिश्चासौ देवश्चेति आदिदेवः—जगत्कारणभूतः क्रीडारूपजगद्व्यापारश्चेत्यर्थः। (दिवु-क्रीडायाम्)। स्मरन्ति च– 'क्रीडतो बालकस्येव', 'क्रीडा हरेरिदं सर्वम्', 'बालः क्रीडनकैरिव' इति। सूत्रितं च, 'लोकवत्तु लीलाकैवल्यम्' इति। 'नारायणाद्ब्रह्मा जायते, नारायणात् रुद्रो जायते', 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः', 'तस्माच्च देवा बहुधा संप्रसूताः, साध्या मनुष्याः पशवो वयांसि' इति॥ (ता. चं)

**आदिपुरुषः**—जगत्कारणभूतः सर्वशरीरकः परमात्मा।

> 'दैत्येश्वरसभां गत्वा पाणिं संस्पृश्य पाणिना।
> दैत्यानामादिपुरुषः मुरारिर्दितिनन्दनः'॥ (भा. वन.)

'स वायं पुरुषः सर्वासु पूर्षु पुरिशयः' (बृ. उ. 4–5) इत्युक्तेः सर्वासु पूर्षु सर्वशरीरेषु वर्तमानः।

> पुरसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः।
> शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते'॥

इत्युक्तरीत्या सर्वशरीरान्तर्वर्तीति हेतोः पुरुषशब्दवाच्यः सर्वान्तर्यामी नारायणः॥

**आदिवृक्षः**—अनादिशरीराख्य वृक्षः।

> एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चशिफः षडात्मा।
> सप्तत्वगष्टविटपो नवाक्षो दशच्छदो द्विखगो ह्यादिवृक्षः॥ (भाग. 10-2-29)

अथ त्रिसत्यत्वमेवोपपादयितुं कृत्स्नं जगत् वृक्षत्वेन रूपयित्वा तस्य भगवद्दासत्वमाहुः। एकायन इति। एकं—परंब्रह्मायनमाश्रयो यस्य, द्विफलः—द्वे सुखदुःखे फले यस्य, त्रयः—सत्त्वादयोगुणा मूलं यस्य, चत्वारो रसाः—धर्मादिपुरुषार्थाः यस्य, पञ्चशिफा—जटाः उत्तरमूलानि भूतसूक्ष्मात्मकानि यस्य, षडात्मान ऊर्मयो मनष्षष्ठानीन्द्रियाणि वा यस्य। सप्तत्वक्—वसामांसरुधिरमेदोमज्जास्थिशुक्लरूपा धातव एव त्वगस्य, अष्टौ—हस्तौ पादौ शिरः कण्ठो वक्षो जठरश्चेति विटपाश्शाखाः यस्य,

**नवाक्षः**—छिद्रकोटरा यस्य, **दशच्छदः**—दशशब्दादयएव अनुकूलाः प्रतिकूलाश्च प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयरूपाः प्राणोपप्राणा वा च्छदाः पत्राणि यस्य, द्वौ जीवपरमात्मरूप **खगौ**—पक्षिणौ यस्मिन्, **आदिवृक्षः**—प्रवाहानादि-शरीराख्यवृक्षः, **एकः**त्वमेव **अयन**माश्रयो धारणं यस्य, तथाभूतः इति भावः ॥

(वी.रा.)

**आद्यन्तान्तरवर्ती** —सृष्टि-स्थिति संहारावस्थासु अन्तरात्मतया अवस्थितः परं ब्रह्म (परमात्मा) ।

'परमाणु परममहतोस्त्वमाद्यन्तान्तरवर्ती त्रयविधुरः' । (भाग.6–16–36)

परमाणु परममहतोऽल्पीयसो विपुलस्य च वस्तुनो यान्याद्यन्तान्तराणि सृष्टि-स्तिति-संहारावस्था इत्यर्थः । तेषु वर्तत इति वर्ती ,तथा अन्तरात्मतया व्याप्य स्थितः ॥

(वी.रा.)

**आद्यः कुलपतिः** —प्रपन्नसन्तानकूटस्थः शठकोपमुनिः ।

'माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेः वकुलाभिरामं
श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥ (स्तो. र. 5)

स्वपूर्वेषामपि ज्ञानवैराग्यादेर्हेतुतया **आद्यस्येति** विशेषणम् । नः– नाथमुनि-संप्रदायभाजामस्माकम् । गोत्रर्षिवदसावित्यभिप्रायेण 'कुलपति'त्वोक्तिः । ईश्वरस्तु परमाचार्योऽपि सर्वेषां साधारणः, अयं तु अस्मदसाधारण इति भावः । योगरूढि-प्रदर्शिताभ्यां रक्षकत्वशेषित्वाभ्यां वा पतित्वोक्तिः । (स्तो.भा.)

अत्र मातृत्व-पितृत्व-युवतित्व-तनयत्वादिसम्बन्धनिबन्धनोपकाराः एकत्रैवाचार्ये प्रदर्शिताः । तदुक्तम् अन्यत्रापि—

'अज्ञानध्वान्तरोधादघपरिहरणादात्मसाम्यावहत्वात् ।
जन्मप्रध्वंसिजन्मप्रदगरिमतया दिव्यदृष्टिप्रभावात् ॥

निष्प्रत्यूहानृशंस्यान्नियतरसतया नित्यशेषित्वयोगा-

दाचार्यः सद्भिरप्रत्युपकरणधिया देववत्स्यादुपास्यः इति ॥ (न्या.वि 2) ॥

**आद्याध्ययनम्**—सनियमपरतन्त्रासकृदुच्चारणरूपं वेदाख्याक्षरराशिग्रहणम् ।

'स्वाध्यायोऽध्येतव्यः' इति अध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षर-राशेर्ग्रहणं विधीयते । तच्च अध्ययनं किं रूपम्? कथं च कर्तव्यम् इत्यपेक्षायाम्—'अष्टवर्षं ब्राह्मणमुपनयीत ; तमध्यापयेत्' इत्यनेन,

'श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्' ॥

इत्यादिव्रतनियमविशेषोपदेशैश्च अपेक्षितानि विधीयन्ते । (श्री भा. I-29-30)

'आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः ।
धारणे जपयज्ञे च या साप्येवं निवारिता' ॥ इति ॥

जपादेरपि अध्ययनशब्दवाच्यत्वात् तेषु प्रस्तुताध्ययनस्य ['स्वाध्यायोऽध्येतव्यः' इत्यत्राध्ययनस्य] आद्याध्ययनत्वनिश्चयायाह—**किं रूपमिति** । किं सकृदुच्चारण-रूपम्? आहोस्वित् असकृदुच्चारणरूपम्? किं वा स्वतन्त्रोच्चारणरूपम्? उत परतन्त्रोच्चारणरूपम् इत्यर्थः ।

परतन्त्रासकृदुच्चारणरूपत्वे ह्याद्याध्ययनत्वसिद्धिः । प्राथम्यं परतन्त्रोच्चारण-रूपत्वमुपनयनाङ्गकत्वञ्च दर्शयितुमाह—**अष्टवर्षमिति** । अष्टवर्षमित्यनेन प्राथम्यं सिद्धम्, उपनयनद्वारा अध्ययनशेषत्वात् कालस्य । 'ब्राह्मणमुपनयीत' इति द्वितीयाश्रुत्या माणवकशेषत्वावगमात् उपनयनस्य तद्गताध्ययनाङ्गत्वसिद्धिः । उपनयनस्याकर्त्रभिप्राय-सूत्रविहितत्वाच्च नाध्यापनाङ्गत्वसिद्धिः । 'अध्यापयेत्' इत्यनेन परतन्त्रोच्चारण-रूपत्वसिद्धिः । 'द्वादशाहेन प्रजाकामं याजयेत्', 'अन्नाद्यकामं याजयेत्', 'निषाद-स्थपतिं याजयेत्' इति प्रतिपन्नस्य याजनस्येवार्थार्जनाद्यर्थतया रागप्राप्तस्य अध्ययनस्या-विधेयत्वात्, अध्यापनेऽधिकारिविशेषाश्रवणाच्च अध्ययनस्याध्यापयितृपूर्वकत्वमुच्यत

इत्यथमध्ययनाङ्गविधिरिति भावः । उपाकर्मादिव्रतनियमाङ्गकत्वं साङ्गत्वं च दर्शयितुमाह—
**श्रावण्यामिति । अर्धपञ्चमान् मासान्** इत्यादीति । आदिशब्दोपात्तैः—

'अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतःपठेत् ।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठेत्' ॥

इत्यादिवचनैः अङ्गाध्ययनस्य कालो दर्शितः । **व्रतम्**—उपाकर्म काण्डव्रतादि । **नियमः**—'पद्यु ह वा एतच्छ्मशानम्, यच्छूद्रः । तस्मात् शूद्रसमीपे नाध्येतव्यम्' इत्याद्युक्त देशकालभक्ष्यादिव्यवस्थारूपः । अध्यापयेदित्यनेन **व्रतनियमविशेषोपदेशैश्च** इति पृथङ्निर्देशः श्रुतित्व-स्मृतित्वविभागात् विप्रतिपन्नत्व संप्रतिपन्नत्वविभागाच्च कृतः। उपाकर्मादिव्रतनियमवत् उपनयनमपि अध्ययनाङ्गमिति भावः । किं रूपम्, कथं कर्तव्यम् इत्यपेक्षायामेभिरङ्गविधायकवाक्यैरपेक्षितानि विधीयन्ते इत्यर्थः । (श्रु प्र)

'आद्ये त्वध्ययने' इति न्यायरत्नमालाश्लोके चतुर्थः पादः 'फलश्रुतिरियं यतः' इत्याकारकः । तदर्थस्तु—ग्रहणाध्ययनं धारणाध्ययनं जपाध्ययनमिति त्रिविधेऽध्ययने धारणाध्ययनगोचरं तपःफलप्राप्तिवचनम् । जपाध्ययनगोचरं क्रतुफलायुरादिप्राप्तिवचनम् । स्वाध्यायोऽध्येतव्य इति स्वीकरणाध्ययनस्य तु न फलं श्रुतमिति स्वर्गार्थता स्यादिति ॥

अत्र या साऽप्येवं निवारिता इति चतुर्थपादानुवादात जपधारणाध्ययनविषय-वाक्यगतफलश्रुतीनामपि फलश्रुतित्वासंभवमुपपाद्य स्वर्गार्थत्वदृढीकरणार्थं प्रवृत्तं न्यायरत्न-माला पश्चाद्भावि ग्रन्थान्तरमिदमिति विमृश्यते । (टी.)

यद्यपि "स्वाध्यायोऽध्येतव्यः" इति विधिर्नित्यः, अकरणे प्रत्यवायदर्शनात्, निमित्तादर्शनाच्च । तथापि दृष्टफलस्यापरित्याज्यतया तदंशे नियमः । यथा, जपादिः । अनुष्ठानौपयिकं विज्ञानं चाध्ययनगृहीतेनैवेति । अक्षरराशिग्रहणकामना तु वैतुष्य-कामनावदधिकारिविशेषणम् । अतो न काम्यत्वशङ्का । इदमत्रावधेयम्—

तत्रार्थकर्माध्ययनं सम्मतं सक्तहोमवत् ।
स्वरूपतो विधेयं स्यादध्यापनविधेर्बलात् ॥

प्रयुक्तं चोपनयनमङ्गमध्यापनस्य च ।
प्राभाकरस्याभिमतमेतदर्थचतुष्टयम् ॥
गुणकर्म त्वध्ययनमवघातादिवन्मतम् ।
नियमोऽत्र विधेयस्स्यात् प्रयुक्तं स्वविधेर्बलात् ॥
स्वस्योपनयनं चाङ्गं एवमर्थचतुष्टयम् ।
कुमारिलस्याभिमतं ज्ञानान्तत्वं द्वयोस्समम् ॥
तत्रौपनिषदानां तु मतं स्याद्भाट्टसम्मतम् ।
विशेषस्स्यादुभयतो ह्यक्षरग्रहणान्तता ॥ इति ॥

मानमेयश्लोकवार्तिके—विस्तरोद्रष्टव्यः (458)

"अष्टवर्षं ब्राह्मणमुपनयीत" इत्याद्या उपनयनपूर्वकत्वादिविषयश्चापेक्षितविधयः । "अध्यापयेत्" इत्यादयस्तु याजनादिवत् वृत्त्यर्थतया प्राप्तत्वात् "द्वादशाहेन प्रजाकामं याजयेत्" इत्यादिवत्स्युः । तथाचाष्टवर्षो ब्राह्मणः स्वाध्यायग्रहणकामः उक्तप्रकाराचार्योपनीतः सदुपसत्त्या यथोक्तव्रतनियमवान् अधीयीतेति सोपवृंहणाद्याध्ययनः शास्त्रार्थः ।

ननु वृत्त्यर्थाध्यापनात् अन्यदेव धर्मार्थमध्यापनमस्ति । तद्विधिप्रयुक्तमध्ययनं स्यादिति चेदुच्यते—स च नित्यो नैमित्तिकः काम्यो वा ? नाद्यः, लघुविषयाध्ययन-विधिनान्तरीयकत्वात् । न द्वितीयः, नियतनिमित्तादर्शनात् । न तृतीयः, दृष्टे संभवत्यदृष्टकल्पनानौचित्याच्चेति ॥ (द.उ–296)

**आद्या सृष्टिः**—आपेक्षिकप्राथम्यवती सृष्टिः ।
(चतुर्मुखकर्तृकसृष्टिप्राक्कालिकसृष्टिरिति यावत्)

"तदैक्षत बहु स्यां प्रजायेय" इति सङ्कल्पानन्तरं "तत्तेजोऽसृजत" इत्यादि-श्रुत्युक्तरीत्या सृष्टिः विवक्षिता ॥ (सं. अ.)

आपेक्षिकमादित्वं विवक्षितम्, सृष्टेः प्रवाहतः अनादित्वात् ।

अत एव श्रूयते "धाता यथापूर्वमकल्पयत्" इति। सृष्टिः द्विविधा—व्यष्टिः समष्टिश्चेति परमात्मकर्तृका। व्यष्टिसृष्टिः चतुर्मुखद्वारैव। समष्टिसृष्टिस्तु साक्षादेवेति विभागः ॥

**आधारनिलयः**— (स.न. 950)

धार्मिकतया जगदाधारा :प्रह्लादविभीषणपाण्डवादयः। तेषां निलयः (आस्पदम्)

(वि.स.भा.)

धार्मिका जगदाधाराः प्रह्लादाद्या विशेषतः।
तेषां तु निलयं स्थानम् आधारनिलयश्च सः ॥ (वि.स.नि.)

**आधारभूतः**—सर्वाश्रयभूतः विष्णुः।

आधारभूतं विश्वस्याप्यणीयांसमणीयसाम्।
प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥ (वि. पु. 1-2-5)

विश्वस्य प्रकृतिपरिणामस्य जीवकर्मनिमित्तत्वेन तच्छरीरतया तदाधारत्वम् ॥ (वि.चि.)

औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारः त्रिधा। कटे आस्ते। मोक्षे इच्छास्ति। सर्वस्मिन्नात्मास्ति। उपसमीपे श्लेषः सम्बन्धः, तत्कृतः औपश्लेषिकः। विषयतासम्बन्धकृत आधारः द्वितीयः। सकलावयवव्याप्तिकृत आधारः तृतीयः ॥

(सि. कौ. 2-3-36)

अत्र तु तिलतैलयोरिव अभिव्यापकः विवक्षितः।

**आधारशक्तिः**—श्रीवैकुण्ठधामाधारभूता भगवच्छक्तिः। [भगवदपृथक्सिद्धविशेषणं शक्तिः]

'ओम् आधारशक्त्यै नमः, ओं मूलप्रकृत्यै नमः, ओं अखिलजगदाधाराय कूर्मरूपिणे नारायणाय नमः। ओं भगवतेऽनन्ताय नागराजायनमः। ओ भूं भूम्यै नमः इति यथास्थानमुपर्युपरिध्यात्वा, इत्यारभ्य सर्वाण्याधारशक्त्यादिपीठतत्त्वानि प्रत्येकं गन्धपुष्पधूपदीपैरभ्यर्च्य भगवद्यागमारभेत। (नि. ग्रं. 30)

'आधारशक्तिमुपरि प्रकृतिं परेण तां कूर्ममत्र फणिनं पृथिवीं फणासु ।
पृथ्व्यां पयोधिमधितन्नळिनं निधाय श्रीरङ्गधाम सुनिविष्टमभिष्टवानि' ॥

(श्रीरं. स्त. पू. श. 42)

**आधारशक्तीति** -- आधारशक्तिर्नाम मूलप्रकृतेरप्याधारभूता भगवच्छक्तिः, **तामुपरि** प्रकृतिं निधाय, **ताम्**-मूलप्रकृतिं, **परेण**-उपरि **कूर्मं निधाय, अत्र**-कूर्मे **फणिनं**-शेषं निधाय, **फणासु**—नागराजसहस्रफणासु, **पृथिवीं निधाय, पृथ्व्यां पयोधिं** निधाय, **अधितदि**त्येकं पदं, तस्मिन्नित्यर्थः 'विभक्त्यर्थेऽव्ययीभावः'। तस्मिन् पयोधौ, **नळिनं**-अष्टदळं पद्मं निधाय, **।धितत्**—तस्मिन्नळिने, **सुनिविष्टं**—सुखेन प्रतिष्ठितं, **श्रीरङ्गधाम**—श्रीरङ्गविमानम्, **अभिष्टवानि**—अभिष्टवविषयं करवाणि । अभिपूर्वात् 'ष्टुञ्स्तुता' विति धातोः प्रार्थनायां लोट् ।

आधारशक्त्यादिक्रमो 'नित्यानुष्ठानपद्धतौ' भगवद्भाष्यकारैः श्रीवैकुण्ठधामाधारत्वेनानुसंहितः ॥ (व्या.)

नित्यविभूतौ, प्राकृतसम्बन्धस्य अभावात् मूलप्रकृतिपदेन नित्यविभूतौ भोग्य भोगोपकरणपरिणामे मूलभूता आप्राकृतैव परिगृह्यते ॥

**आधारसिद्धान्तः** —अधिकरणसिद्धान्तः ।

केचित्तु कस्यचित् साधने अनुषङ्गसिद्धोऽन्य आधारसिद्धान्त इति विभागमाहुः । यथा—क्षित्यादेः सकर्तृकत्वसिद्धौ ईश्वरसिद्धिरित्यादि । अक्षपादश्च सिद्धान्त चातुर्विध्यं प्रकृत्याह—'यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः' इति । तदयुक्तम् ; तस्य सर्वैरभ्युपगमे सर्वतन्त्रसिद्धान्तत्वात्, स्वतन्त्रमात्रसिद्धौ प्रतितन्त्रत्वात्, परैरपि कैश्चिदभ्युपगमेऽभ्युपगतसिद्धान्तत्वात् । केवलं स्वयमस्य सिद्धान्त इति निर्णये अनुषङ्गसिद्धिः लिङ्गं भवति इत्येतावता यदि पृथगभिधानम्, काममभिधीयतामिति ॥

(न्या. प. 114)

**आधिकारिकाः**—अधिकारेषु नियुक्ताः । (वसिष्ठादयः)

[ अधिकारेषु नियुक्ताः इत्यत्र 'तत्र नियुक्तः' (पा. सू. 4-4-69) इत्यनेन ठकि, तस्य इकादेशः ।]

'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः । (ब्र. सू. 4-4-18)

परमपुरुषेण लोकनियमनाद्यधिकारे नियुक्ताः हिरण्यगर्भादयः । (वे. दी.)

**आधिपत्यम्**—अधिपतिसम्बन्धि (गुणाष्टकम्) ।

'सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति, य एवं वेद' । (कौ.उ. 4-45)

[अधिपतेः भावः इत्यर्थे 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा.सू. 5-1-124) इति सूत्रेण ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । अत्र गुणाष्टकविशिष्टः परमात्मा इति अधिपतिशब्देन बोध्ये, प्रकारभूतस्य गुणाष्टकस्य भावार्थकप्रत्ययेन अभिधानात् गुणाष्टकं इति विवृतम् ।]

**स्वाराज्यं**-संसारिभ्योऽस्य श्रैष्ठ्यरूपम्, **आधिपत्यम्**—अधिपतिः-परमात्मा ; 'सर्वस्याधिपतिः' इति श्रुतेः । तत्सम्बन्धि आधिपत्यम् । गुणाष्टकं हि ब्रह्मसम्बन्धितया ब्राह्ममुच्यते, 'ब्राह्मेण जैमिनिः' इति । (रं.भा.)

**आधिभौतिकः**—तापत्रयेष्वन्यतमः ।

[भूतेषु इत्यर्थे विभक्त्यर्थेऽव्ययीभावः । ततः तत्र भवः इत्यर्थे अध्यात्मादित्वात् ठञि, उभयपदादिवृद्धौ इकादेशः ।]

पशुपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ।
सरीसृपाद्यैश्च नृणां जायते चाधिभौतिकः ॥ (वि.पु. 6-5-9)

'आध्यात्मिकाधिभौतिकाधिदैविकादि....विघ्नप्रतिहतोऽपि । (श.ग. 17)

'पशुपक्षिमनुष्यादिसमुद्भवं दुःखम् । (वे.भा.)

**आधिव्याधी**—मानसशारीरौ आध्यात्मिकतापविशेषौ

आधयो व्याधयः सर्वे रोगा रोगाधिदेवताः ।
शीघ्रं नश्यन्ति ते सर्वे नृसिंहस्मरणात्सुराः ॥ (नृसिंहपुराणम्—186)
(अत्र आत्मशब्दः मनसि, शरीरे च वर्तते).

'आध्यात्मिकोऽपि द्विविधः शारीरो मानसस्तथा ।
शारीरो बहुभिर्भेदैः भिद्यते श्रूयतां च सः ॥
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः ।
गुल्मार्शश्वयथुश्वासछर्द्यादिभिरनेकधा ॥
तथाक्षिरोगातिसारकुष्ठाङ्गामयसंज्ञितैः ।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥
कामक्रोधभयद्वेषलोभमोहविषादजः ।
शोकासूयावमानेर्ष्यामात्सर्यादिमयस्तथा ॥
मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा ।
इत्येवमादिभिर्भेदैः तापो ह्याध्यात्मिकस्स्मृतः' ॥
(वि. पु. 6-5-2, 3, 4, 5, 6)

शारीरं मानसं च निमित्तीकृत्य भवति इति आध्यात्मिकः । उभयविधोपि आध्यात्मिक इत्यारभ्य आध्यात्मिकस्स्मृतः इत्यन्तेन विवृतः ।

'पुंस्याधिर्मानसीव्यथा' इत्यमरः ॥

**आधृतिः**—आधारः । (चेतनस्याधारभूतं शरीरम् ।)

'इच्छा द्वेषः सुखं दुःखं संघातश्चेतनाधृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम्' ॥ (गी. 13-6)

सुखदुःखे भुञ्जानस्य भोगापवर्गौ साधयतश्च चेतनस्य आधारतयोत्पन्नो भूतसंघातः प्रकृत्यादिपृथिव्यन्तद्रव्यारब्धमिन्द्रियाश्रयभूतमिच्छाद्वेषसुखदुःखविकारिभूतसंघातरूपं चेतनसुखदुःखोपभोगाधारत्वप्रयोजनं क्षेत्रमित्युक्तं भवति । (गी. भा.)

चेतनाधृतिरित्यत्र न तावत् पदद्वयम्, चैतन्यस्य क्षेत्रान्तर्भावात् । एकपदत्वेऽपि चेतनायाः धृतिरिति न विग्रहः ; धृतिशब्दस्याधारपरत्वे शरीरस्य चैतन्याधारत्वासंभवात्, भोगस्थानपरत्वे निर्विशेषचैतन्यस्य भोक्तृत्वानभ्युपगमात् ; 'एष

हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति ज्ञातृत्व-कर्तृत्वविशिष्टचेतनस्यैव भोक्तृत्वश्रवणाच्च । चेतनस्याऽऽधृतिरिति विग्रहः । चेतन-शब्देनात्मा निर्दिश्यते । 'भूतैस्त्वाम' इतिवत् आधृतिशब्दोऽपि 'अकर्तरि च कारके संज्ञायाम्' इत्याधारपर इत्याह—**आधृतिराधार** इति । आधारत्वस्यात्र भोगायतनत्वरूपत्वान्नामधेयत्वरूपशरीरलक्षणविरोधः । (ता. चं.)

सङ्घातः देहेन्द्रियाणां संहतिः । तस्मिन् अभिव्यक्तान्तःकरणवृत्तिः, तप्ते लोहपिण्डे अग्निरिव, आत्मचैतन्याभासरसविद्धा चेतना ; सा च क्षेत्रं ज्ञेयत्वात् । धृतिः यया अवसादं प्राप्तानि देहेन्द्रियाणि ध्रियन्ते ; सा च ज्ञेयत्वात् क्षेत्रम् । सर्वान्तः-करणधर्मोपलक्षणार्थम् इच्छादिग्रहणं यदुक्तम् , तत् उपसंहरति–एतत् क्षेत्रं समासेन सविकारं सह विकारेण महदादिना उदाहृतम् उक्तम् ।। (शं.भा)

**आध्यात्मिकयोगः**—1. भक्तियोगः ।

आत्मशब्दः परमात्मपरः । तद्विषयकः उपायभूतो योगः भक्तियोग एव ।

2. अध्यात्मयोगः ।।

**आध्यात्मिकादितापत्रयम्**—आध्यात्मिक-आधिभौतिक-आधिदैविकतापत्रयम् ।।

[आत्मनि इति, अध्यात्मम् (अव्ययीभावः), तत्र भवमाध्यात्मिकम् । भवार्थे ठञ्, तस्येकादेशः पूर्वोत्तरपदयोरादिवृद्धिश्च । एवमेवेतरत्रापि। ]

आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ।।
आध्यात्मिकोपि द्विविधः शारीरो मानसस्तथा ।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः ।।
शिरोरोगप्रतिश्यायज्वरशूलभगंदरैः ।
गुल्मार्शश्श्वयथुश्वासछर्द्यादिभिरनेकधा ।।
तथाक्षिरोगातिसारकुष्ठांगामयसंज्ञितैः ।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ।।

कामक्रोधभयद्वेषलोभमोहविषादजः ।
शोकासूयावमानेर्ष्यामात्सर्यादिमयस्तथा ॥
मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा ।
इत्येवादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥
मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ।
सरीसृपाद्यैश्च नृणां जायते चाधिभौतिकः ॥
शीतवातोष्णवर्षाम्बुवैद्युतादिसमुद्भवः ।
तापो द्विजवरश्रेष्ठैः कथ्यते चाधिदैविकः ॥
गर्भजन्मजराज्ञानमृत्युनारकजं तथा ।
दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ॥ (वि.पु. 6-5-1....9)

आत्माश्रिताचित्समुदायप्रधानहेतुकम् । तादृशं दुःखं द्विविधम् । शारीरं मानसं चेति । तत्र शारीरं 'शिरोरोगप्रतिश्यायः' इत्यादिनोक्तम् । मानसं कामक्रोधेत्यादिना ।

सर्पादिभूतनिमित्तकम् आधिभौतिकम् । केवलदैवनिमित्तकं वैद्युतादिसंभवं आधिदैविकमिति परिगण्यते । एवं सहस्रशोदुःखं दरीदृश्यते—

अत एव भगवान् भाष्यकारः अभापिष्ट—

'तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः' इति ॥

**आध्यानम्**—1. अनुचिन्तनम्–उपासनम् ।

आध्यानाय प्रयोजनाभावात् । (ब्र.सू. 3-3-14)

2. उत्कण्ठापूर्वकस्मरणम् । (श्री.भू.व्या. 17)

'स्याच्चिन्ता स्मृतिराध्यान'मिति हि नैघण्टुकाः ॥

**आध्यानाय प्रयोजनाभावात्**—(ब्र.सू. 3-3-14)

(आनन्दाद्यधिकरणे चतुर्थं सूत्रम्)

यदि उपचयापचयप्रसङ्गात् प्रियशिरस्त्वादयो ब्रह्मणः पुरुषविधत्वरूपणमात्रार्थाः; न तु ब्रह्मगुणाः । तर्हि अतथारूपस्य ब्रह्मणस्तथात्वेन रूपणं किमर्थं क्रियते ?

अतथाभूतस्य हि तथात्वरूपणे केनचित्प्रयोजनेन भवितव्यम् । यथा 'आत्मानं रथिनं विद्धि' इत्यादिनोपासकस्य, तदुपकरणानां च रथिरथादित्वरूपणम् उपासनोपकरणभूतशरीरेन्द्रियादिवशीकरणार्थं क्रियते इत्युक्तम् । न चेह तथाविधं किञ्चित् प्रयोजनं दृश्यते इति बलात् ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेत्यम्, तत्राह—आध्यानेति आध्यानाय—अनुचिन्तनार्थं तदभिधानम्; प्रयोजनान्तराभावात् इति ।

'ब्रह्मविदाप्नोति परम्' इति वेदितव्यतयोपदिष्टं ब्रह्म आनन्दमयं प्रियमोदादिरूपेण विभज्य, शिरःपक्षादित्वेन रूपयित्वा, बुद्धावारोप्यत इत्यर्थः । अत्र आध्यानरूपप्रयोजनमुक्त्वा प्रयोजनाभावादित्युक्तिस्तु तदतिरिक्तप्रयोजनाभावपरैव इत्याशयेन प्रयोजनाभावात् इति, प्रयोजनान्तराभावात् इत्यनेन विवृतं भाष्ये ।

एवमानन्दमयोपलक्षणत्वात् प्रियशिरस्त्वादयः न सर्वदा आनन्दमयप्रतीतौ अनुवर्तन्ते; किन्तु, उपासनोपयोगिशास्त्रजन्यब्रह्मप्रतिपत्तौ बुद्ध्यारोहणाय प्रियशिरस्त्वादि प्रतिपत्तव्यम्, एवमपरिच्छिन्नानन्दे प्रतिपन्ने सति उपास्तौ प्रियशिरस्त्वादिकं नानुसन्धेयमित्यर्थः । परोक्षार्थस्य बुद्धावारोपणं शिरःपक्षादिरूपणादेव हि भवति ।

आनन्दवल्ल्यां—'ब्रह्मविदाप्नोति परम्' इति ह्युपक्रम्यते । तत्रोक्तं वेदनं किं वाक्यार्थज्ञानमात्रम्? आहोस्वित् ध्यानात्मकमिति विषये—

उत्कण्ठापूर्वकध्यानार्थकाध्यानपदप्रयोगेण सर्वज्ञः बादरायणः 'ध्यानमेव मुक्तिसाधनम्; न तु वाक्यजन्यज्ञानमात्रम्' इति निरधारयत् ॥

उपासनार्थमेवेदं रूपणं क्रियते तथा ।
प्रयोजनान्तराभावात् तस्मादब्रह्मगा(:) गुणाः ॥ (ब्र. प. मा.)

**आनन्त्यनिरूपणवादः**—(श दू. 56)

यत्पुनः परिभाषन्ते—अनन्तपदसामर्थ्यादेव ब्रह्मव्यतिरिक्तानन्तवस्तुमिथ्यात्वं सिध्यति । तथा हि—अनन्तशब्देन असङ्कोचात् सर्वविधपरिच्छेदाभावोऽप्युच्यते; परिच्छेदश्चतुर्धा—देशतः, कालतः, वस्तुतः, स्वरूपतश्चेति । तत्र गगनकुसुमादिवत्

स्वरूपपरिच्छेदः सद्रूपत्वेन प्रतिक्षिप्यते । तच्च सत्यपदेनैव सिद्धमित्यनन्तपदेन तद्विवक्षा भवतु वा, मा वा, त्रिविधपरिच्छेदाभावस्तावद्विवक्षित एव । तत्र सर्वदेश-सर्वकालव्यापित्वात्, अत्र देशे नास्ति, अत्र काले नास्तीत्येवंरूपयोर्देशकाल-परिच्छेदयोरभावः सिद्धः । वस्तुपरिच्छेदस्तु इदमिदं न भवतीत्येवंरूपः । आश्रयप्रतियोगिविशिष्टस्य भेदस्याभावो [भवन्] भेदतत्प्रतियोगितदाश्रयाणां सर्वेषा-मभावाद्वा, अन्यतमाभावाद्वा ? आद्ये शून्यवादावतारः । द्वितीयेऽपि सर्ववस्तु-तादात्म्याद्वा, स्वव्यतिरिक्तसमस्तमिथ्यात्वाद्वा, स्वस्य तुच्छत्वाद्वा संभवति ; तत्राद्यः पक्षोऽभ्यर्हितविरोधानामर्हन्मताहार्णां भास्कारादीनामेव युज्यते । अन्तिमस्त्वर्थो लौकायतिकानां निरीश्वरमीमांसकादीनाम् । अतो मध्यमः पक्षः परिशिष्यते । न च वाच्यं वस्त्वन्तराभावे तन्निरूपितपरिच्छेदाभावेन तन्निरूपणीयवस्तुपरिच्छेदाभावो दुर्वच इति स्ववचनव्याघातात ।

ननु प्रत्यक्षाद्यविरोधेन वस्तुपरिच्छेदाभावो वर्णनीयः, अन्यथा प्रागुक्तपक्षयोरपि प्रतिक्षेपायोगात् । शक्यते चाविरोधेन निर्वहणम् ; तथाहि वस्तुना परिच्छेदो वस्तु-परिच्छेदः, यथा कुड्यादिभिरालोकादेः । स चास्य नास्तीति वस्तुपरिच्छेदरहितं ब्रह्मेति । तदसत् ; देशपरिच्छेदात् ईदृशस्य वस्तुपरिच्छेदस्य विशेषाभावात् । स्वतः परिमितदेशा घटादयः । आलोकादयस्तु प्रसृमरतया स्वतोऽनेकदेशव्यापिनोऽपि कुड्यादिभिरुपाधिभिः परिच्छिद्यन्ते । इह तु कथं परिच्छेद इति चेन्न ; तथाऽप्य-दूरविप्रकर्षेण पृथक्प्रतिपादनप्रयोजनाभावात् । एतेन वस्तुपरिच्छेदो वस्तुनः परिमाणम्, देशपरिच्छेदस्तु तत्कार्यमिति विभागोऽपि प्रत्युक्तः ।

न च वाच्यम्, इदमिदं न भवतीति परिच्छेदो वस्तुपरिच्छेदः ; स च सर्वशरीरिणो न संभवतीति—'अस्थूलमनण्वह्रस्वम्' इत्यादिनिषेधशतश्रवणात् । अन्यथा चिदचिदीश्वरस्वरूपविवेकाद्यनुपपत्तेश्च ।

न च सर्ववस्तुसामानाधिकरण्ययोग्यत्वेन इदमिदं न भवतीति निषेधैकान्त्या-भावात् वस्तुपरिच्छेदाभाव इति वाच्यम् ; अमुख्यसामानाधिकरण्यस्यान्यत्रापि

संभवात्, 'आपो वा इदं सर्वम्' इत्यादिवत्. मुख्यसामानाधिकरण्यस्य तु ब्रह्मणोऽपि सर्वत्रासंभवात् ।

न हि 'शरीरं ब्रह्मे'त्यादि सामानाधिकरण्यं दृष्टमिष्टं श्रुतं वा । एवमूहान्तरेष्वपि दूषणमूहनीयम् । ततश्च स्वव्यतिरिक्तसमस्तवस्तुमिथ्यात्वादेव ब्रह्मणो वस्तुपरिच्छेदाभाव इति ।

अत्रोच्यते ; शास्त्रप्रत्यक्षयोर्विरोधे प्रत्यक्षप्राबल्यं तावत् स्थितमन्यत्र । अत एव अनन्तपदश्रुत्यन्यथानुपपत्त्याऽपि न प्रत्यक्षादिविरुद्धं प्रपञ्चमिथ्यात्वं सुसाधम् । अतो भवदभिमतवस्तुपरिच्छेदाभावो दुरुपपादः ।

भास्करादिपक्षेऽपि सर्ववस्त्वैक्ये सत्यपि भेदस्यापि विद्यमानत्वात् परिच्छेदनिषेधोऽनुपपन्नः ; अन्यथा भेदाभेदस्यापि विलयप्रसङ्गात् । केवलाभेदपक्षस्तु सर्वव्यवहारविलोपप्रसङ्गेन यौक्तिकाभासैरपि नाभ्युपगम्यते । अभेदमात्रमस्तीत्येतावता वस्तुपरिच्छेदाभाववचनं त्वमुख्यम् ।

यत्तूक्तं वस्तुना परिच्छेद इति पक्षे वस्तुपरिमाणपक्षे च देशपरिच्छेदात् पृथग्व्यपदेशप्रयोजनं नास्तीति । तदयुक्तम् ; विरुद्धार्थप्रतिपादनादल्पप्रयोजनार्थप्रतिपादनस्यैव वरिष्ठत्वात् । भवत्पक्षेऽपि वस्तुपरिच्छेदात् देशकालपरिच्छेदयोरनतिभेदेन पृथग्व्यपदेशप्रयोजनाभावप्रसङ्गः । यदा हि स्वव्यतिरिक्तसमस्तवस्तुमिथ्यात्वेन वस्तुपरिच्छेदाभावः, तदा देशकालयोरेवाभावात् तदधीनपरिच्छेदस्याप्रसक्तत्वेन तन्निषेधो निरर्थकः । यदि पुनः त्रयाणां परिच्छेदानां स्वरूपभेदात्, घटादिषु च दृष्टेरत्र तन्निषेध इति तत् परोक्तयोरप्यर्थयोः समानमेव ।

यच्चोक्तं सर्ववस्तुसामानाधिकरण्ये मुख्यामुख्यविकल्पेन दूषणम्—तदपि मन्दम् ; स्वव्यतिरिक्तसमस्तद्रव्यशरीरिणः तद्द्रव्यवाचिभिरनिष्कर्षकैः शब्दैः प्रतिपादने विवक्षिते दोषकथाऽभावात् । ततश्चात्र वस्तुपरिच्छेदो नाम स्वस्मात्पृथक्सिद्धाद्वस्तुनो भेदः । स च सर्वप्रकारस्य ब्रह्मणो न संभवतीति, 'स्वरूपभेदमात्रस्य निषेधो

निषेधशतदुःस्थत्वादविवक्षित एव ' इति विवेकानुपपत्तिचोद्यं नावतरति । अयं त्वर्थः प्रत्यक्षाद्यविरुद्धः श्रुतिस्मृतिसूत्रानुगृहीतश्चेत्ययमेव आरम्भणाधिकरणभाष्ये प्रदर्शितः । यथा, ' भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतः परिच्छेदोऽपि न विद्यते ' इति ।

नन्वेवमपि सर्वविधपरिच्छेदनिवृत्तिर्न सिध्यति, स्वरूपविवेकदशायाम् ' इदम् इदं न भवति ' इति परिच्छेदस्य विद्यमानत्वादिति चेत्—सत्यम् ; तथाविधवस्तुपरिच्छेदस्य श्रुतिभिरेव प्रतिपाद्यमानत्वात् । विश्वमिथ्यात्वपक्षेऽपि ततः परिच्छेदोक्तेः त्वयाऽभ्युपेतत्वाच्च तन्निषेधो न शक्यः । यदि च वस्त्वन्तराभावात् वस्तुपरिच्छेदाभाव उच्यते, तर्हि भवत्पक्षे घटादेरपि वस्त्वन्तराभावात् तत्सिद्धिः स्यात् । ब्रह्माख्यं वस्त्वन्तरं तस्य विद्यत इति चेन्न ; तत्स्वरूपसद्भावेऽपि तयोर्भेदस्य मिथ्यात्वेन तस्य वस्त्वन्तरत्वायोगात् । व्यावहारिकं वस्त्वन्तरत्वं तस्य विद्यत इति चेत् ; तत् ब्रह्मापेक्षया घटादेरपि समानम् ।

न च तदपेक्षया ब्रह्मणः परिच्छेदोऽपि मिथ्याभूतः ; जडाजडैक्यप्रसङ्गादेरन्यत्रोक्तेः । स्वसजातीयवस्त्वन्तरसद्भावो वस्तुपरिच्छेद इति विशेष इति चेन्न ; यथाकथञ्चित्सजातीयत्वविवक्षायां प्रकाशमानत्वादिरूपेण ब्रह्मणः सजातीयस्याविद्यादेर्विद्यमानत्वात् ।

न चाविद्यादेरवस्तुत्वेन परिहारः, घटादेरपि समानत्वस्योक्तत्वात् । न हि घटाद्यपेक्षया वस्तुतः सजातीयत्वादिकं ब्रह्मणः । घटादिस्वरूपस्यापि मिथ्यात्वाद्विशेष इति चेत् , किमतः ? मिथ्यात्वेऽपि घटादेः पटत्वाद्यभाववत् वस्तुपरिच्छेदाभावस्यापि सिद्धेः । अस्त्वेवम्, तथाऽपि सत्यस्य ब्रह्मणोऽपि तत्सिद्धिरस्त्येवेति चेन्न ; इतरवैलक्षण्यार्थानि सत्यज्ञानानन्तपदानीति स्वसिद्धान्तभङ्गप्रसङ्गात् । सर्वथा, ' सजातीयवस्त्वन्तरसद्भावो वस्तुपरिच्छेदः ' इति तदभावविवक्षायां प्रपञ्चसत्यत्वेऽपि न कश्चिद्दोषः । ब्रह्मणस्तद्विभूतिप्रपञ्चेन अत्यन्तसाजात्याभावस्य ब्रह्मलक्षणादिवशादेव सिद्धेः ।

किं च देशकालपरिच्छेदाभावोऽपि न घटादिव्यावर्तकः, सत्यदेशकालपरिच्छेदस्य

घटादावप्यभावात् ; मिथ्यादेशकालपरिच्छेदस्य ब्रह्मण्यपि विद्यमानत्वस्य भवतैव स्वीकारात् ।

किं च देशकालपरिच्छेदाभावो न देशकालयोः स्वरूपनिषेधगर्भः; वस्तुपरिच्छेदाभावेनैव तत्सिद्धेः । तद्वत् वस्त्वन्तरस्वरूपे सत्येव तत्प्रयुक्तपरिच्छेदाभावो वर्णनीयः । अन्यथा वैरूप्यात् । संभवतश्चैकरूपस्य परित्यागायोगात् । संभवति तदसत्पक्षे, सर्वेषु वस्तुषु यथाप्रमाणमवस्थितेष्वेव प्रतिघात–परिणाम-पृथक्सिद्ध्यादिलक्षणपरिच्छेदस्य प्रतिक्षेपात् ।

किं च अनन्यथासिद्धानेकश्रुतिगणप्रतिपन्नस्य ब्रह्मविभूत्यादेरनेकार्थसाधारणैकानन्तपदस्वारस्यानुरोधाय बाधो न युक्तः । तदनुरोधेनैव त्वेकानन्तपदस्वारस्यं सङ्कोचनीयम् । ततश्च प्रत्यक्षाद्यविरुद्धत्रिविधपरिच्छेदाभाव एवात्र विवक्षित इत्यङ्गीक्रियताम् । अन्यथाऽनन्तपदश्रुत्यसङ्कोचाय संख्यातोऽपि परिच्छेदाभावस्वीकारेण ब्रह्मबहुत्वप्रसङ्गात् । एकत्वश्रुतिवशात् वस्तुपरिच्छेदाभावेनान्योन्यव्याघाताच्च तत्परित्याग इति चेत्—तर्हि प्रपञ्चसत्यत्वप्रतिपादकप्रत्यक्षश्रुत्यादिवशात् तत एव व्याघाताच्चेदृशवस्तुपरिच्छेदाभावोऽपि परित्याज्य एव । यदि च त्रिविधपरिच्छेदाभावेऽवश्यमभिसन्धिः, तर्हि अविरुद्धः परिच्छेदाभावोऽत्र स्वीक्रियताम् । संभवन्ति चान्येऽपि व्यवच्छेद्याः परिच्छेदभेदाः वस्त्वन्तरप्रतिघातवस्तुपरिमाण-स्वतन्त्रवस्त्वन्तरसद्भावादयः । एवं वस्तुपरिच्छेदाभावः । उत्कृष्टेन वस्तुना उत्तरावधिभूतेन परिच्छिन्नं ह्यपकृष्टं वस्तु, तथाविधोऽपकर्षो ब्रह्मणो नास्तीति । अस्मिंश्चार्थे विवक्षिते तस्य सर्ववस्तुशरीरित्वेन सर्वात्मकत्वमप्यन्तर्गतं भवति । एवं सति, 'उल्लङ्घितत्रिविधसीमसमातिशायिसंभावनं तव परिव्रढिमस्वभावम्' इति भगवद्यामुनाचार्यवचनं गोबलीवर्दन्यायेन, फलफलिनिर्देशेन वा नेतव्यम् । आरम्भणाधिकरणभाष्यमप्येतत्परमेव योजनीयम् । अतः सिद्धं सत्यैरेव देशकालवस्तुभिरपरिच्छिन्नं सर्वदेशकालव्यापिसर्वान्तरात्मभूतं सर्वैर्मङ्गलगुणैः समस्तहेयप्रतिभटतया च सर्वस्मात्परं ब्रह्म अनन्तपदनिर्दिष्टमिति नातः प्रपञ्चमिथ्यात्वसिद्धिरिति ॥ (श.दू. 57)

**आनन्दः**—(स. ना. 529)

आनन्दवल्ली मीमांस्यमानो वाङ्मनसदुर्ग्रहो महानन्दोऽस्यास्तीति—आनन्दः ।
(वि. स. भा.)

वल्यामानन्दसंज्ञायाम् अवाङ्मनसगोचरः ।

आनन्दो यस्य यस्यास्तीत्यानन्दः परिकीर्तितः ॥ (वि. स. नि.)

**आनन्दः**—आनन्दरूपः निरुपाधिकानन्दवांश्च (परमात्मा) ।

'आनन्दो ब्रह्मेति व्यजानात्' (तै. भृ. 39)

'आनन्दं ब्रह्मणो विद्वान्' इति पूर्वमभ्यस्तस्याऽऽनन्दस्य ब्रह्मसम्बन्धित्व-निर्देशात्, ब्रह्मणश्च 'आनन्दो ब्रह्म' इत्यानन्दशब्दवाच्यत्वात्, 'आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दशब्दवाच्यस्थाने 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' इत्यानन्द-मयशब्दनिर्देशेन आनन्द-आनन्दमयशब्दयोः पर्यायत्वाच्च आनन्दरूपस्य परमात्म-भावोऽवगतः इत्यभिप्रायः । (श्रु. प्र. I–भा-2-225, 226)

अतः निरतिशयानन्दरूपत्वात् 'तद्गुणसारत्वात् तद्व्यपदेशः' इति न्यायेन आनन्दगुणसारत्वाच्चानन्दव्यपदेशः ॥

**आनन्द-कल्याणशब्दौ**—स्व परापेक्षया आनुकूल्यबोधकौ ।

'अखिलहेयप्रत्यनीककल्याणैकतान स्वेतरसमस्तवस्तुविलक्षण अनन्तज्ञानानन्दैक-स्वरूप त्वत्पादारविन्दयुगळं शरणमहं प्रपद्ये । (श. ग. 5)

कल्याणैकतानं प्रदेशभेदेन कालभेदेनाप्यकल्याणत्वरहितमित्यर्थः; ज्ञानानन्दैक-स्वरूप इति तु तद्विशदीकरणम्; ज्ञानतया आनन्दतया च कार्त्स्न्येन कल्याणत्वमुक्तं भवति । जडात् भोग्यात् प्रतिकूलोदासीनरूपज्ञानाभ्यां च व्यवच्छेदाय ज्ञानानन्दयो-रुभयोरप्युक्तिः ।

आनन्दकल्याणशब्दौ स्व-परापेक्षया आनुकूल्यं वा ब्रूतः । एवम् 'आनन्दादयः प्रधानस्य', 'अक्षरधियां त्ववरोधः' इत्यधिकरणद्वयोक्तं स्वरूपनिरूपकवर्गद्वयं व्यञ्जितं भवति । (वे. भा.)

**आनन्दतारतम्यम्**—मुक्तानां परस्परं आनन्दवैषम्यम् । (नव्यानां मते)

'यदा पश्यः पश्यते रूक्मवर्णम् कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय, निरञ्जनः परमं साम्यमुपैति' इति श्रुतेः मुक्तानां निर्दुःखत्वेनैव परमं साम्यं वक्तव्यम् ; न सर्वसाम्यम्, नो चेत्—जीवेश्वरविभाग एव न भवेत् । उपासनवेलायां साधनतारतम्यं दरीदृश्यते । तदनुरोधेन फलेऽपि वैषम्यमावश्यकं खलु । अतो साधनतारतम्यात् मुक्तौ आनन्दह्रासो वक्तव्य एव इति चेदुच्यते ।

मुमुक्षुदशायाम् औपाधिकोत्कर्षापकर्षनिबन्धनतया तथात्वेऽपि, मुक्तिदशायां सकलकर्मक्षयेऽपि तारतम्यं स्वीकुर्वतां, मुक्तौ सर्वेषाम् अविशेषेण ईश्वरेण परमसाम्यं वदन्तीनां श्रुतीनाम् अप्रामाण्यं प्रसजेत् । अतः मुक्तौ प्रतिबन्धककर्मसामान्यस्यापि विनाशात् तारतम्यापादककारणाभावाच्च नानन्दतारतम्यं स्वीकरणीयम् ।

अयं भावः—अस्यां श्रुतौ 'तदा विद्वान्........परमं साम्यमुपैति' इत्यत्र विद्वान् इति पदस्वारस्यात् वेदनतः परमसाम्यं विवक्षितम् ; न तु अतिरिक्ताकारेण । परमात्मनः ज्ञानं सर्वं वस्तु साक्षात्कृत्य अनुकूलतया अनुभवति, तथैव मुक्तज्ञानमपि । तच्च 'स चानन्त्याय कल्पते' इति श्रुत्यनुरोधेन विकसितं सत् सर्वं वस्तु भगवच्छेषत्वेन अनुकूलतया अनुभवत्येव ।

सिद्धान्ते—अनुकूलत्वप्रकारकज्ञानविशेष एव आनन्दः, नत्वतिरिक्तः । अतः अस्मिन्नंशे एव परमं साम्यं विवक्षितम् ; न तु जगत्सृष्ट्यादि असाधारणाकारेण ।

यदुक्तं निरवधिकानन्दत्वं परमात्मन एव ; न तु जीवस्य अस्वातन्त्र्यात् इति । तत् न सुन्दरम् । निरवधिकानन्दाभावलक्षण-आनन्दतारतम्यं प्रति अस्वातन्त्र्यस्य अप्रयोजकत्वात् कर्मवश्यत्वस्यैव प्रयोजकत्वाच्च । परतन्त्रे गृहिण्यादौ स्वतन्त्र-पतितुल्यभोगवत्त्वं हि लोके दृश्यते । कर्मकृतं पारतन्त्र्यं यद्यपि दुःखमावहति ; तथापि गुणकृतं नैसर्गिकं वा पारतन्त्र्यञ्च निरतिशयानन्दमेव आवहति । गुणकृतं पारतन्त्र्यं कामिनीविषयकम् । कामुकस्य अनल्पानन्दं जनयतीत्येतत् सुप्रसिद्धं हि लोके । 'स स्वराट् भवति' इति श्रुतिः सर्वथा मुक्तौ जीवस्य कर्मपारवश्यं

नेत्याचष्टे । 'सोऽश्नुते सर्वान् कामान्' इत्यादिना ब्रह्मतुल्यं सर्वकामानुभवितृत्वं जीवस्य मुक्तौ श्रुतम् । अनन्तकल्याणगुणपरिपूर्णब्रह्मानुभवकृतं स्वरूपकृतञ्च जीवस्य पारतन्त्र्यम् अनल्पमानन्दमादधातीत्यपि श्रुतिस्मृत्यादिसिद्धम् । अतः आनन्दतार-तम्यसाधनप्रयासः विफल इति मन्यामहे ।

यदुक्तं आनन्दादीनां जीवस्वरूपत्वं ; तत्किं जीवाभेदरूपम् ? उत जीवापृथ-क्सिद्धिरूपम् ? नाद्यः, भेदव्यवहारानापत्तेः । न च विशेषबलात् भेदसिद्धिः, विशेषस्य गगनकमलायमानत्वात् । विशेषस्य स्वरूपभेदव्यवहारसिद्धये विशेषान्तर-कल्पने अनवस्थापातात् । विशेषस्य स्वपरनिर्वाहकत्वकल्पनापेक्षया आनन्दादेरेव तथात्वकल्पनौचित्याच्च ।

न द्वितीयः ;

स्वस्वरूपापृथक्सिद्धानन्दादेः तिरोधाननिवृत्तिरूपाभिव्यक्तेः सर्वमुक्तसाधारणतया आनन्दतारतम्यासिद्धेः । यदप्युक्तम् आनन्दवल्ल्यां सामान्यवाचिनां श्रोत्रियादिपदानां भिन्नार्थकत्वेन स्वयोग्यफलपूर्णत्वादेः तत्र उक्तत्वात् इति । तदपेशलम् ; अर्थवैरूप्यस्या-परिहारात् , 'सैषानन्दस्य मीमांसेति' सन्दर्भस्य मुक्तानन्दगतापरिच्छिन्नस्वरूपैकार्थ-परतया एकवाक्यतापन्नस्य मनुष्यगन्धर्वादिरूपेण मुक्तभेदमुपजीव्य तत्तदानन्दवैषम्यपरत्वे अर्थभेदस्य अवर्जनीयत्वात् एकवाक्यताभङ्गापत्तेः । सम्भवति च एकवाक्यत्वे वाक्यभेदस्य अन्याय्यत्वाच्च ।

'सैषानन्दस्य मीमांसा' इति सन्दर्भेण मुक्तानन्दसागरे कर्मपरवशमनुष्यगन्धर्वा-द्यानन्दानां शीकरायमाणता हि प्रतिपाद्यते । तत्र प्रतिपर्यायं श्रोत्रियपदस्य अकामहत-पदविशेषितस्य मुक्तस्वरूपपरत्वेन सम्प्रतिपन्नस्य मुक्तभेदपरत्वे अर्थवैरूप्यं दुर्वारमेव ।

किञ्च स्वयोग्यफलपूर्णत्वं तत्र अशाब्दम् । 'परं ज्योतिरुपसम्पद्य' इत्यत्र स्वाभाविकानां संसारदशायां तिरोहितानाम् अपहतपाप्मत्वादीनां तिरोधाननिवृत्तिरूप आविर्भाव एव प्रतिपाद्यते ; न तु अपूर्वानन्दोत्पत्तिः । गुण-गुणिनोः अभेदवादि-नान्तु आनन्दोत्पत्तिवादश्च नैव शोभते ।

तथा च सर्वेषां जीवानां स्वरूपसाम्यं श्रुत्यादिसिद्धमिति पूर्वमेव अभिहितम्। स्वरूपतिरोधानञ्च जीवस्वरूपनाशादिरूपतया जीवनित्यतापादकश्रुतिविरुद्धम्। जीवेशयोः साम्यनिर्वाहकधर्मस्तु आनन्दादिः ; न जगद्व्यापारादिः। स च आनन्दादिः जीवेशयोः सम्पूर्णत्वे तुल्यः। ततो न आनन्दतारतम्यम्।

मनुष्यत्व-गन्धर्वत्वादिकमपि न आत्मस्वरूपगतम् ; 'आत्मा न देवो न नरः' इत्यादिवचनात्। अत एव आनन्दतारतम्यं जातितारतम्यप्रयुक्तमित्यप्यसाधु। आनन्दवल्यां मानुषानन्दादारभ्य हिरण्यगर्भानन्दपर्यन्तम् उक्तं तारतम्यम्। कर्माधीन-वैषयिकानन्दानां तारतम्यं कर्मतारतम्यनिबन्धनमिति ज्ञापयितुं, चतुर्मुखाद्यानन्दानां ब्रह्मानन्दपयोनिधि शीकरायमाणतां ज्ञापयितुञ्च। 'परमं साम्यमुपैति' इत्यादिश्रुत्या आनन्दसाम्यं साधयत्सु वादिषु शुष्कतर्कावलम्बनापवादस्य प्रतिवादिनां केवल आग्रह एव मूलम्। 'सोऽश्नुते सर्वान् कामान्' इत्यत्र मुक्तस्य न्यूनकामभोक्तृत्वाङ्गीकारे सर्वानिति पदवैयर्थ्यं दुर्वारम्। यजमानभृत्ययोः मृष्टान्नभोजने तुल्ये सति तदधीन तृप्तेरपि तुल्यता सर्वलोकसिद्धेति आनन्दतारतम्यवादो स्वगोष्ठीमात्रमनोहा-रीति सिद्धम्।

(विस्तरस्तु आनन्दतारतम्यविचाराख्यग्रन्थे द्रष्टव्यः।)

अणुभूते जीवस्वरूपे एव अतिसूक्ष्मं परस्परतारतम्यं स्वीकुर्वतां तत्तद्रूपस्तु स्वरूपानुगुणमानन्दतारतम्यं वक्तुं शक्येत, जीवस्वरूपे तारतम्यमनङ्गीकुर्वतान्तु कर्मरूपोपाध्यभावाच्च आनन्दतारतम्यं दुरुपपादमिति भावः।

तदुक्तमाचार्यपादैः रहस्यत्रयसारे परिपूर्णब्रह्मानुभवाधिकारे—

'मुमुक्षुदशायामौपाधिकोत्कर्षापकर्षमादाय मुक्तिकालेऽपि अनुभवतारतम्यं वर्तते' इति आनन्दतीर्थीयाः सर्वेषां मुक्तानां सर्वेश्वरस्येव परमसाम्यं वदतः श्रुत्यादीन् व्यस्मार्षुः। आचारवैकल्यवतां मुमुक्षूणां आनन्दह्रासप्रतिपादकवचनस्य प्रमाणत्वेऽपि मुक्तेः प्राक् जायमान भगवदनुभवे ह्रास इत्यत्रैव तात्पर्यं वर्णनीयम् इति॥

**आनन्दत्वम्**—स्वतः अनुकूलत्वम् ।

(आनन्दमीमांसायां) गुणसमुदायं विभूतिपौष्कल्यं च उक्त्वा,

'स एको मानुष आनन्दः' इति श्रुत्या स्वरसतः तस्यैवानन्दत्वमुक्तम् । अनुकूलत्वं ह्यानन्दत्वम् । निवर्त्यानिष्टत्वेष्टसाधनत्वानपेक्षमिष्टत्वमनुकूलत्वम् । उक्तलक्षणयोगात् गुणविभूत्योरानन्दत्वमुपपद्यते । तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वकृतमित्यन्वयव्यतिरेकसिद्धम् । एवञ्च सति श्रुतिस्वारस्यञ्च सिद्ध्यति । गुणविभूतिप्रकर्षमुक्त्वा, 'स आनन्द' इति ह्युक्तम् ; न तु तद्विषयज्ञानमिति । युवत्वाद्यनेकगुणान् विभूतिमप्युक्त्वा तत्समुदायमानन्दशब्देन निर्दिश्य तस्यानन्दस्य निरतिशयत्वप्रतिपादनात् सर्वगुणानां विभूतेश्चानवधिकातिशयत्वं प्रतिपादितं भवति । अनुकूलज्ञानत्वमेवानन्दत्वमिति गुणविभूतिविषयज्ञानस्यानन्दत्वेऽपि तस्यानन्दस्य निरवधिकातिशयत्वोक्त्या गुणविभूत्योरप्यनवधिकातिशयत्वमर्थादुक्तं भवति ; तदानन्त्यस्य गुणविभूत्यानन्त्यनिबन्धनत्वादिति ॥ (श्रु प्र. I–197,198)

**आनन्दथुः**—आनन्दः ।

'जीवस्याप्यन्तरात्मा निरुपधिकमहानन्दथुः स्थाप्यतेऽत्र' । (अ. सा. 58)

'ट्वितोऽथुच्' (पा. सू. 3-3-80) इति सूत्रेण 'टुनदि-समृद्धौ' इत्यस्मात् भावे प्रत्ययो बोध्यः । आनन्दः इति यावत् । निरुपधिकः महानन्दथुः यस्येति ।

'स्यादानन्दथुरानन्दश्शर्मशातसुखानि च' इत्यमरः ॥

**आनन्दभुक**—परमात्मा (सङ्कर्षणाभिधः) ।

'सुषुप्तस्थान एकीभूतः प्रज्ञानघन एव आनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः' । (मां. उ. 2–3)

जीवस्य सौषुप्तिकानन्दानुभावकः चेतोमुखः—विशुद्धचेतो ग्राह्यः । ज्ञानानन्दमय इति यावत् । आनन्दभुक् यः प्राज्ञः सङ्कर्षणाभिधः तृतीयः पादः इत्यर्थः ॥

(रं. भा.)

अत्र प्रकरणानुरोधेन भुज्धातुः अन्तर्भावितण्यर्थः । सुषुप्तौ धर्मभूतज्ञान-प्रसरणाभावेन विषयानुभवरूपानन्दाभावेऽपि 'सुखमहमस्वाप्सम्' इति प्रत्यवमर्शानु-रोधेन स्वरूपसुखम्अनुभवत्येवेति तद्धेतुरयम् ।

**आनन्दप्रचुरः**—प्राचुर्येणानन्दवान् परमात्मा ।

आनन्दमय इत्यस्य आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम् । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम् । अतः औचित्यप्राप्तविकारार्थत्वमेव युक्तम् ।

किञ्च—लोके 'मृन्मयं हिरण्मयं दारुमयमि'त्यादिषु, वेदे च 'पर्णमयी जुहूः', 'शमीमय्यः स्रुचः', 'दर्भमयी रशना' इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं धियमधिरोहति । जीवस्य च आनन्दविकारत्वमस्त्येव, तस्य स्वत आनन्दरूपस्य सतः संसारित्वावस्था तद्विकार एवेति । अतः विकारवाचिनः मयट्-प्रत्ययस्य श्रवणात् आनन्दमयो जीवादनतिरिक्त इति । (श्री. भा. 1-1-13)

अथ मयडर्थप्राचुर्यस्याल्पत्वापेक्षत्वे द्वयीगतिः । समानाधिकरणविजातीयगतत्वेन, व्यधिकरणसजातीयगतत्वेन चेति । तत्र 'ब्राह्मणमयो ग्राम' इत्यादौ आद्या । 'प्रकाशमयो रविः' इत्यादौ द्वितीया । तत्र हि चन्द्रादिगतप्रकाशाल्पत्वमपेक्ष्य तत्प्रयोगोऽस्तु ।

एतदुक्तं भवति । यथा—'प्रकाशमयो रविः' इत्यत्र तिमिराल्पत्वस्य सूर्ये प्रत्यक्षबाधितत्वात् अप्रतीतिः । एवं ब्रह्मण्यप्यपहतपाप्मत्वादिश्रुतिविरोधात् न दुःखाल्पत्वप्रतिपत्तिः इति ।

वस्तुतस्तु—व्यापकत्वात् सजातीयाल्पत्वप्रतियोगिकत्वमेव प्राचुर्यस्यास्तु । 'ब्राह्मणमयो ग्रामः' इत्यत्रापि ग्रामान्तरगतब्राह्मणाल्पत्वमपेक्ष्यैव तत्प्रयोगोपपत्तेः । विजातीयाल्पत्वं तु 'प्रकाशमयो रविः' इत्यादावव्यापकम् ।

यद्यपि 'विज्ञानमय' इत्यत्र व्यधिकरणसजातीयाल्पत्वमप्रसिद्धम्; तथाऽपि प्रलयावस्थाकालीनज्ञानाल्पत्वमपेक्ष्यैव तत्प्रयोगोपपत्तिः, वैयधिकरण्यमनपेक्ष्य सजातीयाल्प-

तामात्रापेक्षत्वकल्पने बाधकाभावात् । 'प्रकाशमयो दीपः' इत्यादौ अवस्थान्तरीय-तदल्पतामादाय तथा प्रयोगदर्शनात् ।

व्यक्तञ्चैतत् । मयट्प्रत्ययो हि प्रकृत्यर्थप्राचुर्यमात्रमेव प्रतिपादयन् अन्यत्र तस्य वा, तस्यान्यस्य वा नाल्पत्वं प्रतिपादयति । तच्च प्रमाणान्तरावसेयम् । प्रमाणान्तरं च प्रत्यक्षादिकम् । तत्र यदा ग्रामादिगतशूद्राल्पता प्रतिपन्ना, तदा तदेव प्रतियोगित्वेन प्रतीयते । यदा तु ग्रामान्तरगतं तात्कालिकं तद्गतं वा कालान्तरीयं ब्राह्मणाल्पत्वं प्रतिपद्यते ; तदा तदेव प्रतियोगित्वेन गृह्यते । अत एव कदाचित् स्फुटप्रतिपत्तये तत्र 'ब्राह्मणमयोऽयं ग्रामः', 'अयमिदानीं ब्राह्मणमयः' इति च प्रयुज्यते । अतः 'आनन्दमय' इति प्राचुर्यमात्रे आनन्दगते मयटा प्रतिपन्ने, तत्र विजातीयाल्पत्वस्य प्रमाणबाधितत्वात्, अवस्थान्तराभावाच्च, 'स एको मानुष आनन्दः' इति वाक्यशेषावगतसजातीयाल्पतामपेक्ष्यैव तदुपपादनीयम् ।

किञ्च—समानाधिकरणविजातीयाल्पत्वसापेक्षत्वं न जीवेऽपि सम्भवति । बद्धावस्थे तस्मिन् दुःखमये आनन्दप्राचुर्याभावात् । मुक्तावस्थे तस्मिन्नवस्थाभेद-माश्रित्यैव विजातीयाल्पत्वमाश्रयणीयम् । तच्च सजातीयाल्पत्वेनाप्युपपादयितुं शक्यम् । निरुपाधिकनिर्देशेन असङ्कुचितसर्वावस्थानुस्यूतप्राचुर्यप्रतिपत्तये परं परमात्म-परत्वमेवाश्रयितुं युक्तम् । (त. मा.)

**आनन्दमयः**—आनन्दप्रचुरः (परमात्मा) ।

['तत्प्रकृतवचने मयट्' (पा. सू. 5-4-21) इत्यनेन प्राचुर्ये मयट्प्रत्ययः ।]

'विज्ञानमयः कालात्मा आनन्दमयो लयात्मा' । (सु. उ. 5-14)

आनन्दमय इत्येतदुपपादयति—**लयात्मेति** । लयस्यात्मा । आत्यन्तिक प्रलयरूपस्य मोक्षस्य आत्मा—सत्ताहेतुः निर्वाहकः । मोक्षप्रदत्वादिलक्षणादैश्वर्यप्रकर्षात्-निरतिशयानन्दप्रचुरः परमात्मेत्यर्थः । (श्रु. भा.)

**आनन्दमयविद्या**—आनन्दमयवाच्यब्रह्मोपासनम् ।

'स वा एष पुरुषोऽन्नरसमयः........तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः' इत्यादि तैत्तिरीयवाक्यैः प्रतिपन्नानन्दमयस्य 'सैषानन्दस्य मीमांसा

भवति' इत्यारभ्य, 'यतो वाचो निवर्तन्ते' इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कतया अभ्यस्यमान आनन्दवत्त्वेन 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोदित ब्रह्मणः उपासनम्। इदञ्च आनन्दमयाधिकरणे निरूपितम्॥

**आनन्दमयस्य शोध्यत्वम्**—परमात्मनः प्रसाद्यता।

'अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमया मे शुद्ध्यन्ताम्'। (तै.ना. 72)

शोध्यत्वं चात्र भजन-प्रपदनलक्षणप्रसदनोपायेन प्रसाद्यत्वम्। (रं. भा.)

तदुक्तम्—'शोध्यत्वं तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रम्' इति। (अ.सा. 60)

अनेन सर्वपापापनोदकस्य परस्य शोध्यत्वमनुपपन्नमिति संशीतिः निवारिता॥

**आनन्दमयाधिकरणम्** (1-1-6)

1. आनन्दमयोऽभ्यासात्। 2. विकारशब्दान्नेति चेन्न प्राचुर्यात्। 3. तद्धेतुव्यपदेशाच्च। 4. मान्त्रवर्णिकमेव च गीयते। 5. नेतरोऽनुपपत्तेः। 6. भेदव्यपदेशाच्च। 7. कामाच्च नानुमानापेक्षा। 8. अस्मिन्नस्य च तद्योगं शास्ति। इत्यष्टसूत्रात्मकम् 'आनन्दमय' पदेनोपक्रान्तमिदमधिकरणम्।

अस्मिन्नधिकरणे 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा आनन्दमयः' इत्यत्र आनन्दमयः प्रत्यगात्मा, शारीर इति जीवासाधारणशरीरसम्बन्ध-श्रवणादित्याशङ्क्य, निरतिशयदशाशिरस्काभ्यस्यमानानन्दयोगात्, परमात्मनि चिदचिद्वस्तुशरीरतया शरीरित्वसम्भवाच्च आनन्दमयः परमात्मेति सिद्धान्तितम्॥

विकारवाची मयडित्यमुष्मात्
क्षेत्रज्ञमानन्दमयं विशङ्क्य।
असंभवात् प्राणमये च हानेः
प्राचुर्यवाचीति निराचकार॥ (न्या. क. सं. 1-13)

आनन्दमयोऽभ्यासात्—(ब्र.सू. 1-1-13)

(आनन्दमयाधिकरणे प्रथमं सूत्रम् ।)

आनन्दमयः न जीवः, किन्तु परमात्मैव ; निरतिशयदशाशिरस्काभ्यस्यमानानन्दवत्त्वात् ।

तैत्तिरीये आनन्दवल्यां 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन चिदचिद्विलक्षणस्वरूपमुक्त्वा, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति आकाशादिशरीरपर्यन्तं सृष्टिमभिधाय तदेव विविच्य ज्ञापयितुं, 'स वा एष पुरुषोऽन्नरसमयः' इत्यारभ्य, 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः, इत्यादिना....विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः' इति हि श्रुतिः उपक्रमते ।

तत्र संशयः—किम् आनन्दमयो जीवः, ? उत परमात्मा ? इति ।

किं युक्तम् ? प्रत्यगात्मेति । कुतः ? 'तस्यैष एव शारीर आत्मा' इति तस्मिन् शारीरत्वश्रवणात् । तच्च जीवात्मनि प्रसिद्धम् । तस्यैव शरीरसम्बन्धात्, न तु ब्रह्मणः । असाधारण्येन हि व्यपदेशाः । अत एव हि 'अनुपपत्तेस्तु न शारीरः' इत्यादिषु सौत्रनिर्देशाः जीवासाधारणा एव दृश्यन्ते । अतः आनन्दमयः प्रत्यगात्मैव । 'तस्यैष एव शारीर आत्मा' इति श्रुतिस्तु अनन्यात्मत्वपरा इत्यत्राह—'आनन्दमयोऽभ्यासात्' इति ।

'नेतरोऽनुपपत्तेः' इत्यतो नेतर इत्यपकृष्यते । अभ्यासशब्दश्च कर्मणि घञन्तः । उत्तरोत्तराधिक्येन गुणनरूपाभ्यासकर्मपरो वाक्यशेषादवगम्यते। 'सैषाऽनन्दस्य मीमांसा भवति' इत्यादिना हि मानुषानन्दादित उत्तरोत्तरशतगुणितक्रमेण आनन्दो ह्यभ्यस्यते । सामान्यशब्दश्च, वाक्यशेषात् विशेषपरः इति च 'सन्दिग्धे तु वाक्यशेषात्' इत्यत्रोक्तम् ।

आनन्दमयशब्दसमभिव्याहाराच्च अभ्यासशब्दः आनन्दस्यैवाभ्यासमभिधत्ते इति अभ्यस्यमानानन्दपरोऽयमवगम्यते । अभ्यस्यमानत्वं च निरतिशयत्वोपपादकम् ।

जगच्छरीरकस्य परमात्मनः शरीरित्वमपि न विरुद्धम् । मयट्प्रत्ययश्च न विकारार्थकः ; किन्तु प्राचुर्यार्थः । प्राचुर्यं च 'प्रकाशमयः सविता' इतिवत् स्वव्यधिकरण-सजातीयगताल्पत्वप्रतियोगिकम् । प्राचुर्यस्य च तदभ्यासैकगम्यत्वात् । न हि मनुष्यादिप्राजापत्यन्तसकलचेतनवर्गगतानन्दजाताधिकतमानन्दवत्त्वं परिमितसुखभागिनि चेतने जीवे सम्भवति ।

यद्यपि मुक्तस्य आनन्दसाम्यं वक्ष्यते ; तथापि 'यतो वाचो निवर्तन्ते' इत्युक्त वाङ्मनसापरिच्छेद्यानन्दवत्त्वं न मुक्तेऽपि सम्भवति । मुक्तानन्दस्य विषय-परिच्छेदराहित्येऽपि परमात्मसङ्कल्पाधीनत्वमेव कालपरिच्छिन्नत्वात् । हेत्वनुपदेशेन अनन्यप्रयोज्यत्वस्यापि विवक्षिततया 'तद्धेतुव्यपदेशाच्च' इति हेतुप्रयोज्यानन्दाश्रये तस्मिन् तदसम्भवाच्च ।

ननु ततोऽतिरिक्तं पुच्छतया 'ब्रह्मपुच्छं प्रतिष्ठा' इति तत्रैवोच्यते । अत एव तद्विषयके श्लोके 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः' इति परमोपक्रमगतमुक्तिहेतुवेदनविषये तस्मिन् ब्रह्मशब्दो अभ्यस्यते । अतः आनन्दमयादतिरिक्तं ब्रह्मेति चेत्, उच्यते—प्रकरणस्य स्वस्मादनतिरिक्तैः स्वावयवैः शिरःपक्षादिरूपणपरत्वात् तदन्तरतया आत्मशब्दव्याख्यानस्य आनन्दमये पर्यवसितत्वात्. अन्नमयादिविषयाणां प्रकरणस्थश्लोकानां पुच्छवद्विषयत्वात् कारणत्व-प्रतिपादके 'सोऽकामयत' इत्यनन्तरवाक्ये 'सः' इति पुल्लिङ्गान्तेन प्रधानप्रकृतार्थ-परामर्शिना तच्छब्देन अव्यवहितस्य आनन्दमयस्यैव वक्तुं युक्तत्वात्, 'आनन्दो ब्रह्म' इति आनन्दशब्दस्य ब्रह्मपरत्वाभ्युपगमात्, 'आनन्दो ब्रह्मेति व्यजानात्', 'आनन्दमय-मात्मानमुपसंक्रम्य' इत्यानन्दानन्दमयशब्दयोरेकार्थत्वेन आनन्दमयशब्दस्यापि परब्रह्म-परत्वात्, आनन्दमय-आत्म-ब्रह्मशब्दानामैकार्थ्येन तेष्वन्यतमेन तद्विषयश्लोके निर्देशस्य युक्तत्वाच्च आनन्दमय एव परं ब्रह्म ।

अत एव भाषितम्—यथा अन्नमयो देहोऽवयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव शिरःपक्षपुच्छवत्तया निदर्शितः, तथा—आनन्दमयं ब्रह्मापि प्रियमोदादिभिः निदर्शितम् ।

तत्र अवयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतया अखण्डरूपम् आनन्दमयं 'ब्रह्मपुच्छं प्रतिष्ठा' इत्युच्यते। सकलावयवाधारभूतं हि पुच्छम्। यद्यन्यदेव ब्रह्म अभविष्यत् 'आनन्दमयादन्योऽन्तर आत्मा ब्रह्म' इत्यपि निरदेक्ष्यत। न चैवं निर्दिश्यते।

आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपितस्य अपरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानशङ्का युक्तैव। पुच्छब्रह्मणोऽपि अपरिच्छिन्नानन्दतयैव हि अप्रसिद्धतेति, आनन्दमयस्यैव ब्रह्मत्वं सम्पनीपद्यते।

आनन्दमयशब्देन परमात्मा हि कथ्यते।
ते ये शतमिति श्रुत्या त्वभ्यस्तानन्दवस्त्वतः॥ (ब्र. प. मा)

शङ्करभाष्ये तु—आनन्दमयोऽभ्यासादिति पर एवानन्दमयो भवितुमर्हति। कुतः? अभ्यासात्। परस्मिन्नेव हि आत्मन्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते। आनन्दमयं प्रस्तुत्य, 'रसो वै सः' इति तस्यैव रसत्वमुक्त्वोच्यते, 'रसं ह्येवायं लब्ध्वानन्दी भवति........आनन्दो ब्रह्मेति व्यजानात्' इति च। श्रुत्यन्तरे च 'विज्ञानमानन्दं ब्रह्म' इति ब्रह्मण्येव आनन्दशब्दो दृष्टः, एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्येवाभ्यासात् आनन्दमय आत्मा ब्रह्मेति गम्यते।

यत्तूक्तम्—अन्नमयाद्यमुख्यात्मप्रवाहपठितत्वादानन्दमयस्याप्यमुख्यात्मत्वमिति। नासौ दोषः; आनन्दमयस्य सर्वान्तरत्वात्। मुख्यमेव हि आत्मानमुपदिदिक्षुशास्त्रं लोकबुद्धिमनुसरदन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषा निषिक्त द्रुतताम्रादिप्रतिमावत् ततोऽन्तरमित्येवं पूर्वेण पूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मेति ग्राहयत्प्रतिपत्तिसौकर्यापेक्षया सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेश इति श्लिष्टतरम्। यथा अरुन्धतीदर्शने बह्वीष्वपि तारासु अमुख्यासु अरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते, सा मुख्यैवारुन्धती भवति। एवमिहापि आनन्दमयस्य सर्वान्तरत्वान्मुख्यमात्मत्वम्।

यत्तु प्रियादीनां शिरस्त्वादिकल्पनानुपपन्ना मुख्यस्यात्मन इत्यतीतानन्तरोपाधि-जनिता हि सा न स्वाभाविकीत्यदोषः। शारीरत्वमप्यानन्दमयस्यान्नमयादिशरीर-परम्परया प्रदर्श्यमानत्वात् न पुनः साक्षादेव शारीरत्वं संसारिवत्, तस्मादानन्दमयः पर एवात्मा—इत्युक्तम्।

अस्मिन्नेवाधिकरणे उपसंहारे तु एवं भाषितम्—

इदन्त्विह वक्तव्यम् 'स वा एष पुरुषोऽन्नरसमयः........विज्ञानमयः' इति च विकारार्थे मयट्प्रवाहे सत्यानन्दमय एव कस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं चाश्रीयत इति। मान्त्रवर्णिकब्रह्माधिकारादिति चेन्न; अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः।

अत्राह—युक्तमन्नमयादीनामब्रह्मत्वम्। तस्मात्तस्मादन्तरस्यान्तरस्यान्यस्यान्य-स्यात्मन उच्यमानत्वात्, आनन्दमयात्तु न कश्चिदन्योऽन्तर आत्मा उच्यते। तेनानन्द-मयस्य ब्रह्मत्वम्, अन्यथा प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गादिति।

अत्रोच्यते—यद्यप्यन्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्मेति न श्रूयते, तथापि नानन्दमयस्य ब्रह्मत्वम्; यत आनन्दमयं प्रकृत्य श्रूयते 'तस्य प्रियमेव शिरः.... ब्रह्म पुच्छं प्रतिष्ठा' इति। तत्र यद्ब्रह्मेह मन्त्रवर्णे प्रकृतं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति, तदिह 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युच्यते। तद्विजिज्ञापयिषयैव अन्नमयादय आनन्दमयान्ताः पञ्चकोशाः कल्प्यन्ते। तत्र कुतः प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गः।

ननु आनन्दमयस्यावयवत्वेन ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते। अन्नमयादीनामिवेदं पुच्छं प्रतिष्ठेत्यादि। तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुं? प्रकृतत्वादिति ब्रूमः।

ननु आनन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते, आनन्दमयस्य ब्रह्मत्वादिति। अत्रोच्यते तथा सति तदेव ब्रह्मानन्दमयः आत्मावयवी, तदेव च ब्रह्म पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्यात्। अन्यतरपरिग्रहे तु युक्तं

'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्रैव ब्रह्मनिर्देश आश्रयितुम्, ब्रह्म शब्द संयोगात्, आनन्दमय-वाक्ये ब्रह्मशब्दसंयोगाभावात्। अपि च 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्त्वा इदमुच्यते—'तदप्येष श्लोको भवति। असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः' इति। अस्मिंश्च श्लोके अननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानात् गम्यते, ब्रह्म पुच्छं प्रतिष्ठेत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति।

न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता, प्रियमोदादिविशेषणस्य आनन्द-मयस्य सर्वलोकप्रसिद्धत्वात्, कथं पुनः स्वप्रधानं सद्ब्रह्म आनन्दमयस्य पुच्छत्वेन निर्दिश्यते—ब्रह्म पुच्छं प्रतिष्ठेति? नैषदोषः, पुच्छवत्पुच्छं प्रतिष्ठा परायणम् एकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते; नावयवत्वम्। एकस्यैवा-नन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्तरात्। अपि चानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यम्। निर्विशेषं तु ब्रह्म वाक्यशेषे श्रूयते, वाङ्मनसयोरगोचरत्वाभिधानात्, 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति'। अपि च आनन्दप्रचुर इत्युक्ते दुःखाल्पीयस्त्वमपि गम्यते, प्राचुर्यस्य लोके प्रतियोग्यल्पतापेक्षत्वात्। तथा च सति 'यत्र नान्यत् पश्यति, नान्यत् शृणोति, नान्यद्विजानाति स भूमा' इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभाव श्रुतिरुपरुध्येत। प्रतिशरीरं च प्रियादिभेदादानन्दमयस्य भिन्नत्वम्, ब्रह्म तु न प्रतिशरीरं भिद्यते, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यानन्त्य श्रुतेः। 'एको देवः सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुत्यन्तरात्— इति॥

**आनन्दमीमांसा**—ब्रह्मगतानन्दविषयकविचारः।

'सैषाऽऽनन्दस्य मीमांसा भवति' (तै.आ.)

'युवा स्यात् साधु युवाध्यायकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य' इत्यादिना,

देवगन्धर्व-चिरलोकलोकपितृ-आजानज-कर्मदेव इन्द्राणामानन्दं शतगुणितं क्रमेण-निरूप्य ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमय मात्मानमुमसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुप-संक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति । तदप्येषश्लोके भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति' इति श्रूयते । (तै. आ. 31, 32, 33)

अत्र ब्रह्मवेदनस्य जगत्कारणत्वतदौपयिकसार्वज्ञ्यादिगुणविशिष्टविषयकत्वम् अविच्छिन्नत्वञ्च विधाय, प्राप्यस्य आनन्दमयस्य ब्रह्मण आनन्दमयशब्दप्रवृत्तिनिमित्तं आनन्दप्राचुर्यं दर्शयति—'सैषाआनन्दस्यमीमांसा भवति' इति । वक्ष्यमाण आनन्दविषयकविचारो भवतीत्यर्थः ।

अत्र व्यासार्याः—**साधु युवाध्यायकः,** साधु—यथाविधि, सम्यक्संप्रदाय सिद्धतया, स्वर-वर्णादिभ्रंशरहितं वा । युवशब्देन प्रत्यग्रत्वं विवक्षितम् । अविस्मरणान्नित्यं नवं यथा भवति, तथाऽध्ययनवानित्यर्थः ।

यद्वा स्वसमवयस्कानां सर्वेषां **अध्यायकः**—अध्यापकः । तदधिकज्ञान इत्यर्थः । **आशिष्ठः**—आशुतरक्रियः । यद्वा अशनक्षमः, अरोग इत्यर्थः । यद्वा आशीर्वादविषयभूतः । सर्वानुरञ्जक इत्यर्थः । 'सर्वान् देवान् नमस्यन्ति' इतिवत् । **बलिष्ठः**—मनोबलवान् । **द्रढिष्ठ** इति शारीरबलस्योक्तत्वात् । यद्वा द्रढिष्ठः—दृढतरः ; न तु अव्यवस्थितस्वभाव इत्यर्थः । **बलिष्ठः**—शारीरमानस सर्वविधबलवान् । **वित्तस्य पूर्णा**—वित्तेन पूर्णा । 'पूरणगुणसुहितार्थ' इति

षष्ठ्या अनुज्ञानात् । एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा, '**स एको मानुष आनन्दः**' इति श्रुत्या स्वरसतः तस्यैवानन्दत्वमुक्तम् ।

न च—ज्ञानभिन्नस्य गुणविभूत्यादेः कथमानन्दत्वमिति शङ्क्यम् ; अनुकूलत्वं ह्यानन्दत्वम् । तच्च स्वत एवेष्टत्वम् । तच्च गुणविभूत्योरपि सम्भवति । तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वप्रयुक्तमेवेत्यन्वयव्यतिरेकसिद्धम् । अतः श्रुतिस्वारस्यात् गुणविभूत्यादेरानन्दत्वम् ।

**श्रोत्रियः**—ब्रह्मनिष्ठः । **अकामहतः**—समस्तसांसारिकभोगानुपहतः । 'अतो मुक्त उच्यते' इत्युक्तम् । एवं च युवत्व-दृढगात्रत्व-सौन्दर्यज्ञानबलैश्वर्यादयः संभूय यत्र भवन्ति, स एको मानुष आनन्दः । अकामहतश्रोत्रियस्य मुक्तस्यापि स आनन्दोऽस्ति । मुक्तस्य सर्वानन्दानुभवशालितया तत्र मानुषानन्दस्यान्तर्गतत्वादिति भावः ।

ये मनुष्या एव सन्तः कर्मविशेषेण विद्याविशेषेण वा अन्तर्धानादिशक्त्युपेततया गन्धर्वत्वं प्राप्ताः, ते **मनुष्यगन्धर्वाः** । अन्तरिक्षलोकवासिनो **देवगन्धर्वाः** । चिरकालस्थायी लोकः **चिरलोकः** । चिरलोको लोको येषां, ते **चिरलोकलोकाः** पितरः । आजानः देवलोकः । तत्र जाताः **आजानजाः** । स्मार्तकर्मविशेषतो देवस्थानेषु जाता इत्यर्थः ।

अग्निहोत्रादिकर्मणा अग्नीन्द्रादिसायुज्यं प्राप्ताः **कर्मदेवाः** । देवास्तु वसुरुद्रादयः त्रयस्त्रिंशत् हविर्भुजः । इन्द्रबृहस्पती प्रसिद्धौ । **प्रजापतिः** चतुर्मुखः ; न तु दक्षादयः, एकवचनश्रवणात् । स एको ब्रह्मणः आनन्दः श्रोत्रियस्य चाकामहतस्य । अत्र **ब्रह्मशब्दः** 'ब्रह्मविदाप्नोति परम्' इति प्रकृतब्रह्मपरः ।

न च ब्रह्मानन्दस्य **ते ये शतमिति** परिच्छिन्नत्वं कथमिति शंक्यम्—क्षणार्धेन बहूनि योजनानि गच्छति रवौ, 'इषुवद्गच्छति सविता' इति इषुसाम्यप्रतिपादकवचनस्य गतिमान्द्यनिवृत्तिपरत्ववत् 'ते ये शत'मिति वाक्यस्यापि चतुर्मुखानन्दात् आधिक्यमात्र-परत्वेन शतगुणितचतुर्मुखानन्दानधिकत्वपरत्वाभावात् ।

एवम्भूत आनन्दमयः 'यो वेद निहितं गुहायाम्' इति हृदयगुहानिहितत्वेनोपास्यमानः कीदृशविग्रहविशेषविशिष्टः ? को वा देवताविशेषः ? इत्याकाङ्क्षायामाह—स यश्चायं पुरुषे यश्चासावादित्ये । स एकः इति ।

"य एषोऽन्तरादित्ये.........तस्योदितिनाम" इति आदित्यमण्डलान्तर्वर्तिकमनीयविग्रहयुक्तो यः पुण्डरीकाक्षः, स एव हृदयगुहावर्ती विज्ञानमयादन्तरः । ततश्च पुण्डरीकाक्षत्वादिविग्रहोपेतो नारायण एवेत्यर्थः । ततश्च तादृश बिग्रहविशिष्टत्वेन हृदयगुहावर्तिनो भगवतो ध्यानं कर्तव्यमिति फलितार्थः ।

अत्र 'सच्च त्यच्चाभवत्' इति चिदचिच्छरीरकत्वेनानुसन्धानमुक्तम् । 'सत्यं ज्ञानम्' इति स्वरूपेणानुसंधानमुक्तम् । तच्च स्वरूपेणानुसंधानम् आदित्यमण्डलान्तर्वर्तिपुण्डरीकाक्षविग्रहविशिष्टतया चोक्तं भवति ।

'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात्' इति सूत्रे भगवता भाष्यकृता, 'तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु स्वरूपेणानुसन्धानम् । 'तत् सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवत्' इति भोक्तृशरीरकतया, भोग्यभोगोपकरणशरीरकतया च अनुसन्धानम्' इत्युक्तम् । एवमस्य प्राप्यत्वोपयुक्तमुक्त्वा, 'उताविद्वानमुं लोकं प्रेत्य' इत्यादिनोपक्षिप्तानां प्रश्नानामुत्तरमाह—स.........संक्रामति ।

अत्र '**स य एवंवित्, अस्माल्लोकात्प्रेत्य**'त्यनेन सर्वेषां ब्रह्मविदां अर्चिरादिमार्गः उक्तो भवति ।

**आनन्दमयमात्मानमुपसंक्रामति** इति मुक्तिदशायां जीवब्रह्मणोरुपास्योपासकयोर्भोग्यभोक्तृभावप्रतिपादनात् मुक्तौ ब्रह्मैक्यपक्षो निरस्तो भवति ।

**एतमन्नमयमि**त्यादिषु पञ्चस्वपि पर्यायेषु एतच्छब्दः परमात्मपरः । **अन्नमय-प्राणमय-मनोमय-विज्ञानमय**शब्दाः तच्छरीरकपरमात्मपराः । अत्र व्यासार्यैः, 'सर्वोऽपि विद्वान् अस्माल्लोकात् प्रेत्य अन्नमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन् अनुभवती'त्युक्तम् ।

'अभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' इत्युक्तार्थे साक्षित्वेन श्लोकं पठति—**तदपि........कुतश्चनेति** ।

वाङ्मनसे आनन्दस्येयत्तालक्षणं पारं गन्तुं प्रवृत्ते तदप्राप्यैव निवृत्ते भवतः । तादृशानन्दगुणकब्रह्मोपासनेन सर्वक्लेशभयात्यन्तिकनिवृत्तिर्भवतीत्यर्थः । (रं भा.)

बृहदारण्यकोपनिषद्यपि— (6-3-32, 33)

एषाऽस्य परमा गतिः ; एषाऽस्य परमा सम्पत् ; एषोऽस्य परमो लोकः ; एषोऽस्य परम आनन्दः ; एतस्यैवाऽऽनन्दस्यान्यानिभूतानि मात्रामुपजीवन्ति ।

स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यैर्भोगैः सम्पन्नतमः, स मनुष्याणां परम आनन्दः । (इत्यादिक्रमेण)

अथ ये शतमाजानदेवानामानन्दाः, स एकः प्रजापतिलोक आनन्दः ; यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतं प्रजापतिलोक आनन्दाः, स एको ब्रह्मलोक आनन्दः ; यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः ॥ इत्युक्तम्

ननु कथं सुषुप्त्याधारस्य ब्रह्मलोकत्वम् । ब्रह्मलोको हि परमगतित्वादिना श्रूयत इत्यत्राह—**एषाऽस्य परमा गतिः** । जीवस्यार्चिरादिगत्या प्राप्यतया श्रुता परमगतिरेषैव । तत्त्वज्ञानादिना प्राप्यापि संपदेषैव । शाश्वतं भोगस्थानमप्येष एव । **एषोऽस्य परम आनन्दः** । निरतिशयानुकूलोप्यस्यायमेवेत्यर्थः ।

ननु स्वर्गादिषु भोगेष्वनुकूलेषु जाग्रत्सु कथमेतस्य परमानन्दत्वमित्यत्राह—**एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति** । ब्रह्मानुभवितुः अन्ये स्वर्गादिवैषयिकसुखानुभवितारः सर्वेऽपि एतदानन्दसहस्रांशानुभवितार इत्यर्थः ।

तस्य परमानन्दत्वमेव मनुष्यानन्दादितारतम्यनिरूपणेन प्रपञ्चयति—**स यो मनुष्याणां परम आनन्दः । राद्धः** —'राध-साध-संसिद्धौ' इति हि धातुः। सिद्धः उपायैः सिद्धः, युवत्वादिगुणैः समृद्धः, अन्येषाञ्च मनुष्याणामधिपतिः, सर्वमानुषभोगैः निरतिशयं सम्पन्नश्च कश्चिद्भवति यदि, सः उक्तलक्षण आनन्दः मनुष्याणां मध्ये श्रेष्ठ आनन्द इत्यर्थः। अत्र समृद्धत्वादिगुणानां अनुकूलतया वेदनीयत्वादानन्दत्वमस्तीति द्रष्टव्यम् ।

शतगुणिता मनुष्याणां पूर्वोक्ताः परमानन्दाः, श्राद्धादिकर्मभिः पितॄंस्तोषयित्वा जितपितृलोका ये पितरः तेषामेक आनन्दो भवतीत्यर्थः। एवमग्रेऽपि ।

शतगुणिताः कर्मदेवानन्दाः आजानदेवानन्द एको भवति। तथा उक्तगुण-विशिष्टमुक्तानन्दोऽप्येको भवतीत्यर्थः। यद्यपि मुक्तानन्द-आजानदेवानन्दयोः मेरुसर्षपवत् तारतम्यमस्ति तथाप्यन्यूनत्वे तात्पर्यं द्रष्टव्यम् ।

अत्र प्रजापतिशब्दः चतुर्मुखपरः, तैत्तिरीयके समानप्रकरणे, 'प्रजापतेरानन्दः' इत्येकवचनान्तप्रजापतिशब्दश्रवणात् दक्षादिप्रजापतिपरत्वे बहुवचनान्ततापसङ्गेन तत्रत्यप्रजापतिशब्दस्य चतुर्मुखपरतया तदैकार्थ्येनात्रत्यप्रजापतिशब्दस्यापि तत्परत्वात् । ततः चतुर्मुखानन्दः शतगुणितो ब्रह्मलोकलक्षण आनन्दो भवति; तथा मुक्तानन्दोऽपि भवतीत्यर्थः। अत्र चतुर्मुखानन्दापेक्षया आधिक्यमात्रे तात्पर्यमवगम्यते; ब्रह्मानन्दाऽ-परिच्छिन्नत्वस्य श्रुतिसिद्धत्वात् ।

यद्वा,

'रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते ।
अण्डानां तु सहस्राणां सहस्राण्ययुतानि च' ॥
ईदृशानां तथा तत्र कोटिकोटिशतानि च ।
'गङ्गायां सिकता धारा यथा वर्षति वासवे ।
शक्या गणयितुं लोके न व्यतीताः पितामहाः' ॥

इत्यादिभिः ब्रह्माण्डानां तत्रत्यचतुर्मुखानाञ्चासंख्येयत्वावगमात् नियाम्यान्नियन्तुः शतगुणितानन्दत्वे कथिते चतुर्मुखेभ्योऽप्यसंख्याकेभ्यः शतगुणानन्दतयावगतस्य भगवतोऽपरिच्छिन्नानन्दत्वमर्थसिद्धं द्रष्टव्यम् । आनन्दमयाधिकरणादावेवमेव व्यासार्यैर्वर्णितम् ॥
(रं. भा.)

अत एवोक्तं भगवद्यामुनमुनिभिः स्तोत्ररत्ने—(19)

उपर्युपर्यब्जभुवोऽपि पूरुषान्
प्रकल्प्य ते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया
सदा स्थिता नोद्यमतोऽतिशेरते ॥ इति ॥

'उपर्यध्यधसः सामीप्ये' (पा. सू. 8–1–7) इत्यनेन द्वित्वे,

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' ॥

इति वार्तिकेन तद्योगे 'अब्जभुव' इति द्वितीया । अब्जभुवः पूरुषानिति प्रक्लृप्तिकर्मत्वेन सामानाधिकरण्यं वा । अब्जभूशब्देन 'पृष्टः प्रोवाच भगवान् अब्जयोनिः पितामहः' इत्यादिप्रसिद्धमौत्पत्तिकवैभवं सूच्यते । एतेनानन्दवल्यां प्रजापतिशब्द विवक्षितं व्याख्यातम् ।

'अपिशब्दो'ऽसम्भावितक्लृप्तिद्योतकः । हिरण्यगर्भं सार्वभौममनुष्यस्थाने निवेश्य, तत्प्रभृतीन् चतुर्मुखपर्यन्तान् अविद्यमानानपि पुरुषान् पूर्वपूर्वापेक्षया प्रकर्षेण कल्पयित्वेत्यर्थः । 'ते ये शतम्' इत्यनुक्रमात् प्रत्यक्षश्रुतिपठितानुक्रमेण अविद्यमानासंख्यातपाठपर्यायाभ्यूहं कृत्वेति भावः । 'गिरः' इत्यनेन यथावदर्थाभिधानसामर्थ्यं सूच्यते । 'ते ये शतम्' इति समभिव्याहारात् वेदगिर इति विशेषः सिध्यति ।

यद्यपि आनन्दवल्यां 'सैषानन्दस्य मीमांसा' इत्यारभ्य, 'आनन्दाख्य एक एव गुणः परिच्छेत्तुमशक्यः' इत्युक्तम्, तथापि 'युवा स्यात्' इत्यादिना

गुणविभूतिप्रकर्षनिबन्धनस्यानन्दप्रकर्षस्य उपक्रान्ततया परस्मिन्नपि ब्रह्मणि अनन्तगुण-विभूतिनिबन्धनस्य तस्य विवक्षितत्वात्. तन्नान्तरीयकतया सर्वगुणानां निरवधिकत्वं सिध्यति इत्यभिप्रायेणाह—**त्वदेकैकगुणावधीप्सयेति** । अत्र गुणगुणिभेदव्यपदेशात् भगवत्स्वरूपेण भगवद्गुणानामभेदं वदन्तः प्रत्युक्ताः । सामानाधिकरण्यं तु धर्मधर्मि-भावादेवोपपद्यते । अन्यथा तन्मतेऽपि स्वयं निराचिकीर्षितनिर्गुणवादपरिशेषः स्यात् ।

'अपिशब्दः' सदा स्थिता इत्यत्र वा अन्वेति । सर्वदोद्युक्ता अपि इत्यर्थः । यद्वा सदा स्थिता गिर इति नित्यतया वक्तृदोषोज्झितत्वं व्यज्यते । तदा **प्रकल्प्यापि नोद्यमतोऽतिशेरते** इत्यन्वयः । पुनः पुनः उपक्रमावस्थैव परिशिष्यत इति भावः । अत्र 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्' इत्यसम्भावितकल्पनयैवोपक्रमः । अतः समानन्यायतया तादृशकल्पनाप्रवाहेऽपि श्रुतेः तात्पर्यमुन्नीतम् ।

पूर्वं नारायणशब्देन सम्बोधित एवानन्दवल्लीस्थब्रह्मशब्दार्थतयाऽत्र त्वच्छब्देन निर्दिश्यते । 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' इति पुरुषवर्तिनः सर्वान्तर्यामिणः सवितृमण्डलमध्यवर्तिपुण्डरीकाक्षपुरुषेण ऐक्योपदेशश्चात्र विज्ञान-मयादप्यर्थान्तरमानन्दमयं विश्वात्मानं नारायणमेव व्यनक्ति । (स्तो.भा.)

अतः ब्रह्मानन्दस्यैवापरिच्छिन्नत्वं प्रतिपिपादयिषितमिति तस्य अकामहतमुक्त-स्यापि अतिदेशात् आनन्दांशे एव परमसाम्यं प्रतिबोधयति ; न तु जगत्कारणत्वाद्य-साधारणधर्मांशे । अत्रैव सूत्रितं 'भोगमात्रसाम्यलिङ्गाच्च' इति ।

ब्रह्मानन्दपरिचयार्थमेव मनुष्यानन्दादीनामपि विचारः प्रस्तुतः । केवल-परिचयार्थमेवेदम् । नो चेत् ब्रह्मानन्दस्य परिमितत्वप्रसङ्गः । अत एव 'यतो वाचो निवर्तन्ते' इति चोपसंहृतम् ।

तदेतद्भाषितम्—शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वम् अन्यच्चानेकं प्रतिपाद्य, वाङ्मनसयोः ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्म इत्युच्यत इति भ्रान्त-जल्पितम् । 'यतो वाचो निवर्तन्ते' इति यच्छब्दनिर्दिष्टमर्थम् 'आनन्दं ब्रह्मणो विद्वान्'

इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य, तदेव वाङ्मनसागोचरं विद्वान् इति तद्वेदनमभिदधत् वाक्यं जरद्गवादिवाक्यवत् अनर्थकं वाच्यानन्तर्गतं च स्यात् । अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य, तस्येयत्ताया अभावादेव वाङ्मनसयोः ततो निवृत्तिः, ' यतो वाचो निवर्तन्ते ' इत्युच्यते । एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेतीत्युच्यते । यदि निर्विशेषत्वं विवक्षितं चेत्—गुणापकर्षो वाच्यः । गुणप्रकर्षम् उक्त्वा वाङ्मनस-निवृत्त्यभिधानम् आनन्त्यविवक्षाकृतमित्यभिप्रायः ॥

आनन्दयाति—आनन्दप्रदः (परमात्मा) ।

[' आनन्दं ददाति ' इत्यर्थे प्रातिपदिकात् ' धात्वर्थे बहुलम् इष्टवच्च ' इति गणसूत्रेण णिच्प्रत्ययः । ततः तिङ्, छान्दसो दीर्घः ।]

को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात् । एव ह्येवाऽनन्दयाति । (तै.आ. 31)

एष एव जीवान् आनन्दयति इति जीवानाम् आनन्दहेतुरयं व्यपदिश्यते । अतश्च आनन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते ।

(श्री.भा. 1-1-15)

अन्येषामानन्दो यदधीनः तस्यानन्दोऽनवधिक इत्यर्थसिद्धम् । यथा अन्येषां विद्यां धनं वा ददतः पुरुषस्य ज्ञानाधिकत्वं धनाधिकत्वं चार्थसिद्धम् । ' स एको ब्रह्मण आनन्दः ', ' यतो वाचो निवर्तन्ते ', ' रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति ' इत्यादिश्रुत्यन्तरेषु तत् स्पष्टमभिहितं चेत्यभिप्रायः । ' अन्यात् प्राण्यात् इति भोगापवर्गसुखहेतुत्वमुक्तम् ॥ (श्रु.प्र.)

आनन्दरूपस्यानन्दाश्रयत्वसमर्थनम्—उभयोरविरोधोपपादनम् ।

' आनन्दो ब्रह्म ' इत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तम्; तत् ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वदतीति परिहृतम् । ज्ञानमेव ह्यनुकूलमानन्द

इत्युच्यते 'विज्ञानमानन्दं ब्रह्म' इति । अनन्दरूपमेव विज्ञानं ब्रह्मेत्यर्थः । अत एव भवतामेकरसता ।

अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम् । तद्वदेव 'स एको ब्रह्मण आनन्दः', 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म ; अपि त्वानन्दि ; ज्ञातृत्वमेव ह्यानन्दित्वम् । (श्री.भा. I-201, 202)

आर्थगुणनिषेधान्तरं परिह्रियते—**आनन्द** इत्यादिना । पूर्वोक्तं परिहारमत्रातिदिशति—**तत् ज्ञानाश्रयस्येति** । कथं तेनेदं परिहृतमित्यत्राह—**ज्ञानमेव** हीति । तर्हि श्रुतिषु विज्ञानानन्दशब्दयोः समभिव्याहारो नोपपद्यत इत्यत्राह—**विज्ञानमिति** । स्वयंप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदादुपपद्यत इति भावः । तथैव भवद्भिरभ्युपगतमित्याह—**अत एवेति** । **अत एव**—ज्ञानानन्दशब्दयोरेकविषयत्वादेवेत्यर्थः । आनन्दस्य आनन्दाश्रयत्वानभ्युपगमः किं श्रुत्या, उत व्याप्त्या ? व्याप्त्या चेत्, कस्यचिद्धर्मः स्यात् । श्रुतिबलात् स्वतन्त्रत्वमिति चेत्, तत एवानन्दाश्रयत्वमभ्युपगम्यताम् । धर्मभूतानन्दस्य हि आनन्दाश्रयत्वाभावो दृष्टः । अतो व्याप्तिविरोधश्च नास्ति । अतः स्वतन्त्रत्ववत्, गुणाश्रयत्वमपि श्रुतिसिद्धत्वात् स्वीकार्यमिति भावः ॥

(श्रु. प्र.)

**आनन्दवल्ली-सद्विद्यावाक्ययोरैकरस्यम्**—उभयोः सविशेषपरत्वेन एकार्थता ।

परे तु—सद्विद्यावाक्यं निर्विशेषपरमेव इत्यभ्युपगच्छन्ति, 'तत्त्वमसि' इत्यस्य नवकृत्वः स्वरूपैक्यपरतया अभ्यासात् । एतदनुरोधेनैव आनन्दवल्ल्यपि निर्विशेषपरा । अत एव 'आनन्दमयोऽभ्यासात्' इति सूत्रभाष्ये प्रथमतः आनन्दमयस्य (आनन्दप्रचुरस्य) परमात्मपरतया व्याख्याय, उपसंहारे पुच्छब्रह्मवाद एव परमार्थतः प्रतिष्ठापितः । अतः आनन्दवल्ली निर्विशेषपरैवेत्युभयोः ऐकरस्यमिति प्राहुः—

सिद्धान्ते तु आनन्दमयविद्या सविशेषपरैव । अत्र जगतः परमात्मनश्च शरीरशरीरिभावः स्पष्टं श्रूयते ।

स एव शरीर-शरीरिभावः बृहदारण्यके द्वाविंशतिवारमभ्यस्तः। अतः एतदनुरोधेनैव 'तत्त्वमसि' इत्यत्रापि शरीर-शरीरिभावनिबन्धनमेव सामानाधिकरण्यं स्वीकरणीयम्। तत्रैव 'ऐतदात्म्यमिदं सर्वम्' इत्युपक्रमे सर्वस्यापि जगतः सदात्मकत्वं प्रतिपादितम्। ब्रह्मणः आत्मत्वे अन्यस्य चेतनाचेतनात्मकजगतः तत्प्रतिसम्बन्धि-शरीरत्वम् अर्थादेव सिध्यति। तदेतत्सर्वं हृदि निधायैव भाषितं भाष्यकारैः—

'यदुक्तम्—'तस्यैष एव शारीर आत्मा' इति आनन्दमयस्य शरीरत्वश्रवणा जीवादन्यत्वं न सम्भवतीति। तदयुक्तम्; अस्मिन् प्रकरणे सर्वत्र 'तस्यैष एव शारीर आत्मा, यः पूर्वस्य' इति परमात्मन एव शारीरात्मत्वाभिधानात्। कथम्? 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीव-व्यतिरेकस्य परस्य ब्रह्मण आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तान तच्छरीरत्वमवगम्यते।' 'यस्य पृथिवी शरीरम्, यस्यापश्शरीरम्' यस्य तेजश्शरीरम्, यस्य वायुश्शरीरम्, यस्याकाशश्शरीरम्, यस्याक्षरं शरीरम्, यस्य मृत्युश्शरीरम्, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते।

अतः 'तस्माद्वा एतस्मादात्मन' इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः। प्राणमयं प्रकृत्याह—'तस्यैष एव शारीर आत्मा, यः पूर्वस्य' इति। पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा, स एव तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः। एवं मनोमय-विज्ञानमययोर्द्रष्टव्यम्। आनन्दमये तु 'एष एवेति निर्देशः तस्यानन्यात्मत्वं दर्शयितुम्। तत्कथम्? विज्ञानमयस्यापि पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगतः।

एवं सति विज्ञानमयस्य यश्शारीर आत्मा स एव आनन्दमयस्यापि। शारीर आत्मेत्युक्ते आनन्दमयस्य अभ्यासावगतपरमात्मभावस्य परमात्मनः स्वयमेवात्मेत्य-

वगम्यते । एवञ्च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीर आत्मा । अत एवेदं परंब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैः अभिधीयते । अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमयः'–इति ॥ (1-1-6)

**आनन्दादयः प्रधानस्यः**—( ब्र.सू.3-3-11)

(आनन्दाद्यधिकरणे आदिमं सूत्रम् )

आनन्दादयः गुणाः सर्वासु विद्यासूपसंहर्तव्याः, प्रधानस्य गुणिनो ब्रह्मणः सर्वासु विद्यास्वभेदात् ।

सर्वासु परविद्यासु ब्रह्मैकमेवानुसन्धेयं चेत् , यैः गुणैर्विना ब्रह्मस्वरूपानुसन्धानमशक्यं, ते च ज्ञानानन्दादयोऽनुसन्धेया इत्यर्थः ।

सर्वाभेदादित्यतो अभेदादित्यनुवर्तते । समस्तस्यापि वुध्या तावतोंशस्य निष्कृष्य परामर्शात् । यथा—' अथ शब्दानुशासनम् ' इत्यत ' केषां शब्दानाम् ' इत्युत्तरत्र समासघटकशब्दरूपशब्दवत् इति भावः ।

आनन्दादयः प्रधानस्येत्यत्र — आनन्दत्व-सत्यत्व-ज्ञानत्व-अनन्तत्वरूपगुणाः किं सर्वासु ब्रह्मविद्यासु उपसंहार्याः ? किं वा यासु श्रुतास्तास्वेवेति संशये क्वचिच्छ्रुतानां प्रमाणमन्तरेणान्यत्र यत्र क्वापि सर्वत्र वोपसंहारे तार्तीयन्यायमात्रोच्छेदप्रसङ्गात्, आनन्दत्वादीनां विद्याविशेषसन्निहितानां सर्वविद्यार्थत्वग्राहकश्रुत्यादेरभावात् , सन्निधेश्च तेषामानन्दवल्यादिविद्याविशेषनियतत्वात् , विद्यानां प्रकृतिविकृतिभावाभावेनातिदेशाख्यप्रमाणाभावाच्च सन्निहितविद्यामात्रशेषतया तत्रैवोपसंहारः , न सर्वत्र इति प्राप्ते—

प्रधानस्य गुणिनो ब्रह्मणः सर्वविद्यानुयायित्वेन गुणानां प्रधानानुवर्तनशीलतया आनन्दत्वादिगुणानां सर्वविद्यानुयायित्वं सिध्यति ।

न चैवं प्रियशिरस्त्वादीनामपि तथात्वं स्यादिति वाच्यम् , तेषामानन्दत्वादिवत स्वरूपनिष्ठत्वाभावात् तेषां स्वरूपनिष्ठत्वे मूलमध्याग्रभेदभिन्नपरिमाणरूपस्थूलत्वादेः अस्थूलत्वादिश्रुतिविरुद्धस्य ब्रह्मणि प्रसङ्गात् ।

न चैवमपि वात्सल्यादिगुणानामपि सर्वविद्यानुयायित्वं स्यात् गुणप्रधानन्यायतौल्यादिति वाच्यम् ; आनन्दादिवत् वात्सल्यादीनामपि स्वरूपापृथक्सिद्धत्वाविशेषेऽपि तद्वत्स्वरूपनिरूपकत्वाभावेन सर्वविद्यान्वयाप्रसक्तेः । स्वरूपनिरूपकत्वंनाम अर्थसमानत्वम् अर्थप्रतीतिकाले प्रतीयमानत्वनियमरूपम् ।

नचानन्दत्वादेरप्युक्तं स्वरूपनिरूपकत्वमसम्भवि ; सत्यादिप्रत्येकप्रतीतौ भानाभावादिति वाच्यम् ; तथापि उपास्यस्वरूपप्रतीत्यनुबन्धित्वरूपं तन्निरूपकत्वमस्त्येव। ‘ कारणं तु ध्येयः ’ इति तुशब्दाभिप्रेतकारणत्वशङ्कितदोषव्यावृत्तं कारणीभूतब्रह्मस्वरूपमुपास्यमिति प्रतीयते । कारणत्वप्रसञ्जितदोषाश्च परिणामित्वरूपानृतत्व परप्रकाशैकस्वभावत्वरूप जडत्व-नियतदेशकालसम्बन्धित्वरूपपरिच्छिन्नत्व-सापेक्षत्वरूपापरिपूर्णत्वात्मकास्तद्व्यावृत्तिरूपाः तदभावात्मकास्सत्यत्वादयः इति ‘अक्षरधियाम्’ इत्यत्र उपपादयिष्यते। सत्यत्वादीनाञ्च तादृशव्यावृत्तिरूपतया तद्विशिष्टोपास्यस्वरूपप्रतीतिकाले प्रतीति नियमोऽस्ति। प्रत्येकं तत्तद्विशिष्टप्रतीतिकाले प्रतीयमानत्वाभावे तादृशयत्किञ्चिद्धर्मविशिष्टस्वरूपाविषयकस्वरूपविषयकप्रतीत्यविषयत्वलक्षणप्रतीत्यनुबन्धित्वरूपोपास्यनिरूपकत्वं सत्यत्वादीनाम् ; न तु वात्सल्यादीनामित्यक्षरधियामित्यत्र निरूपयिष्यते । तस्मादानन्दादयः सर्वविद्यानुयायिन इति सिद्धान्तितम् ।

आनन्दादिगुणास्त्वत्र स्वरूपस्य निरूपकाः ।
सर्वविद्यास्वनुगताः प्रधानस्याविभेदतः ॥ (ब्र प मा)

**आनन्दादीनां भेदः**—आनन्द प्रिय मोद-प्रमोदशब्दानां प्रवृत्तिनिमित्तभेदः ।

‘ न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति ; अथाऽऽनन्दान् मुदः प्रमुदः सृजते.... स हि कर्ता ’ । (बृ.उ. 6-3-10)

‘ तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा ’ । (तै.आ. 29)

इष्टवस्तुदर्शनजन्यं सुखं प्रियम् । तल्लाभजन्यं सुखं मोदः । लब्धस्योपयोगजन्यं सुखं प्रमोदः । सुखातिशयः आनन्दः । (रं.भा.)

विभूतिजन्या प्रीतिः । भोग्यवस्तुविनियोगजाप्रीतिः—सुखातिशयः ॥ (वि.को.)

**आनन्दाद्यधिकरणम्—(3–3–4)**

1. आनन्दादयः प्रधानस्य । 2. प्रीयशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे । 3. इतरे त्वर्थसामान्यात् । 4. आध्यानाय प्रयोजनाभावात् । 5 आत्मशब्दाच्च । 6. आत्मगृहीतिरितरवदुत्तरात् । 7. अन्वयादिति चेत्स्यादवधारणात् । इति सप्तसूत्रात्मकम् आनन्दादिपदेनोपक्रान्तमिदमधिकरणम् । सत्यत्वादि पञ्चसु आनन्दत्वस्यैव प्राधान्यात् तद्विशिष्टवाचिपदमेवादौन्यवेशि सूत्रकारैः ।

अस्मिन् आनन्दाद्यधिकरणे अन्यप्रकरणे श्रुतानां अन्यत्र उपसंहारे प्रमाणाभावात् आनन्दादयः न सर्वविद्यानुयायिनः इत्याशङ्क्य ; सर्वविद्यासु गुणिनो ब्रह्मणः एकत्वात् गुणानांच गुण्यपृथग्भावात्, आनन्दादीनां स्वरूपनिरूपकत्वाच्च आनन्दादयः सर्वविद्यानुयायिन इत्युक्तम् ॥

अप्रकरणपठितत्वात्
आनन्दाद्या गुणा न संग्राह्याः ।
सर्वास्विति तु न शङ्क्यः
तैस्तु विना तन्निरूपणाशक्तेः ॥ (न्या.क.सं. 3–3–4)

**आनन्दानन्दमयशब्दयोः पर्यायता—**

आनन्दमयः परं ब्रह्मेति निश्चिते सति, 'यदेष आकाश आनन्दः' 'विज्ञानमानन्दं ब्रह्म' इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते, यथा विज्ञानशब्देन विज्ञानमयः । अत एव 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशः । अत एव च 'आनन्दमयमात्मानमुपसंक्रामति' इति फलनिर्देशश्च । उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्नमयादीनाम् 'अन्नं ब्रह्मेति व्यजानात्', 'प्राणो ब्रह्मेति व्यजानात्' 'मनो ब्रह्मेति व्यजानात्', 'विज्ञानं ब्रह्मेति व्यजानात्' इति प्रतिपादनात् 'आनन्दो ब्रह्म' इत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते । तत एव च तत्रापि 'आनन्दमयमात्मानमुपसंक्रम्य' इत्युपसंहृतम् । (श्री.भा. I–भा-2–235)

कथमानन्दमये जीवस्यानन्दयोगं वदति शास्त्रम्, आनन्दे ह्यानन्दयोगं वदतीति शङ्कायामानन्दानन्दमयशब्दयोः एकविषयत्वमाह—**एवमिति**। कथमानन्दस्यानन्दमय-वाचित्वमित्यपेक्षायां विज्ञानशब्दनिर्वाहे पूर्वोक्तन्यायमिहातिदिशति—**यथा विज्ञानेति**। स्वरूपस्यानुकूलवेदनीयत्वादानन्दशब्दो धर्मिपरः; धर्मपरत्वेऽप्यपर्यवसानाद्धर्मिपर इति भावः। व्यतिरेकनिर्देशे हेतुमाह—**अत एवेति**। आनन्दानन्दमयशब्दयोरेक-विषयत्वेन इत्यर्थः। पूर्वानुवाके एतदनुवाकोर्ध्वभागे च मयडन्तपदनिर्दिष्टानामत्र मयड्रहितपदनिर्देशप्रकरणे आनन्दशब्देन प्रतिपादनात् आनन्दमय एवानन्दशब्दवाच्यः इत्यर्थः। आनन्दशब्दवाच्यस्य परमात्मत्वं हि पराङ्गीकृतम्। (श्रु.प्र.)

'आनन्दं ब्रह्मणो विद्वान्' इति पूर्वमभ्यस्तस्य आनन्दस्य ब्रह्मसम्बन्धित्व-निर्देशात्, ब्रह्मणश्च 'आनन्दो ब्रह्म' इत्यानन्दशब्दवाच्यत्वात्, 'आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दशब्दवाच्यस्थाने 'एतमानन्दमयमात्मानमुपसंक्रम्य' इत्यानन्दमय-शब्दनिर्देशेन आनन्दानन्दमयशब्दयोः पर्यायत्वाच्च आनन्दमयस्य परमात्मभावोऽवगत इत्यभिप्रायः॥ (श्रु.प्र. I-2-225)

**आनन्दी**—निरुपाधिकसुखविशिष्टः मुक्तात्मा।

(अत्र मतुबर्थे इनि प्रत्ययः)

'रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति'।

रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीय आनन्दीभवतीत्युच्यमाने यल्लाभाद्यआनन्दी भवति, स स एव इति अनुन्मत्तः को ब्रवीति इत्यर्थः।

(श्री. भा. 1-1-20)

'आनन्दो ब्रह्म' इत्युच्यते। विषयायत्तत्वात् ज्ञानस्य सुखरूपतया ब्रह्मैव सुखम्। तदिदमाह—'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति' इति ब्रह्मैव सुखमिति ब्रह्म लब्ध्वा सुखीभवति इत्यर्थः। परमपुरुषः स्वेनैव स्वयमनवधिकातिशय-सुखरूपस्सन् परस्यापि सुखं भवति; सुखरूपत्वाविशेषात्। ब्रह्म यस्य ज्ञानविषयो भवति स सुखी भवति इत्यर्थः। (वे. सं. 401-403)

ननु आनन्दशब्दस्य सुखपर्यायत्वात् अनुकूलविषयज्ञानस्य सुखशब्दवाच्यतोपपादनाच्च ; 'आनन्दो ब्रह्म' इति ब्रह्मणः सुखत्ववचनमयुक्तमित्यत्राह—**विषय** इति ।

अयमर्थः —'आत्मानुकूलं सुखम्' इत्यानुकूल्यं हि सुखशब्दप्रवृत्तिनिमित्तम् । तच्च ज्ञानस्य विषयानुकूल्यप्रयुक्तमिति विषयस्य स्वतोऽनुकूलस्य सुखशब्दवाच्यत्वं युक्तमिति । ज्ञानानुकूलत्वस्य विषयानुकूल्यप्रयुक्तत्वे श्रुतिमाह—**तदिद**मिति । अस्यां श्रुतौ ब्रह्मणः सुखरूपत्वाप्रतीतेस्तां व्याचष्टे**ब्रह्मैव** इति । तच्छब्दः कारणतया प्रकृतब्रह्मपरामर्शीत्यर्थः ।

अत्र सुखवाचिशब्दः कः? यो यस्य सुखं भवति तत्र स्वस्यापि सुखं भवति । एवं परस्य भोग्यभूतं ब्रह्म न स्वभोग्यमित्याह—**परमपुरुष** इति । **स्वयम्**—स्वसा इत्यर्थः ।

सुखरूपत्वाविशेषात् इति स्वपरविभागरहितम्, 'आनन्दो ब्रह्म' इत्यविशेषेणानन्दत्वकथनादित्यर्थः ।

तर्हि 'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति परं प्रत्यानन्दत्वश्रवणं कथमित्यत्राह—**ब्रह्मयस्येति** । ब्रह्म परस्य ज्ञानविषयश्चेत् तस्य सुखं भवति, स्वस्य ज्ञानविषयत्वे स्वस्य सुखं भवति ।

अतः 'यस्य ज्ञानविषयभूतं ब्रह्म अविशेषेण तस्य तत् सुखमिति जीवस्यापि सुखरूपं भवतीति तस्याः श्रुतेरर्थः' इत्यर्थः । (ता. दी.)

भेदस्त्रेधा मतीनां ह्युपचितनियमितैरानुकूल्यादिधर्मै-
स्तस्यैवात्यन्तहानेर्निरुपधिकसुखस्तादृशो धीविकासः ।
निस्सीमब्रह्मतत्त्वानुभवभवमहाह्लाददुग्धार्णवेऽस्मिन्
निश्शेषैश्वर्यजीवानुभवरसभरो बिन्दुभावोपलभ्यः ॥ (त. म. 434)

औपाधिकानां दुःखमिश्राणामनुकूलविज्ञानानामत्यन्तहानेर्निरुपाधिकसुखरूपो मुक्त्यवस्थायां यो बुद्धिविकासः तस्मिंस्तादृशानन्दरूपावस्थाविशेषे चतुर्मुखैश्वर्यपर्यन्त-

स्यैश्वर्यस्य जीवानुभवस्य चात्यन्ताल्पीयस्त्वमेवेति दुग्धार्णवतद्बिन्दुदृष्टान्तेनोपवर्णयति—**भेद** इति । (स. सि.)

मुक्तेः पूर्वं कर्मनिबन्धनतया सुखदुःखोदासीनरूपावस्थात्रयमवर्तत । तदानीं सुखमपि दुःखमिश्रमेव । मुक्तौ तु उपाधेरात्यन्तिकनिवृत्त्या मुक्तस्य धर्मभूतं ज्ञानं विकसितं सत् सर्वं वस्तु अनुकूलतयैवानुभवति इति भावः अनुकूलज्ञानविशेषस्यैव सिद्धान्ते आनन्दरूपत्वात् ॥

**आनर्थक्यमिति चेन्न तदपेक्षत्वात्** — (ब्र सू. 3-1-10) (कृतात्ययाधिकरणे तृतीयं सूत्रम्)

वेदविहितकर्मणामेव फलसाधनत्वश्रवणात्, स्मृतिविहितआचारस्य अकिञ्चित्करत्वेन **आनर्थक्यं** प्रसज्यत **इति चेन्न, तदपेक्षत्वात्**—आचारापेक्षत्वात् सर्वस्य श्रौतकर्मणः ।

आचारवत एव पुण्यकर्मस्वधिकारः । 'सन्ध्याहीनोऽशुचिः नित्यमनर्हः सर्वकर्मसु' 'आचारहीनं न पुनन्ति वेदाः' इत्यादिना ॥

आचारस्यत्वकर्मत्वे वैयर्थ्यमिति चेन्नहि ।
आचाराणामपेक्ष्यत्वात् कर्मणेति तु मन्यते ॥ (ब्र.प.म.)

**आनशानाः**—अनुभूतवन्तः ।

[छन्दसिलिटि कानजादेशः, द्वित्वे अभ्यासात्परस्यनुडागमश्च ।]

'यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त'। (तै.ना. 17)

**यत्र** परमात्मनि **अमृतम्**—अमृतवत् भोग्यं कल्याणगुणजातम् **आनशानाः**—अशितवन्तः । अनुभूतवन्त इत्यर्थः । कानजन्तोऽयं शब्दः । **तृतीये धाम्नि** दहराकाशादित्यमण्डलापेक्षया **तृतीये** परमपदे **अभ्यैरयन्त** 'एतत्साम गायन्नास्ते' इत्युक्तरीत्या पराभिमुखतया गानं कुर्वन्तीत्यर्थः । (रं.भा.)

**आनुकूल्यसङ्कल्पः**—प्रपत्त्यङ्गेषु अन्यतमः ।

'आनुकूल्यस्यसंकल्पः प्रातिकूल्यस्यवर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ।
आत्मनिक्षेपकार्पण्येषड्विधाशरणागतिः' ॥ इति ह्युच्यते ।

'शेषभूतस्य शेष्यभिमतानुवर्तनं करिष्यामि' इति ज्ञानविशेषः तात्कालिकः, प्रपत्तेः अङ्गंभवति । अयं च सङ्कल्पः ईश्वरपारार्थ्यज्ञाननिबन्धनः । (र.त्र.सा. 532)

निक्षेपरक्षायां —

'आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता ।
अन्तस्थितोऽहं सर्वेषां भावानामिति निश्चयात् ॥
मयीव सर्वभूतेषु ह्यानुकूल्यं समाचरेत्' इत्युक्तेः ।

**आनुपूर्वी**—उत्तरोत्तरवर्णनिष्ठपूर्वपूर्ववर्णानन्तर्यम् । पदार्थगतक्रमविशेषश्च ।

['पूर्वंपूर्वं अनुसरति' इति वीप्सायां 'अव्ययं विभक्ति'....इत्यनेन अव्ययीभाव समासे 'अनुपूर्वं' ततः भावार्थे 'वर्णदृढादिभ्यः ष्यञ्चे'त्यनेन ष्यञि, आनुपूर्व्यम् इत्यतः स्त्रियां ङीषि, 'हलस्तद्धितस्येति' यलोपे—आनुपूर्वीतिरूपम् ]

स भगवान् पुरुषोत्तमः प्रळयावसानसमये पूर्वसंस्थानं जगत् स्मरन्, 'बहुस्याम्' इति संकल्प्य, भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य, महदादिब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथा पूर्वं सृष्ट्वा, वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितान् आविष्कृत्य हिरण्य-गर्भायोपदिश्य, पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्तरात्मतया अवतस्थे । एतदेवच वेदस्यापौरुषेयत्वं नित्यत्वञ्च, यत्—पूर्वपूर्वोच्चारणक्रमजनित संस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यमाणत्वम् । तदस्मासु सर्वेश्वरेपि समानम् इयांस्तुविशेषः संस्कारानपेक्षमेव स्वयमेवानुसंधत्ते पुरुषोत्तमः।(श्री.भा.1-3-29)

[अनेन शब्दगता-अर्थगताचानुपूर्वी प्रादर्शि ।]

स्वतन्त्रस्येश्वरस्य क्रमान्तरापरिकल्पनेन पूर्वक्रमेणैवोच्चारणे कोनियामक इत्यत्राह **स्वयमेवेति** वेदाख्यं शब्दराशिं पूर्वं पूर्वं क्रमविशिष्टमेवाच्चारयेयं, न तु क्रमान्तरं कल्पयेयमिति, बहुस्यामितिवत् स्वसंकल्पादेव क्रमान्तर मकल्पयन् यथा पूर्वमनुसन्धत्ते; न त्वन्यपरतन्त्रतयेत्यर्थः । (श्रु.प्र.) अयन्तु शब्दनिष्ठः क्रमविशेषः ।

लोके यथा विष्णुपदे वकारोत्तर-इकारोत्तर-षकारोत्तर-णकारोत्तर-उकारोत्तरविसर्गत्वम् । इयं च शब्दानुपूर्वी वेदेपि समानैव ।

**अर्थनिष्ठातु**—' महदादिब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा पूर्ववदेव देवद्याकार जगत्सर्गे तं नियुञ्ज्ये 'त्यनेन सृज्यमानपदार्थगतक्रमविशेषएव-इति च बोध्यते ।

**आनुभाविकीवृत्तिः**—पदार्थ स्मरणानन्तरकालिकोऽन्वितानुभव हेतुः ।

[ अनुभवः प्रयोजनमस्या इत्यर्थे ' प्रयोजनम् ' इति सूत्रेण ठञ् उभयपदादिवृद्धिश्च ]

स्मारकी आनुभाविकी चेति वृत्तिर्द्विधा । तेनतेनपदेन प्रथमं तत्तदर्थविषयकं स्मारकवृत्त्या स्मरणं जायते । आसत्तियोग्यतातात्पर्यादिन्यायपरामर्शेन तैरेव पदैरानुभाविक्या वृत्त्या अन्वितानुभवः जायते । स एव शाब्दबोधः ।

तस्मादाकांक्षितासन्नयोग्यार्थान्तरसंगते ।
स्वार्थे पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः ॥
पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥

इति कथयन्ति ॥ (द.उ. 211)

**आनुमानिकमप्येकेषामिति चेन्न; शरीररूपकविन्यस्तगृहीतेर्दर्शयति च**—(ब्र.सू. 1-4-1)

(आनुमानिकाधिकरणे आदिमं सूत्रम् ।)

[ अनुमानेन सिद्धम् इत्यर्थे शैषिकः काश्यादिगणपठितत्वाच्च ठञ्, तस्येकादेशः ।]

एकेषां कठशाखायामानुमानिकम्—अनुमानसिद्धं प्रधानं जगत्कारणतया ' महतः परमव्यक्तम् ' इति आम्नायते इति चेन्न, अव्यक्तशब्देन शरीराख्यरूपकविन्यस्तस्य गृहीतेः—पूर्वत्रात्मादिषु रथिरथादिरूपकविन्यस्तेषु रथत्वेन रूपितस्य शरीरस्य अत्र ग्रहणात् , दर्शयति चैनं वाक्यशेषः ।

' इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥

महत: परमव्यक्तमव्यक्तात्पुरुष: पर: ।

पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति:' ॥

इति श्रूयते । अत्राव्यक्तशब्देन सांख्याभिमतं प्रधानमुच्यते, तत्प्रक्रियाप्रत्यभिज्ञानात् ।

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तका: ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिका: ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वरा: ।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तका: ।
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते ॥

इति सांख्याभ्युपगतेन्द्रियाद्युपासनफलभूयस्त्वाल्पत्वरूपपरावरभावस्य 'इन्द्रियेभ्य: परा-ह्यर्था:' इत्यादिना प्रतिपादनात् 'पुरुषान्न परं किञ्चित्' इति पञ्चविंशपुरुषातिरिक्ततत्त्व-निषेधाच्च । ज्ञानकर्मेन्द्रियाणां दशानामिन्द्रियशब्देन भूततन्मात्राणां दशानामर्थशब्देन, अन्त:करणस्य बुद्धिशब्देन, अहङ्कारकार्यवाचिनाहङ्कारस्य, महत्तत्त्वस्य महच्छब्देन प्रधान-स्याव्यक्तशब्देन इति चतुर्विंशतितत्त्वानां प्रतिपादनेन तत: परेण पुरुषशब्देन पञ्चविंशतितत्त्वप्रतीतेस्तद्व्यतिरिक्ततत्त्वनिषेधावगमात् । ततश्च रथिरथादिरूपकवाक्यस्य संयतासंयतेन्द्रियाणां पुरुषाणां मोक्षामोक्षप्राप्तिप्रतिपादनेनेन्द्रियादिपरत्वप्रतिपादकवाक्य-स्येन्द्रियादिचिन्तनफलभूयस्त्वाल्पत्वप्रतिपादनमुखेनपुरुषपरत्वाभिधायकत्वेन च निराकांक्ष-तया इन्द्रियादिवशीकार्यतायां परत्वानपेक्षिततया रथरूपितशरीरस्य पारिशेप्यादव्यक्तशब्देन लक्षणया ग्रहणायोगात् तन्त्रसिद्धं प्रधानमेवाव्यक्तशब्देनोच्यते ।

यद्वा— 'महत: परमव्यक्तमव्यक्तात्पुरुष: पर: ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति: ' ॥

इति तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानेन पुरुषातिरिक्ततत्त्वनिषेधे च महत:-महत्तत्त्वात् परं कारणमव्यक्तं प्रधानमिति कठानां शाखासु प्रतीयत इति पूर्व: पक्ष: ।

सिद्धान्तस्तु—नात्र तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानेनाव्यक्तशब्देन प्रधानमुच्यते । इन्द्रियादिपरत्ववाक्ये तत्कल्पितेन्द्रियादिचिन्तनफलभूयस्त्वाल्पत्वरूपपरापरभावप्रतिपाद-

-नाभ्युपगमे कारिकायामिन्द्रियोपासनफलापेक्षया भूतोपासनफलभूयस्त्वोक्त्या च अर्थशब्दोक्तभूतोपासनफलापेक्षया इन्द्रियान्तर्गतमनश्चिन्तनफलस्य भूयस्त्वोक्त्या च अन्योन्यविरोधात् । तथा सांख्यमतेऽपि इन्द्रियाणामाहङ्कारिकतया इन्द्रिय-भूत-मनसां हेतु-हेतुमद्भावाभावेन तथाविधपरापरभावप्रतिपादनाभ्युपगमेऽपि परस्पर-विरोधात् बुद्धिशब्दस्याहङ्कारवाचित्वासिद्ध्या आत्मशब्दसमानाधिकरणमहच्छब्दस्य महत्तत्त्ववाचित्वासिद्ध्या प्रत्युत प्रथमश्रुतात्मशब्दप्रसिद्ध्या महत्त्वधर्मस्यैवात्मनि प्रतीत्या पञ्चविंशतितत्त्वाप्रतीतेः पञ्चविंशतितत्त्वातिरिक्तप्रतिषेधानवगमाच्च, 'इन्द्रियेभ्यः परा ह्यर्थाः' *इत्यत्रेन्द्रियपदसमभिव्याहारात् तद्ग्राह्यविषयवाचिनोऽर्थशब्दस्य भूततन्मात्रात्मक-*दशसंख्याकवस्तुवाचित्वासम्भवेन चतुर्विंशतितत्त्वप्रतीतिगन्धाभावाच्च ।

तस्मात् 'सोऽध्वनः पारमाप्नोति' इत्युक्तमुक्त्युपायोपासनोपकरणत्वात् आत्मादीनां वशीकार्यत्वाय रथिरथादिभावेन रूपितानां वशीकार्यतायां प्राधान्याप्राधान्यप्रतिपादनाय प्रवृत्तेऽस्मिन् 'इन्द्रियेभ्य' इत्यादिवाक्ये आत्मबुद्धिमनइन्द्रियतद्विषयेषु रथ-सारथि-रज्जु-विशेष-तुरगमार्गात्मना रूपितेषु स्वस्वशब्दैरुपात्तेषु सत्सु पारिशेष्याद्रथरूपकविन्यस्त-शरीरस्यैवाव्यक्तशब्देन ग्रहणं युक्तम् । न च लक्षणादोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेः *बलीयस्त्वात्, प्रोक्षणीन्यायेनाव्यक्तशब्दस्य प्रधाने रूढिसिद्ध्यसम्भवाच्च । अव्यक्तस्यैव* शरीररूपेण परिणामात् सत्कार्यवादे कार्यकारणयोरभेदाच्च ।

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि' ॥

इति वाक्यशेषे वशीकरणप्रकारोपदेशाच्चायमेवार्थो ग्राह्यः । तथा च इन्द्रियादिशरीर-पर्यन्तानामुत्तरोत्तरवशीकार्यतायां प्राधान्यमुक्त्वा सर्वेषामेवेन्द्रियादीनां परमात्मायत्तस्वरूप-स्थितिप्रवृत्तिकतया तस्यैव पूर्वोक्तेन्द्रियाद्यपेक्षया वशीकार्यतायां प्राधान्यम् 'अव्यक्तात्पुरुषः परः' इत्युक्त्वा, तस्मिन्वशीकृते वशीकार्यान्तराभावेन 'पुरुषान्न परं किञ्चित्' इति सर्वान्तर्यामिण परमात्मनः व्यतिरिक्तं वशीकार्यतायां परं प्रधानं नास्तीति वशीकार्यतायां परमात्मातिरिक्तप्रधाननिषेध एवात्र विवक्षितः ; न तु सांख्यसम्मतानुमानिकम् । विस्तरस्तु श्रीभाष्यप्रकाशिकायां द्रष्टव्यः ।

सूत्रे 'शरीररूपकविन्यस्त गृहीतेः' इति हि श्रूयते। अत्र शरीराख्यरूपक-विन्यस्तस्य अव्यक्तशब्देन गृहीतेः इति हि भाषितम्। अनेन वक्ष्यमाण-शङ्काऽपाक्रियते।

शरीरमेव रूपकविन्यस्तम्। रूप्यतेऽनेनेति रूपकम्—दृष्टान्तः। रूपकत्वेन विन्यस्तम्; रूपितमित्यर्थः। शरीरं हि रथत्वेन रूपितम्, 'शरीरं रथमेव च' इति।

ननु रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यम्; विशेषणस्य पूर्वनिपातित्वादिति शङ्कापरिहाराय शरीराख्येत्युक्तम्। अस्मिन् वाक्ये रूपकविन्यस्तं वस्तु प्राधान्येन विवक्षितम्। अतो रूपकविन्यस्तपदं विशेष्यसमर्पकम्। कीदृशं तदित्यपेक्षायां शरीराख्यं रूपकविन्यस्तमिति शरीरशब्देन तत् विशेष्यते; यथा खण्डशब्देन गौः। अतो रूपकविन्यस्तप्राधान्याभिप्रायः शरीरशब्दपूर्वनिपात इत्यभिप्रायः। तथा च—शरीराख्यं रूपकविन्यस्तम् इत्यत्र शाकपार्थिवादित्वात् मध्यमपदलोपिसमासः॥

प्रधानमपि चैकेषां कारणं त्विति चेन्न हि।
रथरूपेण विन्यस्ततनुरव्यक्तमुच्यते॥ (ब्र.प.मा.)

## आनुमानिकाधिकरणम्—(1-4-1)

1. आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च।
2. सूक्ष्मं तु तदर्हत्वात्। 3. तदधीनत्वादर्थवत्। 4. ज्ञेयत्वावचनाच्च।
5. अदतीति चेन्न, प्राज्ञो हि प्रकरणात्। 6. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च।
7. महद्वच्च इति सूत्रसप्तकमानुमानिकपदादिममधिकरणम्।

'इन्द्रियेभ्यः परा ह्यर्थाः, अर्थेभ्यश्च परं मनः' इत्यादिवाक्ये 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' इति तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानात् तन्त्रसिद्धमत्रह्मात्मक-मव्यक्तशब्दवाच्यं प्रधानम् इत्याशङ्क्य—

'आत्मानं रथिनं विद्धि' इत्यादिना रथिरथादिभावेन रूपितात्मशरीरादिषु रथत्वेन रूपितस्य शरीरस्येह अव्यक्तशब्देन ग्रहणान्नात्रब्रह्मात्मकं प्रधानम् अभिधीयते इति सिद्धान्तितम् ॥

अव्यक्तं महतः परं तु पुरुषस्तस्मात्परस्तत्परं
नैवास्तीति कुतन्त्रसिद्धगणना तत्प्रक्रियानुस्मृतेः ।
एतन्नैव यथार्थमत्र रथतायुक्तेषु वागादिके-
ष्वव्यक्तं तु शरीरमेव पुरुषः सोऽयं पर पूरुषः ॥ (न्या.क.सं-1-45)

**आनुमानिकेश्वरनिरसनप्रयोजनम्**—ईश्वरसिद्धौ अनुमानमेव प्रमाणमिति मतनिरासफलम् ।
[अनुमानेनैव ईश्वरसिद्धौ तन्निरसनप्रकारः अभिनिवेशमूल एव इति शङ्का वार्यते ।]

ननु अस्माकम् (सिद्धान्तिनां) ईश्वरानुमाननिरासेन किं प्रयोजनम् ? न च प्रयोजनाभावमात्रम्! अनुमानत एव ईश्वरं प्रतिपद्य, तं भजमानान् प्रति नास्तिक्यशङ्कापि आपादिता स्यादिति महत्तेषामस्माकञ्च पापमिति ।

अहो ! महाकारुणिकोऽसि !! तादृशेभ्य एतन्नोपदिश्यताम् । प्रयोजनं च श्रुणु—

प्रथमं तावत् यथावस्थिततत्त्वावबोधः श्रोत्रेण गन्धग्रहणनिरासवत्, अनुमानस्याभासतां पश्यतस्तीव्रबुद्धेरीश्वराविश्वासपरिहारश्च । ततश्च मन्दानां मतेस्तीव्रबुद्धिना प्रक्षोभो न स्यात् । एवमपि क्रियतां कारुण्यम् । अप्राप्तप्रापकस्य आगमस्य अनुवादप्रसङ्गोऽपि परिहृतः स्यात् ।

अनुवादत्वेऽपि ईश्वरः सिद्ध्यत्येवेति न कश्चिद्दोषः इति चेन्न ; निमित्तोपादान-भूतेश्वरासिद्धेः । निमित्ततया अनुमानसिद्धमीश्वरम् अनूद्य उपादानत्वादि विधीयताम् । प्रत्यक्षसिद्धं पृथिव्यादिकम् अनूद्य ईश्वरशेषत्वशरीरत्वादिविधानवदिति चेत् ; तथैव अनूद्य उपादानत्वनिषेधकानुमानोदये धर्मिग्राहकबाधस्य दुर्वचत्वप्रसङ्गात् ।

विशिष्टतया तु आगमेनैव सिद्धौ तस्य सुवचत्वात् । पृथिव्यादेः ईश्वरशेषत्वादिनिषेधानुमानवत् तदपि इष्यताम् इति चेन्न ; तस्य निषेध्यग्राहकसिद्ध्यसिद्धिभ्यां व्याघातस्य सुवचत्वात् । अत्र ईश्वरो न पृथिव्याद्युपादानम् ; चेतनत्वात्, कर्तृत्वाद्वा कुलालवत् इत्यादिप्रयोगे कथञ्चिदपि स दुर्वचः । तदा तु आगमस्य अन्यपरत्वोपपत्तौ ईश्वरस्य अनुपादानत्वमेव स्यादिति 'जन्माद्यस्य यतः' इति निखिलजगदेककारणत्वसंवित् विलीयेत इति भयात् अनन्तरमेव सूत्रकारैः 'शास्त्रयोनित्वात्' इति प्रमाणान्तरगोचरत्वं निरस्तम् ।

ननु तर्हि 'रचनानुपपत्तेश्च' इत्यादिसूत्रं तद्भाष्यादिकञ्च कथं सङ्घटेत ? न्यायतत्त्वे च प्रमातृपादे चेतनस्यैव कर्तृत्वप्रतिपादनप्रकरणे—'ननु वायुर्भूरेणूनां सङ्घातं करोति' इत्यादिना परिचोद्य दत्तमुत्तरम्—

'उच्यते । कर्तृकरणकर्माणीति त्रीणि कारणानि क्रियाविशिष्टानि । तेषामन्यतमाभावे क्रिया न युज्येत' इत्यादि, अत्रापि ईश्वरानुमानानुमतिः दृष्टा । अतः 'शास्त्रयोनित्वात्' इत्यस्यान्यथाऽर्थो वाच्य इति चेन्न ; 'रचनानुपपत्तेः' इत्यादेः अन्यभावत्वात् । तत्र हि चेतनानधिष्ठितप्रकृत्याद्युपादानत्वमात्रप्रतिपादकान् प्रति विशेषविरोधादिप्रदर्शने तात्पर्यम् ।

स्वपक्षे तु तेषां सम्भावनातर्कत्वमेव, तदनुगृहीतस्तु आगम एव प्रमाणम् । अत एव न्यायतत्त्ववचनमपि निर्व्यूढम् ।

तदेवम् उपादानम् अनूद्य निमित्तत्वनिषेधकान्, निमित्तम् अनूद्य उपादानत्वनिषेधकांश्च प्रति धर्मिग्राहकबाधं वक्तुं केवलजगदुपादाननिमित्तानुमानयोः दूषणमिति मन्तव्यम् । आगमेश्वरादिपक्षीकारे तु आश्रयासिद्धिः इति । (न्या.सि. 224-226)

**आनुश्रवम्**—वेदसिद्धम् (अनुश्रवो वेदः) ।

गुरूच्चारणमनुश्रूयते इति व्युत्पत्त्या अनुश्रवो वेदः । 'ऋदोरप्' (पा. सू. 3-3-57) इत्यनेन कर्मणि अप्प्रत्ययः । ततः 'तेन सिद्धम्' इत्यर्थे शैषिकोऽण्प्रत्ययः आदिवृद्धिश्च ॥

**आनुश्रविकः**—वेदविहितः ।

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ (सां. का. 2)

**दृष्टेति**—गुरुपाठादनुश्रूयते इत्यनुश्रवो वेदः ; एतदुक्तंभवति—श्रूयत एव परम् ; न तु केनचित् क्रियते इति । 'तत्र भव' इत्यर्थे आनुश्रविकः । (व्या)

अनुश्रवशब्दात् तत्र भवार्थे 'शेषे' इति सूत्रेणाणि आनुश्रव इति, 'काश्यादिभ्यः ठञ्ञठौ' इत्यनेन गणपठितत्वाच्च ठञ्प्रत्यये इकादेशे पदस्यादिवृद्धौ आनुश्रविक इति रूपद्वयं साधु ॥

**आनुषङ्गिकः**—प्रधानव्यापारमनुसृत्य नान्तरीयकनया सिद्धः ।

['अनुषङ्गेन सिद्धः' इत्यर्थे शैषिकः ठञ्, इकादेशश्च ।]

'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति तत्र परित्राणमेव उद्देश्यम् । आनुषङ्गिकस्तु दुष्कृतां विनाशः । सङ्कल्पमात्रेणापि तदुपपत्तेः ।
(श्री. भा. 1-1-21)

'विनाशाय च दुष्कृताम्' इत्यत्र 'च' शब्दः अन्वाचयपरः । समुच्चयः—समप्रधानयोः, अन्वाचयः—प्रधानानुषङ्गिकयोः । दुष्कृद्विनाशस्य आनुषङ्गिकत्वमुपपादयति—**सङ्कल्पेति** । (श्रु.प्र.)

शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् ।
ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः ॥ इति हि स्मर्यते ॥

फलान्तरानपेक्षया केवलभगवत्प्रीत्यैकप्रयोजनतया परमैकान्तिना क्रियमाणानि कर्माण्यपि आरोग्याद्यानुषङ्गिकफलवन्ति च भवन्ति ।

'भो वटो! भिक्षामट, गां च आनय' इत्यत्र हि अदर्शनाद्गामनायन्नपि भिक्षामटत्येव । अनटंस्तु भिक्षां न गामानयति, तथा अटन्नपि नान्विष्य गामानयति । अतो भिक्षाटनस्यैव प्राधान्यम् ; गवानयनस्य तु आनुषङ्गिकता ॥

**आनृशंस्यम्**—1. अक्रौर्यम् ।

'आनृशंस्यं परो धर्मः त्वत्त एव मया श्रुतः' । (रा.सुं. 31-41)

परदुःखासहिष्णुत्वम् । (गो.रा.)

2 आश्रितसंरक्षणपरत्वम्, 'आश्रितेत्यानृशंस्यतः' इति वचनात् ।

(श्रु.प्र. I-231)

**आन्तरपुष्पाणि**—भगवदाराधनोपयुक्तमानसपुष्पाणि ।

[भगवदाराधनोपयुक्तं पुष्पं द्विविधम्—आन्तरं बाह्यमिति । तत्राभ्यर्हितमान्तरम् ।]

अप्रयत्नलभ्यैरान्तरपुष्पादिभिरपि भगवदुपासनं स्मर्यते ।

अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ॥
ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तु सप्तमम् ।
सत्यमेवाष्टमं पुष्पं तेन तुष्यति केशवः ॥ इति ॥ (पां.र. 179)

**आन्वीक्षिकी**—1. ब्रह्मविद्या । आत्मानात्मविवेकजन्यविद्या मोक्षफला ।

प्रथमतः ईक्षणम्; शास्त्रश्रवणजन्यं ज्ञानम् । तदनुसृत्य परीक्षा अन्वीक्षा—मननम्; सा प्रयोजनं (कारणं-फलञ्च) हेतुः अस्य इत्यर्थे 'प्रयोजनम्' (पा.सू. 5-1-109) इति सूत्रेण ठक्प्रत्यये इकादेशश्च, ततः ङीप् ।

2. तर्कविद्या । (वेदाविरुद्धन्यायरूपा)

आर्षं धर्मोपदेशं च वेदशास्त्रविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ इत्युक्तेः ॥

अर्थशास्त्रे तु एवमुक्तम्—धर्माधर्मौ त्रय्याम्, अर्थानर्थौ वार्तायाम्, नयापनयौ दण्डनीत्याम्, एतासां बलाबले हेतुभिरन्वीक्षमाणा आन्वीक्षिकी लोकस्योपकरोति ।

प्रदीपः सर्वविद्यानाम् उपायः सर्वकर्मणाम् ।

आश्रयस्सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥ (अर्थ.शा. 180)

'आन्वीक्षिकी दण्डनीतिः तर्कविद्यार्थशास्त्रयोः' इति अमरः ।

आपः—1. अण्डकारणम् ।

'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुः विविधाः प्रजाः ।

अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ (म.स्मृ. 1–8)

'ता इमा आपः तद्धिरण्यमण्डमभवत्' इति हि श्रुतिः । व्यष्टिसिसृक्षया अप एव ससर्जादौ । 'अप्छब्दो'ऽण्डकारणसमस्ततत्त्वप्रदर्शनार्थः । पृथिवीमयस्याण्डस्यानन्तर-कारणं हि आपः । अतोऽप्छब्दनिर्देशः । अप इति व्याख्येय श्रुतिगताप्छब्दः स्मारितः । (श्रु.प्र. 2–3–11)

2. रसतन्मात्राजन्या आपः पृथिवीकारणभूताः ।

शीतस्पर्शवत्त्वम्, निर्गन्धत्वे सति विशिष्टरसवत्त्वम् इत्यादि तल्लक्षणम् । तासां शुक्ल-मधुर-शीतैकस्वभावानामाश्रयादिसंसर्गभेदात् रूप-रस-स्पर्शवैचित्र्यारोपः । अद्रव्यनिरूपणे तेजोबन्नगुणव्यवस्था समर्थयिष्यते । स्वाभाविकमासां द्रवत्वम् । आप्येष्वपि करकादिषु उपष्टम्भवशात् काठिन्यम् । प्राणरसनाप्यायनादिनोपकुर्वते । शरीरत्वमासामप्प्रचुरेषु वरुणलोकशरीरेषु स्पष्टम् । विषयत्वं सरित्समुद्रेषु ॥

(न्या.सि. 66–67)

आपः—(ब्र.सू. 2–3–11)

तेजोधिकरणे द्वितीयं सूत्रम् ।

आपोऽपि अतः तेजस एवोत्पद्यन्ते, 'अग्नेरापः', 'तदपोऽसृजत' इति हि आह ।

आपः केवलात् अग्नेः उत्पद्यन्ते ; न ब्रह्मणः इति पूर्वपक्षपरमिदम् । 'तेजोऽतस्तथा ह्याह' इति पूर्वसूत्रात् 'अतः' इति, 'तथा ह्याह' इति च अनुवर्तते ।

सिद्धान्तस्तु—अग्निशरीरकब्रह्मण एव अपामुत्पत्तिः इति स्थापयिष्यते ॥

आपश्च तेजसा सृष्टाः ब्रह्मकार्यं कथं च ताः ।
अग्नेरापः इति श्रुत्या निश्चिताः इति शङ्कते ॥ (ब्र.प.मा.)

**आपत्तिः**—आपादनम् , प्रसञ्जनम् ।

प्रसञ्जनीयविपर्ययेण प्रसञ्जकस्य विपर्यये पर्यवसानफलकम् । यथा—यद्यनुमानेन ईश्वरः साध्यते, तदा तस्य कर्मवश्यतापत्तिः । कर्मवश्यत्वन्तु नाङ्गीक्रियते इति विपर्यये पर्यवसानं फलिष्यते ॥

**आपत्सखः**—आपदि सखा परमात्मा ।

[' राजाहःसखिभ्यष्टच् ' (पा.सू. 5-4-91) इत्यनेन टच्प्रत्ययः ।]

अर्थिकल्पक आपत्सख श्रीमन्नारायण ! अशरण्यशरण्यानन्यशरणः त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये । (श.ग. 5)

आपदि सखावत् संरक्षक इत्यर्थः । विश्वसनीयत्व-स्नेहविषयत्वादिसूचनाय सखिशब्दः । शत्रुमपि हि ' तस्मात् परिश्रान्तः ' इति व्यवस्य, (रावणादिकं प्रति) ' न त्वा शरैः मृत्युवशं नयामि ' इत्यवोचत् ।। (वे भा.)

पांचाली-गजेन्द्रादिवत् आपन्नस्य अनन्यगतिकस्य स एव रक्षको भवतीति भावः ॥

**आपवर्ग्याः**—मोक्षसाधनानि मौनादयो दश ।

[अपवर्गमर्हन्ति इत्यर्थे ' दण्डादिभ्यो यत् ' इत्यनेन यत्प्रत्ययः, ततः स्वार्थेऽण् ।]

' मौन-व्रत श्रुत-तपोऽध्ययन-स्वधर्म-व्याख्या-रहो-जप-समाधय आपवर्ग्याः ।
प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वात्र तु दाम्भिकानाम् ' ॥
(भाग. 7-9-46)

(मौनव्रतादयः समाध्यनुकूलाः, समाधिरेव साक्षात् साधनं भवति ।)

मौनादयः आपवर्ग्याः जितेन्द्रियाणामपवर्गोपाया एवेति सत्यमेव । अजितेन्द्रियाणां तु इन्द्रियभोगाय, अर्थार्थं विक्रीणतां वार्ताः जीवनोपाया भवन्ति । (भाग.वी )

**आपवादिकीसङ्गतिः**—सङ्गतिविशेषः ।

[अपवादेन प्रवृत्तेत्यर्थे शैषिकः ठञ् , तस्येकादेशः आदिवृद्धिश्च ।]

' पूर्वाधिकृतिसिद्धान्तन्यायं यत्रावलम्बते ।
उत्तराधिक्रिया पूर्वपक्षः तत्रापवादिकी ॥ (न. सं. मा. 6)

पूर्वाधिकरणसिद्धान्तावलम्बनेन उत्तराधिकरणपूर्वपक्षः यत्र प्रवर्तते, तत्रेयम् । यथा सर्वत्र प्रसिद्ध्यधिकरणात्रधिकरणयोः ॥

**आपातः**—1. उपक्रमः ।

शक्तः परजने दाता स्वजने दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्म प्रतिरूपकः ॥ (म. स्मृ. 11-9)

मध्वापातः—मधुकोपक्रमः, प्रथमं यशस्करत्वात् विषास्वादश्च अन्ते नरकफलत्वात् ; तस्मादेतन्न कार्यम् । (व्या.)

2. तात्कालिकः—' आपातस्तादात्वे पतनेऽपि च ' इति विश्वः ।

3. आपातम्—पतनपर्यन्तम्

आपादचूडमनपायिनि दर्शनेस्मिन्
आशासनीयमपरं न विपक्षहेतोः ।
आपातशान्तिमधुरान् पुनरस्मदीयान्
अन्योन्यवैरजननी विजहात्वसूया ॥

(श्री वेदान्तमहादेशिकैरनुगृहीतः मुक्तकश्लोकः)

देहपातपर्यन्तं शान्तिप्रियान् अस्मदीयान् असूया स्वयमेव विजहातु इत्याशास्ते। पातपर्यन्तमित्यर्थे अव्ययीभावः । ततः आपातं शान्तिरिति ॥

**आपातप्रतीतिः**—अज्ञाननिवृत्तिमात्रेण संशय-विपर्ययसहं ज्ञानम् ।

[अत्राङ् ईषदर्थकः । ज्ञानस्येषत् , पतनं नाम संशयविपर्ययसहं सामान्यत एव ज्ञानम् ।]

'आपातप्रतीतोऽप्यर्थः संशय-विपर्ययौ नातिवर्तते' (श्री.भा. I-40)

संशय-विपर्ययौ च कारणवाक्यगतसद्ब्रह्माकाशप्राणवैश्वानरादिशब्दैरर्थतत्त्वस्य दुर्निश्चयत्वात्, 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति', 'असद्वा इदमग्र आसीत्' इत्यादिभिः आत्मनित्यत्वादेः प्रतीतेः, 'अन्नवानन्नादो भवति, प्रजया पशुभिर्ब्रह्मवर्चसेन' इत्यादिना अल्पास्थिरफलत्वावगमाच्च स्याताम्। (श्र.प्र.)

सद्युक्तिभिः विवेचनमकृत्वा शब्दश्रवणमात्रजनितज्ञानम् ॥ (सं.अ.)

**आपूर्यमाणपक्षः**—शुक्लपक्षः ।

'अहरह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति' (बृ.उ. 8-2-15)

आपूर्यते चन्द्रमाः कलाभिः यस्मिन् पक्षे तम्, शुक्लपक्षाभिमानिदेवताधिष्ठितं लोकम्, ततो यान् षण्मासान् सूर्य उदक् उत्तरस्यां दिग्विभागे एति तान् मासान् उत्तरायणाभिमानिदेवताधिष्ठितं लोकम्। (गो.भा.)

कृष्णपक्षे क्षीणश्चन्द्रो यस्मिन् शुक्लपक्षे उत्तराभिवृद्धिस्सन् षोडशकलापरिपूर्णो भवति स पक्षः आपूर्यमाणपक्षः। (सं.अ.)

अहरनन्तर आतिवाहिकोऽर्चिरादिमार्गे। (वि.को.)

प्रतिदिनं चन्द्रस्य अभिवृद्ध्या पूर्यमाणत्वात् आपूर्यमाणपक्षः ॥

**आपो नाराः**—चित्संसृष्टानि अण्डकारणतत्त्वानि भगवत्सृष्टानि इति नारशब्दवाच्याः ।

'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' ॥ (म.स्मृ. 1-10)

आपो नारशब्देनोच्यन्ते । अप्सु नारशब्दस्य अप्रसिद्धेः तदर्थमाह—**आपो नारा** इति। यतस्ता नराख्यस्य परमात्मनः सूनवोऽपत्यानि, तस्येदमित्यण् ।

यद्यपि अणि कृते ङीप् प्राप्तः, तथापि छान्दसलक्षणैरपि स्मृतिषु व्यवहारात् 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति पाक्षिको ङीप्प्रत्ययः। तस्याभावपक्षे

सामान्यलक्षणप्राप्ते डापि कृते नारा इति रूपसिद्धिः। आपोऽस्य परमात्मनः ब्रह्मरूपेण अवस्थितस्य पूर्वमयनमाश्रय इत्यसौ नारायण इत्यागमेषु आम्नातः।

गोविन्दराजेन तु 'आपो नरा' इति पठितं व्याख्यातञ्च। नारायण इति प्राप्ते 'अन्येषामपि दृश्यते' इति सूत्रेण दीर्घे कृते 'नारायण' इति रूपम्। अन्ये तु आपो नारा इति पठन्ति॥ (व्या.)

चित्संसृष्टानि अण्डकारणतत्त्वानि आपः। तासां नारत्वमुपपादयति—**आपो वै नरसूनव** इति। 'रीङ् क्षये' इत्यस्माद्धातोः डप्रत्यये टिलोपे च कृते र इति भवति। नरः—अक्षयः—निर्विकार इत्यर्थः। 'जह्नुर्नारायणो नरः' इति वचनान्तरं भगवन्नाम। तस्माज्जात इत्यणि नारा इति, नाराख्या आपो अयनमस्य इति नारायणः। एवं नरशब्देन निर्विकारत्वम्। नारशब्देन जगत्कारणत्वम्, अयनशब्देन जगदन्तरात्मत्वं च इत्यर्थत्रयमुक्तं भवति॥ (श्रु प्र. 2-1-1)

**आपोमयः प्राणः**—अद्भिराप्यायितः प्राणः।

"आपः पीताः त्रेधा विधीयन्ते। तासां यः स्थविष्ठः धातुः तन्मूत्रं भवति, यो मध्यमः तल्लोहितम्, योऽणिष्ठः स प्राणः" (छां. उ. 6-5-2)

अन्नमयं हि सोम्य! मन आपोमयः प्राणः तेजोमयी वाक् इति।
(छां. उ. 6-5-4)

अपां सूक्ष्मांशः प्राणाप्यायको भवतीत्यर्थः। तथा च तदाप्यायितत्वात् प्राणः अन्नमयः; न तु तद्विकारित्वम्।

ननु—केवलान्नभक्षणाम् आखुप्रभृतीनामपि वाग्मित्वप्राणवत्वदर्शनात्, अम्मात्र-भक्षाणामपि मत्स्यादीनां मनस्वित्व-वाग्मित्वदर्शनात्, घृततैलमात्रभक्षाणामपि मनस्वित्व-प्राणवत्वदर्शनात् कथम्,—'अन्नमयं हि सोम्य मन आपोमयः प्राणः' इत्यादिक-मुपपद्यत इति चेत्, सर्वस्यापि त्रिवृत्कृतत्वेन सर्वस्यापि भक्षस्य तेजोबन्नरूपतया, "आपोमयः प्राणः" इत्याद्युपपद्यत इति न क्षतिरिति द्रष्टव्यम्। (रं. भा.)

**आप्तकामम्**—1. अवाप्तसमस्तकामम् (परमात्मस्वरूपम्) ।

" तद्वा अस्यै तदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् " ।

(बृ. उ. 6-3-21)

जीवसुषुप्तिस्थानभूतं प्रज्ञात्मलक्षणं स्वरूपम् आह—**आप्तकामम्**—अवाप्तसमस्तकामम् । (रं. भा.)

अत एवोक्तं तत्त्वमुक्ताकलापे—(146)

' स्वेच्छातः सर्वसिद्धिं वदति भगवतः अवाप्तकामत्ववादः ' इति ।

अत्र अर्हार्थे क्तप्रत्ययः विवक्षितः । 'अर्हे कृत्यतृचश्च' (पा. सू. 3 3-169) इत्यत्र चकारात् लिङ इव क्तप्रत्ययस्यापि समुच्चयोक्तेः इति अन्यत्र व्यासार्यैः उक्तम् ॥

**आप्ततमः**—आप्तेषु अतिशयितः ।

[आप्तिः अस्यास्तीति, " अर्श आदित्वादच् " इति अच्प्रत्यये आप्तः, तेषु अतिशयितः आप्ततमः ।]

यथाऽवस्थितवस्तुदर्शित्वम्, यथादृष्टार्थवादित्वम् चेति द्विविधा आप्तिः । तत्र " ऋषिं प्रसूतं कपिलम् " इति कपिलस्य महर्षित्वमुच्यमानं मन्त्रद्रष्टृत्वातीन्द्रियानेकार्थद्रष्टृत्वादिनाऽप्युपपद्यते ; न तु सार्वत्रिकं यथावस्थितार्थदर्शित्वमपेक्षते ।

मन्वादीनां तु " यद्वै किञ्च मनुरवदत् ", ' स होवाच व्यासः पाराशर्यः ' इत्यादिभिः सार्वत्रिक यथाऽवस्थितदर्शनपूर्वक यथादृष्टार्थवादित्वमुक्तम् । तस्मादाप्ततमाः मन्वादयः कपिलस्य त्वाप्तिमात्रमिति । (श्रु. प्र. 2-1-1)

अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् । रागादिवशादपि नान्यथावादी यः, स आप्ततम इति चरके पतञ्जलिः ॥

**आप्तवादः**—प्रमाणवाक्यम् ।

न ह्याप्तवादा नभसो निपतन्ति महीं सुराः ।

युक्तिमद्वचनं ग्राह्यं मयान्यैश्च भवद्विधैः ॥ (वि. पु. 3-18-31)

आप्तवाचोरविरोधप्रकारः—

पुराणेषु परस्परविरोधः दरीदृश्यते–यथा-क्वचित् नाभीकमलजत्वम्, क्वचिच्च नासाजन्यत्वं चतुर्मुखस्य । एवमेव रुद्रस्य ब्रह्मानुजत्वं ब्रह्मपुत्रत्वं च प्रतीयते इत्यत्राह–

"आप्तवाचोर्विरोधे स्यात् सृष्टिभेदादियं गतिः ।
अनिश्चिताप्तभावानां निश्चितैः स्यादनादरः ।।" (स्तो. भा. 14)

तथा च कल्पभेदात् विरोधः परिहरणीयः । अनिश्चितप्रामाण्यानां वचसां विरोधे निश्चितप्रामाण्यानुरोधेन तादृशानाम् अनादर एवेति भावः ।

एवमेव सर्वत्र प्रमाणप्रतिपन्नयोः अनुष्ठानयोः विरोधे प्राप्ते यथारुचि विकल्प एव शास्त्रसम्मतः । तत्त्वभागे तु तदयोगात् विकल्पस्य नावकाशः इति व्यवस्था शास्त्रमर्यादा ।

यथा निर्विशेषसविशेषयोः विकल्पायोगात् अन्यतरस्यैव प्रामाण्यं स्वीकरणीयमिति सविशेषस्यैव ब्रह्मणः प्रतिष्ठापनार्थं श्रीभाष्यादिकं व्यररचन् भगवद्भाष्यकाराः । एतेन सांप्रदायिकानुष्ठानभागे कलहो नैव कार्यो मनीषिभिः, तत्र यथारुचि अनुष्ठानस्य शास्त्रसम्मतत्वात् इति च बोधयामासुः ।।

आप्तागमः—1. हिततमो वेदः ।

अपि दृष्टः क्वचिदाप्तागमस्य बाधः ? (सं. सू. 1-160)

'तत्त्वं नारायणः परः', 'तमेवं विद्वानमृत इह भवति' इत्यादिः आगमः आप्तः । अस्य कुत्रचिदपि बाधो न दृष्टः । तदेतत् भाषितम् 'माता-पितृसहस्रेभ्योऽपि वत्सलतरं हि शास्त्रम्' इति ।।

2. आप्तवचनम् (कपिलप्रोक्तम्)

सामान्यतस्तु दृष्टात् अतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम् ।। (सां. का. 6)

आप्तिः—प्राप्तिः । (परमव्योम्नि परमात्मानुभवः)

"ब्रह्मविदाप्नोति परम्" (तै. भृ. 1)

अत्र ब्राह्मणे ब्रह्म–तद्वेदनं–प्राप्तिः–प्राप्यञ्चेति चतुष्टयमुक्तम् । एतद्विवरणं सत्यज्ञानादिमन्त्रेण क्रियत इति श्रुतिरेवाह—**तदेषाभ्युक्तेति** । तदेव ब्रह्माभिमुखीकृत्य ऋगेषाऽध्येतृभिरुक्तेत्यर्थः । मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनात् उपक्रमाधिकरण-विषयवाक्ययोरिव आपातविरोधप्रतीत्यभावात् मन्त्रब्राह्मणयोः नित्यनिर्दोषत्वाविशेषाच्च मन्त्रापेक्षया ब्राह्मणप्राबल्यवादोऽनुपपन्नः । स्फुटप्रतिपत्तिहेतुत्व-तदभानावेव प्राबल्य-दौर्बल्यशब्दविवक्षितौ चेत्, न विरोधः ।

'सत्यं ज्ञानमनन्तं ब्रह्मेति' ब्रह्मशब्दो विवृतः । 'यो वेदनिहितं गुहायाम्' इति विच्छन्दः । 'परमे व्योमन् सोऽश्नुते' इति प्राप्तिः । 'सर्वान् कामान्' इत्यादिना प्राप्यम् । (श्रु. प्र. 1–199)

(एतेन स्वरूपैक्यमेवाप्तिरिति पक्षः व्युदस्तः ।)

लाभः, सम्बन्धः, योगः, आप्तता, प्रामाणिकत्वं च । (सं. अ.)

**आप्यायनम्**—ओप्यायी वृद्धौ धातोः ल्युटि अनादेशः 1. प्रीणनम् ।

अखण्डसारैः हविषां प्रदानैः आप्यायनं व्योमसदां विधत्से ॥ (ह. स्तो. 10)

2. वर्धनम् (परिपोषणम्) ।

श्रोत्रादिपञ्चकस्य क्रमेणाकाशादिभूतपञ्चकम् आप्यायकं भवति । आप्यायनं नाम सामर्थ्यव्यञ्जनम् । मनःप्राणवाचां क्रमेण पृथिव्यप्तेजांसि आप्यायकानि ।

(द. उ. 204)

**आप्रयाणात्तत्रापि हि दृष्टम्**—(ब्र.सू. 4-1-12)

अपवर्गसाधनमुपासनम् एकस्मिन्नहनि कार्यम्, उत प्रत्यहमाप्रयाणादनुवर्तनीय-मिति संशयः । एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयम् । 'यावदायुषं' इति तु वचनं विधिशब्दस्य अभावात् विद्यायाः फलेनोपसंहारपरमिति पूर्वः पक्षः ।

राद्धन्तस्तु—उपासनम् आप्रयाणादनुवर्तनीयम् ; कुतः ? तत्रापि हि दृष्टं 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति श्रुतेः ।

अप्राप्तत्वेन अनुवादत्वासंभवात् विधिरेवायमिति भावः ।
तदेतदधिकरणसारावल्याम्—(459)

एकस्मिन्नेव पक्षे यदि भवति परध्यानरूपा तु भक्तिः
तद्विश्रान्तो विधिस्स्यादुपरि तु विफला ब्रह्मचिन्तेत्ययुक्तम् ।
छान्दोग्ये यावदायुस्सुचरितमुदितं ब्रह्मलोकाप्तिहेतोः
तद्धि ध्यानस्य वृद्ध्यै तदपि च विहितं कुत्रचित्प्रायणान्तम् ॥ इति ॥

छान्दोग्ये हि 'स खल्वेवं वर्तयन्यावदायुषम्' इत्यादिना यावदायुस्सुचरितमुदितम् । ब्रह्मलोकप्राप्तिहेतोः सुचरितस्य ध्याने सन्निपत्योपकारकतया स्वरूपोत्पत्तिहेतोः सुचरितस्य यावदायुरनुष्ठेयत्वकथनं ब्रह्मविद्याया यावदायुरनुष्ठेयत्वमन्तरेण अनुपपद्यमानं श्रुतार्थापत्त्या ब्रह्मविद्याया आप्रयाणादनुवर्तनीयत्वमवबोधयति ।

न केवलं श्रुतार्थापत्त्या तत्सिद्धिः, अपि तु तदपि ब्रह्मोपासनं कुत्रापि श्रुतौ प्रायणान्तं विहितम् 'प्रायणान्तमोङ्कारमभिध्यायीत' (प्र.उ. 5-1) इति ॥ (चिं.म)

तथा च अस्मिन् विषये श्रुतार्थापत्तिः, साक्षात् विधिवाक्यञ्च प्रादर्शि ॥

उपासनं तदावृत्तमाप्रयाणात् प्रतीयते ।
आवर्तनीयमित्येव स खल्वेवमिति श्रुतिः ॥ (ब्र.प.मा.)

**आप्रयाणाधिकरणम्—(4-1-6)**

'आप्रयाणात्तत्रापि हि दृष्टम्' इति एकसूत्रात्मकम् आप्रयाणपदादिममिदम् ।

अपवर्गसाधनमिदं ब्रह्मोपासनम् आमरणात् नानुवर्तनीयमिति शंकावाणाय प्रवृत्तमिदमधिकरणम् ।

एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात् तावतैव परिसमापनीयमुपासनम् इत्याशङ्क्य 'स खल्वेवं वर्तयन्यावदायुषम्' इति श्रवणात् आमरणादनुवर्तनीयमित्युक्तम् ॥

शास्त्रार्थनिर्वृत्तित एव हेतोः
कर्तव्यमेकत्र तु वासरे तत् ।
एतन्न संसिध्यति 'यावदायुः'
इत्येव शब्दात् विधितश्च तस्य ॥ (न्या.क.सं. 4-6)

**आबल्यम्**—बलराहित्यम् (उत्क्रान्तिकालिकावस्था) ।

(अबलस्य भावः आबल्यम् इत्यर्थे भावार्थे ष्यञ्प्रत्ययः, आदिवृद्धिश्च ।)

यत्रैतत्पुरुष आर्तो मरिष्यन् आबल्यं न्येति मोहं न्येति, तदाहुः उदक्रमीच्चित्तम् । (कौ.उ. 3-37)

न्येति नितरामेति गच्छति । मोहं मूर्च्छां न्येति प्राप्नोति, तदा समीपवर्तिन आहुः, चित्तमुदक्रमीत् इति । मनः निलीनमित्यर्थः ॥ (रं.भा.)

**आब्रह्मस्तम्बपर्यन्ताः**—स्तम्बानारभ्य चतुर्मुखपर्यन्ताः प्राणिनः ।

[ब्रह्म च स्तम्बश्च ब्रह्मस्तम्बौ तौ अभिव्याप्येत्यर्थः । आङ्मर्यादाभिविध्योरिति आङा सहाव्ययीभावे, आब्रह्मस्तम्बं—तत् पर्यन्तं येषां प्राणिनामिति । ततो बहुव्रीहिः ।]

आब्रह्मस्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ (श्री.भा. 1-223.)

अत्र आङ् अभिविधौ ; स्तम्बसमभिव्याहारात् । स्तम्बो हि कर्मवश्यः । 'पुमान्न देवः' इत्यारभ्य 'भूपैते कर्मयोनयः' इत्युक्तेः । (श्रु.प्र.)

तेन विना मर्यादा तेन सहाभिविधिः ।
अनेन चतुर्मुखस्यापि कर्मवश्यता बोधिता ॥

**आभाणकः**—लौकिकीगाथा ।

यथा--वराटकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति वासिष्ठोक्तिः । (मी.को.) तथैव ईश्वरलीलाविभूतौ प्रविष्टस्य ऐहिकभोगेषु व्यापृतस्यापि प्रकृष्टसुकृतविशेषमूलकसदाचार्यलाभेन परमपुरुषार्थप्राप्तिः ॥

आभासः—1. भ्रमः ।

2. भ्रमविषयः । आङ्पूर्वकात् भासृधातोः भावे, कर्मणि च घञ्-प्रत्यये कृतेऽर्थद्वयम् ।

3. प्रतिबिम्बम् ॥

आभास (सा) एव च-- (ब्र.सू. 2-3-49)

अंशाधिकरणे अष्टमं सूत्रम् । 'अंशो नाना व्यपदेशात्' इत्यादिना जीवानां ब्रह्मांशत्वमुपपादितम् । ततः ब्रह्मांशत्वेनैकरूपत्वे सति परस्परभोगव्यतिकर-प्रसङ्गस्तु 'असन्ततेश्चाव्यतिकरः' इति पूर्वसूत्रेण प्रतिशरीरं जीवानां अणुत्वेन भिन्नतया च पर्यहारि ।

भ्रान्तब्रह्मजीववादे चोपहितब्रह्मजीववादे च जीव-परयोः जीवानाञ्च भोगव्यति-करादयः सर्वे दोषाः सन्तीत्यभिप्रायेण स्वपक्षे भोगव्यतिकराभाव उक्तः ।

ननु भ्रान्तब्रह्मजीववादेऽपि, अविद्याकृतोपाधिभेदात् भोगव्यवस्थादयः उपपद्यन्ते ; इत्यत्राह—'आभास एव च' इति ।

ब्रह्माज्ञानवादे सर्वज्ञस्य ब्रह्मणोऽज्ञानकल्पनस्वरूपतिरोधानकल्पनाहेतवः आभासा एव । चकारान्निरवद्यत्वादिश्रुतिविरोधश्च ।

निर्विशेषवादे प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति प्रागेवोप-पादितम् । अविद्यापरिकल्पितोपाधिभेदे हि सर्वोपाधिभिः उपहितस्वरूपस्यैकत्वाभ्युप-गमात् भोगव्यतिकरः पूर्वसूत्रोपपादितः तदवस्थ एवेति भावः । 'आभासा एव च' इत्यपि पाठान्तरम् ।

आभासा हेतवस्सर्वे भवेयुरिति निश्चितम् ।
ब्रह्माभेदे तु जीवस्य तिरोधानादिकल्पने ॥ (ब्र.प.मा.)

'आभास' इति—परमात्मन आभासः प्रतिबिम्बभूतो जीवः इत्युक्तं परैः । तदप्यचाक्षुषाणां प्रतिबिम्बाभावात्, आरम्भणाधिकरणदर्शितैः दूषणान्तरैश्चानुपपन्नम् ।

**आभिजात्यम्**—अभिजातस्य कर्म ।

['अभिजातस्य कर्म' इत्यर्थे ' गुणवचनब्राह्मणादिभ्यः कर्मणि च ' इत्यनेन ष्यञ् ।]

अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ (गी. 16-1, 2, 3)

इत्याद्युक्ता एते गुणाः दैवीसंपदमभिजातस्य भवन्ति । देवसम्बन्धिनीसंपत् दैवी, देवा भगवदाज्ञानुवृत्तिशीलाः तेषां संपत्, सा च भगवदाज्ञानुवृत्तिरेव ; तामभिजातस्य तामभिमुखीकृत्य जातस्य-तां निर्वर्तयितुं जातस्य भवन्तीत्यर्थः । (गी.भा.)

लोके तावत् एतत्प्रयोजकसत्कुलप्रसूतत्वमात्रेणापि व्यवह्रियते ।

**आभूतसंप्लवं स्थानम्**—चतुर्मुखस्याहःपर्यन्तं विद्यमानं स्थानम् ।

[भूतानां चतुर्मुखसृष्टानां संप्लवः—नाशः यत्रेति भूतसंप्लवः चतुर्मुखाहः । तत्पर्यन्तं आभूतसंप्लवम् । अत्राङ् अभिविधौ, ' आङ्मर्यादाभिविध्योः ' (प.सू.- 2-1-13) इत्यनेन अव्ययीभावः ।]

आभूतसंप्लवं स्थानम् अमृतत्वं हि भाष्यते ।
त्रैलोक्यस्थितिकालोयम् अपुनर्मार उच्यते ॥ (वि.पु. 2-8-95)

ब्रह्माहःपर्यन्तं यत्स्थानं तदेवामृतत्वमुपचारादुच्यते ॥ (वि.चि.)

अत एव हि गीयते—

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां ते अहोरात्रविदो जनाः ॥

अव्यक्तात् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ।। इति ।। (गी. 8–17, 18)

**आभ्यवहारिकम्**—भोज्यं वस्तु (भगवदाराधनोपयुक्तम्) ।

[अभ्यवहारः—भोजनं तत्र नियुक्तमित्यर्थे 'तत्र नियुक्तः' (पा.सू. 4-4-69) इत्यनेन ठक्प्रत्यये इकादेशश्च ।]

सांस्पर्शिकं द्रव्यजात तथैवाऽऽभ्यवहारिकम् ।
अप्यौपचारिकं कृत्वा यागंभूमेरलंकृतिम् ।
यतीन्द्रोदितनित्योक्तक्रमेणैव यजेद्धरिम् ।। (प्र.पा. 5-31,32)

**आमनन्ति चैनमस्मिन्**—(ब्र सू. 1-2-33)

(वैश्वानराधिकरणे नवमं सूत्रम्) एनम्—परमपुरुषं वैश्वानरं द्युभ्वादिदेहम्, अस्मिन्—उपासकदेहे प्राणाग्निहोत्रेणाराध्यत्वाय आमनन्ति च ; 'तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिना ।

उपासकमूर्धादिपादान्ता एव द्युप्रभृतयः परमपुरुषस्य मूर्धादय इति प्राणाग्निहोत्र-वेलायाम् अनुसंधेया इत्यर्थः ।

द्युमूर्धादीनवयवानुपासकतनौ तथा ।
ध्यात्वा हुत्यार्चनार्थं च वैश्वानरमिहामनत् ।। (ब्र. प. मा.)

**आमिक्षा**—पयः पिण्डः । (घनीभूतो भागः)

'तप्ते पयसि दध्यानयति, सा वैश्वदेवी आमिक्षा, वाजिभ्यो वाजिनम्' इति श्रूयते ।।

**आमुष्मिकम्**—ऐहिकसुखभिन्नं स्वर्गादिपरलोकसुखैश्वर्यम् ।

[अमुष्मिन्—परलोके भवमित्यर्थे अध्यात्मादित्वात् ठञि, इकादेशे, आदिवृद्धिः, (पृषोदरादित्वात्) सप्तम्या अलुक्, टिलोपश्चेति (वाचस्पत्ये) ।]

शास्त्रीयम् ऐहिकामुष्मिकमपि फलम्, अत एव परस्मात् पुरुषाद्भवतीति सामान्येन 'फलमतः' इत्युच्यते । (श्री. भा. 3-2-37)

'अदसस्तु विप्रकृष्टम्' इत्युक्तेः अदश्शब्देन परलोकः परामृश्यते ।।

**आम्नायः** —अभ्यस्यमानो वेदः ।

'म्ना-अभ्यासे' अस्माद्धातोः कर्मणि घञ्, 'आतो युक्चिण्कृतोः' (पा. सू. 7-3-33) इत्यनेन युगागमश्च । आम्नायते—अभ्यस्यते इति यावत् ।

'आम्नायानामयोगेन विद्यां प्रशिथिलामिव' ।। (रा. सु. 15-38)

**आम्रवणन्यायः**—न्यायविशेषः ।

आम्राणां वृक्षाणां वनम् आम्रवणम् । 'प्रनिरन्तःशरेक्षुप्लक्षाम्र............' (पा. सू. 8-4-5) इत्यादिना णत्वम् । यद्यपि न सर्वे वृक्षास्तत्र आम्रा एव भवन्ति । चिञ्चापनसादीनामपि तत्र सत्वात् । तथापि भूयांस आम्राः इति आम्रवणम् इत्युच्यते । (मी. को.)

अत एव—'अन्नमशितम्, आपः पीताः, तेजोऽशितम्' इति त्रिवृत्कृताना-मन्नादीनामेकैकस्य तेजोवन्नात्मकत्वेन त्रिरूपस्य कथम् अन्नमापस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यत इति ; तत्राह—'वैशेष्यात्तु तद्वादस्तद्वादः' इति। वैशेष्यम्—विशेषभावः । त्रिवृत्करणेन त्रिरूपेऽप्येकैकस्मिन् अन्नाद्याधिक्यात्तत्र तत्रान्नादिवादः इति भावः ॥

**आम्रान् पृष्टः कोविदारान् आचष्टे**—लौकिकन्यायविशेषः ।

प्रश्नस्य अन्यथा उत्तरदाने एवं प्रयुज्यते । तदेतत् 'वेत्थ यथा पंचम्याम् आहुतौ आपः पुरुषवचसो भवन्ति' इति प्रश्नस्य 'तस्मिन् एतस्मिन् अग्नौ देवाः श्रद्धां जुह्वति' इति प्रतिवचनोपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता । तत्र यदि श्रद्धाशब्देन आपो नोच्येरन्; ततोऽन्यथा प्रश्नः अन्यथा प्रतिवचनमित्यसंगतं स्यात् । (श्री. भा. 3-1-5)

अतः श्रद्धाशब्दः अप्पर एवेति भावः ॥

**आम्राश्च सिक्ताः पितरश्च प्रीणिताः**—लौकिकन्यायविशेषोऽयम् ।

('एका क्रिया द्व्यर्थकरी बभूव' इति वचनं एतन्न्यायमूलकमेव) एवमेव वाक्यानि द्वीष्टानि भवन्ति । 'श्वेतो धावति' 'अलम्बुसानां यातेति' । (महा.भा.आ. 1)

अत्र 'श्वा-इतः' (श्वेतः) बुसानाम्-(बुसार्थे) अलंबुसानां यातेत्यर्थद्वयं विवक्षितम् ।

वेदान्तेष्यस्य समन्वयः प्रदर्श्यते—

इदन्तु शङ्क्यम् ; प्रथमातिक्रमे कारणाभावात् छान्दोग्ये प्रथमं वियदेव कुतो नोदाहारीति, अतः वियतः उत्पत्तिर्नास्तीति ।

अत्रेदं तत्त्वम् । सत्यम्—(तैत्तिरीये) वियदाद्युत्पत्तिवचनेनास्योत्पत्तिरार्थिकी स्यादिति । तथाप्याम्रमूलपितृतर्पणन्यायेन द्व्यर्थोऽयं निर्देशः स्यात् । तद्यथा एकेनैव जलतर्पणेन 'आम्राश्च सिक्ताः, पितरश्च प्रीणिताः' । एवमेकेनैव तेज आदेः उत्पत्त्यभिधानेन अन्येषामुत्पत्तिवचनमार्थं स्यात् ।

अन्यच्च किंचित् त्रिवृत्करणयाथार्थ्यं दर्शितं भवेदित्यभिप्रायेण तदुदाहरणं स्यात् । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति हि त्रिवृत्करणं तेजोबन्नेष्वेव प्रवर्त्यते ।

एवं त्रेधाविधानमपि 'अन्नमशितं त्रेधा विधीयते' इत्यादिनोच्यते । तद्धि तेज आदिषु सूदाहरम् ; वियदादिषु दुरुदाहरम् । अन्येषाम् आकाशादीनां कार्यत्वं कण्ठत उक्त्वा अन्येषु (तेज आदिषु) तदुदाहरणे तु कार्यत्वत्रिवृत्करणयोः भिन्नविषयत्वं विज्ञातं स्यात् ; तन्मा विज्ञायीति तेषां तेज आदीनामेवोदाहरणमिति । (एका क्रिया द्व्यर्थकरी बभूव ।) (त. मा. 2-3-7)

एवं वेदान्तिभिरपि प्रायेण दृष्टादृष्टप्रयोजनद्वयम् अभिसन्धायैव सर्वव्यापारः अनुष्ठीयते । यथा देहपोषणार्थं भोजने प्रसक्ते देवतानिवेदितान्नमेव उपादीयते चेत्, देवताप्रीतिरूपादृष्टं देहपोषणं च सिध्यत इति । एवमेव सर्वत्र । स्मर्यते च—

भक्तिः परेशानुभवो विरक्ति-
रन्यत्र चैष त्रिक एक कालः ।
प्रपद्यमानस्य यथाश्नतस्तु
तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ इति ॥

क्षुन्निवृत्यर्थं भोजने कृते तुष्टिः पुष्टिश्चाविनाभूते । तथैव प्रपद्यमानस्य भगवन्तं समाश्रित्य भजतः, अन्यत्र विरक्तिः परमात्मानुभवश्च सिध्यत इति एका क्रिया अनेक-प्रयोजनकरी सम्पद्यते ॥

**आयतनम्**—1. आधारः (शरीरम्) ।

'पृथिव्येव यस्यायतनम् अग्निर्लोको मनोज्योतिः यो वै तं पुरुषं विद्यात्' ।

(बृ. उ. 5-9-10)

यस्य पुरुषस्य पृथिव्येव आयतनम् आधारः । शरीरमिति यावत् । (रं. भा.)

(यस्य सर्वात्मना स्वार्थे नियाम्यं धार्यं तत्तस्य शरीरमित्युक्तेः ; तदेकधार्यस्य शरीरतया तत्प्रतिसम्बन्धिनः परमात्मनः आधारतया शरीरित्वं स्थापितमिति कथमत्र पृथिव्या परमात्माधारतेति चेत्, परमात्मनः सर्वत्र व्याप्तिमात्रविवक्षया पृथिव्यादिक-मायतनत्वेनोच्यते इति बोध्यम् ।)

2. मण्डलम् , गृहं वा । 'भूमेर्महदायतनं वृणीष्व' (क. उ. 1-24)

पृथिव्याः विस्तीर्णम् आयतनं मण्डलं राज्यं वृणीष्व, अथवा भूमेः सम्बन्धि महदायतनं विचित्रशालाप्रासादादियुक्तं गृहं वृणीष्व । (रं. भा.)

3. भोगायतनम् (मनः) ।

'यो ह वा आयतनं वेद आयतनं ह स्वानां भवति । मनो ह वा आयतनम्' । (छां. उ. 5-1-5)

स्रक्चन्दनादिविषयकज्ञानरूपभोगायतनत्वमेव मनस आयतनत्वम् । (रं. भा.)

1. अवच्छेदकम् । यथा—आत्मनः भोगायतनं शरीरमित्यादौ ।

2. प्रतिमेति वैदिका वदन्ति ; यथा—देवतायतनानि हसन्ति रुदन्ति इत्याद्याथर्वणश्रुतौ । (न्या. को.)

**आयतप्रबोधनम्**—गाढसुप्तं प्रति सहसा बोधनम् ।

[यम—उपरमे इत्यस्मात् अकर्मकात् कर्तरि क्तप्रत्यये 'अनुदात्तोपदेश.... ' (पा.सू. 6–4–36) इत्यादिना अनुनासिकलोपः ।]

'आराममस्य पश्यन्ति न तं पश्यति कश्चन। इति तन्नायतं बोधयेदित्याहुः । दुर्भिषज्यं हास्मै भवति, यमेष न प्रतिपद्यते ।' (बृ.उ. 6–3–14)

लोकप्रसिद्धिर्हि—यत एव स्वप्ने इन्द्रियाण्युपसंहृत्य जीवो बहिर्निर्गच्छति, **तत्** अत एव **आयतं** गाढसुप्तम्—यम उपरमे निष्ठा । 'अनुदात्तोपदेशे'त्यनुनासिकलोपः।....तं सहसा न बोधयेदित्याहुः चिकित्सकाः । ते हि तत्र दोषं पश्यन्ति । कोऽयं दोषः? **एषः** सहसा प्रबोधितो जाग्रच्छरीरे प्रविशन् बहिर्निर्गत आत्मा यं कञ्चिदिन्द्रियदेशं न प्रतिपद्यते यदि कदाचित्, तर्हि व्यत्यासेन इन्द्रियाणि इन्द्रियान्तरदेशे प्रवेशयेयुः । तत्र आन्ध्य बाधिर्यादिदोषप्राप्तौ **दुर्भिषज्यं**—दुःखेन भिषक्कर्म अस्मै दोषाय भवति । अयं दोषो दुर्विचिकित्स एव स्यादित्यर्थः ॥ (रं.भा.)

स्वाप्निकपदार्थान् तत्तत्कर्मानुरोधेन तदेकानुभाव्यतया तत्कालमात्राऽवसायिनः ईश्वरः सृजति इति राद्धान्तितम् ।

अत्र जीवः—स्वप्नाऽवस्थायां 'स यथा महाराजः जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तते, एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इति श्रुत्यनुरोधेन इन्द्रियाणि उपादाय अन्यत्र विहरति । तदानीं सहसा प्रबोधे सति उक्तदोषः प्रसजेत् इति भावः ।

अतः सहसा गाढसुप्तस्य बोधनं न कर्तव्यम् इति हृदयम् ॥

**आयमनम्**—नियमनम् ।

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत (सन्धीयत) ।
आयम्य तद्भागवतेन (तद्भावगतेन) चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥

(मुं. उ. 2–2–3)

आयम्य तद्भागवतेन चेतसा । भगवत्प्रवणेन चेतसा तद्धनुरायम्य । प्रणवाख्यस्य धनुष आयमनं नाम प्रत्यक्परमात्मनोः शेषशेषिभावलक्षणार्थप्रकाशकत्वेनानुसंहितत्वम् । **तद्भावगतेन** चेतसेति पाठे तद्भावः तत्प्राप्तिः । **तद्भावगतेन चेतसा** तत्प्राप्तीच्छया शरमायम्येत्यर्थः । तस्य चाऽऽयमनं नाम सेन्द्रियान्तःकरणस्य तस्य विषयान्तर-विमुखीकरणपूर्वकमक्षराख्यलक्ष्याभिमुखतयाऽवस्थापनम् ।। (रं.भा.)

**आयुः प्राणः**—उच्छ्वासादिलक्षण-आयुस्साधनम् ।

'आयुः प्राणः प्राणो वा आयुः प्राण उ वा अमृतम् '। (कौ.उ. 3-15)

शरीरे प्राण स्थितेः उच्छ्वासादिलक्षणायुस्साधनत्वात् आयुः प्राणः । लोकान्तरे चिरस्थायित्वरूपामृतत्वप्राप्तेः प्राणाधीनोपायानुष्ठानसाध्यत्वात् प्राणस्यामृतत्वम्। (रं.भा.)

वायुरेवावस्थान्तरमापन्नः प्राणः । न तेजःप्रभृतिवत् तत्त्वान्तरम् । उच्छ्वास-निश्वासादिवायुक्रियासाधनत्वात् तच्छब्देन व्यपदिश्यते । आयुः घृतमितिवत्—

**आयुक्ताः**—कुशलाः ।

'युक्ता आयुक्ताः, अलूक्षा धर्मकामाः स्युः ' । (तै.शि. 22)

युक्ताः—वेदशास्त्रेषु अभियुक्ताः (रताः) । आसमन्तात् युक्ताः । लौकिकेष्वपि कुशला इत्यर्थः । (रं.भा.)

**आयुर्वेदः**—विद्यास्थानेष्वन्यतमः ।

ऋग्वेदस्योपवेदः—वैद्यकम् । (य.दी. 45)

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः ।।

**आरण्यकम्**—संहिता-ब्राह्मणम्-आरण्यकमिति वेदविभागे अन्तिमम् ।

[अरण्ये अनुवाक्यमित्यर्थे शैषिकः वुञ्प्रत्ययः 'कुलालादिभ्यो वुञ्' (पा. सू. 4-3-118) इत्यनेन ।]

अनुपनीतस्याध्यश्रवणार्थम् अदृष्टार्थं वा तत् स्यात् । यथा—'एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति' इति ।। (श्रु प्र. 3-3-25)

**आरब्धकार्याः**— प्रारब्धस्वफलाः अपचाराः ।

['आरब्धेति आदिकर्मणि क्तः कर्तरि च' (पा.सू. 3-4-71) इत्यनेन क्तप्रत्ययः । क्रियते—साध्यते इति कर्मपदं फलपरं ततो बहुव्रीहिः ।]

'अनन्तापचारान् आरब्धकार्यान्, अनारब्धकार्यान्, कृतान्, क्रियमाणान्, करिष्यमाणांश्च सर्वान् अशेषतः क्षमस्व'। (श.ग. 10)

जात्यायुर्भोगरूपविपाकसंज्ञफलप्रदाने प्रवृत्तान् । यद्यपि, 'अनारब्धकार्य एव तु पूर्वे तदवधे'रिति उपासने सूत्रितम्, तथापि 'साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी' इति प्रपत्तौ विशेषवचनादत्रारब्धकार्योपादानम् । अर्थितार्थप्रदस्य शरण्यस्य प्रपत्तॄणामार्तितारतम्यानुसारेण यथाप्रार्थितफलप्रदानात् तदिष्टदेहाद्यनुवृत्तौ न प्रत्यक्षादि-विरोधः । (वे.भा.)

**आरम्भणम्**—आलम्भनम्—स्पर्शनम् ।

[आरभ्यते स्पृश्यते इदमिति 'कृत्यल्युटो बहुलम्' (पा.सू. 3-3-113) इति ल्युट् ।]

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'। (छां.उ. 6-1-4)

अथ स्यात् पिता-पुत्रयोः सत्येव भेदे तद्गतगोत्रचरणाद्युपदेशात्तद्गतया प्राग-श्रुतेऽपि पुत्रे श्रुतत्वव्यवहारात् न वस्त्वैक्यप्रत्यायकत्वमेतस्येति ।

न स्यात् पितापुत्रयोः परस्परस्वरूपभेदस्य प्रत्यक्षसिद्धत्वेन स्वरूपैक्यप्रत्यभिज्ञा-विरहेण च श्रुतत्वादेः विशेषणमात्राभिप्रायकत्वात् । इह तु इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीदिति दृढतरप्रत्यभिज्ञादर्शनेन स्वरूपैक्यनिश्चयात् । तदेतच्छ्रुतिरेवाह—

**'वाचारम्भणं....सत्यमिति'** । वाचेति तृतीयान्तं पृथक्पदम् । 'तदनन्यत्वम् आरम्भणशब्दादिभ्यः' इति आरम्भणशब्दमात्रस्योपादानेन सूत्रकारेण तत्सूचनात् । टाबन्तत्वे एकवचनत्वे च वाचारम्भणशब्दादिभ्यः इत्येव ब्रूयात् । तृतीया चेयं 'अध्ययनेन वसति' इतिवत्फलस्य हेतुत्वविवक्षया । अतः तृतीयायाः चतुर्थ्यर्थे लक्षणाभ्रान्तिरपि केषांचिदयुक्ता ।

(नामधेयस्य मृदारब्धत्वाभावात् विकार-नामधेययोरुभयोरपि आरम्भणत्वसिद्धयेआह–) आरम्भणमित्यत्र 'विभ्राजमानस्सरिरस्य मध्यात्' इत्यत्रेव रलयोरेकत्वेन आलम्भनं स्पर्शनमुच्यते । ('आलम्भः स्पर्श-हिंसयोः' इति निघण्टुकाराः ।) आलभ्यते अयमिति 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । विकारो घटत्वाद्यवस्था, नामधेयं घटादिसंज्ञा च स्पृश्यते ; मृत्पिण्डेनेत्युपक्रमात् मृत्तिकेत्युपसंहाराच्च मृद्द्रव्येणेति सामर्थ्यात् गम्यते । 'मृदस्ति, पात्रं करिष्यामि', 'माता पूज्या' इत्यादौ मृदुपादानकत्व-स्वप्रतियोगिकत्वादिवत् । अत्र च विकारनामधेययोः क्रमभावित्वात् 'शेते शुष्यति ताम्यति प्रलपति' इत्यादौ क्रियाणामिव विनापि चशब्देन समुच्चयप्रतीतिः ।

एतेन चशब्दस्य मृद्द्रव्येणेत्यस्य च अध्याहार इति केषाञ्चित् भ्रान्तिरयुक्ता । वाचा–वाक्पूर्वकजलाहरणादिव्यवहारार्थम्। 'अन्नेन वसति' इत्यादौ अन्नादेः स्वाविनाभूततृप्त्याद्युन्नायकत्ववत्, जलाहरणस्यापि 'घटेन जलमाहर' इत्यादिवाक्पूर्वकत्वेन वाक् फलतया वाचेत्यनेन तत्कार्यजलाहरणादिकमप्युन्नीयते । अतः तदंशे लक्षणाभ्रान्तिरपि केषांचिदनुचिता । 'मृत्तिकेत्येव सत्यम्' इत्यत्र इतिकरणेन लोकावगतप्रत्यभिज्ञाप्रत्यवर्शनधर्मैक्यनिश्चयात् तद्दृष्टान्तेन ब्रह्म-प्रपञ्चयोरपि वस्त्वैक्यमेव निर्णीयते ।

एतेन 'सोऽयं गकारः' इत्यादौ जात्यैक्यादिवेहापि मृद्घटयोः सत्यपि भेदे मृत्वैक्यादेव प्रत्यभिज्ञा किं न स्यात् इति शङ्का परास्ता । प्रत्यक्षेण गकारयोरिव मृद्घटयोः भेदेन अनुपलम्भात् । (सि.चिं. 67–68)

**आरम्भणाधिकरणम्**—(2-1-6)

1. तदनन्यत्वमारम्भणशब्दादिभ्यः । 2 भावे चोपलब्धेः । 3. सत्त्वाच्चापरस्य । 4. असद्व्यपदेशान्नेति चेन्न ; धर्मान्तरेण ; वाक्यशेषात्; युक्तेः शब्दान्तराच्च। 5. पटवच्च । 6. यथा च प्राणादिः इति षट्सूत्रात्मकमिदमधिकरणम् ।

अस्मिन् अधिकरणे बुद्धिशब्दान्तरादिभिः कार्यकारणयोरनन्वयात् ब्रह्मणोऽन्यज्जगदित्याशंक्य, वाचारम्भणमित्यादिभिः कार्यकारणयोरनन्यत्वप्रतिपादनात्, बुद्धिशब्दान्तरादीनाम् अवस्थान्तरपरत्वेनोपपत्तेश्च ब्रह्मणोऽनन्यज्जगदित्युक्तम् ।

बुद्ध्याकाराभिधानव्यवहृतिगणनैर्भेदकैः कार्यहेत्वोः
एकत्वं नैव सिध्येत् इति तु न चतुरं कारकानर्थता च ।
सद्ब्रह्मात्मादिशब्दैरभिहितमपृथग्येन शब्दादिभेदो
द्रव्यावस्थावलम्बी तत इह न भवेत् कारकानर्थता च ॥ (न्या.क.सं. 2-5)

**आरम्भवादनिरासः**—कारणे अविद्यमानं कार्यमारभ्यत इति मतनिरासः ।

'मृदा घटो जायते' इति प्रयोगात कार्यकारणयोरत्यन्तभेदः तथा हि— 'तन्तुरयं पटोऽयं' इति विलक्षणबुद्धिबोध्यत्वात्, तन्तुपटादिशब्दभेदात्, रज्जुनिर्माणावरणादिकार्यभेदात्, पूर्वापरकालभेदात्, आकृतिभेदात्, परिमाणभेदात्, तन्तवस्सन्ति पटो नास्तीति भावाभावान्वयात्, 'प्रकृतिर्नित्या महदादिरनित्य' इति नित्यत्वानित्यत्वान्वयात्, बहुत्वैकत्वादिसङ्ख्याभेदात्, सत्कार्यवादे कारणदशायामपि कार्यस्य सत्त्वेन दण्डचक्रादिकारकव्यापारवैफल्यापाताच्च कारणद्रव्यात् कार्यद्रव्यस्यान्यत्वावश्यम्भावः इत्यत्राह—

कार्योपादानभेदे न कथमधिकतो गौरवादेस्स्वकार्यं
नान्यत्वं नामसंख्याव्यवहृतिधिषणाकारकालादिभेदैः ।
द्रव्याभेदेऽप्यवस्थान्तरत इह तु ते पत्रताटङ्कवत्स्युः
नो चेदंशांशिनोस्स्यात्प्रतिहतिरुभयोः स्पर्शवत्त्वाविशेषात् ॥ (त.मु.20)

अनन्यथासिद्धभेदकभूम्ना भेदसिद्धौ गुरुत्वान्तरकार्यादर्शनं कथंचिदन्यतरप्रतिबन्धेन नेयमित्यभिप्रायेण शङ्कमानं प्रत्याह—**नान्यत्वमिति** । यद्यपि नामभेदाभेदावर्थभेदाभेदयोरप्रयोजकौ, तथापि पर्यायातिरिक्तो विशेषणविशेष्यभावानर्हो वाचकभेद

इह नामभेदः। स च सिंहव्याघ्रशब्दवत् स्ववाच्यं भिन्द्यात्। संख्याभेदोऽप्येकस्यैव द्वितीयादियोगाद्यद्यपि स्यात्, तथाऽपि नैवमत्र; बहवस्तन्तवः, एकः पट इति विभजनात्। व्यवहृतिरिहार्थक्रियासिद्ध्यर्थो व्यापारः। पटाद्यर्थं तन्त्वादय उपादीयन्ते, पटादयस्त्वाच्छादनाद्यर्थम्। न च तन्त्वादिमात्रे पटादिधीः, पटादिषु वा तन्त्वादिधीरिति धिषणाभेदः। आकारभेदश्च व्यवस्थिताश्रयो वृत्तचतुरश्रत्वादिः। पूर्वकालीनास्तन्त्वादयः, पटादयस्तु पश्चाद्भाविन इत्येवंविध इह कालभेदः। आदिशब्देन कारणभेदादिसंग्रहः।

अंशुप्रभृतयस्तन्त्वादीनां पटादीनां तु तन्त्वादय इति नियतोऽत्र कारणभेदः। कार्यभेदश्च एवं नियत एव। कारणस्यैव च कार्यत्वे कारकव्यापारवैयर्थ्यं स्यादिति भेदहेतवः। एषामन्यथासिद्धिमाह—

**द्रव्याभेदेऽपीति**। तु शब्दोऽवधारणे। उपादानोपादेयतयावस्थाद्वयवति द्रव्ये घटपटवद्भेदं साधयितुं न शक्नुवन्तीत्यर्थः। अत्र दुस्तरप्रतिबन्द्यभिप्रायेण निदर्शयति—**पत्रताटङ्कवदिति**। पत्रस्य हि कुण्डलितस्य नियतं नामान्तरं दृष्टम्। सफलश्चावस्थान्तरेण कारकव्यापारः, न ह्यत्रावयव्यन्तरोत्पत्तिः। आकुञ्चन-प्रसारण-पद्मसंकोचविकासादिष्वपि तत्कल्पनाप्रसङ्गात्। न चैकेनावयवेनावयव्यारम्भः, असमवायिकारणासंभवात्। अवयवावयवसंयोगस्तत्रासमवायिकारणमिति चेन्न; तस्यान्यार्थत्वात्। अन्यथा अंशूनां तन्तुवत् पटाश्रयत्वमपि स्यात्। न च तद्युक्तम्; आरब्धकार्यैरवयवैस्तदैवावयव्यन्तरारम्भानभ्युपगमात्। तत्र हि सप्रतिघत्वविरोधाद्बिभेषि। एवं संप्रतिपन्नावस्थाभेदमात्रानादरेण द्रव्यान्तरकल्पनेऽपि तमेव विरोधं प्रसञ्जयति—**नो चेदिति**। अंशांशिनोः—अवयवावयविनोरित्यर्थः।

उक्तप्रसङ्गे तदभिमतमेव हेतुमाह—**उभयोरिति**। द्वयोर्द्रव्ययोरन्यतरस्य वा स्पर्शहीनत्वे मिथः प्रतिरोधो नास्ति। इह तु न तथेत्यभिप्रायेणोभयोरित्युक्तम्। अवयवावयविनोरेकत्र वृत्तिर्नास्तीति चेत्, समवायिदेशैक्याभावेऽपि संयोगिदेशैक्यमङ्गीकरोषि, तत्र कथं तन्त्ववष्टब्धनभःप्रदेशे पटसंयोगः, माभूदिति चेत् मूर्तामूर्तसंयोगविलोपप्रसङ्गः। मेरुमन्दरादीनामप्यविभक्ताकाशप्रदेशवृत्तावविरोधः स्यात्;

नीरक्षीरादिमेलने का वार्ता ? हन्त ! स्वसिद्धान्तं प्रस्मृत्य पृच्छसि। एतेन भूमावुन्मज्जति, निमज्यतीत्यादिसिद्धनिदर्शनमपि निहतम्। तस्मादवयवावयविव्यतिरिक्तविषय एव सप्रतिघत्वविरोधव्यवस्थापनमपि निर्मूलमिति ॥ (स.सि.)

एवमेव—अभिव्यक्तिवादिनः खलु साङ्ख्याः कार्यकारणयोरत्यन्तमभेदेन कार्यं कारणतत्त्वेन सुनिरूपमाहुः। आर्हताः कौमारिलाः जरदौपनिषदाः भर्तृप्रपञ्चादयः नव्यौपनिषदाः भास्कर-यादवप्रकाशादयश्च तत्त्वं तदन्यत्वं च समुच्चित्य प्रतीतिबलेन विरोधं परित्यज्य भिन्नाभिन्नं कार्यस्वरूपं निरूपयन्ति। सर्वत्र तत्र विरोधमभ्युपगम्य सौगताः कार्यकारणं सर्वं निरभिलप्यं निस्स्वभावमिति च निरुपाधिकेऽभावे परिशेषयन्ति ॥

एतत्सकलमतकटाक्षेण सर्वत्र विरोधमभ्युपगम्य कारणीभूतब्रह्मापेक्षया तत्त्व-तदन्यत्वाभ्यां दुर्निरूपमित्यभ्यासेन शांकरसूत्रभाष्ये भाषितम् ॥ (द.उ. 122)

सिद्धान्ते तु 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यारम्भणाधिकरणन्यायेन उपादानोपादेययोरभेद एव सूक्ष्मचिदचिद्विशिष्टात् ब्रह्मणः स्थूलचिदचिद्विशिष्टस्यैवोत्पत्तेः विशिष्टं कारणम्, विशिष्टमेव कार्यमिति निर्णयात् परिणामवाद एव सम्मतः। ब्रह्मणः स्वरूपपरिणामस्तु नाङ्गीकृतः; अपि तु स्वशरीरभूताचेतनांशे स्वरूपपरिणामः चेतनांशे तु तत्स्वरूपस्य नित्यतया, धर्मभूतज्ञानसङ्कोचविकासात्मकपरिणाम एवेति विवेकः।

न चैवं युवत्वावस्थायुक्तशरीरविशिष्टमात्मानं प्रति बालत्वावस्थायुक्त शरीरद्वारकं देवदत्तादेः उपादानत्वं स्यादिति वाच्यम्, इष्टत्वात्; तत्रापि विशिष्टपरिणामानपायात्। यदुक्तं—'मृदो घटो जायते' इत्यादिना भेद एवेति; अत्रोच्यते। मृदः अपादानत्वेन 'जनिकर्तुः प्रकृतिः' (पा.सू. 1-4-30) इत्यनेनोपादानस्यैवापादानसंज्ञायां पञ्चमी सूपपादा। एतदेवाभिप्रेत्य 'ब्रह्मणः प्रजा प्रजायन्ते' इत्येवोदाहारि वृत्तिकृता।

'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यत्र ब्रह्मशब्देन मायोपहितमीश्वरचैतन्यमेव विवक्षितम्; तद्धि सर्वकार्योपादनमित्यद्वैतिनः।

विशिष्टाद्वैतिनस्तु सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव उपादानमित्याहुः । अतः पञ्चमी-निर्देशमात्रेण द्रव्यभेदो दुस्साध एव । जनिधातुप्रयोगे कस्मादित्येवावध्याकांक्षा स्वरसा हि । अन्यत्र तु 'मृदेव घटः' इत्येव हि प्रयोगः दरीदृश्यते । तथा च आरम्भवादवत् द्रव्यभेदो नास्त्येव, सांख्यवत् अवस्थानामपि । अभेदो न स्वीक्रियते ।

परन्तु सूक्ष्म-स्थूलभेदेनावस्थानां भेदः, तथैव अवस्थायाः, द्रव्यस्य चात्यन्तभेद एव अवस्थाश्रयद्रव्यन्त्वैकमेव । अत एव 'तदभिन्नत्वमारम्भणशब्दादिभ्यः' इत्यनुक्त्वा 'तदनन्यत्व'मित्येव सूत्रयामास । 'परिणामात्' इति सूत्रानुसारेण तु परिणामवाद एव राद्धान्तितः ॥

**आराग्रमात्रः**—सूक्ष्मपरिमाणविशिष्टः (आत्मा) ।

['प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (पा.सू. 5-2-37) इति प्रमाणार्थकः मात्रच् प्रत्ययः ।]

बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः । (श्वे.उ. 5-8)

**बुद्धेः**—अन्तःकरणस्य, सत्त्वरजस्तमोलक्षणगुणकारितेन आत्मधर्मभूतनानाविधार्थ-विषयकाध्यवसायेन युक्तः तत्कार्येण तत्तत्फलसंकल्पेन, 'आढ्योऽभिजनवानस्मि' इत्यहंकारेण युक्तस्सन् आत्मवत् स्वप्रकाशः, 'अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इत्युक्तरीत्या अंगुष्ठपरिमाणः शास्त्रेषु दृष्टः । ततोऽपि **अवरः**—हीनपरिमाणः **आराग्रमात्र** इत्यपि **दृष्टः**—शास्त्रेषु दृष्ट इत्यर्थः । (रं.भा.)

आरा—चर्मसूची । तदग्रमात्रोऽपीत्यन्वयः । नरहृदयस्य अंगुष्ठमात्रतया तत्र स्थितिदशायां जीवस्यातथात्वसंभवेऽपि मशकपिपीलिकाद्यणुदेहगतस्य आराग्रमात्रत्वादिक-मप्येष्टव्यं हीति भावः । तर्हि यथायथं संकोचविकासभावितबहुविधपरिमाण एवायमस्तु इति चेन्न ; तथासति देहसमानपरिमाणवादिजैनमतावतारात् । (टी.)

**आरात्-सन्निपत्योपकारके**—

क्रियारूपाणि च द्विविधानि—गुणकर्माणि प्रधानकर्माणि च । एतान्येव सन्नि-पत्योपकारकाणि आरादुपकारकाणि चोच्यन्ते ।

कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम् । यथाऽवघात-प्रोक्षणादि । तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं चेति । तत्र दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशादि । तद्धि द्रव्यत्यागांशेनैव अदृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् । यथा प्रयाजादि । आरादुपकारकं च परमापूर्वोत्पत्तवेवोपयुज्यते ; सन्निपत्योपकारकं तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते । (अ. सं. 11)

एवञ्च सिद्धान्ते विद्यास्वरूपनिष्पादकत्वेनैव स्वीकारात् कर्मणि संनिपत्योपकार-काण्येव । विद्या चाप्रयाणादनुवर्तनीया ॥

**आराधनम्**—परिपूर्णशेषवृत्तिः ।

रागाद्यपेतं हृदयं वागदुष्टानृतादिना ।
हिंसादिरहितः कायः केशवाराधनं त्रयम् ॥ इति हि स्मर्यते ॥

परमपुरुषाराधनरूपता सर्वेषां कर्मणां स्मर्यते,

यतः प्रवृत्तिर्भूतानां येन सर्वमिततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ।
ब्रह्मलोकमवाप्नोति न चेहाऽवर्तते पुनः ॥

'यैः स्वकर्मपरैर्नाथ नरैराराधितो भवान् ।
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये' ॥ इति ।

न चैहिकामुष्मिकसांसारिकफलसाधनकर्मप्रतिपादनेन एतासां सावकाशत्वम् ; यतः तेषामपि कर्मणां परमपुरुषाराधनत्वमेव स्वरूपम् । यथोक्तम्,

'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते' ॥ इति ; तथा

'यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्' इति । (श्री. भा. 2-1-1)

अनभिसंहितफलकर्मणां हि भगवधारादनरूपता ॥ (श्रु. प्र.)

**आरामः**—भोगोपकरणम् ।

[ आसमन्तात् रमते इति आङ्पूर्वकरमधातोः 'हलश्च' (पा.सू. 3-3-121) इत्यनेन करणे घञ् । ]

'आराममस्य पश्यन्ति न तं पश्यति कश्चन'। (बृ. उ. 6-3-14)

अस्य जीवस्य **आरामं** भोगोपकरणभूतमुद्यानादिकं देहेन्द्रियादिकञ्च सर्वेऽपि पश्यन्ति । तं देहेन्द्रियादिविविक्तमन्तर्बहिस्सञ्चरन्तमपि जीवं **कश्चन** न पश्यतीति लोकं प्रत्यनुक्रोशं दर्शयति श्रुतिः ॥ (रं. भा.)

'*योऽन्तः सुखोऽन्तराराम:*', '*अघायुरिन्द्रियाराम:*' इति ह्युच्यते ।

**आरोपः**—तदभाववति तत्प्रकारकं ज्ञानम् ।

[ आरोप्यते अनेन इति करणे घञ् यथा पुरोवर्तिन्येवारजते शुक्त्यादौ दोषादिवशात् इदं रजतमिति ज्ञानम् ।]

प्रत्यक्षं हि देहे छिद्यमाने, दह्यमाने वाऽहं छिद्ये दह्य इति च मिथ्याभिमानो दृष्टः । तथा बाह्यांतरेष्वपि पुत्रमित्रादिषु सन्तप्यमानेष्वहमेव सन्तप्य इत्यध्यारोपो दृष्टः । (शं.भा. 4-1-2)

पुत्रदारादिष्वात्माभिमानो गौणः । यथा स्वदुःखेन दुःखी, यथा स्वसुखेन सुखी, तथा पुत्रादिगतेनापीति सोऽयं गुणः । न त्वेकत्वाभिमानः, भेदस्यानुभवसिद्धत्वात् । तस्माद्गौर्वाहीक इतिवद्गौणः, देहेन्द्रियादिषु तु अभेदानुभवान्न गौण आत्माभिमानः; किन्तु शुक्तौ रजतज्ञानवन्मिथ्या, तदेवं द्विविधोऽयमात्माभिमानो लोकयात्रां वहति ॥ (भामती. 1-1-4)

**आरोपितत्वम्**—अपरमार्थत्वम् ।

तच्च परमार्थस्यैव रजतत्वादेः स्वात्यन्ताभाववति प्रतीयमानत्वम् । तदेव मिथ्यात्वमपि । अत एव तस्यात्रासत्त्वं तत्तन्निष्ठात्यन्ताभावप्रतियोगित्वरूपं यथालोकमभ्युपगम्यते ।

अत्र रजतादिकं व्यवहारयोग्यं विवक्षितम् । नातो रजतांशमादायातिशङ्काया-अवकाशः । ततश्च सत्त्वं असत्त्वमुभयमपि वस्तुधर्मः । ताभ्यामेव सर्वव्यवहारोपपत्तेः पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन सत्तात्रैविध्यकल्पनमप्रकृतम् ॥ (द.उ. 199)

सिद्धान्ते यथार्थख्यात्यङ्गीकारात् रजतस्यारोपितत्वं कथमिति संशीतिरनेनापास्ता । त्रिवृत्करणप्रक्रियया रजतांशस्य शुक्तौ सद्भावेपि आभरणयोग्यरजतस्य तत्राभावेन प्रवृत्तेः बाधिततया अपरमार्थत्वव्यवहारः ॥

**आरोपे हि सति निमित्तानुसरणम् ; न तु निमित्तमस्तीत्यारोपः**—न्यायविशेषः ।

आरोपे अनुभवसिद्धे हि तदनुगुणनिमित्तमाश्रीयते न तु निमित्तमस्तीत्यारोपः आपाद्यते ।

[उपादानोपादेययोः अभेदवादिनां मते 'मृदः घटः जायते' इतिवत् 'बालो युवा जायते इत्यत्र बालात् युवा जायते' इति प्रयोगम् आपाद्य समाधत्ते ॥]

'यस्याव्यक्तं शरीरं, यस्याक्षरं शरीरम्' इति चाविभक्तावस्थयोः चिदचितोः ब्रह्मशरीरत्वं. विशिष्टस्य भाव्यवस्थालक्षणोपादेयत्वोपयोगि प्रागवस्थासम्पत्त्यर्थमभिधीयते । तत्र च विशेषणीभूतस्याचेतनस्य सूक्ष्मावस्थाप्रहाणेन स्थूलावस्थापत्तिरूपस्वरूपान्यथा-भावेन कार्यत्वम । तथाविधस्य चेतनस्य तु नित्यस्यनिरवयवस्य स्वरूपान्यथाभावाभावात् स्वासाधारणस्वरूपनिरूपकधर्मभूतज्ञानद्वारकान्यथाभावेन कार्यत्वम् । सङ्कुचितज्ञानस्य सतः तस्य तद्विकासापत्तिरेव कार्यत्वम् । 'मृद् घटो जातः, अज्ञो अभिज्ञो जातः' इति तुल्यव्यवहारात् ।

न च परम्परया तदाश्रयणे प्रागुक्तातिप्रसङ्गः ; अपृथक्सिद्धि-तदभावाभ्यां वैलक्षण्यात् । अपृथक्सिद्धशरीरद्वारकं हि वेदनादिकं शरीरिणि संक्रामति, न पृथक्सिद्धदण्डकुण्डलादिद्वारकमिति सर्वजनीनमेतत् । अत एव शरीरभूतचिदचिद्-द्वारकं परमात्मनोऽप्युपादानत्वं मुख्यमेव। अस्ति च तत्राप्यवस्थाद्वयं सूक्ष्मचिदचिन्नियमनं स्थूलचिदचिन्नियमनं चेति । अतः स्वासाधारणधर्मभूतनियमनरूपस्वभावान्यथाभावः परमात्मन्यपि सुलभः । तथा च—यथा 'देवदत्तो यजते ददाति' इत्यादौ शरीरद्वारकं

कायशोषणादिकं तदवयवद्वारकं च मन्त्रोच्चारणादिकमद्वारकं च सङ्कल्पादिकमादाय देवदत्तादेः यागकर्तृत्वं तत्फलभोक्तृत्वं च मुख्यम् । यथा वा ग्राहकग्रहणेन सन्निधि-समाम्नातेषु वस्तुषु परमापूर्वशेषतयावगतेषु यागव्रीह्यादेरद्वारकशेषत्वं प्रोक्षणादेः सद्वारक-शेषत्वं मुख्यमेवावगम्यते । तथा 'बहु स्याम्' इति ग्राहकग्रहणेन सर्वास्ववस्थासु परमात्मीयतयावगतासु स्वरूपान्यथाभाव-ज्ञानसङ्कोचादिरूपसद्वारकावस्थायाः तन्नियमन-रूपाद्वारकावस्थायाश्च परमात्मीयत्वं मुख्यमेव ।

न चैवं युवत्वावस्थायुक्तशरीरविशिष्टमात्मानं प्रति बालत्वावस्थायुक्तशरीरद्वारकं देवदत्तादेः उपादानत्वं स्यादिति वाच्यम् ; इष्टत्वात्, तत्रापि विशिष्टपरिणामानपायात् ।

न चैवं 'बालाद्युवा जायते' इति प्रयोगापत्तिः 'मृदो घटो जात' इति प्रयोगाव्यतिरेकात् । अपादानपञ्चम्यप्रयोगस्तु तदुत्तरावस्थोत्पत्त्युपयोगि प्रागवस्थाव-द्रव्यतत्परिणमयित्रात्मगतव्यापारविशेष-कालविशेषापरिज्ञानात् । सत्यपि निमित्ते पुमन्त-दैवतपद्मादिशब्दानाम् अमरकमलादाविव चक्र-तेर-पेचादीनामिव चाप्रयोगोपपत्तेः । आरोपे हि सति निमित्तानुसरणं ; न तु निमित्तमस्तीत्यारोपः । (सि.चिं. 35-36)

यथा वस्तुनि—शुक्त्यादौ हि रजतत्वाभावेऽपि आरोपः अनुभवसिद्धः इति तदर्थं दोषादिकं निमित्तमाश्रीयते । तदेवनिमित्तीकृत्य घटादावपि आरोपःस्यादिति न केनापि आपाद्यते हि । तद्वत् निमित्तसद्भावेऽपि प्रयोगः न आपादनीयः ।

'तेर, पेच' इत्यादि प्रयोगाणां शास्त्रदृष्ट्या साधुत्वेऽपि शिष्टव्यवहाराभावः सर्वजनीनः । तद्वदेव पुलिङ्ग पद्मादिशब्दस्यापि । एषु स्थलेषु तत्तत्प्रयोगनिमित्त-सद्भावेऽपि न केनापि तादृश प्रयोगापादनं क्रियते । तद्वदेव बाल्यरूपनिमित्त-सद्भावेऽपि अपादानत्वविवक्षया तथा प्रयोगःनैव आपादनीयः इति भावः । प्रकृते आरोपशब्दः प्रयोगापादनपरः ॥

**आर्जवम्**—आत्मज्ञानसाधनभूतगुणविशेषः ।

[ऋजोः कर्मेत्यर्थे 'हायनान्तयुवादिभ्योऽण्' इत्यनेन अणि, ओर्गुण इत्यनेन गुणे आदिवृद्धिश्च ।]

'अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् । (गी. 13-7)

परान् प्रति वाङ्मनःकायप्रवृत्तीनामेकरूपता । (गी.भा.)

'देवद्विजगुरुप्राज्ञपूजनं शौचम् आर्जवम्' । (गी. 17-14)

यथामनः शारीरवृत्तम् । (गी. भा.)

आर्जवस्य शारीरतपस्त्वेन व्यपदेशार्थं वाङ्मनः कायानामैकरूप्यं शरीरप्रधानतया व्यपदिशति यथामनः शारीरवृत्तमिति । (ता.चं)

**आर्तः**—1. चतुर्विधभक्तेषु अन्यतमः ।

'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' ॥ (गी. 7-16)

**आर्तः**—प्रतिष्ठाहीनः भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः । (गी.भा.)

आर्तशब्दोऽत्र आर्तिमूलपूर्वस्थितिशैथिल्यपर इत्यभिप्रायेणाह—प्रतिष्ठाहीन इति । आर्तस्य हि परभजनमार्तिनिवृत्त्यर्थमेवेति अभिप्रायेणाह भ्रष्टैश्वर्यः । पुनस्तत्प्राप्तिकाम इति ॥ (ता.चं)

2. प्रपन्नविशेषः ।

यस्तु प्रारब्धदेहेऽपि शोचत्यार्तः स उच्यते ।

आर्तदृप्तविभागेन प्रपत्तिरियमुच्यते ॥ (प्र पा. 30-31)

आर्तदृप्तविभागस्तु श्रीमद्रामायणोदितः—

'आर्तो वा यदि वा दृप्तः परेषां शरणागतः ।

अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥

संसारस्थितेरतिदुस्सहत्वात्प्रपत्त्युत्तरक्षण एव मोक्षकामः आर्तः ॥ (य.दी. 77)

**आर्तप्रपत्तेः आत्महिंसात्वाभावः**—आर्तशरणागतेः दोषाभावः ।

प्रायश्चित्तविशेषेषु सर्वस्वारादिकर्मसु ।
नात्महिंसन दोषोऽस्ति तथार्तशरणागतौ ॥
दृप्तस्य तु यथाशास्त्रं चिरं जीवितुमिच्छतः ।
प्राणरक्षणशास्त्रार्थलंघनत्वपराधनम् ॥ (र.त्र.सा. III-637, 638)

आर्तप्रपत्त्या शरीरयागश्चेत् हिंसात्वं स्यादिति शंकायाम् अभिधीयते—

यथा प्रायश्चित्तविशेषेषु भृगुपतनादिमरणान्तप्रायश्चित्तेषु सर्वस्वाराव्ययागादिषु च आत्महिंसादोषो नास्ति । तथा आर्तप्रपत्तावपि नात्महिंसनदोषः । दृप्तस्य तु प्राणरक्षणशास्त्रार्थ लंघनम्–चिकित्साद्यतिक्रमादिकम् अपराध इत्यर्थः ।

ननु कलियुगे तीर्थप्रवेशादीनां निषेधवत् आर्तप्रपत्तेरपि अस्मिन्युगे निषेधः किन्नस्यात् इत्यत्राह—योगविशेषेण देहन्यासवत् आर्त्यतिशयेन देहत्यागेऽपि युगनियमः नास्त्येव इति भावः

योगिनां देहन्यासः आत्मरक्षणपर्यवसानात् यथा न दोषः तथा आर्तप्रपन्नस्य देहन्यासः आत्मरक्षणपर्यवसायितया न हिंसात्वदोषः । (सा.स्वा.)

**आर्त्विजीनः**—1. यजमानः ।

'यज्ञर्त्विभ्यां घखञौ' (पा. सू. 5-1-71) इति सूत्रेण, ऋत्विजम् अर्हति' इत्यर्थे खञ्प्रत्ययः ।

2. ऋत्विक् । 'यज्ञर्त्विभ्यां तत्कर्माहतीत्युपसंख्यानम्' इति वार्तिकेन आर्त्विजीनः ऋत्विक्कर्मार्हः ।

**आर्त्विज्यम्**—ऋत्विजः कर्मः ।

भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम् ; भगवतो वा अहमवित्याऽन्यानवृषि । (छां.उ. 1-11-2)

भगवाँस्त्वेव मे सर्वैरार्त्विज्यैः इति । (छां.उ. 1-11-3)

'आर्त्विज्यमिति औडुलोमिः' । (ब्र.सू. 3-4-45)
ऋत्विजः कर्म-उद्गीथाद्युपासनम् । (श्री.भा.)
गुणवचनब्राह्मणादिभ्यःकर्मणि च कर्मणिष्यञ् ॥ (टी.)

**आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रियते**—(ब्र.सू. 3-4-45)

स्वाम्यधिकरणे द्वितीयं सूत्रम् । उद्गीथाद्युपासनं आर्त्विज्यम्—ऋत्विजः कर्म, इत्यौडुलोमिराचार्यो मन्यते कुतः?: तस्मै हि प्रयोजनाय ऋत्विक् परीक्रियते । फलसाधनभूतस्य सांगस्य क्रतोः उपादानायेत्यर्थः ।

कर्मविधिषु 'ऋत्विजो वृणीते' 'ऋत्विग्भ्यो दक्षिणां ददाति' इति ऋत्विक्कर्तृ क्रत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्मऋत्विग्भिरनुष्ठेयमित्यवगम्यते । यद्यप्युद्गीथाद्युपासनं पुरुषार्थः ; तथापि क्रत्वधिकृताधिकारत्वात् क्रतोश्च साङ्गस्य ऋत्विक्कर्तृकत्वात् ऋत्विक्कर्तृकमेवेति सिद्धान्तः । इतरोपासनेषु दहरादिषु ऋत्विक्कर्तृकत्वाश्रवणात् 'शास्त्रफलं प्रयोक्तरि' इति न्यायाच्च फलिकर्तृकत्वमेव ।

ऋत्विग्भ्यः कार्यमित्येव हि औडुलोमिमुनेर्मतम् ।
सांगानुष्ठितये चैव तेषां वरणमिष्यते ॥ (ब्र.प.मा. 463)

**आर्थिकगुणनिषेधनिरासः**—अर्थात् ब्रह्मणि गुणः निषिध्यते इति पक्ष निरसनम् ।

सत्यं ज्ञानमित्यार्थगुणनिषेधः । (सर्वं वाक्यं सावधारणमिति ज्ञानस्वरूपमेव इति प्रतीतेः) ज्ञानमात्रस्य संकल्पाद्याश्रयत्वायोगात्, ज्ञातुरेव हि तदाश्रयत्वम् । श्रौतनिषेधश्च । 'नेति नेति' इत्यादिना प्रतिषध्यमानत्वेन गुणानां मिथ्यात्वावगतेः। (इति पूर्वपक्षिणामाशयः ।)

अत्रोच्यते—ज्ञानस्य सर्वज्ञत्वाद्ययोगः किं व्याप्त्याऽभिधीयते? तर्हि ज्ञानं कस्यचिद्गुणभूतं दृष्टमिति ब्रह्मापि कस्यचित् गुणभूतं स्यात् । प्राधान्येन श्रुतिप्रतिपन्नत्वात् न गुणभूतम् इति चेत् । तर्हि श्रुतिप्रतिपन्नत्वादेव सर्वज्ञत्वादयोऽपि स्वीक्रियन्ताम् । व्याप्तिविरोधोऽपि नास्ति, गुणभूतज्ञानस्यैव ज्ञानाद्यनाश्रयत्वदर्शनात् । अतः सर्वमुपपन्नमितिभावः । (श्रु.प्र.)

'सत्यं ज्ञानमनन्तम्' इत्यादिवाक्यं ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति । नान्यत् वाक्यान्तरावगतं सर्वज्ञत्वसत्यसङ्कल्पत्वादिगुणजातं निषेधति। ज्ञानमात्रमित्यनेन जडस्वरूपतां व्यावर्तयतीति भावः ॥

**आर्थिकीव्यवस्था**—अर्थात् सिद्धः निर्णयः ।

अर्थादागता इत्यर्थे शैषिकः ठक्—'ठगायस्थानेभ्यः' (पा.सू. 4–3–75) इत्यनेन ।

द्वयोः प्रसक्तौ अन्यतरकोटिव्यवस्थया कोट्यन्तरस्य परिशेषात् सिद्धेः आर्थिकी-व्यवस्था इत्युच्यते ।

यथा स्वरितस्थले 'तस्यादित उदात्तमर्द्धह्रस्वम्' (पा सू. 1-2-32) इति सूत्रेण आदितः अर्धम् उदात्तम् इति व्यवस्थायां उत्तरार्धस्य परिशेषात् (अर्थात्) अपरभागस्य अनुदात्तता व्यवस्थाप्यते।.

तथा सिद्धान्तेऽपि निर्विशेष-सविशेषयोर्मध्ये सविशेषमेव सर्वप्रमाणारूढम् इति साधनेन निर्विशेषं गगनकुसुमायितम् इति अर्थात् सिध्यति ॥

**आर्थीभावना**—यजेतेत्यादौ आख्यातत्वेनोच्यमानः पुरुषप्रयत्नः ।

भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः। सा द्विविधा। शाब्दीभावना, आर्थी भावना चेति। तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना। सा च लिङंशेनोच्यते ।

प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थीभावना । सा चाख्यातत्वांशेनोच्यते। आख्यातसामान्यस्य व्यापारवाचित्वात् ।

साप्यंशत्रयमपेक्षते साध्यं साधनमितिकर्तव्यतां च किं भावयेत्केन भावयेत्कथं भावयेदिति। तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति। साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति। इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यता-त्वेनान्वेति ॥ (अ.सं. 2-3)

**आर्यः**—विद्वान् ।

'अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन' ॥ (गी. 2-2)

अतत्त्वेभ्यः कुतर्केभ्यः आरात्–दूरात् याता बुद्धिः येषां ते आर्याः—विद्वांसः ॥ (ता. चं.)

आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोः अविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति । अत एव आरात्—अतत्त्वेभ्यो दूरात्—याता मतिः येषां इत्यार्यशब्दार्थमुक्त्वा

'अभियुक्ततरा ये ये बहुशास्त्रार्थवेदिनः ।

ते ते यत्र प्रयुञ्जीरन् ससोऽर्थस्तत्त्वतो भवेत्' ॥ इति च आर्य–शब्दार्थरूपेण प्रतिपादितम् । (मी. को.)

1. सत्कुलप्रसूतः 2. पूज्यः 3. श्रेष्ठः 4. धर्मानुष्ठानतत्परः 5. धार्मिकः 6. स्वामी 7. ब्राह्मणः (सं. अ.) त्रैवर्णिकः ! (वि. को)

**आर्यावर्तः**—चातुर्वर्ण्यनिवासस्थानभूतो देशः ।

(आर्या आ समन्तात् वर्तन्तेऽत्र । हलश्चेत्यनेनाधिकरणे घञ् प्रत्ययः ।)

'आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः' ॥ इति मनुः ।

'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः' ॥ इति चामरः ॥

**आर्षम्**—भगवत्प्रसादलब्धयोगिप्रत्यक्षं दिव्यम् ।

[ऋषेरागतमित्यर्थेऽण् प्रत्ययः]

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।

यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ इति मनुः ॥

**आर्षेयः**—गोत्रप्रवर्तकः ऋषिः ।

दर्शपूर्णमासयोः आर्षेयवरणं विहितम् 'त्रीन् वृणीते' इत्यार्षेयत्रयवरणम् । अत एव पञ्चार्षेयः त्र्यार्षेयः (आर्षप्रयोगः) इत्यादिः व्यपदिश्यते ।

**आलम्बनम्**—ध्यानविषयः प्रणवः शुभाश्रयश्च ।

[ आङ्पूर्वकलबिधातोः कर्मणि बाहुलकात् ल्युट् ]

‘ एतदालम्बनं श्रेष्ठं एतदालम्बनं परम् ’ (क.उ. 2-17)

एतदोंकाररूपमालम्बनं श्रेष्ठम्–ध्यानादेरिति शेषः । अत एव **एतदालम्बनं परम्** एतदालम्बनकं ध्यानादि सर्वोत्कृष्टमित्यर्थः । (रं.भा.)

[ ‘ ओमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत ’ इति ब्रह्मप्राप्तिसाधनध्यानालम्बनत्वसिद्धये ब्रह्मबोधकप्रणवचिन्तनमादौ कथ्यते ]

‘ आरम्भणसंशीलनं पुनः पुनरभ्यासः ’ इति निर्वचनञ्च स्मार्तम् उदाहृतं (द्रमिड) भाष्यकारेण ‘ सदा तद्भावभावित ’ इति । (श्री. भा. I. 64)

**आरम्भणम्**— आलम्बम्–शुभाश्रयः, तस्य संशीलनम् । कथमेतत् साधिनम् ? साध्यं हीदम्, न ‘ शुचौ देशे प्रतिष्ठाप्य ’ इत्याद्युक्तदेशकालविशेषाभ्यसनीय योगशब्दवाच्या ध्रुवानुस्मृतिर्हि साध्या । इदन्तुयोगकालकर्तव्यध्यानानुग्राहकं सदा संशीलनम् । ‘ सदा तद्भाव भावितः ’ इति हि वक्ष्यति । सदा भगवत्संशीलनाभावे योगकालेषु कालान्तरसंशीलितं विषयान्तरं बुद्धिस्थं स्यात् । अतो न साध्याविशिष्टत्वं आरम्भणसंशीलनस्य । (श्रु. प्र.)

उपपातकयुक्तोऽपि महापातकवानपि ।
यामिन्याः पादमेकं तु ब्रह्मध्यानं समाचरेत् ॥ इति ॥

ततश्च—

परस्मिन्व्यूहाख्ये विभवनिवहेऽर्चावतरणे
तथाऽन्तर्यन्तर्यप्यजहदधिकारादिनियमाः ।
निरुध्य स्वं चित्तं निरवधिमहानन्दजलधौ
निरस्तान्यापेक्षा नियतसफलं कालमखिलम् ॥

एषु च परव्यूहप्रभृतिषु चित्तालम्बनेषु प्रपत्त्येकनिष्ठाः नाथमुनिप्रभृतयः सुलभतमत्वेन परिपूर्णत्वाविशेषाच्च समाहितचित्तानामप्यनुसन्धेयमर्चावतारमेव चेतसश्शुभाश्रयमालम्बनम् आमनन्ति । तत्र यद्यपि शीघ्रसाक्षात्कारहेतुभूतो मन्त्रविशेष उच्छिन्नसम्प्रदाय

इति वृद्धा विदामासुः ; तथापि स्वावगतैः मन्त्रविशेषैः अमन्त्रकं वा यथासम्भवं यथासम्प्रदायं तदनुसन्धानमस्याप्यवर्जनीयमेव ।

'सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रबिम्बयोः' इत्यादिना तस्य पूर्णत्वं सिद्धम् । श्रीवैखानसेऽपि तदनुसन्धानस्यैव मुख्यत्वं प्रतिपादितम, यथोक्तम् क्रियाधिकारे

'मानसी होमपूजा च बेरपूजेति सा त्रिधा' इत्युपक्रम्य,

'यथोपयोगशक्यत्वात्कर्तुं पुष्पादिपूजनम् ।
चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च ॥
प्रीत्या संजायते भक्तिर्भक्तस्य सुलभो हरिः ।
तस्मात्त्रयाणामेतेषां बेरपूजा विशिष्यते' ॥ इति ॥

आह च भगवान् शौनकः—

सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥
तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् ।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥ इति ॥

अतो यत्र क्वचिद्भगवद्रूपे यथाशक्ति निरन्तरानुसन्धानं नाथमुनिप्रभृतिव्रतसिद्धोपायैरपि निवेशनीयम् ।

न चैतन्निरन्तरभगवदनुसन्धानं सनकादिसाध्यमस्मदादिभिर्दुश्शकमिति मत्वो दासितव्यम् । यथारोग्यं भोजनवद्यथाशक्ति तदास्वादस्यापरित्याज्यत्वात् ; उक्तं च श्रीमत्प्रह्लादेन—

"आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ।
पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥ इत्यादि ॥

(पां. र. 162–165)

[शुभत्वम्—हेयनिवर्तकत्वम् , आलम्बनत्वम् आश्रयत्वम् । शुभत्वेसत्यालम्बनत्वं दिव्यमङ्गलविग्रहस्यैवेति बोध्यम् । भगवत्स्वरूपस्य शुभत्वेऽपि, आलम्बनत्वं नास्ति । साधनतया चिन्तनाभावेऽपि फलतया भक्तिः प्रपन्नेनापि कार्येति भावः ।]

2. विषयः । (ज्ञानस्यालम्बनम् ।)

'अधिपतिसहकार्यालंबनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतवः' इति बौद्धाः ।।

**आलम्भः**—1. मरणानुकूलव्यापारः ।

[आङ्पूर्वकलभधातोः भावे घञ् । 'उपसर्गात् खल्घञोः' (पा.सा. 7-1-67) इत्यनेन नुमागमश्च ।।] 'अग्नीषोमीयं पशुमालभेत'

2. स्पर्शः । 'आलम्भः स्पर्श-हिंसयोः' इति च ।।

**आलयविज्ञानम्**—अहमास्पदं विज्ञानम् । (सौगतमते)

'तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् ।
तस्माद्धि चित्तविज्ञानं यन्नीलादिकमुल्लिखेत्' ।। इति ह्युच्यते ।।

**आलस्यम्**—1. कर्तव्यकरणे अनुत्साहः ।

[लसतीति लसः, न लसः अलसः, तस्य भावः इत्यर्थे ष्यञ् ।]

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ।। (गी. 18-39)

इन्द्रियव्यापारमान्द्यम् । इन्द्रियव्यापारमान्द्ये च ज्ञानमान्द्यं भवत्येव । (गी.भा.)

अलसस्यप्रवृत्त्यभावमात्रं दृश्यते, न ज्ञानाभाव इत्यत्राह—**आलस्यमिन्द्रियव्यापारमान्द्यमिति**। ततः किमित्यत्राह—**इन्द्रियेति**। करणव्यापारतारतम्यानुगुणं हि कार्यतारतम्यम् । ज्ञानस्य मान्द्यं चाल्पविषयत्वम् । तच्च विषयान्तरप्रकाशाभावगर्भम् इति भावः ।। (ता. चं.)

**आलोचनम्**—1. बुद्धीन्द्रियाणां संमुग्धवस्तु दर्शनम् । (सांख्यमते)

'रूपादिषु पञ्चानामालोचनमात्रमिष्यते' (सां. का. 28)

इत्युक्तरीत्या सामान्यविशेषशून्यतयेन्द्रियजन्यो निर्विकल्पस्थानीयोन्तःकरणवृत्तिविशेष इत्याहुः ।

2. चाक्षुषज्ञानम् । 3. चिन्तनम् ।

**आलोकाकाशः**—(जैनमते) ऊर्ध्वं प्रदेशविशेषः ।

मुक्तस्य हि पृथिव्या नित्यपतनवत् नित्योर्ध्वगमनं जैनैः उच्यते, आलोकाकाशावधि वा ! तस्य (जैन)मते उभयथापि अपरिमितस्य गमनं न सिध्येत् (इति प्रदूष्य सिद्धान्तसरणिः प्रबोध्यते) निर्मुक्त इति ।

'निर्मुक्तस्त्वन्मते स्यात्कथमपरिमितो नित्यमूर्ध्वं प्रधावन् ।
देहः कश्चित्तदानीमपि यदि नियतःस्यात्तु तन्निघ्नताऽस्य ॥

इच्छातो देहमेकं विशति स परिमित्यर्थमेवेति हास्यं ।
तस्मादास्माकनीत्या परिमितिरिह सा स्थायिनी या विमुक्तौ' ॥ (त.मु 94)

कर्मनियतदेहत्वे परतन्त्रस्य कथं मुक्तत्वमिति भावः । अस्तु घातिकर्मचतुष्टयरहितस्याघातिकर्मचतुष्टयप्रभावात गत्यर्थो देहः, तत्परित्यागक्षणे झटिति परिमाणसिद्ध्यर्थं सकललोकमस्तकस्थायिनं कञ्चिद्दिगम्बरं देहं सर्वे मुक्ताः प्रविशन्ति, पृथग्वा शरीराणि परिगृह्णन्त इति वदन्तमुपालभते—इच्छात इति । न हि मुक्तस्येच्छाभोगौ युष्माभिः (जैनैः) इष्येते, न च स्वच्छन्दव्यापाराः । अतः परिमाणमात्रसिद्ध्यर्थं देहं परिगृह्णातीति निर्मूलकल्पनं निपुणैर्हास्यम् । तर्हि का गतिरित्यत्राह—**तस्मादिति** मुक्तौ काचित्स्वाभाविकी स्वीकार्या ; सैव बद्धदशायामपि स्थिरेति नित्याणुर्जीवः । तथा च सूत्रम्—'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः' इति । उभयमिह जीवस्वरूपं परिमाणं च इति ॥ (स. सि.)

**आवरणम्**—आच्छादनकारणम् (अविद्येति परे)

[आङ्पूर्वकवृञ्धातोः करणे ल्युट् । आव्रियते देहः चैतन्यं वाऽनेन ।]

'अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद्भुवनान्तराले' (वि.पु 6–5–83)

**आवरणम्**—(सिद्धान्ते) प्रकृतिसम्बन्धकर्मवासनादिकम् । तत् सर्वमतीतं येन, स इत्यर्थः । यद्वा सर्वविषयज्ञानावरणं सर्वावरणम् । सर्वविषयज्ञानसङ्कोचमतीत इत्यर्थः ; ज्ञानशक्त्यादिसर्वगुणसङ्कोचकातीत इति वाऽऽर्थः । (श्रु.प्र.1-211)

**आवरणशक्तिः**—अविद्यानिष्ठाशक्तिः (परमते) ।

[ आवृणोतीति (बाहुळकात्) कर्तरि ल्युट् ।]

अविद्याया द्वे शक्ती आवरणशक्तिर्विक्षेपशक्तिश्च । आवरणं नाम यथाऽवस्थित-स्वरुपाप्रतिभासः ॥ (न्या.सि टी. 196)

आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयन-पथपिधायकतया यथा च्छादयतीव तथाऽज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नम् असंसारिणमवलोकयितृबुद्धिपिधायकतया च्छादयतीव तादृशं सामर्थ्यम् । अनयाऽऽवृत-स्यात्मनः कर्तृत्व-भोक्तृत्व-सुखित्व-दुःखित्वादिसंसारसंभावनाऽपि भवति । यथा स्वाज्ञाना-वृतायां रज्ज्वां सर्पत्वसंभावना ॥ (वाच.)

**आवरणसप्तकम्**—ब्रह्माण्डावरणानि ।

अण्डभित्तिः महाजलेन दशगुणाधिकेनावृता ; महाजलमपि दशगुणाधिकेन अग्निनावृतं; स चाग्निः दशगुणाधिकेन वायुना आवृतः, सोऽपि वायुः दशगुणाधिकेन आकाशेन आवृतः, आकाशोऽपि दशगुणाधिकेन अहंकारतत्त्वेन आवृतः ; सोऽप्यहंकारः दशगुणाधिकेन महत्तत्त्वेन आवृतः ; महानपि प्रकृत्या दशगुणाधिकतया आवृतः ; एवं नारिकेलफलवत् एकमपरेण तत्त्वेनावृतम् ॥ (सं–अ.)

**आवर्तः**—संसारः ।

[आवर्तयतीत्यर्थे ' एरच् ' इत्यनेनाच्प्रत्यये णिलोपश्च ]

' एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ।'
(छां.उ. 4–15-6)

**इमं** घोरं **मानवमावर्तं** घटीयन्त्रवत् जननमरणाद्यावर्तकं मनुष्यादिशरीरोप-लक्षितसंसारं **नाऽऽवर्तन्ते**—पुनः न प्रतिपद्यन्ते । (रं–भा.)

1. जलभ्रमणम् 2. प्रलयः । (वि.को )

**आवर्तनः**—(स.ना.230)

संसारघटीयन्त्रपरिवर्तनात् आवर्तनः । (वि.स.भा.)

संसाराख्यघटीयन्त्रे परिवर्तनशीलतः ।
चक्रवच्च विशेषेण आवर्तन इतीरितः ॥ (वि.स.नि )

**आवापोद्वापौ**—आवापः–पदान्तरप्रक्षेपः । उद्वापः –स्थितपदोद्धारः ।

'आवापोद्वापभेदात् प्रतिपदनियता शक्तिरप्यत्र सिध्येत्
भूयोदृष्ट्यादिसाहायकमिह वचसः कार्यपक्षाविशिष्टम् ॥' (अ.सा. 32)

**आवापेति**। अयमर्थः—'पुत्रस्ते जातः' इत्युक्ते मुखविकासः, एवं 'मृतः' इत्युक्ते रोदनादिकं जायते । एवं 'शत्रुर्जातो मृतः' इति चोक्ते रोदनमुखविकासौ स्तः। तस्मादावापोद्वापावेव प्रतिपदव्युत्पत्तौ तन्त्रमिति तन्त्रज्ञाः। तस्मात् पुत्रजातादिशब्दानामत्र यथादर्शनं व्युत्पत्तिरनुसर्तव्या विचक्षणैरिति । ननु कथं-कतिपयव्यवहारदर्शिनो व्युत्पद्यन्ते बालका इत्याशङ्क्य, न तथा वयमाचक्ष्महे इत्याह—**भूयो दृष्टीति** । उक्तार्थस्थेम्ने प्रतिबन्दीमारचयति—**कार्येति** । कार्यवाक्यार्थवादिनोऽप्यावापोद्वापावेव प्रतिपद-व्युत्पत्तौ तन्त्रमिति ॥ (चिं.म.)

2. प्रमेयगतावपि आवापोद्वापौ ।

आवापोद्वापतस्स्युः कति कति कविधीचित्रवत्तत्तदर्थे-
ष्वानन्त्यादस्ति नास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः ।
तत्त्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान्समस्तान्
पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुतादिः ॥ (त.मु. 5)

(ननु) 'निर्धूतसर्वप्रतिमतविमर्ति सर्वमर्थं साधये' इत्यशक्योक्तिः, त्रैकालिक-सिद्धान्तभेदानन्त्यात् इत्याशंकोद्घाटनपूर्वकं प्रयोजकशिक्षया कृत्स्नानिष्टनिरासः, कृत्स्नाभीष्टसाधनं च शक्यमिति स्थापयति—**आवापेति**। एकस्मिन्नेव हि दर्शने

व्याख्यातृभेदात् केषांचित्प्रमेयानामावापोद्वापौ दृश्येते, यत एकदेशिव्यपदेशः। **कविधीचित्रवत्**—कवीनां धीभिः कृतं काव्यादिकं कविधीचित्रम्; तद्वन्मतभेदा अप्यनन्तास्संभवन्ति। तत्तदर्थेष्वस्ति-नास्त्योरानन्त्यादित्यन्वयः। अस्ति.नास्त्योरिति प्रयोगपरम्। कुहना—छद्म। तत्संबन्धिन्यो युक्तयः कुहनायुक्तयो हेत्वाभासच्छल-जातिरूपाः, ताभिः कान्ताः सम्यक्त्वेनैव भाताः। तत्त्वालोकः—यथार्थाध्यवसायः। प्रस्तुतशङ्कानिरासार्थमपेक्षणीयान्तराभावात्सहसेत्युक्तम्। निस्सम इति निरवधिकत्वोप-लक्षणम्। प्रतिरोधबाधरहित इत्यर्थः। उक्तस्थापकं त्रय्यन्तार्थविशेषव्यञ्जक-मप्यर्थान्तरं न्यस्यति—**पुंस्त्व** इति। पुनर्न प्राणिता—संशय-विपर्ययसामग्रीलोपान्न भासेतेत्यर्थः॥ (स.सि.)

**आविः**—अपरोक्षम्। (अव्ययम्)

'आविः संनिहितं गुहाचरं नाम महत् पदम्।
अत्रैतत् समर्पितम् तत्रेदं सर्वमर्पितम्'॥ (मु.उ 2-2-1)

योगिनामपरोक्षम्। **सन्निहितं गुहाचरम्**—हृदयगुहावर्तितया सन्निहितम्॥
(रं. भा.)

**आविद्यः**—अविद्यापरवशः। (ब्रह्मज्ञानविधुरः प्राकृतः।)

आविद्यः प्राकृतः प्रोक्तो वैद्यो वैष्णव उच्यते।
आविद्येन न केनापि वैद्यः किंचित् समाचरेत्॥ (प्र.पा. 133)

ब्रह्मविद्यायुक्तः विष्णुभक्तः अर्थकामपरप्राकृतपुरुषसङ्गं परित्यजेदिति भावः।

अत एव स्मर्यते—

'नास्ति संगतिरस्माकं युष्माकं च परस्परम्।
वयन्तु किंकरा विष्णोः यूयमिन्द्रियकिंकराः'॥ इति॥

**आविद्यकगुणनिरासः**—गुणानां कल्पितत्वपक्षनिरासः॥

ध्यानविधयो ध्येयस्य सौशील्यादीनाक्षिपन्ति। तथाहि न निरालंबनं ध्यानं

केनाप्यंगीक्रियते । न च शक्यते । निर्गुणे निराकारे च बुध्यनारोहात् । अत एव गुणोपसंहारानुपसंहारविचारस्सर्वोऽपि निर्व्यूढः । विद्याभेदोप्यत एव निरवद्यः। वेद्यगुणभेदाभावे विद्याभेदायोगात् ।

आविद्यका गुणा एता इति चेत्, आविद्यकानां विद्याविषयत्वायोगात् ।

'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति स्वाभाविकत्वकीर्तनविरोधाच्च । 'यस्सर्वज्ञस्सर्ववित्', 'सत्यकामस्सत्यसंकल्पः' इत्यादिषु स्वरूपनिरूपणगुणपरवाक्येषु तदसंभवाच्च । तथात्वेव स्वरूपेऽपि तदापत्तेश्च ।

न च निरधिष्ठानभ्रमानुपपत्त्या स्वरुपे तथात्वं न कल्पनार्हमिति वाच्यम्; गगनारोपितेऽपि गन्धर्वनगर्यादो सौधसौन्दर्यशुक्लिमाद्यारोपदर्शनेन तन्नियमासिद्धेः, मिथ्याध्यवसितन्यायेन तदुपपत्तेश्च भावनाप्रकर्षात् विनष्टधनवनितादेरपि ध्यानविषयतादर्शनेन असिद्धविषयोत्प्रेक्षान्यायेन विषयारोपेणापि ध्यानसंभवाच्च । ध्यान एव वा, विषयस्य तस्मिन् गुणानां च आरोपसंभवाच्च । यदि च नित्यनिर्दोषापौरुषेयवाक्यस्य असद्विषयकध्यानविधानार्थत्वायोगात् विहितध्यानविषयब्रह्मयाथार्थ्यनिश्चयात् नारोपसंभवः । तर्हि तद्वदेव तद्गुणा अपि स्वाभाविका इत्यास्थीयताम् । तदेवं कारणत्वं ध्यानविध्याक्षिप्तं तत्तदुपास्यसमर्पकशब्दप्रवृत्तिनिमित्ततयाऽवश्यादरणीयाः प्रातिस्विकतत्तद्वाक्यशतावगताः–स्वाभाविकतया तत एवावधृताः सार्वज्ञ्यादयो गुणाः नापह्नोतुं शक्याः इति सैद्धान्तिकपद्धतिः । (ह.गु.द–8)

**आविर्भावः**—1. अकर्मवश्यस्यावतारः ।

कर्मानधीनः आश्रितानुग्रहार्थं स्वेच्छया सर्वेश्वरः नित्यसूरी च अवतरतः । तादृशावतरणमेव आविर्भावः । (सं.अ.)

(अत एव रामावतारः, कृष्णावतार इत्यादयः शिष्टव्यवहाराः । स्वस्य पुत्रोत्पत्तौ 'पुत्रोऽवततारेति न केनापि व्यवह्रियते; किन्तु 'पुत्रो जातः' इत्येव ।)

2. अभिव्यक्तिः–स्वरूपाविर्भावः । (जीवस्य मुक्तौ) नापूर्वाकारोत्पत्तिरूपः । (यि.को.)

सांख्यास्तु प्रकाशात्मिका अभिव्यक्तिः यथा कूर्मशरीरादङ्गानामाविर्भावः इत्याहुः ।

यद्यपि सत्कार्यवादिनां प्राक् सदेव द्रव्यमवस्थान्तरविशिष्टवेषेणकार्यम् । तथापि कारणादशायामपि अवस्थायाः सत्त्वं सांख्य सम्मतम् । सिद्धान्ते तु अवस्थानामागन्तुकत्वमेव । कारणावस्थावद्द्रव्यं सदेव अवस्थान्तरविशिष्टतयोत्पद्यते इति बोध्यम् ॥

**आवृत्तिः**—1. पुनः पुनरभ्यासः । (अत्र भावे क्तिन् :)

'आवृत्तिरसकृदुपदेशात्' । (ब्र.सू. 4-1-1)

भूयो भूयः एकजातीयस्य ज्ञानस्य अनुसन्धानमिति यावत् ॥

2. पदानां आवृत्तिः । पुनरनुसन्धानम् । यथा 'हलन्त्यम्' (पा.सू. 1-1-3) इत्यादौ अन्योन्याश्रयदोषवारणाय सूत्रस्य आवृत्तिः ।

3. पुनरागमनम् । यथा–'यत्र काले त्वनावृत्तिम् आवृत्तिञ्चैव योगिनः' इत्यादिप्रयोगात् ॥

**आवृत्तिरसकृदुपदेशात्**—(ब्र.सू. 4-1-1)

( आवृत्त्यधिकरणे प्रथमं सूत्रम् ) 'ब्रह्मविदाप्नोति परम्' इत्यादिषु मोक्षसाधनं वेदनम्, असकृदावृत्तम् । कुतः–'विद्यात्' 'उपासीत' इति विद्युपास्त्योः उपक्रमोपसंहारयोः व्यतिकरेणोपदेशात् ।

विद्युपास्तिध्यायतीनां एकस्मिन्विषये प्रयोगात् प्रवृत्तिनिमित्तभेदेऽपि एकार्थपर्यवसायित्वं सिद्धम् । 'ब्रह्मविदाप्नोति परम्' इत्यादिवेदान्तवाक्येषु विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः ? उत असकृदावृत्तमिति संशये–सकृत्कृतमेवेति पूर्वः पक्षः । 'ब्रह्मवेद ब्रह्मैव भवति' इति वेदनमात्रस्यैव विधानादसकृदावृत्तौ प्रमाणाभावात् अवघातादिवत् वेदनस्य दृष्टोपायत्वाभावाच्च येन यावत्फलमावृत्तिः प्रसजेत् ।

अत्रोच्यते—असकृदावृत्तमेव वेदनं शास्त्रार्थः ध्यानोपासनपर्यायेण वेदनस्य विधानात् ।

ध्यानञ्च चिन्तनम्—तच्च स्मृतिसन्ततिरूपम् । उपास्तिरपि तदेकार्थः । एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगात् । अतः असकृदावृत्तसन्ततस्मृतिरिह 'ब्रह्मवेद ब्रह्मैव भवति' इत्यादिषु वेदनादिशब्दैरभिधीयते ।

शङ्कराचार्यास्तु—प्रत्ययावृत्तिः कर्तव्या । कुतः ? असकृदुपदेशात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति ।

ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति । न ; दर्शनपर्यवसितत्वादेषाम् । दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति । यथाऽवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि तद्वत् ।

अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाभिधीयते । तथाहि—लोके 'गुरुमुपास्ते', 'राजानमुपास्त' इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते । तथा 'ध्यायति प्रोषितनाथा पतिम्' इति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते । विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते । क्वचिद्विदिनोपक्रम्य उपासिनोपसंहरति, यथा—'यस्तद्वेद यत्स वेद स मयैतदुक्तः' इत्यत्र 'अनु म एतां भगवो देवतां शाधि, यां देवतामुपास्से' इति । क्वचिच्च उपासिनोपक्रम्य विदिनोपसंहरति यथा—'मनो ब्रह्मेत्युपासीत' इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन 'य एवं वेद' इति । तस्मात्सकृदुपदेशेष्वप्यावृत्तिसिद्धिः । असकृदुपदेशस्तु आवृत्तेः सूचकः ।

भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः । तेष्वावृत्तिसाध्यस्यातिशयस्य संभवात् । यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म समर्पयति तत्र किमर्थाआवृत्तिरिति । सकृच्छ्रुतौ च ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेन्न ; आवृत्तावपि तदनुपपत्तेः ।

यदि हि 'तत्त्वमसि' इत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत् ततः तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात् ?

अथोच्येत—न केवलं वाक्यं कञ्चिदर्थं साक्षात्कर्तुं शक्नोत्यतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति। तथाप्यावृत्तेरानर्थक्यमेव। साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति। अथापि स्याद्युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते, न विशेषविषयम्।

यथा 'अस्ति मे हृदये शूलम्' इत्यतो वाक्यात् गात्रकम्पादिलिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते ; न विशेषमनुभवति यथा स एव शूली। विशेषानुभवश्चाविद्याया निवर्तकस्ततस्तदर्थावृत्तिरिति चेन्न ; असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्। नहि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते। तस्माद्यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्यते, यदि वा सामान्यमेवोभयथापि सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इत्यावृत्त्यनुपयोगः।

न च 'सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत' इति शक्यते नियन्तुम्, विचित्रप्रज्ञत्वात्प्रतिपत्तॄणाम्। अपि चानेकांशोपेते लौकिके पदार्थे सामान्यविशेषवत्येकेनावधानेन एकमंशमवधारयत्यपरेणापरमिति स्यादप्यभ्यासो यथा दीर्घप्रपाठकग्रहणादिषु ; न तु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्तावभ्यासापेक्षा युक्तेति।

अत्रोच्यते—भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात्। यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः—इति प्राहुः।

एतेन वाक्यजन्यज्ञानमात्रस्यैव मुक्तिसाधनत्वेपि व्यक्तिविशेषे आवृत्तिः तैरप्यङ्गीकृतैवेति स्पष्टम्। परन्तु 'असकृदुपदेशात्' इति विशिष्टस्यैव हेतुत्वमभ्युपगम्यते। तदानीं श्रोतव्यादिशब्दैः एकैकस्यावृत्त्यभावात् 'असकृदुपदेशात्' इति हेतुरहेतुः स्यात्। असकृच्छब्दस्यावृत्तिविशेषणत्वं तु सफलम्। आवृत्तिशब्दस्य द्विः त्रिः प्रत्ययमात्रेणापि कृतार्थत्वात। अत एवोक्तमन्यत्र—

'वेदनं ध्यानविश्रान्तं ध्यानं तच्च ध्रुवास्मृतौ।
सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति' ॥ इति ॥

तथा च वेदान्तवाक्येषु मोक्षसाधनत्वेन तत्र तत्र विहितानां वेदन-ध्यान-ध्रुवानुस्मृति-दर्शन-भक्तीनां सामान्यविशेषन्यायेन विशिष्टं ज्ञानम् एकमेवेति निर्णयः कार्यः इति सूत्रकारेणैव 'वेदनमसकृदावृत्तरूपम्' इति विशेषार्थनिर्णयद्वारा बोधितम् इति सुधीभिर्विभावनीयम् ।

वाक्यकारेण एतत्सर्वम् प्रपञ्चितम् 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्, उपासनं स्याद्ध्रुवानुस्मृतिःदर्शनान्निर्वचनाच्च' इत्यादिना ।

आवृत्तमित्यनुक्त्वा आवृत्तिः इत्युक्तिः वेदनस्य स्वरूपतः अविधेयत्वेऽपि आवृत्तिविशिष्टवेषेण साध्यत्वं सुवचमिति बोधनार्था । एतेनोपासनस्य क्रियारूपत्वात् मुक्तिसाधनत्वं न घटते ; अपि तु वाक्यजन्यापरोक्षज्ञानस्यैवेति पक्षस्य नावसरः । सिद्धान्ते उपासनस्य ज्ञानविशेषरूपतया असकृत् आवृत्तिविशिष्टमेव वेदनं मुक्तिसाधनमिति निरणायि ।

आवृत्तमसकृच्चैव वेदनं सफलं भवेत ।
ध्यानपर्यायशब्देन वेदनस्योपदेशतः ॥ (ब्र.प.मा.)

## आवृत्त्यधिकरणम्—(4-1-1)

1. आवृत्तिरसकृदुपदेशात् । 2. लिङ्गाच्च इति सूत्रद्वयात्मकमिदमधिकरणम् ।

'ब्रह्मविदाप्नोति' इति वेदनमात्रस्यैव विधानात् असकृदावृत्तौ प्रमाणाभावाच्च सकृत् कृतमेव वेदनं शास्त्रार्थ इत्याशङ्क्य ;

'मनो ब्रह्म' इत्यादिषु एकविषये वेदनोपासनशब्दयोः प्रयोगादवगतोपासनशब्दपर्यायत्वेन वेदनशब्देन उपदेशात् उपासनशब्दस्य असकृदावृत्तज्ञानवाचित्वात् असकृदावृत्तमेव वेदनं शास्त्रार्थ इत्यर्थः ।

ज्ञानस्योपायत्वात् तस्य च सकृदेव कर्तुमर्हत्वात् ।
सकृदेव वेदनं स्यात् नैतदुपास्तित्वचोदनात् ज्ञप्तये ॥ (न्या. क. सं. 4-1)

**आवेशावतारः**—साक्षादवताराभावेऽपि परशुरामादिजीवविशेषद्वारकः ।

'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते ।
अनुप्रविश्य तत्कुरुते यत्समीहितमच्युतः ।।' इति हि स्मर्यते ।

ननु साक्षादवतारेऽपि कर्मवश्यत्वाद्यभिनयः दरीदृश्यते खलु तेनैवोपपत्तौ आवेशावतारः इति पृथक् किमर्थमङ्गीक्रियते इति चेत्; न, पूर्वोक्तप्रमाणानुसारेण पृथगेवेति निर्णयात् । नहि वचनविरोधे न्यायः प्रवर्तते ।

तथा च आवेशावतारेषु प्रतिष्ठार्चनादिकं प्रतर्दनविद्यान्यायेन तत्तज्जीवविशिष्ट-परमात्मविषयतया नेयम् । एवमावेशावतारानङ्गीकारे तु विभूत्यध्यायोक्तानां सर्वेषां साक्षादवतारविषयतैव प्रसजेत् । (वि. प. 365)

आवेशावतारस्तु समीहितकार्यकरणाय विग्रहविशिष्टवेषेण वा शक्तिविशेषेण वा महाभागे सशरीरे जीवविशेषे अनुप्रवेशः । स एव हि गौणः प्रादुर्भाव इत्युच्यते । तत्र तस्य जीवविशेषस्य प्रतिष्ठार्चनादिशास्त्रविशेषोऽपि भगवदनुप्रवेशनिबन्धनः । अनुप्रवेशस्य कादाचित्कत्वेऽपि उपलक्षणविधया भगवत एवोद्देश्यत्वम् ।

सर्वोऽप्यवतारः सत्यः; न त्वैन्द्रजालिकवेषवत् मिथ्यारूपः । तत्र ज्ञानशक्त्यादि-कल्याणगुणानामसङ्कोचः । शुद्धसत्वमय एव विग्रहः । स्वतन्त्रेच्छैव कारणम् । धर्मरक्षणमेव कालः, साधुपरित्राणं फलम् । ततश्च—

स्वरूपेण स्वभावेन द्रव्येणापि च हेतुना ।
कालेन च फलेनापि ह्यवतारस्य दिव्यता ॥ इति ॥

एतादृशमवताररहस्यज्ञानं महाविश्वासवताम् अस्मिन्नेव जन्मनि उपायपरिपूर्त्या जन्मान्तर-व्यवधानमन्तरेण मोक्षसाधनमिति भागवतसिद्धान्तः । (द.उ. 229)

सर्वेश्वरः स्वेच्छया स्वयमेवावतरति रामकृष्णादिरूपेण, अयं साक्षादवतारः । कञ्चन जीवं द्वारीकृत्य यत्र अवतारः सः आवेशावतारः । स च द्विविधः । स्वरूपावेशः शक्त्यावेश इति । परशुरामावतारः स्वरूपावेशावतारः ; व्यासादिस्तु

शक्त्यावेशावतारः। अत एव मुमुक्षूणां उभयोरवतारयोः अर्चावतारवत् पूजनीयता नास्ति। तत्र जीवसम्बन्धादिति भावः॥ (सं.अ.)

आशयः—1. वासना।

[ आशेते अस्मिन्नित्यर्थे 'एरच्' इत्यनेनाच् ]

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः। (यो.सू. 1-24)

अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुण-वासना आशयः। (भा.)

2. आश्रयः।

'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।

गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्'॥ (गी. 15-8) इत्युक्तेः।

3. हृदयम्।

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः'। (गी. 10-20)

4. अभिप्रायः। 'तवाशयः कः' इत्यादौ (सं.अ.)

आशिष्ठः—आशुतर क्रियः।

'युवा स्यात् साधु युवाध्यायकः। आशिष्ठोद्रढिष्ठो बलिष्ठः'। (तै आ. 32)

अशनक्षमः, अरोग इत्यर्थः। यद्वा आशीर्वादविषयभूतः। सर्वानुरञ्जकः इत्यर्थः। 'सर्वान् देवान् नमस्यन्ति' इतिवत्॥ (रं.भा.)

आशौचम्—शास्त्रीयाऽशुद्धिः पुरुषनिष्ठा।

[अशुचेः भावः इत्यर्थे अणि, उभयपदादिवृद्धिश्च अत्रबहुव्रीहिः विवक्षितः।]

'दशाहं शावमाशौचं ब्राह्मणस्यविधीयते।

सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्'॥ इति मनुः।

आशौचशब्देन च कालविशेषस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेः अध्ययनादि-पर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशयः कथ्यते। (न्या.को.)

अशुचिशब्देनाशुद्धिमान् इति बोधे, तदुत्तरभावार्थकप्रत्ययेन प्रकृतिजन्यबोधे प्रकारभूताशुद्धिः आशौचशब्देन बोध्यते॥

**आश्रमः**—(स.ना. 856)

अणिमादिकामेभ्यो निवृत्य सुभिक्षपरविद्येषु वैष्णवगेहेषु, तेषां विश्रान्ति हेतुः । (वि.स भा.)

तेषां तु योगभ्रष्टानां हेतुर्वैष्णवसद्मसु ।
सुभिक्षपरविद्येषु विश्रान्तेः आश्रमः स्मृतः ।। (वि.स.नि.)

**आश्रमकर्मणां विद्याङ्गत्वं केवल आश्रमाङ्गत्वं च**

' वर्णादेः कर्मणां हि श्रुतिभिरभिदधे ब्रह्मविद्याङ्गभावः
तस्मादब्रह्मनिष्ठे तदननुसरणात्स्वैरितैवास्तु मैवम् ।
नित्यत्वस्यापि सिद्धेस्तदुचितविनियुक्त्यन्यभावानुसारात्
तन्त्रं काम्याग्निहोत्रादिवदिह परविन्नित्यवर्गेऽपि योज्यम् '।। (अ.सा. 411)

' यज्ञेन ' इत्यादिवाक्येन वर्णादेः कर्मणो ब्रह्मविद्याङ्गभावोऽभिदधे । तस्मात् अब्रह्मनिष्ठे ब्रह्मविद्याऽभावेन ब्रह्मविद्याङ्गकर्माननुसरणात्स्वैरित्वमेवास्तु । अत्रोत्तरम्—**मैवमिति** । तत्र हेतुमाह—**नित्यत्वस्येति** । इत्थं किल तान्त्रिकमर्यादा-यानि कर्माण्येकत्र विनियुज्यन्ते तान्यन्यत्रापि विधिना विनियुक्तानि चेत् विनियोगपृथक्त्वादेवोभयत्रान्वयसिद्धिरिति । **विनियुक्त्यन्यभावानुसारात्**—विनियुक्त्यन्तरादित्यर्थः । अत्रचानुष्ठानं **तन्त्रमेव** भवति । यत्र हि देशकालाद्यैक्येन पृथगनुष्ठानं कर्तुं न शक्यते तत्र तन्त्रेणानुष्ठानमिति तान्त्रिकप्रक्रिया । उक्तार्थे सम्प्रतिपन्नदृष्टान्तमाह—**काम्येति** । काम्याग्निहोत्रमनुष्ठीयमानं नित्यसिद्धिमपि करोतीति हि मर्यादा । एतच्च **परविदां नित्यवर्गेऽपि** योज्यमित्याह—**इहेति** । अध्यात्मविदां नित्यानुष्ठानं हि ब्रह्मविद्याङ्गभावेन तत्सिद्धिमपि तन्त्रेण करोतीत्यर्थः ।। (चिं म.)

**आश्रमलिङ्गानि** — तत्तदाश्रमोचित-शिखायज्ञोपवीतादि चिह्नानि ।

'नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाऽप्यलिङ्गात् । (मुं.उ.3-2-4)

अयमात्मा अवसन्नमनसा न लभ्यः । अवसादो नाम देशकालवैगुण्यादिजन्यं दैन्यम् । तदभावो हि **बलम्** । **प्रमादः** अनवहितचित्तता **तपश्शब्दः** तपःप्रधान-

संन्यासाश्रमपरः । 'तप एव द्वितीयः' इतिवत् । तस्य च लिङ्गं शिखायज्ञोपवीत-शिक्य–जलपवित्रादि । तद्रहितात् संन्यासादपीत्यर्थः । **तपस** इत्येतत् आश्रमान्तर-स्याप्युपलक्षणम्; सर्वाश्रमाणामपि ब्रह्मविद्याधिकारसत्त्वादिति द्रष्टव्यम्' लिङ्गशून्यै-राश्रमैः न प्राप्य इत्यर्थः । आश्रमलिंगानि अपेक्षितानीति यावत् । 'एतैरुपायैर्यतते यस्तु विद्वाँस्तस्यैष आत्मा विशते ब्रह्म धाम' इति तस्य फल मुक्तम्—उक्तैर्बलाप्रमाद-सलिंगाश्रमैर्यो विद्वान् ब्रह्मप्राप्तये यतते तस्य (कर्तुः) एषः तादृशोपायसंस्कृतः आत्मा-(शुद्ध) स्वरूपं धाम–प्राप्यं परं ब्रह्म प्राप्नोतीत्यर्थः ॥ (रं.भा.)

**आश्रयदुष्टम्**—दुष्टपुरुषस्वामिकम् ।

'जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः' इति वाक्यकारवचनम् । (श्री.भा. 1–64)

**जातिदुष्टाः** कलञ्जगृञ्जनादयः । **आश्रयः**—द्रव्यस्वामिपुरुषः । अभिशस्त-पतितचण्डालादिद्रव्यम् **आश्रयदुष्टम्** । उच्छिष्टकेशाद्युपहतं **निमित्तदुष्टम्** । (श्रु.प्र.) एवं दुष्टाहारात् सात्त्विकाहाराणां विवेचनं विवेकः । अत एव 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति श्रूयते ॥

**आश्रयभागासिद्धः**—आश्रयासिद्धिप्रभेदः । हेत्वाभासविशेषः ।

यथा—अवयवावयविनौ नित्यौ द्रव्यत्वादिति ; न ह्यवयवसमुदायातिरिक्तमव-यविशब्दार्थम् त्रय्यन्तविद इच्छन्ति ॥ (न्या प. 133)

**आश्रयानुपपत्तिः**—अविद्यानिष्ठा आश्रयविषयिणी अनुपपत्तिः ।

[अविद्या ब्रह्म आश्रित्य भ्रमं जनयति? उत जीवमाश्रित्येति विकल्प्य द्वेधापि अविद्यायाः आश्रयो न सम्भवतीति, आश्रयपविषयिणी अनुपपत्तिः इत्यभिप्रायेण आश्रयानुपपत्तिरिति मध्यमपदलोपेन शाकपार्थिवादित्वात् समासः ।]

आश्रयानुपपत्ति–तिरोधानानुपपत्ति-स्वरूपानुपपत्ति-अनिर्वचनीयत्वानुपपत्ति-प्रमाणानु-पपत्ति-निवर्तकानुपपत्ति-निवृत्त्यनुपपत्तिभिःदूषयन् प्रथममाश्रयानुपपत्तिमाह—**अविद्या हीति**।

अविद्या हि किमाश्रित्य भ्रमं जनयति? न तावत् जीवमाश्रित्य, अविद्यापरिकल्पितत्वाज्जीवभावस्य। *नापि ब्रह्माश्रित्य; तस्य स्वयंप्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात्।* सा हि ज्ञानबाध्याऽभिमता—

'ज्ञनरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने॥
ज्ञानं ब्रह्मेति चेत् ज्ञानमज्ञानस्य निवर्तकम्।
ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम्॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्, स्यात् प्रमेयता।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते'॥

ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकम्, न स्वरूपभूतं ज्ञानमिति चेत्—न; उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सति अन्यतरस्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात्।

एतदुक्तं भवति—ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते; स ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशत इति अविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति।

किञ्च अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति। अतो ज्ञानमज्ञानविरोधि चेत्, स्वयमेव विरोधि भवतीति नास्या ब्रह्माश्रयत्वसंभवः। शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनः, तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते। ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव, तत एव निवर्तकान्तरं च नापेक्षते॥

*अथोच्येत—ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञान विरोधीति*—न। इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि, उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधि इति विवेचनीयम्। न तावत् ब्रह्मयाथात्म्याज्ञानविरोधि; अतद्विषयत्वात्। ज्ञानाज्ञानयोरेकविषयत्वे हि विरोधः। प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते। तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव।

ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव । तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम् । स्वरूपं तु स्वानुभवसिद्धमिति चेन्न ; ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम् । अद्वितीयत्वं धर्म इति चेन्न ; अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात् । अतो ज्ञानरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् ॥ (श्री भा. I भा. 2-1)

द्वयी ह्यद्वैतिनां गतिः—ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्तकम्, प्रपञ्चमिथ्यात्व-विषयज्ञानं भ्रमनिवर्तकमिति च । तत्र प्रथमपक्षो दूषितः । अथ द्वितीयपक्षं दूषयितुं शङ्कते—**अथोच्येतेति** । दूषयति—**नेत्यादिना** । इदमिति ।

ननु कथं प्रपञ्चसत्यत्वमज्ञानमित्युच्यते ? अज्ञानं हि ज्ञानप्रतिबन्धकम् । न हि प्रपञ्चसत्यत्वं कस्यचित् ज्ञानं प्रतिबध्नाति । सत्यम् ; आच्छादकाज्ञानमेवम्भूतम् । प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानमिति पराभ्युपगमादेवमुक्तम् । प्रथमं शिरो दूषयति **अतदिति** । कथमतद्विषयत्वात् ब्रह्मस्वरूपाज्ञानाविरोधित्वमित्यत्राह—**ज्ञानाज्ञानयोरिति** । विरोधे हि निवृत्तिरित्यर्थः । द्वितीयं शिरो दूषयति—**प्रपञ्चेति** । प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञाननिवृत्तेः फलितत्वमाशङ्कते—**ब्रह्म-स्वरूपेति** । **सद्वितीयत्वम्**—सद्वितीयत्वज्ञानमित्यर्थः । न हि सत्तया सद्वितीयत्वं ब्रह्मस्वरूपाज्ञानं भवति, अपारमार्थ्यात् । सद्वितीयत्वविशिष्टब्रह्मगोचराज्ञाने निवृत्ते विशेष्यांशगोचरमपि ज्ञानं निवृत्तमिति स्वरूपासिद्धिः कथमित्यत्राह—**स्वरूपं त्विति** । दूषयति—**नेति** । अद्वितीयत्वं किं स्वरूपम्, उत धर्मः इति विकल्पाभिप्रायेण प्रथमं स्वरूपपक्षं दूषयति—**नेति** । धर्मपक्षे अपसिद्धान्तमाह—**अद्वितीयत्वमिति** । आश्रयानुपपत्तिं निगमयति—**अत इति** ॥ (श्रु.प्र.)

**आश्रयासिद्धः**— हेत्वाभासविशेषः (दोषविशिष्टदुष्टहेतुः) ।

शशशृङ्गं तीक्ष्णं शृङ्गत्वादिति । स्वसिद्धान्तमात्रसिद्धप्रकृतिपरमाण्वादिपक्षी-कारे त्वन्यतराश्रयासिद्धः ॥ (न्या.प. 133)

**आश्रयासिद्धिः** —पक्षाप्रसिद्धिः । (हेतुदोषविशेषः) ।

यथा आकाशो नित्यः, निरवयवद्रव्यत्वात् इति आकाशाभाववादिनं प्रति आश्रयासिद्धिः: पक्षतावच्छेदकाप्रसिद्धिरपि। यथा गगनारविन्दं सुरभि, अरविन्दत्वात् ॥

**आश्रितपारतन्त्र्यम्**—परमात्मनः सौलभ्यगुणविशेषः ।

निरङ्कुशस्वातन्त्र्यवतोऽपि स्वाश्रितविषये इदं दरीदृश्यते । यथा—अर्जुनस्य सारथ्यादिकरणम् । पुराणान्तरेष्वपि इदमेव प्राधान्येन प्रदर्श्यते ॥

**आस**—बभूव ।

'श्वेतकेतुर्हारुणेय आस' (छां. उ. 6-1-1)

आसेति बभूवार्थे तिङन्तप्रतिरूपकमव्ययमिति शाकटायनः । 'अस-गति-दीप्त्यादानेषु' इति धातोर्दीप्त्यर्थकं वा । (वि.को.)

एतेन व्यासो बभूवेत्यर्थे व्यासः आस इति प्रयोगदर्शनात् अस्तेर्भूः इत्यनेन बभूवेत्येव प्रयोक्तव्ये तदर्थे एवं प्रयोगः असाधुरिति शंकायाः नावकाशः ।

श्रुतौ छान्दसत्वेन निर्वाहेऽपि, अन्यत्र प्रयुज्यमानस्य उपपत्तिः एवमेव ॥

**आसत्तिः** —सन्निधिः (शाब्दबोधसामग्र्यन्यतमः) ।

शास्त्रस्य तु विशेषेण आकांक्षासन्निधियोग्यताज्ञानाधीनप्रमाणभावस्य सर्वत्रैव-तर्कानुग्रहापेक्षा ॥ (श्री. भा. 2-1-4)

तदेतदुक्तमन्यत्र—

'आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ।
कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते ॥ इति ॥

प्रकृतान्वयबोधानुकूलव्यवधानाभाव आसत्तिरिति प्राञ्चः । 'गिरिर्भुक्तमग्निमान् देवदत्तेने'त्यादौ नातिव्याप्तिः । नव्यास्तु अव्यवहितपदतात्पर्यमासत्तिः, तज्ज्ञानं

शाब्दबोधे कारणमित्याहुः । तत्तात्पर्यं च एतत्पदं एतत्पदाव्यवहितोत्तरमभिसन्दधातु इत्यभिसन्धापयितुरिच्छा । अत एव मौनिश्लोकेप्यासत्तिः । वक्तरभावेप्यनुसन्धातुः सत्त्वात् । शुकवाक्ये च भगवत्तात्पर्यमादायैव गतिः इति ॥ (न्या. को.)

**आसनम्**—योगाङ्गेष्वन्यतमम् ।

'स्थिरसुखमासनम्' । (यो. सू. 1-2-46)

निश्चलं यत् सुखावहं च तदासनम् इति सूत्रार्थः । 'आस्यते अत्र, आस्ते वा अनेने'त्यासनम् । तद्द्विविधं बाह्यं शारीरं च । तत्र चेलाजिनकुशोत्तरं बाह्यम् । शारीरं—पद्म-कुक्कुट-स्वास्तिक-मयूर-वीर-गोमुख-सिंह-भद्र-कूर्म-मुक्तासनानीति । एते प्राधान्येन परिगणितानि दशविधानि । (व्या.)

भगवदाराधनकालिकानि मन्त्र-स्नान-अलंकार-भोज्य-पुनर्मन्त्र-उपभोगासनानीति षट् । ध्यानयोगकाले चेलाजिनकुशोत्तरमित्युक्तरीत्या कंबलादिकम्, तदुपरि व्याघ्राजिनादिष्वेकम्, ततः दर्भासनमिति । एषु कुशासनं मोक्षप्रदम् । व्याघ्राजिनमपि तथेति केचित् । व्याघ्राजिनं ऐहिकफलप्रदमित्याहुः । कृष्णाजिनं मन्त्रसिद्धिकरम् इति ॥ (सं. अ.)

**आसन्यः**—मुख्यः प्राणः ।

'अथ हेममासन्यं प्राणमूचुः' । (बृ. उ. 3-3-7)

आसन्यम्—आसन्नं-मुख्यमित्यर्थः । यद्वा अस्ये भवः—आसन्यः । आस्यशब्दस्य 'पद्दन्' इत्यादिना आसन्नादेशः । मुख्यमिति यावत् । तं प्राणं देवा ऊचुः उक्तवन्तः ॥ (रं. भा.)

**आसिधारव्रतम्**—व्रतविशेषः ।

वीरव्रतप्रणयिनि प्रथमे रघूणां प्राप्ते चिराय भरते व्रतमासिधारम् ।
त्यक्त्वा पदावनि तदा विविधान् विहारान् एकासिकाव्रतमपूर्वमवर्तयस्त्वम् ।
(पा. स. 156)

खड्गनेमिसम्बन्धि व्रते प्राप्ते सति, यथा खड्गधारावृत्तिर्नट: शिक्षावशात् सावधानो भवति, तथा भरते दास्यवृत्तिनियमवति सतीत्यर्थः । (व्या०)

[असिधारासम्बन्धि–आसिधारं, 'तस्येदम्' इत्यणि, आकारलोपे आदिवृद्धिश्च । तद्रूपं व्रतम् ।]

अत्र श्रुतिरप्यनुकूला—'क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति' (क. उ. 3-14) इति ।

ज्ञानिनः तत् आत्मतत्त्वं दुर्गमं पन्थानं वर्णयन्ति । तत् कस्य हेतोः? यतः आत्मतत्त्वं क्षुरस्य आयुधविशेषस्य धारा अग्रम्, निशिता तीक्ष्णा, दुरत्यया अनतिक्रमणीया । तीक्ष्णे क्षुराग्रे सञ्चरतः पुंसो यथा कियत्यप्यनवधाने आत्मनाशो भवति, एवमिहाऽऽत्मस्वरूपावगतिदशायां स्वल्पेऽप्यनवधानापराधे आत्मनाशो भवतीति भावः ।। (रं. भा.)

**आसीनस्सम्भवात्**—(ब्र. सू. 4-1-7)

(आसीनाधिकरणे प्रथमं सूत्रम्) आसीनः उपासनमनुतिष्ठेत्; सम्भवात्, आसीनस्यैव हि एकाग्रचित्ततासम्भवात् ।

मोक्षसाधनतया वेदान्तशास्त्रे विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यम्, असकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम्, तदनुतिष्ठन् आसीनः, शयानः, तिष्ठन्, गच्छंश्च विशेषाभावात् अनियमेनानुतिष्ठेत् इति प्राप्ते, उच्यते–आसीन इति । स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयाने च निद्रासंभवात् । पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ।।

आसीनो वेदनं कुर्यात् आसीनस्यैव सम्भवात् ।
एकाग्रता तु मनसः ; नान्यथा सम्भवेदिह ।। (ब्र. प. मा.)

**आसीनाधिकरणम्**—(4-1-5)

1. आसीनस्सम्भवात् । 2. ध्यानाच्च । 3. अचलत्वं चापेक्ष्य । 4. स्मरन्ति च । 5. यत्रैकाग्रता तत्राविशेषात् इति पञ्चसूत्रात्मकमिदमधिकरणम् ।

अस्मिन्नधिकरणे एवमनुतिष्ठेदिति विशेषाभिधानाभावादासीनश्शयानस्तिष्ठन् गच्छन् वा अनुतिष्ठेदित्याशङ्क्य ; आसीनस्यैव ध्यानापेक्षितैकाग्र्यचित्ततासम्भवादासीन एवानुतिष्ठेदित्युक्तम् ॥

आसीन इत्येव विशेषहानेः
सर्वप्रवृत्तिष्वपि सा विधेया ।
स्यान्नैवमैकाग्र्यविशेषभावात्
ध्यानश्रुतेश्चोपनिषेदुषः सा ॥ (न्या. क. सं. 4–5)

**आसुरः**—भगवदाज्ञाविपरीतानुष्ठानशीलः ।

[असुर एवासुरः इति स्वार्थेऽण् ।]

'विष्णुभक्तिपरो दैवः विपरीतस्तथाऽऽसुरः' । (वि.ध. 109–74)

'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च' ॥ (गी. 16–6)

अस्मिन् कर्मलोके कर्मकराणां भूतानां सर्गौ द्विविधौ दैवश्चासुरश्चेति । सर्गः उत्पत्तिः, प्राचीनपुण्यपापरूपकर्मवशात् भगवदाज्ञानुवृत्ति-तद्विपरीतकरणायोत्पत्तिकाल एव विभागेन भूतानि उत्पद्यन्त इत्यर्थः ॥ (गी.भा.)

**आसुरप्रभेदाः**—दुष्कृतिनः चतुर्विधाः ।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ (गी. 7–15)

**दुष्कृतिनः**—पापकर्माणः मां न प्रपद्यन्ते । दुष्कृततारतम्येन ते चतुर्विधा भवन्ति। **मूढाः, नराधमाः, माययाऽपहृतज्ञानाः, आसुरंभावमाश्रिताः** इति । **मूढाः**—विपरीतज्ञानाः ; पूर्वोक्तप्रकारेण भगवच्छेषतैकरसमात्मानं भोग्यजातं च स्वशेषतया मन्यमानाः । **नराधमाः**—सामान्येन ज्ञातेऽपि मत्स्वरूपे मदौन्मुख्यानर्हाः । **माययाऽपहृतज्ञानाः**—मद्विषयं मदैश्वर्यविषयं च ज्ञानं येषां तदसंभावनापादिनीभिः कूटयुक्तिभिरपहृतम् , ते तथोक्ताः। **आसुरंभावमाश्रिताः**—मद्विषयं मदैश्वर्यविषयं च ज्ञानं

सुदृढमुपपन्नं येषां द्वेषायैव। ते आसुरं भावमाश्रिताः। उत्तरोत्तराः पापिष्ठतमाः॥(गी.भा.)

आसुरं भावमाश्रिताः इत्येतत् अनपह्नुतज्ञानविषयमित्याह—**सुदृढमुपपन्नमिति**। निपुणतमप्रतिपादितप्रक्रियया प्रमाणतर्कैरबाध्यत्वेन निश्चितमित्यर्थः। असुरसम्बन्धी भाव आसुरो भावः; असुरा हि भगवन्तमतिशयितशक्तिं जानन्त एव द्वेषमाचरन्ति। एषामुत्तरोत्तरं ज्ञानांशेनातिशयादुत्कृष्टतमत्वभ्रमवारणायाह—**उत्तरोत्तराः पापिष्ठतमा** इति। 'विदुषोऽतिक्रमे दण्डभूयस्त्वम्' इति न्यायेन ज्ञानप्रकर्ष एवात्र पापिष्ठतमत्वे हेतुः; ज्ञानातिशयेऽपि वैमुख्यं च प्राचीनपापातिशयादेवेति भावः॥ (ता.चं.)

**आसुरीसम्पत्**—असुरसम्बन्धिनीसम्पत्।

'दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता' (गी. 16-5)

आसुरी भगवदाज्ञातिवृत्तिरूपा संपत्, अधोगतिप्राप्तये भवति। (गी.भा.)

अत एव 'विष्णुभक्तिपरो दैव विपरीतस्तथासुरः' इति च स्मर्यते।

प्रजापतिवाक्ये च देहात्माभिमानादिमूलत्रिवर्गमात्रनिष्ठाम् अधिकृत्योच्यते 'असुराणां ह्येषोपनिषत्' (छान्दोग्ये) इति। अत्र संपच्छब्दो भगवदाज्ञातिलंघनरुचीनामभिप्रायेण, उपालम्भाभिप्रायेण वा संपद्यत इत्येतावन्मात्रविवक्षया वा नेतव्यः॥ (ता चं. 16-4)

**आसृत्युपक्रमाधिकरणम्**—(4-2-5)

1. समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य। 2. तदापीतेः संसारव्यपदेशात्। 3. सूक्ष्मं प्रमाणतश्च तथोपलब्धेः। 4 नोपमर्देनातः। 5. अस्यैव चोपपत्तेरूष्मा। 6. प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्। 7 स्मर्यते च इति सप्तसूत्रात्मकमिदमधिकरणम्।

अस्मिन्नधिकरणे 'अथ मर्त्योऽमृतो भवती'त्यादिवाक्ये 'अत्र ब्रह्म समश्नुते' इतीहैवामृतत्ववचनात् विदुष उत्क्रान्तिर्नास्तीत्याशङ्क्य, 'तयोर्ध्वमायन्नमृतत्वमेती'ति विदुषोऽप्युत्क्रान्तिदर्शनात् 'अमृतो भवति' इत्यादिश्रवणस्यादग्धदेहसम्बन्धस्य उत्तरपूर्वाघयोरश्लेषविनाशरूपामृतत्वप्रतिपादनपरत्वाच्च, विदुषोऽप्युत्क्रान्तिरस्तीति सा च आनाडीप्रवेशात् विद्वदविदुषोस्समानेत्युक्तम्॥

एषा त्वविद्यस्य गतिर्भविञ्रो
विद्यावतोऽत्रैव पराप्तिशब्दात् ।
नैतत् द्वयं स्यादुभयोः समाना
गतिः शरीरादितरोऽर्थवादः ॥ (न्या. क. सं. 4-19)

**आस्तावः**—स्तोत्रस्थानम् ।

[आङ्पूर्वकात् स्तुधातोः आधारे घञ् ।]

'तत्रोद्गातॄन् आस्तावे स्तोष्यमाणानुपोपविवेश ॥' (छां. उ. 1-10-8)

आस्तुवन्त्यस्मिन् इति आस्तावः स्तोत्रस्थानम् । सदसि स्तोतुं प्रवृत्तानाम् उद्गातृ-प्रस्तोतृ-प्रतिहर्तॄणाम् उप-समीपे उपविष्टवानित्यर्थः । (रं. भा.)

**आस्तिक्यम्**—वेदोक्तधर्माधर्मेषु विश्वासः ।

['अस्ति नास्ति दिष्टं मतिः' (पा सू. 4-4-60) अस्ति परलोकादिः इत्येवं मतिः यस्य सः आस्तिकः । तस्य भावः इत्यर्थे ष्यञ् । अत्र अस्तीति प्रथमान्तात् ठक्, अस्ति-नास्तिशब्दौ निपातौ ; यद्वा वचनादेवाख्यातात् प्रत्ययः ।]

शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च ।

ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्मस्वभावजम् ॥ (गी. 18-42)

**आस्तिक्यम्** वैदिकार्थस्य कृत्स्नस्य सत्यतानिश्चयः प्रकृष्टः ; केनापि हेतुना चालयितुमशक्यः इत्यर्थः । भगवान् पुरुषोत्तमो वासुदेवः परब्रह्मशब्दाभिधेयो निरस्त-निखिलदोषगन्धः स्वाभाविकानवधिकातिशयज्ञानशक्त्याद्यसंख्येयकल्याणगुणगणः निखिलवेदवेदान्तवेद्यः ; स एव निखिलजगदेककारणम्, निखिलजगदाधारभूतः ; निखिलस्य स एव प्रवर्तयिता । तदाराधनभूतं च वैदिकं कृत्स्नं कर्म, तैस्तैराराधितो धर्मार्थकाममोक्षाख्यं फलं प्रयच्छतीत्यस्यार्थस्य सत्यतानिश्चय आस्तिक्यम् । (गी. भा.)

तच्चाप्रामाणिकेषु भवत् दोषाय प्रत्यक्षादिसिद्धे तु नासावतिशयः। शास्त्रीयेष्वपि काचित्कसंशयादौ कुदृष्टित्वप्रसंगः ; अतो वैदिकार्थस्य कृत्स्नस्येत्युक्तम् ॥ (ता चं )

तदुच्यते—आस्तिको धर्मशीलश्च शीलवान् वैष्णवः शुचिः ।

श्रौतस्मार्ते च विश्वासो यत्तदास्तिक्यमुच्यते ।। इति ।। (भा. 53)

**आस्रवः**—भोगोपकरणम् । (जैनमते)

आस्रवः—जीवभोगोपकरणभूतम् इन्द्रियादिकम् । जीवानां मोक्षोपयोगिनम-परमपि संग्रहं कुर्वन्ति । 'जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षाः' इति ।

(श्री. भा. 2-2-31)

आस्रवति अनेनेति करणे अप्प्रत्ययः । 'आस्रवो भवहेतुः स्यात् संवरो मोक्षकारणम्' इति तैरुच्यते ।।

**आह च तन्मात्रम्**—(ब्र.सू. 3-2-17)

[अत्र ब्रवीतीत्यर्थपरत्वेप्यन्यत्र आहेत्युवाचार्थे विभक्तिरूपकमव्ययमिति न स्मशब्दापेक्षा ।]

(उभयलिङ्गाधिकरणे षष्ठं सूत्रम् ।) 'सत्यं ज्ञानम्' इत्यादिवाक्यं ब्रह्मणः प्रकाश-स्वरूपतामात्रं प्रतिपादयति ; नान्यत् सत्यसङ्कल्पत्वादिकं वाक्यान्तरावगतं निषेधति । प्रकाशस्वरूपमेवेत्यनेन एकदेशेनापि जडता निषिध्यते ; न तु श्रुत्यन्तरावगतं सत्यसंकल्पत्वादिकम् ।

ज्ञानस्वरूपस्य सर्वज्ञत्वाद्ययोगः किं व्याप्त्याभिधीयते ? तर्हि ज्ञानं कस्यचित् गुणभूतमिति ब्रह्मापि कस्यचित् गुणभूतं स्यात् । प्राधान्येन श्रुतिप्रतिपन्नत्वात् न गुणभूतमिति चेत् तर्हि श्रुतिप्रतिपन्नत्वादेव सर्वज्ञत्वादयोपि स्वीक्रियन्ताम् । व्याप्तिविरोधोऽपि नास्ति ; गुणभूतज्ञानस्यैव ज्ञानाद्यनाश्रयत्वदर्शनात् । अत एवान्यत्र 'स यथा सैन्धवघनः अनन्तरः अबाह्यः कृत्स्नः रसघन एव प्रज्ञानघन एव एवं वाऽरेयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः एवे'त्युक्तम् । सैन्धवघने कृत्स्नस्य रसघनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न हि निषिध्यन्ते । एवमेव ज्ञानमात्रत्वोक्तावपीति बोध्यम् ।

कस्तर्हि 'विज्ञानघन एव' इत्यवधारणस्यार्थः । कृत्स्नोऽप्यात्मा जडव्यावृत्त-स्वप्रकाशः; नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीति। अयमर्थो वाक्यादेव सुव्यक्तः।

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति ।

इदमत्र वाक्यतात्पर्यम्—यथा रसवत्सु आम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्र एकरसत्वम्, तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वम्; स्वप्रकाशरूपत्वमित्यर्थः ।

तथा च एवकारः स्वप्रकाशत्वव्यतिरिक्तधर्ममात्रव्यवच्छेदपरो न; किन्तु प्रस्तुतस्वप्रकाशत्वविरोधि जडत्वमेकदेशेनापि व्यावर्तयतीति भावः । एवकारस्य प्रस्तुत-विरोधिव्यावर्तकत्वस्वभावात्, 'विद्वानेवायमि'त्यादौ अवैदुष्यमात्रव्यावृत्तिदर्शनाच्च ॥

प्रकाशरूपतामात्रं सत्यं ज्ञानमिति श्रुतिः ।
वदन्त्यन्यान्गुणांस्तांस्तु न निषेधति वै यतः ॥ (न्या.प.मा.)

**आहारशुद्धिः**—अद्यमानाहारगता शुद्धिः ।

'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः' । (छां.उ. 7-26-2)

जातितो दुष्टाः कळंजगृंजनादयः, द्रव्यस्वामिनः अभिशस्तपतितचंडालादयः आश्रयदुष्टाः । उच्छिष्टकेशाद्युपहतं निमित्तदुष्टम् ।

एतत् त्रिविधदोषरहितत्वे सति भगवन्निवेदितत्त्वम् इह विवक्षितम्, तथैवेतर-विधलौकिकशुद्धिरपि विवक्षितैवेति दृष्टादृष्टशुद्धिः बोध्या ॥

**आहाराः**—सात्त्विकादिभेदेन अद्यमानान्नविशेषाः ।

आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ (गी. 17-8,9,10)

सत्त्वगुणोपेतस्य सत्त्वमया आहाराः प्रिया भवन्ति । सत्त्वमयाश्चाहारा आयुर्विवर्धनाः ; पुनरपि सत्त्वस्य विवर्धनाः । सत्त्वमन्तःकरणम्, अन्तःकरणकार्यं ज्ञानमिह सत्त्वशब्देनोच्यते । 'सत्त्वात् संजायते ज्ञानम्' इति सत्त्वस्य ज्ञान-विवृद्धिहेतुत्वात्, आहारोऽपि सत्त्वमयो ज्ञानविवृद्धिहेतुः । तथा बलारोग्ययोरपि विवर्धनाः । **सुखप्रीत्योरपि विवर्धनाः**—परिणामकाले स्वयमेव सुखस्य विवर्धनाः ; तथा प्रीतिहेतुभूतकर्मारम्भद्वारेण प्रीतिवर्धनाः । **रस्याः**—मधुररसोपेताः । **स्निग्धाः**—स्नेहयुक्ताः। **स्थिराः**-स्थिरपरिणामाः। **हृद्याः**—रमणीयविशेषाः । एवंविधाः सत्त्वमया आहाराः सात्त्विकस्य पुरुषस्य प्रियाः ।

कटुरसाः, अम्लरसाः, लवणोत्कटाः, अत्युष्णाः, अतितीक्ष्णाः, रूक्षाः, विदाहिनश्चेति—**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः** । अतिशैत्यातितैक्ष्ण्या-दिना दुरुपयोगात्तीक्ष्णाः ; शोषकरा रूक्षाः ; तापकरा विदाहिनः ; एवंविधा आहारा राजसस्येष्टाः । ते च रजोमयत्वात् दुःखशोकामयवर्धनाः रजोवर्धनाश्च ।

**यातयामम्**—चिरकालावस्थितम्, **गतरसम्**—त्यक्तस्वाभाविकरसम्, **पूति**—दुर्गन्धोपेतम्, **पर्युषितम्**—कालातिपत्त्या रसान्तरापन्नम्, **उच्छिष्टम्**—गुर्वादिभ्योऽन्येषां भुक्तशिष्टम् **अमेध्यम्**—अयज्ञार्हम्; अयज्ञशिष्टमित्यर्थः । एवंविधं तमोमयं भोजनं—**तामसप्रियं** भवति । भुज्यत इति आहार एव भोजनम् । पुनश्च तमसो वर्धनम् । अतो हितैषिभिः सत्त्वविवृद्धये सात्त्विकाहार एव सेव्यः ॥ (गी.भा.)

आयुर्विवर्धनत्वादय आहारगुणाः केचिदायुर्वेदादवगन्तव्याः ; केचित् शास्त्र-निरपेक्षाः प्रत्यक्षत एव सिद्धाः । पूर्वमेव सत्त्वविवृद्ध्या हि सात्त्विकाहाररुचिरि-त्यभिप्रायेणाह—**पुनरपीति** । आयुषः सर्वपुरुषार्थनिष्पादनोपयोगित्वेन प्रथमग्रहणम् ।

सत्त्वस्य तु विशेषतो मुमुक्षोरपेक्षितत्वात् तदनन्तरोक्तिः । 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः' इति श्रुतेरुपबृंहणार्थत्वात् आहारसाध्यसत्त्वविवृद्धिर्ज्ञानपर्यन्तेत्यभिप्रायेण ज्ञाने सत्त्वशब्दमुपचारयितुं तत्कारणे तावदवतारयति—**सत्त्वमन्तःकरणमिति**। 'द्रव्यासु व्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इति ज्ञानविशेषे च सत्त्वशब्दः प्रयुक्तचर इत्यभिप्रायेणाह—**अन्तःकरणकार्यं ज्ञानमिति** । इह—आहारशुद्धिश्रुत्युपबृंहणदशायामित्यर्थः । यथा तत्तद्द्रव्यगतानां रसादीनां शरीरधात्वादिपोषकत्वेन शास्त्राभिहिततत्तद्द्रव्याणामपि तथा व्यपदेशः ; तथेहापि सत्त्वगुणस्य ज्ञानविवृद्धिहेतुत्वे तदाश्रयस्याहारद्रव्यस्यापीत्यभिप्रायेणाह—**सत्त्वात् संजायते ज्ञानमिति** । बलारोग्ययोस्सुखप्रीत्योश्च निरन्तरपाठः समुचित्य प्रवृत्त्या परस्पराविनाभावविवक्षयेत्यभिप्रायेण **बलारोग्ययोः सुखप्रीत्योरिति** द्वन्द्वविभजनम् । **बलमिह**—प्राणाग्न्योरुपचयः, **आरोग्यं**—धातुसाम्यादि । कर्मदोषाग्निधातुवैषम्येण हि रोगाः प्रादुर्भवन्ति । तस्य रस्यत्वहृद्यत्वाभ्यां तादात्विकसुखजनकत्वसिद्धेः तत्पौनरुक्त्यपरिहाराय सुखवर्धकत्वं **परिणामकाल** इति विशेषितम् । प्रीतिवर्धकत्वाद्भेदप्रदर्शनाय **स्वयमेवेत्यद्वारकत्वोक्तिः** । यथोन्मादादिहेतुभूतानि द्रव्याणि भक्षितानि लोकोद्वेगादिजनककर्मद्वारा पुरुषस्याप्रीतिं वर्धयन्ति ; तथा सत्त्वहेतुभूतान्यपि मङ्गलेषु लोकोपकारकेषु परलोकादिहितेषु च कर्मसु प्रचोद्य तद्द्वारेण प्रीतिं जनयन्तीत्यभिप्रायेणाह—**प्रीतिहेतुभूतकर्मारम्भद्वारेणेति** ।

कट्वम्लेत्यादिना रसान्तराणामसात्त्विकत्वेन वक्ष्यमाणत्वात् तत्प्रयोगप्राचुर्यानुसाराच्च अत्र रसशब्दो रसविशेषविषय इत्याह—**मधुररसोपेता** इति । माधुर्यं हि रसान्तरेभ्यः शरीरस्थितौ विशेषेण हेतुर्भवति । यथोक्तं वाग्भटेन 'रसाः स्वाद्वम्ललवणतिक्ततीक्ष्णकषायकाः । षड्द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः' ॥ (अष्टाङ्गहृदयम्) इति । भोजनं च स्वस्थस्य मधुररसप्रायतया नियम्यते, 'षड्रसान् मधुरप्रायान् नातिद्रुतविलम्बितम्' इति । रसायनाधिकारेषु च मधुर एवैको विधीयते । एवं स्नेहयुक्त आहारोऽपि रौक्ष्यविरोधी रूक्षेण वायुना शरीरस्यापि विशरारुतां वारयतीत्यप्यायुर्वेदावसितम् । अद्यमाने आहारे स्वरूपस्थैर्य-

स्यासंभवात् , गुणत्वाच्च शरीराख्यसंघातस्थैर्यहेतुभूतरसरुधिरमांसमेदोऽस्थिमज्जाशुक्राख्य-धातुसप्तकरूपपरिणामस्य बलादेश्च स्वसाध्यस्य चिरकालस्थायित्वलक्षणं स्थैर्यं विवक्षित-मित्याह–**स्थिरपरिणामा** इति। उपयोगात्पूर्वमेव जुगुप्सनीयसन्निवेशरूपविशेषादिविरहात् संदर्शनमात्रेणापि प्रीतिजनकत्वमिह हृद्यत्वमित्याह–**रमणीयविशेषा** इति। येषु धर्मशास्त्रा-युर्वेदयोरुभयोरपि सांगत्यम् , तेषां सर्वेषामिदमुपलक्षणमित्यभिप्रायेणाह—**एवंविधा** इति।

सात्त्विक-राजसाहारयोः गुणकार्यकथनेऽपि तामसे गुणमात्रकथनमदूरविप्रकर्षेण राजससमानकार्यत्वात् सर्वेषु यामातिक्रमणमात्रेण दोषाभावात्तेषु तेषु यावता कालेन दुष्टता तावद्विवक्षामाह—**यतयाममिति**। यामः श्रेष्ठोंशः इति केचित् तेन निर्वीर्यत्व-मुक्तं भवति ॥ (ता.चं )

**आहिताग्निः**—आधानसिद्धाग्निमान् ।

(आहिताः परितः स्थापिताः अग्नयः यस्य, सः ।)

धार्याग्नौ यो नित्यमग्निहोत्रं करोति सः ॥ (सं. अ )

**आहार्यारोपः**—बाधकालिकेच्छाजन्यं ज्ञानम् ।

अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानम् 'मनो ब्रह्मेत्युपासीत' इत्यादौ ।

स्वविरोधिधर्मधर्मितावच्छेदकक स्वप्रकारकं ज्ञानम् । यथा निर्वह्निः पर्वतो वह्निमान् इति ज्ञानम् । तथा हि स्वं वह्निः, तस्य विरोधी धर्मः वह्न्यभावः । स एव धर्मितावच्छेदको यस्मिन् ज्ञाने तत् । किं च स्वं वह्निः, स एव प्रकारो विशेषणं च यस्मिन् ज्ञाने तत् इति विग्रहार्थसमन्वया विज्ञेयाः ।

बाधकालीनेच्छाजन्यं ज्ञानम् । यथा ह्रदो वह्निमान् इति ज्ञानम् । इदं त्ववधेयम् । आहार्यात्मकं ज्ञानं प्रत्यक्षमेवेति नैयायिकानां सिद्धान्तः । शाब्दबोधात्मकमपीत्यालंकारिकाः ॥ (न्या. को.)

**आहोपुरुषिका**—दर्पजनितसम्भावना ।

'आहोपुरुषिकामात्रन्तु भवानाह ।' (महा. भा. 1-30)

अहो अहं पुरुष इत्यहोपुरुषः । मयूरव्यंसकादित्वात् समासः । तस्य

भाव: आहोपुरुषिका । मनोज्ञादित्वात् वुञ्, तस्य अकादेश:, टापि, अकारस्येत्वे च रूपम् ।

आळ्वार्—भगद्गुणानुभवमात्रमग्न: द्रमिडोपनिषत्प्रवर्तकश्च ।

[परांकुशपरकालादय: एतच्छब्देन व्यपदिश्यन्ते । द्राविडभाषाशब्दोऽयम् । ळकारोऽन्यथोच्चार्यते ।]

यथार्थदर्शित्वं यथादृष्टार्थवादित्वं इत्यादिविशिष्टाप्तमव्यासबोधायनाद्युपज्ञं हि वेदान्तदर्शनम्। एतद्युगारम्भे ब्रह्मनन्द्याद्यनन्तरं नम्माळ्वार् प्रभृतय: (पराङ्कुश-परकालादय:) विशिष्टाद्वैतदर्शनस्यास्य प्रवर्तका: अभूवन्। तत: कालक्रमेण नाथ-यामुन-रामानुजमुन्यादय: सिद्धान्तप्रवर्तकत्वेन विराजन्ते स्म ।

उपनिषत्सारस्य द्रमिडभाषया प्रवर्तका: खलु आळ्वार् इति पदेन व्यवह्रियन्ते । भगवत्स्वरूप-तद्गुणानुभवमात्रनिरता: एते; न तु परमतनिरसने। स्वानुभूतभगवद्गुणान् प्रदर्श्यभगवति भक्तिविवृद्धये द्रमिडभाषामयानेव ग्रन्थान् सर्वसाधारण्येन व्यरचन् ।

नाथमुनये योगदशायां नम्माळ्वार् कालविप्रकर्षतया वेदान्तार्थान् उपदिदेश ।

यथा वा शुकमहर्षे: गौडपादस्य च कालविप्रकर्षेऽपि परम्परं गुरुशिष्यभाव: परैरभ्युपगत:, तद्वदत्र श्रीनाथमुनेर्योगदशायां श्रीशठकोपसूरय: साक्षात् आचार्या: अभवन् इत्यादिकं सम्प्रदायपरिशुद्ध्यादिषु आचार्यग्रन्थेष्वेव स्फुटम् ।

तत: नाथमुनिप्रभृतिरामानुजाचार्या: स्वमतस्थापनाय परमतप्रतिक्षेपपूर्वकं सुविस्तरं संस्कृतग्रन्थान् विरच्य सिद्धान्तं स्थापयामासु: ॥

अत: विशिष्टाद्वैतदर्शनं द्रमिडसंस्कृतवाङ्मयमूलतया प्रथितमभूत्। अत एव सम्प्रदाये उभयवेदान्तप्रवर्तका: इति विशेषणपुरस्सरमेव शिष्टा: व्यपदिश्यन्ते। तथा च विशिष्टाद्वैतसिद्धान्तस्य परस्पराविरुद्धकलाद्वयमूलकत्वात् (दक्षिणकला, उत्तरकला—तेन्कलै,

वडकलै) इति च व्यवहारः समजनि । लोके तु व्यवहृतिः सङ्केतमूलैव अन्यथात्वं अभजत् इति विवेचकाः खिद्यन्ते हि । विशिष्टाद्वैतसिद्धान्तपरमाचार्याः रामानुजमुनयः तुण्डीर मण्डले, पराङ्कुशमुनिस्तु तुण्डीरमण्डलापेक्षया दक्षिणभागे ताम्रपर्णीनदीतीरे अवातरन् इति द्राविडदेशे दक्षिणोत्तरविभागः प्रथितः । प्राधान्येन द्रमिडोपनिषत्प्रवर्तकाः 'आळ्वार्' पदेन व्यवह्रियन्ते; न तु सिद्धान्तभेदेन । तथा चोभयेपि सिद्धान्तप्रवर्तकाः प्राधान्येन तु एकैककलामशिश्रियन् । अत एवाभिहितं वेदान्ताचार्यैः स्तोत्रभाष्ये ।

पराशरप्रबन्धादपि वेदान्तरहस्यवैशद्यातिशयहेतुभूतैः सद्यः परमात्मनि चित्तरञ्जकतमैः सर्वोपजीव्यैः उपबृंहणैर्मधुरकविप्रभृतिसंप्रदायपरम्परया नाथमुनेरप्युपकर्तारं कालविप्रकर्षेऽपि परमपुरुषसङ्कल्पात् कदाचित् प्रादुर्भूय साक्षादपि सर्वोपनिषत्सारोपदेष्टारं पराङ्कुशमुनिं 'माता पिता भ्राता' इत्याद्युपनिषत्प्रसिद्धभगवत्स्वभावदृष्ट्या प्रणमति—

माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं
श्रीमत् तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥ इति ॥

अत एव शक्तैः 'क्षीरं शर्करया युक्तं स्वदते हि विशेषतः' इत्युक्तरीत्या, उपबृंहणभूतद्राविडगाथापुरस्सरमेव सूत्रभाष्यादिकमनुसन्धीयते—इदमप्येकं विशिष्टाद्वैत-दर्शने वैशिष्ट्यम् । अत एव तत्त्वहितपुरुषार्थेषु ऐकरस्यमुभयत्र ।

अत्र केचित् 'द्रमिडोपनिषत्' इत्यादिप्रथितेः अस्याः वेदवदेवापौरुषेयत्व मभ्युपगच्छन्ति। अन्ये तु भारतस्य पञ्चमवेदत्वेन व्यवहारवत् प्राशस्त्यनिबन्धन एव तादृश व्यवहार इति पौरुषेयत्वमेव वदन्ति—यथा तथा वा भवतु-प्रामाण्यस्य न कापि हानिरित्येतादृशेषु उदासितव्यमित्येव विमर्शकाः प्राहुः ।

तदेवमुपक्रान्ताऽऽकारवाच्यश्रियःपतौ अन्तिमाळ्वार्पदबोधिताचार्यपरम्परायाञ्च भक्तिः सदा कार्या मनीषिभिरिति प्रत्यबोधि । अत एवानुसन्धीयतेऽनुदिनं संप्रदाये—

'लक्ष्मीनाथ समारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ इति ॥

# इ

**इः**—लक्ष्मीः ।

'इः कामे रतिलक्ष्म्योः' (एकाक्षरकोशः)

1. श्रीमन्नारायणनाभिकमलजचतुर्मुखः ब्रह्मा । 2. अस्य–विष्णोः अपत्यं पुमान् इः–कामदेवः, 3. कोपः, 4. सन्तापः ॥ (सं.अ.)

**इक्षुरकम्**—क्षुद्रपुष्पविशेषः ।

'तवामृतस्यन्दिनि पादपङ्कजे
निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे
मधुव्रतो नेक्षुरकं हि वीक्षते' ॥ (स्तो.र. 27)

कण्टकावृतमस्थिरात्यल्परसं भ्रमरस्पर्शमात्रेऽपि म्लानतामश्नुवानं देवार्चनाद्यनर्हं निर्गन्धं किमपि क्षुद्रपुष्पम् । **तन्न वीक्षते**—अत्यासन्नमपि मकरन्दलिप्सया नाद्रियते । (स्तो. भा.)

अनेन निदर्शनेन अमृतस्यन्दिनि मोक्षप्रदे भोग्यतमतया च श्रुतिस्मृत्यादिप्रसिद्धे निवेशितात्मा पुरुषार्थान्तरे मनो न निवेशयतीति प्रादर्शि ॥

**इक्षुरसन्यायः**—लौकिकन्यायविशेषः ।

[रसविशेषः स्वानुभवैकवेद्यः ।]

गुड-शर्करादिषु भिन्नरसरूपादि दृश्यते, इक्षुविकारत्वे समानेऽपि भेदाः दरीदृश्यन्ते । (मी. को.)

अनेन न्यायेन निरतिशयानन्दरूपब्रह्मणोऽनुभवः कथं वर्तते इति प्रश्ने, वैषयिकानन्द-कैवल्यानुभव-ब्रह्मानन्दानामानन्दत्वेन साम्येऽपि विशेषः स्वानुभवैकवेद्यः इति बोधितम् । तदुक्तम्—

'इक्षु-क्षीर-गुडादीनां माधुर्यं महदन्तरम् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥ इति ॥

**इक्षुरसोदः**—इक्षुसंज्ञकः पञ्चाशत्कोटिविस्तारभूमण्डलस्यावरणभूतः समुद्रः ।

'प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपस्समावृतः ।
तथैवेक्षुरसोदेन परिवेषानुकारिणा' ॥ (वि. पु. 2-4-20)

'पञ्चाशत्कोटिविस्तारा सेयमुर्वी महामुने ।
सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा' ॥

इत्युक्तेः पञ्चाशत्कोटियोजनविस्तारा सेयमुर्वी । अन्ये तु विस्तारशब्दं व्यासार्धपरं कृत्वा मेरोरभितः पञ्चाशत्कोटित्वं वर्णयन्तः, भूमेः शतकोटिविस्तारत्वं प्राहुः । पुराणकारस्य हि वैराग्योत्पादने भगवन्माहात्म्यज्ञापने च तात्पर्यात् न लोकसंख्यागणितेष्वत्यादरः । यद्वा कल्पभेदादनयोः पक्षयोः अविरोधः कल्पनीयः । (वि. चि)

लक्षद्वययोजनविस्तीर्णप्लक्षद्वीपमावृत्य विद्यमानः ॥ (सं. अ)

**इच्छाद्वेषप्रयत्नादयः**—इच्छा-द्वेष-प्रयत्न-सुख-दुःखादयः धर्मभूतज्ञानावस्थाविशेषाः ।

इच्छाद्वेषप्रयत्नाः सुखमितरदपि ज्ञानतो नातिरिक्ता
या धीस्तद्धेतुरिष्टा न तदधिकतया कल्पने कोऽपि लाभः ।
पर्यायत्वं विशेषे न तु भवति यथा प्रत्यभिज्ञादिभेदे
नो चेदीर्ष्याभ्यसूयाभयधृतिकरुणाद्यन्यदन्यच्च कल्प्यम् ॥ (तु. मु. 428)

इच्छाद्वेषादीनां ज्ञानदतिरिक्तत्वमाहुरन्ये । तद्दूषयति—**इच्छेति** । तत्र कल्पनालाघवं प्रमाणमाह—**या धीरिति** । इच्छादिहेतुभूतानुकूलादिविषया बुद्धिरेव इच्छादिव्यवहारमातनोति ; तदतिरिक्तकल्पने न कोऽपि लाभः, गौरवदोष एव लभ्यते । तर्हि ज्ञानेच्छादीनां पर्यायत्वं स्यादित्याशङ्क्य परिहरति—**पर्यायत्वमिति** ।

यथा ज्ञानत्वाविशेषेऽपि प्रत्यभिज्ञास्मृत्यनुमित्यनुभवादिभेदे न पर्यायत्वम् ; तद्वदिहापीति । नो चेत् ईर्ष्याभ्यसूयाभयधृतिकरुणाशान्तितुष्ट्यादिव्यवहाराणामपि विषयलाभार्थमर्थान्तरं कल्प्यमित्यनियतिरेव स्यात् ॥ (स. सि.)

[सिद्धान्ते ज्ञानस्य द्रव्यतया इच्छादीनां तदवस्थाविशेषरूपत्वं युज्यत एव । तेषामतिरिक्ततया साधनं लाघवानुरोधेन दूषितं चान्यत्र तत्त्वमुक्ताकलापे—'दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुरोधात्'–इति ।]

बुद्धिरेव उपाधिभेदात् सुखदुःखेच्छाद्वेषप्रयत्नरूपा । सुखादिजनकतयाऽभ्युपगतज्ञानातिरेके प्रमाणाभावात् । 'इच्छामि, द्वेष्मि' इत्यादिव्यवहारस्य 'स्मरामि' इत्यादिवत् ज्ञानविशेषेणैव उपपत्तेः । वैषयिकसुखदुःखरूपत्वं ज्ञानस्य विषयाधीनमित्यनुकूलत्व-प्रतिकूलत्वाविशेषात् विषयस्यापि सुखदुःखशब्दवाच्यत्वमस्त्येव । प्रपञ्चितमेतत् भूमाधिकरणे । तथा वेदार्थसंग्रहे—'विषयायत्तत्वात् ज्ञानस्य सुखरूपताया ब्रह्मैव सुखम्' इत्युक्तम् । सुषुप्त्याद्यवस्थासु प्रयत्नो नास्त्येव; अनुपलम्भात् । अदृष्टादिवशाच्च निश्वसितादिसिद्धिः । परैरपि तत्रैव प्रयत्नकारणतया अदृष्टादिकमभ्युपगतम् । तन्निश्वासाद्यर्थमेव भवतु । अतो मध्ये प्रयत्नकल्पकप्रमाणं स्पन्दत्वादिहेतुरन्यथासिद्धः । उक्तञ्च अन्तराभूतग्रामवत् इत्याद्यधिकरणे भाष्ये—'प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात्' इति, 'तस्य सुषुप्तिमूर्छादौ प्राणनादेरकर्तृत्वात्' इति च । कर्तृत्वाभावेऽपि कृतिविजातीयकल्पनं प्रयत्नकृतिशब्दपर्यायत्वप्रसिद्धिगौरवाभ्यां प्रतिहतम् । (न्या. सि. 278, 279)

यत्तु वरदविष्णुमिश्रैः 'सुखदुःखे ज्ञानरूपे एव' इत्युक्त्वा, अनन्तरम् 'इच्छाद्वेषप्रयत्ना मानसप्रत्यक्षाः' इत्युक्तम् । तन्न्यूनम्, इच्छादिगुणान्तरसद्भावाभिमानमूलं वा, परमतमूलं वा? सुख-दुःखयोः ज्ञानरूपत्वे च इच्छादिषु को विशेषः? इति ।

'मिथस्संश्रयधीबाधमध्यावस्थोपलम्भनैः ।
न स्यात् परस्पराभावमात्रता सुखदुःखयोः' ॥ (न्या. सि. 265)

अन्यत्र चोक्तम्—

'इच्छादयो न देहैकदेशवर्तिन इत्यतः ।
आत्मनः स्युर्गुणा ज्ञानविशेषाश्च प्रकीर्तिताः' ॥

'इच्छाद्वेषप्रयत्नादिशब्दैर्धीरभिजायते ।
अर्थभेदानुविद्धास्ते धीविशेषाः प्रकीर्तिताः ' ॥ इति ॥ (न्या. सि. 287, 290)

अत्र आदिपदेन 'कामः, सङ्कल्पः, विचिकित्सा, श्रद्धा, अश्रद्धा, धृतिः, अधृतिः, ह्रीः, धीः, भीः इत्येतत्सर्वं मन एव' (बृ. उ. 3-5-3) इत्युक्ताः विवक्षिताः ॥

**इच्छाद्वेषादीनां मनोवृत्तिविशेषत्वनिरासः—**

[एते मनसः अवस्थाविशेषा, इति मतं विमृश्य मनःकरणकाः ज्ञानावस्थाविशेषा एवेति निर्धार्यते ।]

ननु आत्मगुणाः सुखादयो मा भूवन्, मनोवृत्तिभेदास्तु भविष्यन्ति । तथा च आत्मसिद्धावुक्तम्—

यत्तु सुखादिनिदर्शनेन आत्मविशेषगुणतया चितेरागन्तुकत्वमुपपादितम्, तदपि गुणवृत्तापरिज्ञानेन इत्युपक्रम्य, सुख-दुःखे च नात्मधर्मौ इन्द्रियसौष्ठवनाशयोरेव तद्भावोपपादनात् । व्याकरिष्यते चैतदन्तिमपदार्थसमर्थनाऽवसरे इति साधनविकलता च निदर्शनस्य । रागद्वेषादयोऽपि मनोऽवस्थाविशेषाः ; न साक्षादात्मगुणाः । विज्ञायते हि 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत्सर्वं मन एव' इति ।

'इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतनाधृतिः । एतत्क्षेत्रं समासेन' इति गीताश्चोदाहृत्य तदर्थं शरीरलक्षणञ्चोपपाद्य, पुनः 'किमिदं धीः' इति धीशब्दसहपाठमाशङ्क्य, उत्प्रेक्षाभिप्रायं तत्; न ज्ञप्तिविषयम् । तस्याः स्वाभाविकत्वस्य तस्यामेव श्रुतौ श्रूयमाणत्वात् । श्रूयते हि—'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते इति' इत्याद्युक्तम् ।

तथा 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इति सूत्रे यथा न कामादिकं मनसस्तत्त्वान्तरम् । 'कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत्सर्वं मन एव' इति वचनात्; एवं 'प्राणो व्यानोऽपान उदानस्समान इत्येतत्सर्वं प्राण एव'

इति वचनात् 'अपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः; न तत्त्वान्तरमित्यवगम्यते' इति भाष्यम्। तत्कथं सुखादीनामात्मगुणत्वम्?

अत्रोच्यते—अश्रुतसिद्धान्तस्य पुस्तकनिरीक्षणात् अयं दोषः। तथाहि—आत्मसिद्धौ तावत्—'यत्तु सुखादिनिदर्शनेन' इत्यस्यानन्तरम्,

स्वरूपोपाधयो धर्मा यावदाश्रयभाविनः।
नैवं सुखादिबोधस्तु स्वरूपोपाधिरात्मनः॥ इत्युक्तम्।

यथा च बोधोपाधिरात्मभावस्तथोपपादितम्। इति स्वाभाविकत्वास्वाभाविकत्वाभ्यां बोधमात्रस्य सुखादेश्च भेदमभिधाय 'सुखदुःखे च नात्मधर्मौ' इत्यादि तु वैभववादेन, मतान्तरेण वा अभिहितम्। अन्यथा कथमेवमुपसंहारारम्भे ब्रूयात्—'तदेवमात्मस्वभावभूतस्य चैतन्यस्य विषयसंश्लेषविशेषगोचर एव निश्चयसंशयादिव्यवहारभेदः, तद्विशेषभाजि चैतन्ये वा' इति। आगन्तुकत्वे इन्द्रियोपाधिकत्वाद्यविशेषात्। न च तथोक्तम्, अन्यथा चोक्तम्।

ननु अश्रुतसिद्धान्तस्य इति भवत एव दोषः; न स्यात्—न्यायतत्त्वशास्त्रप्रकरणं हि आत्मसिद्धिः। तत्र च शास्त्रे ज्ञाननिरूपणात्मकप्रथमपादषष्ठाधिकरणे सर्वं स्पष्टम्।

सूत्रभाष्ययोश्च अयं भावः—तत्तदवस्थाज्ञानजनकत्वावस्थाभेदभिन्नं मनः, तैस्तैर्व्यपदिश्यते इति। निर्व्यूढश्च तुल्यन्यायमन्यत् 'सप्तगतेः' इत्यधिकरणे 'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुध्यहङ्कारचित्तशब्दैः व्यपदिश्यते' इति।

उक्तश्च वेदार्थसंग्रहे—'दुःखाज्ञानमला धर्मः प्रकृतेस्ते न चात्मनः' इत्यत्र 'प्रकृतिसंसर्गकृतकर्ममूलत्वात् नात्मस्वरूपप्रयुक्तधर्मा इत्यर्थः। प्राप्ताप्राप्तविवेकेन प्रकृतेरेव धर्मा इत्युक्तम्' इति। तथा तत्रैव—'भक्तिशब्दश्च प्रीतिविशेषे वर्तते। प्रीतिश्च ज्ञानविशेष एव' इत्युक्त्वा, 'ननु च सुखं प्रीतिरिति नार्थान्तरम्; सुखञ्च ज्ञानविशेषसाध्यं पदार्थान्तरमिति हि लौकिकाः' इति चोद्यं कृत्वा, 'नैवम्; येन ज्ञानविशेषेण तत् साध्यमित्युच्यते, स एव ज्ञानविशेषः सुखम्।

एतदुक्तं भवति—विषयज्ञानानि सुखदुःखमध्यस्थसाधारणानि । तानि च विषयाधीनविशेषाणि तथा भवन्ति, येन विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतम्— तद्विषयज्ञानमेव सुखम् । तदतिरेकि पदार्थान्तरं नोपलभ्यते । तेनैव सुखित्वव्यवहारोपपत्तेश्च ' इत्याद्युक्तम् । ' इच्छा द्वेषः ' इत्यादिभगवद्गीतावचनन्तु तत्रैव भाष्यकारैर्निर्व्यूढम्—' इच्छा द्वेषः सुखं दुःख 'मिति क्षेत्रकार्याणि क्षेत्रविकारा उच्यन्ते ।

यद्यपि इच्छाद्वेषसुखदुःखान्यात्मधर्मभूतानि, तथापि आत्मनः क्षेत्रसंबन्धप्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्यन्ते । तेषां पुरुषधर्मत्वम्—' पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । इति वक्ष्यते ' इति ।

उक्तञ्च श्रीराममिश्रैः षडर्थसङ्क्षेपे—' वेद्यभेदधीभेदः सुखम् , अन्यादृष्टेः ' । इत्यादि ।

उक्तञ्च वरदविष्णुमिश्रैरपि—' सुखदुःखे तावत् अनुकूलप्रतिकूलविषये ज्ञाने एवेति न गुणेष्वन्तर्भाव एव ' इत्यादि ।

उक्तञ्च सङ्गतिमालायां श्री विष्णुचित्तैः—' एवं परमात्मनः पावकप्रकाशौष्ण्यादिस्थानीयं जीवस्वरूपमपि सुषुप्तिसंहारयोः परमात्मनो भेदकसंशयनिर्णयविपर्ययायथाज्ञानप्रत्यक्षानुमानागमरागद्वेषलोभमोहमदमात्सर्यधैर्यविचिकित्साश्रद्धालज्जाभयाद्यनन्तज्ञानप्रसरणरूपविकारभेदशून्यम् ' इत्यादि ।

तत्सिद्धं सुखादयो बुद्धिविशेषा इति ॥ (न्या. सि. 280-283)

[यदुक्तं ' सर्वं मन एव ' इति प्रमाणं तत् एवं व्याख्यातम् ।]

मनसा ह्येव पश्यति मनसा शृणोति । मनसो यस्मात् व्यासङ्गदशायां दर्शनश्रवणाभावः ; तस्मात् दर्शनश्रवणे मनःकरणके इति भावः । अत्यल्पमिदमुच्यते दर्शनश्रवणे मनःकरणके इति, कामादिकमपि मनःकरणकमित्याह—**कामस्सङ्कल्पो— सर्वं मन एव** । **कामः**—विषयाभिलाषः, **सङ्कल्पः**—व्यवसायः, **विचिकित्सा**—सन्देहः, **श्रद्धा**—कर्मसु आस्तिक्यबुद्धिः । **अश्रद्धा**—तद्विपरीतबुद्धिः, **धृतिः**—प्रीतिः,

**अधृतिः**—अप्रीतिः, **ह्रीः**—लज्जा, **धीः**—प्रमाणजन्यज्ञानमात्रम्, **भीः**—आगामिदुःखशङ्का, एतत् सर्वं **मनः**—मनःकरणकमेवेति फलितार्थः। कार्यकरणोपचारात् कामादीनां मन एव प्रधानं साधनमित्युक्तम्। (बृ. उ. रं. भा. 3-5-3)

**इच्छाद्वेषादीनां क्षेत्रविकारत्वशङ्कानिरासः**—

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥
इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतनाधृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम्'॥ (गी. 13-5, 6)

इच्छा, द्वेषः, सुखम्, दुःखम् इत्येते आत्मगुणाः इति यान् आचक्षते वैशेषिकाः, तेऽपि क्षेत्रधर्मा एव; न तु क्षेत्रज्ञस्य इत्याह भगवान्—**इच्छेत्यादिना**। इयमिच्छा अन्तःकरणस्य धर्मः। ज्ञेयत्वात् क्षेत्रम्। तथा द्वेषः, तथा सुखम् अनुकूलं ज्ञेयत्वात् क्षेत्रमेव; तथा दुःखमपि प्रतिकूलं ज्ञेयत्वात् क्षेत्रमेव। चेतना सा चैवमेव ज्ञेयत्वात् क्षेत्रम्। सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणम्। एतत् क्षेत्रं **सविकारम्** सह विकारेण महदादिना उदाहृतमिति क्षेत्रविकारत्वम्। (शं.भा.)

यद्यपि इच्छादीन्यात्मधर्मभूतानि, तथापि आत्मनः क्षेत्रसम्बन्धप्रयुक्तानि क्षेत्रकार्यतया क्षेत्रविकारा उच्यन्ते; तेषां पुरुषधर्मत्वं 'पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति वक्ष्यते। सङ्घातः चेतनाधृतिः। आधृतिः—आधारः। सुखदुःखे भुञ्जानस्य चेतनस्याधारतयोत्पन्नो भूतसङ्घातः प्रकृत्यादिपृथिव्यन्तद्रव्यारब्धमिन्द्रियाश्रयभूतम् इच्छाद्वेषसुखदुःखविकारिभूतसङ्घातरूपं चेतनसुखदुःखोपभोगाधारत्वप्रयोजनं क्षेत्रमित्युक्तं भवति। एतत् क्षेत्रं समासेन—संक्षेपेण सविकारं सकार्यमुदाहृतम् इति। (गी. भा.)। क्षेत्रासाधारणकार्यत्वात् क्षेत्रविकारत्वव्यपदेशः औपचारिक इत्याशयः। (ता. चं)

**इच्छाविहारस्थली**—लीलाभूमिः।

एनामात्मतिरस्क्रियायवनिकामिच्छाविहारस्थलीं
निर्व्यापारविभावरीसहचरीं निद्रामनिद्रात्मनः।
ब्रह्मस्तम्बमहेन्द्रजालरचनापिञ्छावलीं श्रीमतो-
विष्णोर्लोहितशुक्लकृष्णशबलां विद्यामविद्यातनुम्॥ (न्या.सि. 112)

**निर्व्यापारविभावरीसहचरीम्**—निर्व्यापारविभावरीरूपे प्रलये परमात्मनः सहायतया अवस्थानात् तस्य सहचरीम्, अनिद्रस्य परमात्मनो योगनिद्रारूपाम्, 'अजामेकाम्' इति श्रुतिप्रतिपाद्याम्, **अविद्याम्**—अविद्याशब्दिताम् **तनुं विद्याम्**—तत्त्वतो जानीयाम् ॥ (टी.)

ननु 'जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णनाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु' (पा. सू. 4-1-42) इत्यनेनाकृत्रिमरूपार्थे स्थलशब्दात् ङीप् विहितः । तथा च प्रकृते लीलाविभूतेः क्रियया निष्पन्नत्वात् कथं ङीप् इति चेत्, इदानीन्तनपुरुषपरिष्कृता भूमिः कृत्रिमा, तद्भिन्ना अकृत्रिमेति शाब्दिकोक्तेः न शङ्काया अवकाशः । परमात्मनैव सृज्यमानत्वात् अस्या भूमेः । अत एव 'स्थलयोदकं परिगृह्णन्ति' इति यजुर्वेदे च श्रूयते ।

**इज्यः**—(स.ना. 447)

कामाधिकारैरिन्द्रादिद्वारा इज्यामर्हतीति इज्यः ।

> ये यजन्ति पितॄन् देवान्
> ब्राह्मणान् स हुताशनान् ।
> सर्वभूतान्तरात्मानं
> विष्णुमेव यजन्ति ते ॥ (वि.स भा.)

यजदेवपूजासङ्गतिकरणदानेषु इति धातोः 'वृजयजोर्भावे क्यप्' (पा. सू. 3-3-98) इत्यनेन भावे क्यपि, 'वचिस्वपियजादीनां किति' (पा.सू. 6-1-15) इति संप्रसारणे यकारस्य इकारे, 'संप्रसारणाच्च' (पा.सू. 6-1-180) इति पूर्वरूपे, अदन्तत्वात् टापि निष्पन्नः इज्याशब्दः ।

इज्याशब्दात् 'तदर्हति' ((पा.सू. 5-1-63) इत्यधिकारे 'दण्डादिभ्यो यः' (पा.सू. 5-1-66) इत्यनेन यत्प्रत्यये, 'यस्येति च' (पा.सू. 6-4-148) इत्यनेन आकारलोपे, 'हलो यमां यमि लोपः' (पा.सू. 8-4-64) इत्यनेन पूर्वयकारलोपे च इज्या इति रूपसिद्धिः । (वि.स.निर्व.)

यज्ञाराध्यतया यज्ञः इज्यः कर्मभिरर्चितः । (वि.स.नि.)

**इज्याः**—ईश्वरप्रणिधानम् ।

[ 'यज देवपूजायां' अस्माद्धातोः भावे क्यप् ]

अभिगमनोपादानेज्यास्वाध्याययोगसंज्ञैः ।
अनुसन्दधदच्छिद्रः प्रयाति परमं पदम् । (विष्णोः) (प्र.ध.स. 51)

वासुदेवः पराप्रकृति—तमित्थम्भूतं परमेश्वरं भगवन्तम् अभिगमनोपादानेज्यास्वाध्याययोगैः वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति च ॥ (शं.भा. 2-2-42)

**इज्याकालः**—अभिगमनोपादानेज्यास्वाध्याययोगरूपपञ्चकालेष्वन्यतमः ।

अभिगच्छेज्जगद्योनिं तच्चाभिगमनं स्मृतम् ।
ततः पुष्पफलादीनाम् उत्थायार्जनमाचरेत् ॥
भगवद्यागनिष्पत्तिकारणं प्रहरं परम् ।
तदुपादानसंज्ञं वै कर्मकालपदाश्रितम् ॥
ततोऽष्टाङ्गेन यागेन पूजयेत् परमेश्वरम् ।
साधिकं प्रहरं विप्र इज्याकालस्तु स स्मृतः ॥
श्रवणं चिन्तनं व्याख्या ततः पाठसमन्विता ।
स्वाध्यायसंज्ञं तं विद्धि कालांशं मुनिसत्तम ॥
दिनावसाने संप्राप्ते पूजां कृत्वा समभ्यसेत् ।
योगं निशावसाने च विश्रमैरन्तरीकृतम् ।
पञ्चमो योगसंज्ञोऽसौ कालांशो ब्रह्मसिद्धिदः ॥ (पां.र. 48)

इह तावदेकैकस्मिन्नहोरात्रे कालपञ्चकविभागेन अभिगमनोपादानेज्यास्वाध्याययोगरूपभगवत्सेवनं स्ववर्णाश्रमजातिगुणनिमित्तादिनियतधर्मसचिवं भगवद्धर्मनिष्ठानां सर्वेषां समानम् । तच्च संहिताभेदेषु चोदनाख्याविशेषेऽपि सूत्रभेदेषु समानचोदनाख्यचत्वारिंशत् संस्कारादिवत् लेशतो भिन्नरूपं प्रतिपाद्यते ॥ (पां.र. 45)

**इतरक्षपणाधिकरणम्**—(4-1-11)

'भोगेन त्वितरे क्षपयित्वथ सम्पद्यते' इत्येकसूत्रात्मकमिदमधिकरणम् ।

प्रारब्धकर्मणः एकशरीरावसानतामाशंक्य, तस्य भोगेनैव क्षपयितव्यतानियमेन एकशरीरावसाननियमो नास्ति इत्युक्तम् ।।

> यावन्न मोक्ष्येति विशेषशब्दात्
>
> आरभ्यमाणस्य फलं च कर्म ।
>
> तद्देहपातावधिकं न चैतत्
>
> तस्याः श्रुतेः तत्फलगोचरत्वात् ।। (न्या. क.सं. 4-11)

**इतरपरामर्शात्स इति चेन्न असम्भवात्**—(ब्र सू 1-3-17)

(दहराधिकरणे पञ्चमं सूत्रम् ।) परमात्मनः इतरः जीवः, 'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाये'ति जीवस्य परामर्शात् स एव दहराकाश इति चेत्तन्न; पूर्वोक्तानां गुणानां तस्मिन् असम्भवात् ।

अयं दहराकाशो मास्तु भूताकाशः । जीवस्तु स्यात् दहरश्रुत्यवगत-सूक्ष्मतायास्तत्रैव स्वरसत्वात् 'यावान्' इत्यादिवाक्यावगतभूताकाशसमपरिमाणत्वं तु धर्मभूतज्ञानव्याप्त्या उपपद्यते ।

नचैवं गौणत्वापत्तिर्दोषः । अतिमहति परमात्मन्यपि तत्समपरिमाणत्वोक्तेः न्यूनपरिमाणत्वव्यवच्छेदार्थतया गौणत्वतौल्यात् । अपहतपाप्मत्वादिकं तु उभयोः साधारणम् । गतिशब्दावपि जीवेऽपि सम्भवतः । ब्रह्मलोकपरिज्ञानासम्भवस्य बद्धेषु जीवेषु सम्भवात् । मुक्तेषु हि तदवेदनं सिद्धान्तेऽपि हि न सम्भवति । 'अनृतेन हि प्रत्यूढाः' इति च मुक्तेषु नान्वेति । अतोऽनृतशब्दितकर्मावृता एनं जीवात्मानं ब्रह्मलोकं ज्ञानवैपुल्यात् ब्रह्मशब्दभाजं न विन्दन्ति न लभन्ते स्वात्मालाभ एषां दोषः इति भावः । अतः स्वात्मलाभाय 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यश्च' इति फलितोऽर्थः ।

एवं धृतिरपि कर्मद्वारा साक्षाद्वा जीवधार्यत्वात् सर्वेषामचेतनानां न विरुद्धा । आकाशशब्दश्च प्रकाशस्वभावे तस्मिन् न विरुध्यते । अतो दहराकाशः प्रत्यगात्मा ।

दहरप्रकरणे ' एष संप्रसादोऽस्माच्छरीरात् समुत्थाय ' इति तस्यैव निर्दिष्टप्रतिनिर्देशकेन एतच्छब्देन परामर्शादिति । तदिदमाशङ्कते–' इतरपरामर्शात् स इति चेत् ' इति।

तत्रोत्तरम्–' नासम्भवात् ' इति। नैतदुपपद्यते, यत् दहराकाशः प्रत्यगात्मेति। असम्भवात्- अपहतपाप्मत्वाद्युक्तवक्ष्यमाणसर्वगुणानां तस्मिन् असम्भवात् इति ।।

जीवस्य च परामर्शात् सम्प्रसाद इति श्रुतेः ।
वाक्यशेषे स इति चेन्न जीवोनुपपत्तितः ।। (ब्र.प.मा.)

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः**—(ब्र.सू. 2-1-21)

(इतरव्यपदेशाधिकरणे आदिमं सूत्रम् ।) इतरस्य—जीवस्य, व्यपदेशात्— ' तत्त्वमसि, अयमात्मा ब्रह्म ' इत्यादिभिः ब्रह्मभावव्यपदेशात्, हिताकरणादिदोषः । आदिनाऽहितकरणं च प्रसज्यते ।

' तत्त्वमसि ', ' अयमात्मा ब्रह्म ' इति कार्यभूतस्य इतरस्य जीवस्य ब्रह्मभाव-व्यपदेशाद्धि अनन्यत्वमुक्तम् आरम्भणाधिकरणेन । एवं तर्हि सर्वज्ञस्य सत्यसंकल्पस्य ब्रह्मणः आत्मनो हितरूपकार्यं जगदकरणम्, अहितरूपकार्यकरणं चेत्यादि दोषप्रसक्तिरिति ब्रह्मणः जगत्कारणत्वमसंगतम् इति पूर्वपक्षपरमिदम् ।

यद्यपि व्यपदेशमात्रं सूत्रोपात्तम्; तथाऽपि तदनन्यत्वमिति प्रक्रमात् अभेदव्यप-देशादित्यर्थलभ्यम् । न च भेदव्यपदेशविरोधः । तस्यानन्यत्वं वदता त्वयैव परित्यागात् । अतः कार्यस्य कारणानन्यत्वं वदतां हिताकरणादिप्रसक्तिर्दुर्वारैव ।

इदन्तु शङ्क्यम् । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं, स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमित्येवं कारणात्कार्यमनन्यदित्युक्तम् । न चात्र विशिष्टाभेदे विशेषणविशेष्ययोर-भेदप्रसक्तिरस्ति; अतः कथं तदुपजीवनेन हिताकरणादिदोषाऽऽशङ्केति ।

अत्रेदं तत्त्वम् । कारणात्कार्यमनन्यदिति प्रतिज्ञाय, तत्र आरम्भणशब्दादे-स्तदुपपादकहेतुत्वं, प्रत्यभिज्ञानस्य तत्प्रमाणत्वं चोक्तम् । तच्च स्वरूपैक्यविषयकम्;

न विशिष्टाभेदविषयकम्, मृद्घटादिदृष्टान्ततदुपपादकारम्भणशब्दादिवैघट्यात्। 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यादि श्रौतं प्रत्यभिज्ञानं च मृद्घटादिप्रत्यभिज्ञानमिव स्वरूपैक्य एव स्वरसम्; न विशिष्टाभेदे। कार्यत्वं कारणत्वं च 'जन्माद्यस्य यतः' इति अचिन्त्यविविधविचित्ररचनास्पदस्य जगतः, निखिलहेयप्रत्यनीकस्य सर्वज्ञस्य सत्यसंकल्पस्य ब्रह्मणश्च उक्तम्; न विशिष्टस्य। अतस्तयोरैक्यमपि स्वरूपैक्यमेव वक्तुं युक्तम्; न तु शरीरात्मभावनिबन्धनविशिष्टैक्यनिबन्धनं, तत्कल्पकानुपलम्भात्। तदेतदाह—इतरव्यपदेशादिति। इतरस्य—केवलस्य जीवस्य व्यपदेशात्—'तत्त्वमसि' इत्यनन्यत्वव्यपदेशादिति।

अत्र इतराभेदादित्येव वक्तव्ये इतरव्यपदेशादित्युक्तिः सत्वाच्चापरस्येत्युक्तेः प्रागुक्ताभेदव्यपदेशस्य स्वरूपैक्यपरता पूर्वपक्षबीजमिति दर्शयितुम्। तदनेन कारणादनन्यत्वं कार्यस्य वदतां कारणत्वमेव न सिध्यति; हिताकरणादिदोषप्रसङ्गादित्युक्तं भवति। तदेतत्प्रधानतदर्थसंशयप्रदर्शनपरश्रुतप्रकाशिकास्वारस्यादवगम्यते। तद्यथा किं ब्रह्मणो जगत्कारणत्वं संभवति, उत नेति? किं ब्रह्मणो जगत्कर्तृत्वे हिताकरणादिदोषः प्रसज्यते, नेति? किं ब्रह्मणः तत्त्वमसीत्यादिसामानाधिकरण्यावगततादात्म्यमैक्यलक्षणम्? उत शरीरात्मभावलक्षणमिति। अतो लौकिकालौकिकप्रत्यभिज्ञानिबन्धनमनन्यत्वमङ्गीकुर्वतां हिताकरणादिदोषप्रसक्तिः दुर्निवारेति कार्यं कारणादन्यदेवेत्यास्थेयमिति पूर्वोक्ताक्षेपादस्यावतार इत्यत्र न किंचिदनुपपन्नम्।

कार्यकारणयोरनन्यत्वेऽपि जीवस्वरूपात् ब्रह्मस्वरूपमर्थान्तरमेवेति 'अधिकं तु भेदनिर्देशात्' इत्यादिना परिहरिष्यते। जीवपरयोरंशांशिभावेन अभेदनिर्देशश्चावगम्यते।

> जीवत्वव्यपदेशात्तु हिताकृत्यादिदोषतः।
> ब्रह्मणः कारणत्वं च न सिद्ध्येदिति चोद्यते॥ (त्र.प.मा.)

सिद्धान्तस्तु—कारणं च विशिष्टमेव। 'किं कारणं ब्रह्म' इति प्रश्ने 'त्रिविधं ब्रह्ममेतत्' इत्युत्तरोपसंहारात्। तत्र तु अयं विशेषः। यदुपादानत्वं तद्विशिष्टनिष्ठम्, यन्निमित्तत्वं तद्विशेष्यमात्रनिष्ठमिति आरम्भणशब्दादयोऽपि न स्वरूप-

-मात्रनिष्ठाः । किं त्ववस्थाविशेषनिष्ठाः । अवस्थावैशिष्ट्यं च क्वचित्साक्षात् क्वचित्परंपरया ।

न च एतादृशमुपादानत्वं जीवब्रह्मणोरभेदगमकम् । तेन विनाऽनुपपत्त्यभावात् । अभेदप्रत्यभिज्ञानमपि शरीरशरीरिभावनिबन्धनम् ; न वस्त्वैक्यनिबन्धनम् , भेदनिर्देशविरोधात् । एतदेव सर्वं 'अधिकन्तु भेदनिर्देशात्' इत्यत्र स्पष्टम् ॥

शंकरभाष्ये तु—'यद्वा-इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वप्रदर्शनात्। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति च परा देवता जीवमात्मशब्देन व्यपदिशन्ती ; न ब्रह्मणो भिन्नः शारीर इति दर्शयति । तस्माद्यद्ब्रह्मणः स्रष्टृत्वं तत् शारीरस्यैवेति । अतः स स्वतन्त्रः कर्ता सन् हितमेवात्मनः सौमनस्यकरं कुर्यान्नाहितं जन्ममरणजरारोगाद्यनेकानर्थजालम् । न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति ।

न च स्वयमत्यन्तनिर्मलः सन्नत्यन्तमलिनं देहमात्मत्वेनोपेयात् । कृतमपि कथंचिद्यद्दुःखकरं तदिच्छया जह्यात् । सुखकरं चोपाददीत । स्मरेच्च मयेदं जगद्बिम्बं विचित्रं विरचितमिति । सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति मयेदं कृतमिति । यथा च मायावी स्वयं प्रसारितां मायामिच्छयाऽनायासेनैवोपसंहरति, एवं शारीरोऽपीमां सृष्टिमुपसंहरेत् । स्वमपि तावच्छरीरं शारीरो न शक्नोत्यनायासेनोपसंहर्तुम् । एवं हितक्रियाद्यदर्शनादन्याय्या चेतनाज्जगत्प्रक्रियेति गम्यते । (इदं पूर्वपक्षपरम् ।)

सिद्धान्तस्तु 'अधिकन्तु भेदनिर्देशात्' इत्यनेन प्रतिपाद्यते । यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत्, तद्वयं जगतः स्रष्टृ ब्रूमः । न तस्मिन्हिताकरणादयो दोषाः प्रसज्यन्ते । न हि तस्य हितं किञ्चित्कर्तव्यमस्त्यहितं वा परिहर्तव्यं, नित्यमुक्तस्वभावत्वात् । न च तस्य ज्ञानप्रतिबन्धः, शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति, सर्वज्ञत्वात्सर्वशक्तित्वाच्च । शारीरस्त्वनेवंविधस्तस्मिन्प्रसज्यन्ते

हिताकरणादयो दोषाः । न तु तं वयं जगतः स्रष्टारं ब्रूमः । कुत एतत् ? भेदनिर्देशात् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः', 'सता सोम्य तदा सम्पन्नो भवति', 'शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढः' इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति ।

ननु अभेदनिर्देशोऽपि दर्शितः 'तत्त्वमसि' इत्येवंजातीयकः । कथं भेदाभेदौ विरुद्धौ सम्भवेयाताम् । नैष दोषः । आकाशघटाकाशन्यायेनोभयसंभवस्य तत्र तत्र प्रतिष्ठापितत्वात् । अपि च यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवत्यपगतं भवति, तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वं, समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् । तत्र कुत एव सृष्टिः, कुतो वा हिताकरणादयो दोषाः । अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरण-संघातोपाध्यविवेककृता हि भ्रान्तिर्हिताकरणादिलक्षणः संसारः; न तु परमार्थतोऽस्तीत्य-सकृदवोचाम । जन्ममरणच्छेदनभेदनाद्यभिमानवत् । अबाधिते तु भेदव्यवहारे 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्येवंजातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं रुणद्धि इत्युक्तम् ॥

## इतरव्यपदेशाधिकरणम् — (2–1–7)

1. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः । 2. अधिकन्तु भेदनिर्देशात् ।
3. अश्मादिवच्च तदनुपपत्तिः इति सूत्रत्रयात्मकमिदमधिकरणम् ।

अस्मिन् अधिकरणे जगद्ब्रह्मणोरनन्यत्वे जीवस्यापि ब्रह्मणोऽनन्यत्वात् हितरूप-जगदकरणाहितरूपजगत्करणादिदोषप्रसङ्ग इत्याशंक्य, 'य आत्मनि तिष्ठन्' इत्यादिभिः जीव-ब्रह्मणोः भेदव्यपदेशात् न हिताकरणादिदोषप्रसक्तिरित्युक्तम् ॥

जीवस्य ब्रह्मभावं व्यपदिशति यतस्तत्त्वमस्यादिवाक्यं
तस्माद्दुःखैककन्दं न हि सृजति जगत्कः स्वदुःखाभिलाषी ।
नैवैतद्येन भेदं प्रकटयति तयोरन्य इत्यादिवाक्यं
देहात्मत्वादिभेदश्रवणमपि यथा चेतनैक्योपदेशः ॥ (न्या.क.सं. 2-6)

**इतराधिकरणम्**—(4-1-8)

'इतरस्याप्येवमसंश्लेषः पाते तु'।

अस्मिन्नधिकरणे सुकृतस्य शास्त्रीयत्वात् तत्फलस्य केषाञ्चिदिष्टत्वदर्शनाच्च पुण्यस्य विद्यया न विरोध इति तदश्लेषविनाशौ न स्तः इत्याक्षिप्य, विद्याफलविरोधित्वसाम्यात्, 'सुकृत-दुष्कृते धूनुत' इति व्यपदेशाच्च सुकृतस्याप्यश्लेषविनाशावुक्तौ ॥

अश्लेषनाशौ हितकर्मणां तु
नैव प्रसक्तौ सुखलाभहेतोः।
तन्नैव मोक्षप्रतिबन्धकत्व-
साम्यान्मुमुक्षोः स्फुटतः प्रसक्तौ ॥ (न्या. क. सं. 4-8)

**इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न, संघातभावानिमित्तत्वात्।** (ब्र. सू. 2-2-18)

(वैभाषिकमतनिरूपणपरे समुदायाधिकरणे द्वितीयं सूत्रम्) अस्थिरेषु स्थिरत्व-बुद्धिरूपाविद्यारागद्वेषादिपरम्परया अन्योन्यकारणत्वात् सर्वकारणत्वम् उपपन्नमिति चेत्, न; अविद्यायाः सङ्घातभावानिमित्तत्वात्।

एतदुक्तं भवति—यद्यपि क्षणिकाः सर्वे भावाः, तथापि अविद्यया एतत्सर्व-मुपपद्यते। अविद्या हि नाम विपरीतबुद्धिः, क्षणिकादिषु स्थिरत्वादिगोचरा। तया संस्काराख्याः रागद्वेषादयो जायन्ते; ततश्चित्ताभिज्वलनरूपं विज्ञानम्; ततश्च नामाख्याः चित्तचैत्ताः; ततश्च पृथिव्यादिकं च रूपिद्रव्यम्; ततः षडायतनाख्य-मिन्द्रियषट्कम्, ततः स्पर्शाख्यः कायः; ततो वेदनादयः; ततश्च पुनरप्यविद्यादयो यथोक्ता इत्यनादिरियमविद्यादिकान्योन्यमूला चक्रपरिवृत्तिः। एतच्च सर्वं पृथिव्यादि-भूतभौतिकसंघातमन्तरेण नोपपद्यते। अतः संघातभावादिकमुपपन्नमिति।

तत्रोत्तरम्—न संघातभावानिमित्तत्वादिति। नैतदुपपद्यते, एषामविद्यादीनां पृथिव्यादिभूतभौतिकसंघातभावं प्रत्यनिमित्तत्वात्। न खलु अस्थिरादिषु स्थिरत्वादि-बुध्यात्मिकाऽविद्या तन्निमित्ता; रागद्वेषादयो वाऽर्थान्तरस्य क्षणिकस्य संहतिहेतुतां प्रतिपद्यन्ते। शुक्तिकारजतादिबुद्धिर्हि न शुक्त्याद्यर्थसंहतिहेतुर्भवति।

किंच यस्य क्षणिके स्थिरत्वबुद्धिः सः तदैव नष्ट इति कस्य रागादय उत्पद्यन्ते। संस्काराश्रयं स्थिरमेकं द्रव्यमनभ्युपगच्छतां संस्कारानुवृत्तिरपि न शक्या कल्पयितुम् ॥

इतरेतरहेतुत्वादविद्यादेर्जगद्भवेत् ।
इति चेन्न तथाप्यस्याः संघातत्वे न हेतुना ॥ (ब्र. प. मा.)

**इतरेतरयोगः**—द्वन्द्वसमासप्रभेदः ।

[द्वन्द्वो द्विविधः । इतरेतरयोगः समाहारश्चेति । 'मिलितानामन्वये इतरेतरयोगः', 'समूहः समाहारः' ।

परस्परापेक्षितानां समुदितानां एकस्मिन् अन्वयो यत्र तत्रेतरेतरयोगः । परस्परसाहचर्यं चार्थः प्रत्येतव्य इत्यर्थः । यथा धवश्च खदिरश्च धवखदिराविति । अत्र परस्परसाहित्यसूचनाय चकारद्वयप्रयोगः ।

समाहारं लक्षयति—समूहस्समाहार इति । परस्परसाहित्यमित्यर्थः । यथा संज्ञापरिभाषयोस्समूहः संज्ञापरिभाषमिति, तत्रेतरयोगद्वन्द्वे साहित्यं द्रव्यविशेषणम् । यथा धवखदिरौ छिन्धीति । समाहारद्वन्द्वे तु समूहो विशेष्यम् ।]

ब्रह्मलक्षणपरवाक्ये समन्वयमाह–एकस्मिन् कार्ये अन्योन्यसापेक्षतया तुल्यनिष्पादकत्वेनान्वय इतरेतरयोगः । यथा दर्शपूर्णमासयोः स्वर्गं प्रति । अत्र समुदितविवक्षा । अयमेव समुदायविवक्षायां समाहारः ; तत्कृतमेकवचनत्वं नपुंसकत्वञ्च । अतोऽत्र सृष्टिस्थितिप्रलयमिति समाहारे द्वन्द्वः कृतः । वाक्यार्थयोजनायां सृष्टिस्थितिप्रलया इति इतरेतरयोगद्वन्द्वः कृतः ; उभयोरपि फलैक्यात् ॥

(श्रु. प्र. 1-1-2)

**इतरेतराश्रयः**—उत्पत्ति-ज्ञप्ति निबन्धनः अन्योन्याश्रयः (दोषविशेषः) ।

तर्कः—आत्माश्रय-अन्योन्याश्रय चक्रका-अनवस्था-केवलानिष्टप्रसङ्गभेदेन पञ्चविधः। स्वकार्येण स्वोत्पत्त्यभ्युपगमे विरोधप्रसङ्गः अन्योन्याश्रयप्रसङ्गः । यथा देवदत्तः पिता यज्ञदत्तस्य, तस्मिन्नेव च जन्मनि स एव तस्येति । (न्या. प. 145)

अन्योन्याश्रयत्वं च परस्परज्ञप्त्यधीनज्ञप्तिकत्वम् । यथा—परमते शास्त्रस्य निर्विशेषपरत्वनिश्चये सति भेदवासनायाः दोषत्वनिश्चयः । भेदवासनायाः दोषमूलत्वनिश्चये सति शास्त्रस्य निर्विशेषवस्तुबोधकत्वनिश्चयः इति ॥ (सं. अ.)

इतरे त्वर्थसामान्यात्—(ब्र. सू. 3-3-13)

(आनन्दाद्यधिकरणे तृतीयं सूत्रम् ।) ब्रह्मसंबन्धिनाम् आनन्दादीनां गुण्यपृथग्भावात् गुणानां सर्वत्रोपसंहारः प्रतिपादितः । तर्हि तयैवरीत्या ब्रह्मसम्बन्धिनाम् ऐश्वर्यगाम्भीर्यादिगुणानामपि उपसंहारः स्यादिति चोदनायामाह । तु शब्दः चोद्यव्यावृत्त्यर्थः ।

**इतरेत्विति** ऐश्वर्याद्यपेक्षयेतरे आनन्दादय एव सर्वत्रानुवर्तन्ते । कुतः ? **अर्थसामान्यात्**—धर्मिस्वरूपसाम्यात् । एतेन ऐश्वर्यादीनां वास्तवत्वसिद्धिः अत्र विवक्षिता ; न तु उपासनविषयतानियमः ।

अर्थसमानाः —अर्थस्वरूपनिरूपणधर्मत्वेन अर्थप्रतीत्यनुबन्धिनः, तेऽर्थस्वरूपवत् सर्वत्र अनुवर्तन्ते । अर्थस्वरूपशब्देन धर्मिस्वरूपमुच्यते । 'अर्थस्वरूपवद्भातिसमाधिः सोऽभिधीयते ' इति हि शौनकवचनम् । अर्थप्रतीतिकाले प्रतीयमानत्वनियमः सामान्यशब्दाभिहितं साम्यमित्यर्थः । ते च गुणाः सत्यज्ञानानन्दानन्तामलत्वानि । तथा च जगत्कारणतयोपलक्षितं ब्रह्म, इतरव्यावृत्तस्वरूपावगमाय स्वरूपनिरूपकधर्मैः सत्यत्वादिभिः सर्वत्रानुसन्धीयते ; कारुण्यादिगुणानान्तु अतथात्वात् निरूपितस्वरूपविशेषणत्वात् यत्रोक्ताः तत्रैवेति सिद्धम् ।

आनन्दादिगुणैर्ब्रह्मस्वरूपस्य निरूपणात् ।
ब्रह्मस्वरूपसाम्याच्चाप्यनुवृत्ता इति स्थितम् ॥ (ब्र. प. मा.)

शङ्करभाष्ये—इतरे त्वानन्दादयो धर्माः ब्रह्मस्वरूपप्रतिपादनायैवोच्यमाना अर्थसामान्यात्प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात्सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यं प्रतिपत्तिमात्रप्रयोजना हि त इति—इति चोक्तम् ॥

अस्मिन्नधिकरणे 'आनन्दादयः प्रधानस्य', 'प्रियशिरस्त्वाद्यप्राप्तिः', 'इतरे तु, अर्थसामान्यात्' इति हि सूत्रक्रमः । अत्र हि शङ्कराचार्यैः प्रियशिरस्त्वाद्यपेक्षया इतरे आनन्दादयः इत्यभाषि ।

श्रीभाष्यकारैस्तु आनन्दादयः प्रधानस्य' इत्यत्र प्रधानस्य गुणिनः सर्वत्राभेदात् सर्वत्र आनन्दादीनामुपसंहारः कर्तव्यः । तथा सति प्रियशिरस्त्वादीनामपि उपसंहारः स्यादिति शङ्कायां तेषामब्रह्मगुणत्वात् अप्राप्तिरिति सिद्धान्तितम् ।

तर्हि कारुण्यादीनां ब्रह्मगुणत्वात् सर्वत्र प्राप्तिः स्यादिति चेत्—तेषां ब्रह्मगुणत्वेऽपि स्वरूपनिरूपकत्वाभावात् नोपसंहारः इति च प्राहुः ।

इतरपदार्थस्तु कारुण्यादिभ्यः इतरे आनन्दादयः इत्यभिप्रयन्ति स्म ; नो चेत् ब्रह्मगुणानामानन्त्यात् उपसंहारः दुश्शक एव भवेदिति । अर्थसाम्यञ्च अर्थप्रतीतिकाले नियमेन प्रतीयमानत्वमिति हि व्यवस्थापितम् ॥

**इतरेषां चानुपलब्धेः**—(ब्र. सू. 2-1-2)

(स्मृत्यधिकरणे द्वितीयं सूत्रम् ।) **इतरेषाम्**—मन्वादिस्मृतिकर्तॄणाम्, **अनुपलब्धेः**—कपिलदृष्टप्रकारेण अनुपलम्भात्, प्रधानकारणवादः नाश्रयणीयः ।

अतीन्द्रियार्थसाक्षात्कारसमर्थस्य कपिलस्य वेदान्तानां ब्रह्मपरत्वानुपलब्धेः प्रधानपरत्वमेव उचितम् । चशब्दः चोदिताशङ्कानिवृत्त्यर्थः । इतरेषां मन्वादीनां बहूनां स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्यानां निखिलजगद्भेषजभूतस्ववाक्यतया 'यद्वै किञ्च मनुरवदत्, तद्भेषजम्' इति श्रुतिप्रसिद्धानां कपिलदृष्टप्रकारेण तत्त्वानुपलब्धेः श्रुतिविरुद्धा कपिलोपलब्धिः भ्रान्तमूलेति न तया तथोक्तो वेदान्तार्थः चालयितुं शक्यते ।

इतरेषां मुनीनां तु प्रधानस्य जगत्प्रति ।
कारणत्वानुपलब्धेर्ब्रह्मैवात्र तु कारणम् ॥ (ब्र.प.मा.)

शङ्करभाष्ये तु—'प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि न तानि वेदे लोके वोपलभ्यन्ते। भूतेन्द्रियाणि तावत् लोकवेद-प्रसिद्धत्वात् शक्यते स्मर्तुम्। अलोकवेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्येव इन्द्रियार्थस्य न स्मृतिरवकल्पते। यदपि क्वचित्तत्परमिव श्रवणमवभासते तदप्यतत्परं व्याख्यातम् 'आनुमानिकमप्येकेषाम्' इत्यत्र। कार्यस्मृतेरप्रामाण्यात् कारणस्मृतेरप्यप्रामाण्यं युक्तमित्यभिप्रायः। तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः। तर्कावष्टम्भं तु 'न विलक्षणत्वात्' इत्यारभ्योन्मथिष्यति इत्युक्तम्।

सिद्धान्ते—'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न अन्यस्मृत्यनवकाशदोषप्रसङ्गात्' इति पूर्वसूत्रे स्मृतिपदेन कपिलस्मृतिः, अन्यस्मृतिपदेन मन्वादिस्मृतयः विवक्षिताः इति सर्वसम्मतम्। तत्र कपिलस्मृत्यनुरोधेन प्रधानस्य जगत्कारणत्वे तदन्य मन्वादिस्मृतीनामनवकाशप्रसङ्गात्, तदनुरोधेन वेदान्तार्थनिर्णयः न कर्तव्य इत्युक्तम्।

इदानीं सांख्यस्मृतिकर्तुः कपिलस्य योगसाक्षात्कारेण प्रधानस्य जगत्कारणत्वेन दृष्टत्वात् सैवाश्रयणीया इति शङ्का परम् उत्तिष्ठते। तदर्थं इतरेषां मन्वादिस्मृतिकर्तॄणां बहूनां योगिनां तथा साक्षात्काराभावात् प्रधानस्य जगत्कारणत्वं नाश्रयणीयम् इत्येव सूत्रकाराणां हृदयमिति श्रीभाष्यकाराः तथा व्याचख्युः॥

**इतिकर्तव्यता**—कर्तव्यविशेषस्य कथमित्याकांक्षापूरकः अङ्गकलापः।

> 'धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
> इतिकर्तव्यताभागं मीमांसा पूरयिष्यति'॥
> 'ज्ञायमाने तु वेदान्तैः करणैः परमात्मनि।
> इमामुत्तरमीमांसामितिकर्तव्यतां विदुः'॥ (न्यायसुदर्शने)

[दर्शपूर्णमासादौ प्रयाजादिः इतिकर्तव्यतया विषयो भवति। वेदार्थनिर्णये तु मीमांसा इतिकर्तव्यतास्थानं लभते इति भावः।]

प्रपञ्चनिवृत्तेः नियोगकरणस्य इतिकर्तव्यताऽभावात् अनुपकृतस्य च करणत्वा-योगान्न करणत्वम्। कथमितिकर्तव्यताऽभाव इति? इत्थम्; अस्य इतिकर्तव्यता

भावरूपा, अभावरूपा वा? भावरूपा च करणशरीरनिष्पत्ति-तदनुग्रहकार्यभेदभिन्ना। उभयविधा च न सम्भवति। (श्री.भा. 1-1-4)

करणशरीरनिष्पत्तिः अवघातवत् प्रोक्षणवच्च दृष्टादृष्टार्थतया द्विधेति चाभिप्रेतम्। **उभयविधा**—निष्पादिका, अनुग्राहिका च। अनुग्राहको हि करणानन्तरभावी॥(श्रु.प्र)

किम्? केन? कथमिति भवत् (मीमांसक) प्रोक्तवत्, किमर्थम्? किम्? केन? कथम्? इति आकांक्षाचतुष्टये स्वर्गादिना किमर्थमित्याकङ्क्षापूरणम्, 'देवतां प्रीणयेत्' इति किमित्याकांक्षाशान्तिः। ज्योतिष्टोमेनेत्यादिनामधेयादिभिः केनेत्याकांक्षा पूर्यते। कथमित्याकांक्षापूरणं तु भवतामस्माकं च तुल्यमेवेति शाब्दोऽयं पन्थाः। (न्या.प. 165)

इति कर्तव्यं यस्याः, सा इतिकर्तव्या। तस्या भावः इतिकर्तव्यता। इतिशब्देन कर्तव्यविशेषः तत्तद्विशेषरूपेण बुद्धिस्थः परामृश्यते। बहुव्रीहेरनन्तरं भावार्थे तल्प्रत्ययः। तज्जन्यबोधे यः प्रकारः, स भाव इत्युच्यते। अत्र बहुव्रीहिः प्रकृतिः, तज्जन्यबोधः कर्तव्यविशेषविशिष्टा शाब्दीभावनेत्याकारकः। तत्र प्रकारः कर्तव्यविशेषः। स एव भावार्थकेन तल्प्रत्ययेनोच्यत इति इतिकर्तव्यताशब्दस्य कर्तव्यविशेष इत्यर्थः पर्यवसन्नः। (न्या.प्र.व्या 12)

अत्र कर्तव्यस्य इति प्रकारः इतिकर्तव्यता इति व्युत्पत्तिर्द्रष्टव्या। तदर्थश्च कर्तव्यसामान्यस्य भेदकः कर्तव्यविशेषः। यथा—मीमांसकमते 'प्राशस्त्यं शाब्द-भावनायामितिकर्तव्यतात्वेनान्वयं लभते' इति। यथा वा तेषामेव मते 'स्वर्गकामो यजेत' इत्यादौ लिङाख्यातबोध्याया अर्थभावनायां अपेक्ष्या प्रयाजाद्यङ्गजातात्मिका इतिकर्तव्यता भवति। यथा वा ओदनकामः पचेदित्यत्र लिङा भावनाभिधीयते। तत्र किं भावयेत्, कथं भावयेत् इति भाव्याद्याकांक्षायां तृणफूत्कारादिभिरुपकारं सम्पाद्य, 'पाकेनौदनं भावयेत्' इति भाव्याद्यन्वयेन वाक्यार्थः सम्पद्यते। (न्या.को)

इतिकर्तव्यता नाम कथं कर्तव्यमित्यपेक्षायाम् इत्थं कर्तव्यमिति करणस्य प्रकाराणामुपदेशात् इतिकर्तव्यं करणम्, इतिकर्तव्यता करणस्य प्रकारः, अङ्गमिति यावत्; दर्शपूर्णमासादौ प्रयाजादिः॥ (द.उ. 459)

**इतिशब्दः**—हेत्वाद्यर्थकः ।

न हि इतिकरणस्य समाप्तिरेवार्थः ; अपि तु हेतुः प्रकारोऽप्यर्थः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इति निघण्टुदर्शनात् ।

1. इत्थमिति प्रकारार्थोऽयमितिशब्दः ।

'अहमेकः प्रथममासं........इति सोऽन्तरादन्तरं प्राविशत्' इति वक्ष्यमाण-प्रकारेण इत्यर्थः । (ता. दी. 28।)

2. यद्वा अत्र इतिः हेतौ, सोऽन्तरादन्तरं प्राविशन् .......इति परमात्मानु-प्रवेशात् सर्वात्मकत्वमित्यर्थः । (ता. दी 282)

3. अर्थाविवक्षा ।

'य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच' इति इतिकरणेन (अत्राक्षिणि प्रतिबिम्बितस्यात्मत्वोक्तेः) 'मनो ब्रह्मेत्युपासीत' इतिवत् अर्थाविवक्षायाः दर्शितत्वात् ।

4 क्वचित् अर्थविवक्षा प्रतिपादकश्च। यथा—इति ह स्मोपाध्यायः कथयति इत्यादौ ॥ (छां उ. रं. भा. 4-15-6)

5. पदार्थविपर्यासकृत् ।

यथा 'घट इत्याह' इत्यादौ । अत्र घटशब्दस्य इतिशब्दसमभिव्याहारेण शब्दस्वरूपमात्रपरता । तस्यैव उच्चारणकर्मत्वसम्भवात् ।

6. प्रकाशः । यथा—'इति हरिः' ।

7. आद्यर्थः । 'ज्वलतिकसन्तेभ्यो णः' (पा. सू. 3-1-40) अत्र इतिशब्दः आद्यर्थः ॥

**इति सर्वं समञ्जसम्**—श्रीभाष्ये निगमनवाक्यम् ।

सर्वशब्देन भेदश्रुति-अभेदश्रुति-घटकश्रुति-गुणादिविधि-निषेधश्रुति-भगवत्कृपा-स्वातन्त्र्यादिपरवाक्यप्रत्यक्षादीन्यभिप्रेत्य तेषां सामञ्जस्यमुक्तम् । इतिशब्दोऽखिल-भुवनेत्यादिभाष्योक्ताशेषार्थपरामर्शी । सर्वशब्देन अनुग्राहकश्रुतिस्मृतीतिहासपुराण-वचांसि तदनुग्राहकतर्कजातं च विवक्षितम् । तेषामनया दिशा सामञ्जस्यं द्रष्टव्यम् ।

उक्तार्थबाधकत्वेन ये प्रमाणतर्काः परैः प्रयुक्ताः, तेषां सर्वेषां परिहारोऽत्रास्त्येव । एतदनन्तर्भूतार्थो नास्ति । तस्मादुक्तप्रकारेण बाधकप्रमाण-तर्कपरिहारश्चानुसन्धेयः इत्यभिप्रायेण 'इति सर्वं समञ्जसम्' इत्युक्तम् ॥ (श्रु. प्र. 4-4-22)

**इतिहासपुराणम्**—(अत्र समाहारद्वन्द्वः विवक्षितः) । उपनिषदुपबृंहणविशेषभूते ।

'ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः' । (बृ. उ. 4-4-10)

**इतिहासः**—रामायणादिः ; **पुराणम्**—विष्णुपुराणादि, (रं. भा.)

'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वणम् , चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्' । (छां. उ. 7-1-2)

'वेदानध्यापयामास महाभारत पञ्चमान्' इतिवत् ऋगादिभिः इतिहासस्य अत्र पञ्चमत्वोक्तिः । **वेदानां वेदम्**—ऋग्वेदादीनां प्रकृतिप्रत्ययावेदकं व्याकरणमित्यर्थः । (रं. भा.)

**इतिहासपुराणं पञ्चममिति**—नूनमयं वेदभागः वेदव्यासेन महर्षिणा चतुर्विधार्त्विज्योपयोगितया ऋग्वेदादीन् चतुरोध्यापितवता साक्षान्नाध्यापितः, स्वकृतेतिहास-पुराणमुखेन तु फलतः संगृहीत इति ।

यद्यपि 'वेदानां वेदम्' इत्येतत् एतद्विशेष्यं भवितुमर्हति, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्युक्तरीत्या वेदार्थवेदकत्वात् **वेदानां वेदम्** इति । (टी.)

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' । (भा. अ. 1-1-204)

पूर्वभागोपबृंहणपराणामपि स्मृतीनां कर्माराध्ये भगवति तात्पर्यमस्त्येव । उपनिषद्भागोपबृंहणपराणाम् अत एव अन्यत्र निरवकाशानामितिहासपुराणानामतीव तात्पर्यमस्ति । इतिहासपुराणयोः कर्मकीर्तनं भगवदुपासनाङ्गत्वेन धर्मशास्त्रेषु ब्रह्मकीर्तनं कर्माराध्यत्वेनेति । (श्रु. प्र. 2-1-1)

[एतेन इतिहासपुराणयोः अर्थवादपरतया प्राशस्त्य-निन्दान्यतरसमर्पकत्वमिति पूर्वमीमांसकोक्तेः नावकाशः ।]

इति ह आस्ते अस्मिन् इतिहासः, पूर्ववृत्तान्तप्रतिपादकं श्रीरामायणादिकम् ।

पुराणन्तु—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

इत्युक्त लक्षणाक्रान्तम् । (सं. अ.)

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तकथा युक्तमितिहासं प्रचक्षते ॥ (वाच.)

अत्र अल्पाच्तरम् (पा.सू. 2-2-34) इत्यनेन पुराणशब्दस्य पूर्वनिपाते प्राप्ते 'अभ्यर्हितं पूर्वम्' (वा. 1412) इत्यनेन इतिहासस्य अभ्यर्हितत्वात् इतिहासपदस्यैव पूर्वनिपातः ।

अत एव इतिहासपुराणयोः परस्परविरोधे इतिहासानुरोधेनैव पुराणानां नेतव्यत्वप्रयोजकप्रामाण्यप्रकर्षवत्त्वमितिहासस्य सिद्धम् ॥

## इतिहासपुराणाभ्याम् उपबृंहणविधिविचारः—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुतात् वेदो मामयं प्रतरिष्यति ॥'

इति शास्त्रेण अर्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति विज्ञायते । उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । सकलशाखागतस्य अल्पभागश्रवणाद्दुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेव । (श्री.भा.I. 225)

इतिहासेत्यादिश्लोके वेदशब्दो वेदान्तपरः । वेदोपबृंहणभूतेषु धर्मशास्त्रेति-हासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहणानि ; इतिहासपुराणानि उपरितनभागोपबृंहण-

पराणीति विभागः । स च स्मृत्यधिकरणे व्यक्तीभविष्यति । तत्र धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणां तदाराधनरूपत्वज्ञापनार्थम् ; इतिहासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपासनाङ्गत्वप्रतिपादनार्थम् । इतिहासस्य पुराणेभ्योऽभ्यर्हितत्वं विशेषः । अल्पाच्तरमिति पुराणशब्दस्य पूर्वनिपाते प्राप्ते अभ्यर्हितं पूर्वं प्रयोक्तव्यमिति पूर्वनिपातितस्येतिहासस्याभ्यर्हितत्वप्रतीतेः । अस्य श्लोकस्य प्रथमार्धं व्याचष्टे—**उपबृंहणं नामेति** । षष्ठ्यन्तविशेषणद्वयेन आगमोत्थं विवेकजं च ज्ञानमस्तीत्युक्तम् । तत्त्वार्थानामिति बहुवचनं कपिलमतादपि इतिहासादीनां प्राबल्यद्योतनार्थम् । **व्यक्तीकरणम्**—अज्ञातविशेषैः सह स्वावगतार्थ निष्कर्षः । यथा वेदेन कर्तव्यतया विहितस्य सन्ध्योपासनादेः शरीरशुद्धिप्रकार-दन्तधावन-स्नानादिविशेषैः सह निष्कर्षः। एवमुपनिषद्भागेऽप्यर्थनिष्कर्षः सम्पाद्यः ।

उपनिषदर्थनिष्कर्षः ब्रह्मविचारसिद्ध इति नोपबृंहणापेक्षेति शङ्कायामुत्तरार्धं व्याचष्टे—**सकलेति** । पूर्वार्धविहितोपबृंहणकार्यतोपपादकमुत्तरार्धम् । उपबृंहणं नाम अनधीतशाखान्तरार्थैः सह अधीतशाखार्थनिष्कर्षः । अतो नोपबृंहणविचारनैरपेक्ष्यमित्यर्थः ।

ननु यथा आपातप्रतीत्या फलवदर्थावगमात् कर्मविचारे, तदनन्तरं ब्रह्मविचारे च रागतः प्रवृत्तिः—तथा अधीयमानशाखान्तर्गतेन, ‘अनन्ता वै वेदाः’ इति वाक्येन वेदानामानन्त्यावगमादधीतशाखानवगतानां तदविरुद्धानां विरुद्धानां चार्थानां सम्भवात्, ‘स्मृतेश्च’, ‘अपि स्मर्यते’ इत्यादिसूत्रेषु वेदान्तार्थनिर्णयस्योपबृंहणसापेक्षत्वदर्शनाच्चोपबृंहणश्रवणे रागतः प्रवृत्तिरुपपद्यते । तत्र पूर्वभागोपबृंहणेषु धर्मशास्त्रेषु श्रुतेषु उपनिषद्भागोपबृंहणरूपेतिहासपुराणेष्वपि रागात्प्रवृत्तिरिति विधिवैयर्थ्यम् । अप्राप्ते हि शास्त्रस्यार्थवत्त्वम् । न च गुरोरेव श्रोतव्यमिति नियमविधिः ; अस्मिन् वचने तद्वाचिशब्दाभावात् । इतिहासपुराणयोः श्रवणप्रवृत्तस्य एतद्वचनार्थज्ञानम्, तस्मादितिहासपुराणश्रवणे प्रवृत्तिरित्यन्योन्याश्रयश्च । अतः उपबृंहयेदिति विधिरनुपपन्न इति ।

सत्यम् ; भारतादिप्रबन्धविशेषश्रवणाय तन्मध्यगतेनानेन न्यायसिद्धं सामान्यत उपबृंहणस्यापेक्षितत्वमनूद्यते । **उपबृंहणं कार्यमिति विज्ञायत** इत्यस्यायमर्थः— न्यायसिद्धमुपबृंहणस्य करणीयत्वमनेन वचनेनापि ज्ञायत इति । उपबृंहणं नामेत्यादि-भाष्येण न्यायप्राप्तिरेव प्रदर्श्यते ।

यद्वा समन्वयविरोधपरिहारलक्षणाभ्यामेव तत्त्वस्थितेर्निश्चितत्वात्, वस्तुनि विरुद्धाकारासंभवादधीयमानश्रुतिनिर्णीतविरुद्धार्थप्रतिपादकप्रदेशान्तरसंभवे वेदस्य भ्रान्तिजल्पितायमानत्वप्रसङ्गाच्च निर्णीततत्त्वविरुद्धार्थप्रतिपादकप्रदेश (प्रसङ्ग) संभवात्, ब्रह्मण्यनवगतगुणविभूतिविशेषसद्भावेऽप्युपबृंहणसहस्रैरपि तदियत्ताप्रतिपादनायोगात्, अवगतकतिपयगुणविशेषोपासनेष्वन्यतमेनैव पुरुषार्थसिद्ध्युपपत्तेश्च उपबृंहणश्रवणनिरपेक्षं प्रति उपबृंहयेदिति विधानं युज्यते ।

नन्वेवं तर्हि न्यायानुगृहीतवाक्यावगतेष्वर्थेषूपबृंहणनिष्कृष्टव्याभावात् निष्कृष्ट-व्यांशस्य सूत्रोदाहृतवचनैरेव निष्कृष्टत्वाच्चोपबृंहणविधिरदृष्टार्थः स्यात् । न च दृष्टे संभवति अदृष्टकल्पनं न्याय्यम् । दृष्टार्थत्वे च वचनं दर्शयति 'मामयं प्रतरिष्यति' इति । वेदस्य प्रतारणं नाम तदभिप्रेतविपरीतार्थवर्णनमेव । अतस्तन्निवृत्तिरूपं दृष्टफलं वाचनिकम् । सति तस्मिन् अदृष्टकल्पनमयुक्तम् । तर्हि तदेव दृष्टं फलमिति चेत्—तदप्ययुक्तम्; तत्त्वविपर्यासप्रतिपादनासंभवस्य त्वयैवोक्तत्वात्, साकल्येन ब्रह्मविभूत्यनवगमस्य समस्ततदवान्तरविशेषानवगमस्य च वेदप्रतारणरूपत्वा-भावेन तन्निवृत्तेः फलत्वायोगाच्च ।

उच्यते । यद्यपि परतत्त्व-तदुपासनप्रतिपादनेषु विपर्यासासंभवः—तथापि, 'किं ते कृण्वन्ति' 'कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्' । 'आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धयानः' इत्यादिवाक्यप्रतिपन्नप्रमगन्दादि-वृत्तान्तस्येव परमात्मसृज्यसुरनरतिर्यगादिविशेषतदुत्पत्तितद्वृत्तविशेषाणां श्रुतिसामान्य-प्रतीतत्वेन वाक्याविवक्षितत्वं मन्यमानः अहल्याजारादिवाक्यानां पण्डितमानिभिरित-रैरुक्तमर्थमिव वेदपूर्वभागोपनिषद्भागगतानां मन्त्रार्थवादानामन्यथार्थत्वं मन्यते चेत्,

अश्रुतोपबृंहणतया वेदं प्रतारयत्येवायमिति तत्परिहारायोपबृंहणविधिरुपपद्यत इति । न चान्योन्याश्रयः ; स्वाध्यायविधिवाक्यस्य स्वाध्यायान्तर्भावेऽपि अध्ययनाद्विध्यवगमः विध्यवगमादध्ययनमिति यथा नान्योन्याश्रयः, तद्वत् । तत्र हि विध्यभिज्ञपुरुषप्रेरणात्, तदनुष्ठानदर्शनाद्वा माणवकप्रवृत्तिः । एवमुपबृंहणविध्यभिज्ञशिष्टजनवादप्रसिद्ध्या, तदभिज्ञस्वगुरुवचनेन वा, तेनोपबृंहणाधिगमप्रवृत्तपुरुषान्तरदर्शनाद्वा उपबृंहणज्ञानस्य संपाद्यताज्ञानात् शिष्यस्य प्रश्नः उपपद्यते । अत उपबृंहणविधिरुपपन्नः ॥ (श्रु.प्र )

## इतिहासादिजन्यज्ञानस्य साक्षादनुपायत्वम्—

इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एव उपायभावमनुभवतः; न स्वातन्त्र्येण। शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षयादिफलार्थम् ; नोपासनार्थम् । विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषात् ज्ञानवन्तः प्रारब्धकर्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम् । (श्री.भा. 1-3-33)

ननु उक्तमितिहासपुराणद्वारा शूद्रस्यापि ब्रह्मज्ञानं सम्भवतीत्यत्राह—**इतिहासेति**। उपबृंहणीयवेदज्ञानाधिकारादुपबृंहणमात्रेणोपासनोपयोगिज्ञानपौष्कल्यं न सम्भवति ; न हि व्याख्येयानधिकारिणो व्याख्यानमात्रेण पुष्कलज्ञानसम्भवः इति दृष्टसामर्थ्य-वैकल्यम् । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत' इति वेदार्थविशदीकारहेतुतयैव तदवगमविधानात् अङ्गतया विहितस्य स्वतन्त्रतयोपादाने तज्जन्यज्ञानस्य पुस्तकपाठादि-लब्धवेदार्थज्ञानस्येव शास्त्रविरोधाददृष्टसामर्थ्यवैकल्यञ्च। अतः तदविरोधस्य न्याय्यत्वात् श्रावणविध्यवैयर्थ्याच्च शूद्रस्य श्रवणानुज्ञानं पुण्यकथावगतिद्वारेण पापक्षयफलार्थम् ; न तूपासनार्थमित्यर्थः ।

यद्येवं वेदवाक्यार्थज्ञानमुपासनाङ्गम्, कथं तर्हि विदुरादीनामुपासनसम्भव इत्यत्राह—**विदुरादयस्त्विति** । तेषामप्युपासने प्रथमप्रवृत्तिः न शूद्रजन्मनि, अपि तु पूर्वजन्मसिद्धैव । पाश्चात्ये तु जन्मनि प्राक्तनज्ञानप्रमोषाभावादवर्जनीयं तदनुवृत्ति-मात्रमेवेत्यर्थः । विदुरादीनामपि इतिहासपुराणश्रवणात् ज्ञानसिद्धिरिति यत् इतरैरुच्यते, तदयुक्तम् ;

धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते ।
वर्णावरत्वे संप्राप्ताः संसिद्धिं श्रमणी यथा ॥

इति शौनकवचनविरोधात् ॥ (श्र.प्र.)

इत् — समुच्चयाद्यर्थकम् अव्ययम् ।

'तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इति, इन्न्यमीमिषदा इत्यधिदैवतम्'।
(के.उ 4-4)

इच्छब्दः उपमानान्तरसमुच्चयार्थः । (रं.भा.)

प्राण्याच्चैवापान्याच्च, नेन्मा पाप्मा मृत्युराप्नुवदिति'। (बृ.उ. 3-5-23)

['न इत् मा' इति विभागः]

इच्छब्दोऽवधारणे ॥ (रं भा.)

इत्थंभावः — विश्वमूर्तेः विष्णोरपृथक्सिद्धविशेषणं चिदचिदात्मकप्रपञ्चः ।

['इदमस्थमुः' इति (पा.सू. 5-3-4) सूत्रेण प्रकारार्थे थमुप्रत्यये 'एतेतौ रथोः' (5-3-4) इति सूत्रेण इदमः इत्आदेशे इत्थमिति रूपम् । भावः-सत्ता, अवधारणगर्भतया परमात्मप्रकारतयैव सत्ता यस्य, इति विवक्षया अपृथक्सिद्धविशेषणता प्रपञ्चस्य प्रतीयते ।

'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ।
क्रिया लीला पदार्थेषु बुधजन्तुविभूतिषु'॥ रत्यादौ च॥ इति हि मेदिनी ।]

इदमित्थमिति प्रतीतौ इदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते? तत्रेत्थंभावः सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंशः इति अनयोरैक्यं प्रतीतिपराहतमेव । तथा हि—प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते। व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेः। सर्वत्र विशेषण-विशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः॥ (श्री.भा. I-121)

शब्दैस्तन्वंशरूपप्रभृतिभिरखिलः स्थाप्यते विश्वमूर्ते-
रित्थंभावः प्रपञ्चस्तदनवगमतस्तत्पृथक्सिद्धमोहः ।
श्रोत्राद्यैराश्रयेभ्यः स्फुरति खलु पृथक्छब्दगन्धादिधर्मो
जीवात्मन्यप्यदृश्ये वपुरपि हि दृशा गृह्यतेऽनन्यनिष्ठम् ॥ (त.मु. 309)

विश्वस्येश्वरशरीरत्वेन तदपृथक्सिद्धस्य तच्छरीरत्वप्रतिष्ठापनार्थं तदपृथक्सिद्धि-माह—**शब्दैरिति** । 'तत्सर्वं वै हरेस्तनुः', 'ममैवांशो जीवलोके', 'रूपान्तरं तद्द्विजकालसंज्ञम्', 'विष्णुशक्तिः परा प्रोक्ता', 'यदम्बुवैष्णवः कायः', 'यस्यात्मा शरीरम्' इत्यादिभिः विश्वमूर्तेः विष्णोरित्थंभावः–अपृथक्सिद्धविशेषणं प्रपञ्च इति स्मृति-श्रुत्योरभिधीयते। यद्येवमित्थम्भावः प्रपञ्चः, कथं तर्हि पृथक्सिद्धिरिति ?

अत्रोत्तरम्—ईश्वरस्य विशेष्यभूतस्यावगमाभावात् विशेषणभूतस्य प्रपञ्चस्य पृथक्सिद्धत्वव्यामोहमात्रं पामराणाम्, विदुषां तु परमर्षीणामपृथक्सिद्धत्वेनैव सर्वदा प्रतीतिव्यवहारौ । अमुष्मिन्नर्थे लोकसिद्धं दृष्टान्तमाह—**श्रोत्राद्यैरिति** । आश्रय-ग्रहणानर्हैः श्रोत्राद्यैः यथा शब्दादिकं पृथगेव गृह्यते, एवमीश्वरग्रहणानर्हैः अल्पज्ञानां प्रमाणैरीश्वरात् प्रपञ्चस्य पृथक्त्वेन ग्रहणं युक्तमित्यर्थः । उक्तमर्थमुदाहरणान्तरेणापि द्रढयति—**जीवात्मनीति** । मनो ग्राह्ये जीवात्मनि सति चक्षुषा गृह्यमाणं शरीरं न जीवविशेषणत्वेन गृह्यते ; जीवस्य चक्षुर्ग्राह्यत्वाभावात् । एवं प्रपञ्चोऽपि पामरबुद्धि-भिर्नेश्वरविशेषणत्वेन गृह्यते । नैतावता श्रुति-स्मृत्यादिप्रसिद्धमीश्वरापृथक्सिद्धत्वं न सिध्यति । (स.सि.)

अयमाशयः—यथा संस्थानरूपजातेः द्रव्यापृथक्सिद्धविशेषणता, एवमेव शरीरतया प्रमितस्य प्रपञ्चस्यापि अपृथक्सिद्धविशेषणता सप्रमाणं प्रसाधिता ॥

**इदम्**—प्रत्यक्षादिसिद्धं जगत् ।

'यतो वा इमानि भूतानि जायन्ते' । (तै.भृ. 1)

'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' । (छां.उ. 6-2-1)

['इदमः प्रत्यक्षगतम् (इदमस्तु सन्निकृष्टं) तदिति परोक्षे विजानीयात्। अदसस्तु विप्रकृष्टं समीपतरवर्ति चैतदो रूपम्' इत्युक्तरीत्या इदं पदं प्रत्यक्ष-विषये शक्तम्  तथापि अत्र उपलक्षणतया इतरप्रमाणगम्यमपि विवक्षितम्। सन्निकृष्टमिति पाठे तु बुद्ध्या सन्निकृष्टं सर्वं परिगृह्यते इति न काप्यनुपपत्तिः। अत एव भाषितम्—'अस्य अचिन्त्यविविधविचित्ररचनस्यनियतदेशकालफलभोगब्रह्मादि-स्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः'—इति।]

अत्रेदं बोध्यम्—इदमः सन्निकृष्टवाचित्वम्। तत्रोक्तम् अस्येति-प्रत्यक्षादि-सन्निधापितस्य जगत इदमा निर्देशः इति। संनिकृष्टत्वं च बुद्धिमात्रेणापि। तच्च ज्ञानलक्षणया प्रत्यासत्त्या स्मरणादिना च भवति। यथा 'कौमुदीयं विरच्यते' इत्यत्र भाविन्यपि कौमुदी बुद्ध्या सन्निधापितत्वेन इदमा निर्दिश्यते॥ (न्या.को.)

**इन्दुः**—1. परमैश्वर्यशाली नारायणः।

['इदि परमैश्वर्ये' औणादिकोऽयं शब्दः]

'वृषा पवित्रे अधिमानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः'। (तै.ना. 5।)

2 चन्द्रः। 'उन्दीक्लेदने' 'उन्देरिच्चादेः' इत्यनेन निष्पन्नः एतदर्थकः॥

**इन्द्रः**—पुरुरूपः-बहुशरीरकः परमैश्वर्यशाली पुरुषोत्तमः।

'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शता दशेति'॥
(बृ.उ. 4-5-19)

[अत्र परमतनिरासाय सिद्धान्तार्थः प्रतिपाद्यते।]

रूप्यत इति रूपं दृश्यं वस्तु। वीप्सायां द्विर्वचनम्। प्रतिवस्त्विति यावत्। **प्रतिरूपः**—सदृशरूप इत्यर्थः। तत्तद्रूपशब्दितवस्तुसदृशतयाऽन्तर्यामितया परिपूर्णो-ऽवस्थित इति यावत्। [बभूवेति सर्वदा परिपूर्ण एवेत्यर्थः।] यद्वा प्रतिरूपं (प्रतिरूपः?) प्रतिष्ठितं रूपं यस्य स तथोक्तः। सर्वान्तर्यामीति फलितोऽर्थः। **तदस्य रूपं प्रतिचक्षणाय**। चक्षिङः भावे ल्युट्। प्रतिचक्षणम्-व्यवहारः।

प्रतिचक्षणाय–व्यवहाराय। तदिति श्रवणात् यदिति शेषः। यत् व्यवहाराय--यत् व्यवहर्तव्यमिति यावत्—तत् सर्वमस्य मधुब्राह्मणवेद्यस्य परमात्मनो **रूपं**--शरीरमित्यर्थः ।

यद्वा तत् तस्मादिति वा (?) अर्थः। तथा च यस्मादयं प्रतिरूपो बभूव, तस्मादेव सर्वं व्यवहार्यं वस्तु तच्छरीरमित्यर्थः । ननु शरीरसम्बन्धस्य कर्माधीनत्वात् तत्कर्मानारब्धस्य व्यवह्रियमाणप्रपञ्चस्य कथं तद्रूपत्वम् ? तस्य कर्माभावादित्याशंक्याह—**इन्द्रो मायाभिः पुरुरूप ईयते**। **इन्द्रः** परमेश्वरः। 'इदि परमैश्वर्ये' इति हि धातुः। 'माया वयुनं ज्ञानम्' इति नैघण्टुकाः। **मायाभिः**—सङ्कल्परूपज्ञानैः—विचित्राश्चर्यकारित्वात् ज्ञानरूपत्वाच्च मायाशब्दितत्वं सङ्कल्पस्योपपद्यते—**पुरुरूपः** बहुशरीरः स परमेश्वरः। स्वसंकल्परूपज्ञानेनैव बहुशरीरो भवति, न कर्मापेक्षया, **ईयते**—तादृशबहुशरीरस्सन् वर्तत इत्यर्थः। स्वेच्छागृहीतानन्तदेह इति यावत्। ननु **रूपं रूपं प्रतिरूपो बभूव** इत्येतदयुक्तम्। अनन्तेषु ब्रह्मादिस्तम्बपर्यन्तेषु रूपेषु एकस्य परमात्मनः तत्तदन्तर्वर्तितयाऽवस्थानासम्भवादित्याशङ्क्याह—**युक्ता ह्यस्य हरयश्शता दशेति**। **शता** शतानीत्यर्थः। 'सुपां सुलुक्' इत्यादिना आकारादेशः। **अस्य** अनन्तप्रपञ्चस्य **युक्ताः**—योग्या इत्यर्थः। तदनुरूपसंख्याशालिन इति यावत्। **शतानि दश हरयः**—शतानि दश अनन्ता इति यावत्। अनन्ता हरयः। अन्तर्यामिविग्रहानन्त्यादनन्ता हरय इत्युक्तमिति द्रष्टव्यम्। सर्वत्र मन्त्रसमाप्तौ इति शब्दः। (रं.भा.)

अत्र–'इन्द्रोमायाभिः पुरुरूप ईयते' इत्यादिभिः निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते। (श्री.भा. 1–81)

**निर्विशेषेति**। सगुणत्वे प्रतिपन्नेऽपि स्वरूपपरवाक्यानुगुण्यात् दोषप्रतिपादनतत्पराणां वाक्यानां न प्रतिपन्नभेदे तात्पर्यमिति भावः। **ब्रह्मैव**—इन्द्रादिशब्दप्रतिपन्नमपि स्वरूपपरवाक्योपदिष्टं ब्रह्मैवेति भावः। अनादित्वसदसदनिर्वचनीयत्वतिरोधायकत्वविविधाध्यासकरत्वानि उपात्ततत्तद्वाक्यप्रतिपन्नान्याह—**अनाद्यविद्ययेत्यादिना**।

स्वगतशब्देनाधिष्ठानतया सम्बन्धो विवक्षितः ; न तु सजातीयविजातीयसहपठित-स्वगतनानात्वम् । (श्र.प्र.) (इति पूर्वपक्षिणामाशयः ।)

अनेन प्रकरणेन—परोक्तरीत्या जगतः मिथ्यात्वे तथाभूतनानाविभूतियोगेन परमैश्वर्यं ब्रह्मणः नैव बुद्ध्यारूढं भवतीति अदूषि । 'साक्षादप्यविरोधं जैमिनिः' इति सूत्रभाष्ये अग्निशब्दस्य परमात्मन एव साक्षात् अव्यवधानेन वाचकत्वे न कश्चिद्विरोधः इत्युक्तम् । तद्वत् इन्द्रशब्दस्यापि ऐश्वर्यविशिष्टपरमात्मवाचकत्वेन मायाशब्दस्य मिथ्यापरत्वाभावाच्च न कोऽपि दोषः ।

तदुक्तं न्यायसिद्धाञ्जने—

'परविद्यासु जीवोक्तिः निरुक्त्यादेः पराश्रया ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ' ॥ इति ॥

2. देवताविशेषः ।

**इन्द्रकर्मा**—(स.ना. 792)

तमूचुस्सकलादेवाः प्रणिपातपुरस्सरम् ।
प्रसीद नाथ दैत्येभ्यस्त्राहीति शरणार्थिनः ॥ इति ।

शरणागतेन्द्राद्यर्थे एवंविधव्यापारत्वात् इन्द्रकर्मा । (वि.स.भा.)

शरणागतेन्द्राद्यर्थे एवंविधव्यापारतया इन्द्राय तत्प्राधान्येन तद्व्यपदेशात् तत्प्रभृतिभ्यो देवेभ्यः, कर्म—एतादृशव्यापारोऽस्येति । (वि.स.निर्व.)

प्रपन्नेन्द्राद्यर्थतया दैत्यसंहाररूपकम् ।
कर्म यस्यास्तीन्द्रकर्मा ह्यष्टार्णो मनुरुत्तमः ॥ (वि.स.नि.)

**इन्द्रजालम्**— द्रष्टजनव्यामोहनम् ।

'यद्देशकालापारोक्ष्यं परोक्षस्यैव वस्तुनः ।
मन्त्रौषधादिभिः सोऽयमिन्द्रजाल इतीरितः ' ॥ (सं.सू.व्या. 113)

अन्यथाभूतस्य वस्तुनोऽन्यथाकरणशक्तिः माया । इन्द्रजालं तु विषयाभावेऽपि तथा प्रतिभासनशक्तिः इति विभागः ।। (ता.चं. 7-14)

**इन्द्रपत्नी** — 1. लक्ष्मीः ।

'इदि परमैश्वर्ये' इति धातुना निष्पन्नः इन्द्रशब्दः । पत्नीशब्दस्तु 'पत्युर्नो यज्ञसंयोगे' (पा.सू. 4-1-33) इत्यनेन पतिशब्दस्य यज्ञसम्बन्धे नकारादेशे ङीप्प्रत्यये च कृते निष्पन्नः । 'वसिष्ठस्य पत्नी' इत्यादिकमुदाहरणम् । 'तत्कर्तृकस्य यज्ञस्य फलभोक्त्रीत्यर्थः, दम्पत्योः सहाधिकारात्' इति शाब्दिकोक्तदिशा इन्द्रपत्नीशब्देन अपङ्कुचितपरमैश्वर्यविशिष्टविष्णुपत्नी इत्यर्थः बोध्यते । तथा च विष्णुकर्तृकजगद्व्यापारादिषु फलभोक्तृत्वेन सहाधिकारः लक्ष्म्याः बोध्यते ।

2. इन्द्रपत्नी शची ।।

अत्र ऐश्वर्यं परिच्छिन्नं परमात्मदत्तञ्च ।

**इन्द्र-प्रजापती**—1. अप्राकृतवैकुण्ठलोके द्वारपालकौ ।

'इन्द्र-प्रजापती द्वारगोपौ'। (कौ.उ. 1-27)

इन्द्र प्रजापतिसंज्ञकौ (ब्रह्मलोकापराजिताख्य) पट्टणद्वारपालकौ । (रं.भा.)

2. देवताद्वन्द्वविशेषः ।।

**इन्द्रप्राणाधिकरणम्**—(1-1-11)

1. प्राणस्तथानुगमात् । 2. न वक्तुरात्मोपदेशादिति चेत्, अध्यात्म-सम्बन्धभूमा ह्यस्मिन् । 3. शास्त्रदृष्ट्या तूपदेशो वामदेववत् । 4. जीवमुख्य-प्राणलिङ्गान्नेति चेन्न, उपासात्रैविध्यादाश्रितत्वादिह तद्योगात् इति सूत्रचतुष्टयात्मक-मिदमधिकरणम् ।

अस्मिन्नधिकरणे 'प्रतर्दनो ह वै दैवोदासिः, इन्द्रस्य प्रियं धाम उपजगाम' इति हिततमोपासनकर्मतया उक्तस्य इन्द्रशब्देन व्यपदेशात् उपक्रम एव त्वाष्ट्रहननरूप-लिङ्गदर्शनाच्च, हिततमोपासनकर्मतयोक्तः प्रसिद्ध इन्द्र एव इत्याशंक्य,

बहुषु वाक्येषु परमात्मलिङ्गदर्शनात् महावाक्यापेक्षया उपक्रमस्य दुर्बलत्वाच्च इन्द्रशब्दनिर्दिष्टः इन्द्रशरीरकः परमात्मेति सिद्धान्तितम् ॥

इन्द्रे तु निर्धारितजीवभावे
स्वोपास्तिशब्दात् स हि कारणं स्यात् ।
एतन्न सत् , तस्य हि शास्त्रदृष्ट्या
तथोपदेशोऽमृतता च धर्मः ॥ (न्या.क.सं. 1-17)

**इन्द्रयोनिः**—परमात्मनः स्थानम् ।

' अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः ।' (तै शि. 13)

अन्तरेण इत्यारभ्य, योनिः इत्यन्तम् अर्चिरादिगतिं दर्शयति । **तालुके**—जिह्वायाम् , **अन्तरेण**—मध्ये गोस्तन इव योऽवलम्बते । सा इन्द्रस्य सन्निहितमुक्त्यैश्वर्यस्य जीवस्य (ब्रह्मविदः) **योनिः**—निर्गममार्गः ।

यद्वा—**तालुके अन्तरेण**—ऊर्ध्वाधरतालुद्वयमध्ये, तयोरप्यधस्तादित्यर्थः । **यः स्तन इव लम्बते** । ' सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभम् ' इति श्रवणात् हृदयपुण्डरीकमुच्यते । **सा इन्द्रस्य**—परमात्मनः, **योनिः**—स्थानम् । (रं.भा.)

बृहदारण्यके (6–2–2) इन्द्रं तत्पत्नीं च प्रस्तुत्य तयोः लक्ष्मी-नारायणयोः सृतिः सञ्चरणी, यैषा हृदयादूर्ध्वा नाडी उच्चरतीत्युक्तम् । तत्रैव अत्रापि इन्द्रपदस्य परमात्मपरत्वसम्भवेऽपि सन्निहितमुक्त्यैश्वर्यस्य जीवस्येति व्याख्यानम् , 'इन्द्रस्य जीवात्मनः ईश्वरस्य ' इति भास्करव्याख्यापरिष्करणाभिप्रायेण ॥ (टि.)

**इन्द्रादीनां पारम्यनिरासः**—इन्द्रादीनां परत्वव्यावृत्तिः ।

रुद्रेन्द्रादिश्च यत्र स्फुरति परतयाऽनन्यथासिद्धलिङ्गै
स्तत्तत्स्वैर्विशिष्टो हरिरखिलतनुस्तासु विद्यासु वेद्यः
पारम्यं त्वान्यपर्यान्न भवति न किरित्यादिभिः स्तोत्रवा
रन्याकूतैर्नमस्यादिभिरपि न परः स्यादनैकान्त्यदुःर

त्वाष्ट्रवधादिलिङ्गैः प्रसिद्धेन्द्रादिविषयासु मोक्षार्थविद्यासु का गतिरित्यत्राह—**रुद्रेन्द्रादिरिति**। प्रसिद्धेन्द्रादिलिङ्गानां परमात्मलिङ्गानां च अनन्यथासिद्धावुभयानुरोधेन सद्वारकमद्वारकं च तत्तद्विशिष्टब्रह्मोपासनपरत्वं स्वीकर्तव्यमित्यर्थः। कर्मविधिप्रकरणेषु न किरिन्द्र त्वदुत्तर इत्यादिभिः प्राकरणिकदेवताप्रशंसापरैः न तासां परत्वसिद्धिरित्याह—**पारम्यमिति**। न किरिन्द्र इत्यस्य वस्व'दित्यादिषु त्वदुत्तरो नास्तीति याथार्थ्यसिद्धिः। 'एक एव रुद्रो न द्वितीयाय तस्थे' इतीदमपि तत्रत्यपशुविशेषे द्वितीयानन्वयपरमिति मीमांसाभाष्यकारादिभिर्व्याख्यातम्। एवमीदृशवाक्यान्तराणि यथार्हं नेतव्यानि।

यस्तु नमस्कारभूम्ना बहुप्रदेशबहुवाक्यप्रतिपन्नतया तत्तदपदानविशेषैश्चान्यत्र क्वचित्परत्वं शङ्कते; तं प्रत्याह—**अन्यत्रकृतैरिति**। नमस्कारस्तावत् बाधभीत्या सान्त्वनाभिप्रायेण लोकवद्वेदेऽपि दृष्टः; 'नमस्ते अस्तु मा मा हिंसी'रिति, तद्भूयस्त्वं च भीतिभूयस्त्वादेरपि स्यात्। अस्ति च तेषु तेषु देवताविशेषेषु नमस्कारस्तद्भूमा बहुप्रदेशपाठादिकमतिशयितापदानं च। अतो नैतैरेकः परः स्यात्, सर्वेषां च सर्वस्मात्परत्वं व्याघातदुःस्थमिति भावः॥ (स.सि.)

तदुक्तम्—

परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टाऽवलम्बिनी॥ इति॥

**इन्द्रियम्**—सात्विकाहङ्कारोपादानकं द्रव्यम् (प्राकृतेन्द्रियम्)।

तत् कर्मज्ञानभेदेन द्विविधम्। प्राणाद्यन्यत्वे सति हृत्कर्णचक्षुरादिशरीर-प्रदेशविशेषाऽवच्छिन्नव्यापारतया तत्तत्कार्यविशेषशक्तमिन्द्रियम्। 'अशरीरं प्राण-धार्यमेव यद्द्रव्यं पुरुषोपकारकं तदिन्द्रियम्' इति वरदविष्णुमिश्रैरुक्तम्।

'सात्विकाहंकारोपादानकमिन्द्रियम्' इति सांख्यादिलक्षणम् अप्राकृतेन्द्रिया-व्याप्तेरयुक्तम्। 'शरीरसंयोगे सत्येव साक्षात्प्रमितिसाधनमप्रत्यक्षम्, साक्षात्कारसाधनम्'

इत्यादिवैशेषिकाद्युक्तं तु कर्मेन्द्रियाण्याश्याादेरनुपपन्नम् । वक्ष्यते च वागादीना-मिन्द्रियत्वम् ।

द्विधेन्द्रियं प्राकृतमप्राकृतमिति । शुद्धाशुद्धसत्त्वयोगादेस्तद्भेदः । अव्यक्त-महदहङ्कारेष्वपि प्राकृताप्रकृतविभागोऽस्तीति केचिदाचार्याः ।

शब्दतन्मात्रसहभवन्वसात्विकाहंकारोपादानद्रव्यत्वादि प्राकृतेन्द्रियलक्षणम् । पुनश्च इन्द्रियं द्विविधम्, ज्ञानेन्द्रियं कर्मेन्द्रियमिति । ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञानेन्द्रियम् । तत् षोढा मनःश्रोत्रादिभेदात् ।

मनःपूर्वकत्वात्सर्वप्रवृत्तीनां मनः कर्मेन्द्रियमिति सांख्यादयः । यथाहुः—

'बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानि ।
वाक्पाणिपादपायूपस्थं कर्मेन्द्रियं ह्याहुः ' ॥
' उभयात्मकमत्र मनः ' इति ।

तदसत्; तस्य च ज्ञानद्वारैव कर्महेतुत्वात् । तावता च तथात्वे चक्षुरादा-वपि प्रसंगात् । क्वचित् कर्मेन्द्रियत्वव्यवहारस्तु औपचारिकः । मानसवाचिक-कायिककर्मविभागस्तु कर्मशब्दस्य शुभाऽशुभसंकल्पादिरूपज्ञानेऽपि प्रयोगात् । अतः षडपि ज्ञानेन्द्रियाणि । (न्या.सि. 34, 35, 36)

अथ कर्मेन्द्रियाणि—उच्चारणादिषु अन्यतमक्रियाहेतुत्वं कर्मेन्द्रियस्य लक्षणम् । तत् पञ्चधा वागादिभेदात् । (न्या सि. 42)

विकारशीलत्वाच्च मशकमातङ्गादिनानादेहेषु विचित्रपरिमाणत्वम् । कालभेदेन परिमाणभेदाविरोधं ज्ञाने समर्थयिष्यामः । सर्वेषां च एषां स्वाधिष्ठानदोषादिरेव दोषः। सुषुप्त्याद्यवस्थास्विव स्थावराद्यवस्थासु अदृष्टादिवशात् तत्तद्वृत्तिनिरोधतारतम्यम् । प्रबलादृष्टसहकारात् गन्धर्वयोगिप्रभृतीन्द्रियाणामतिसूक्ष्मव्यवहितविषयता । उत्पत्तेरारभ्य अदृष्टवशात् प्रतिपुरुषनियतानामपि तेषां जीववत्परकायप्रवेशे विशिष्टादृष्टान्तरवशात् कायवदेव परोपकारकत्वम् । स्वेन्द्रियैः सह सर्वत्र प्रवेशात् तेषामेव वा

तत्राप्युपकारकत्वम् । मृतकायप्रवेशे हि स्वेन्द्रियैरेव तथा । जीववत्कायप्रवेशेऽपि स एव समाभिरुचितः । स्मृतिश्च—

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ इति ॥

मृतकायस्य च परकायव्यवहार उपचारात् । परकायारम्भकशरीरैकदेशैः अस्थ्यादिभिः प्रविष्टस्य कायलक्षणसङ्घातः आरभ्यते । तदा च स्वशरीरं मृतमेव । मृतपरकायप्रवेशवत् पुनः प्रवेशः । अनेकशरीराधिष्ठानशक्तानां तु यथेष्टम् । शरीरविनाशे च इन्द्रियाणि आप्यायकैर्मात्रया हीयन्ते । शरीरान्तरे-पुनरापूर्यन्ते । मुक्तपरित्यक्तानि अन्यपरिगृहीतानि अपरिगृहीतानि वा यावत्प्रलय-मवतिष्ठन्ते इत्यादिकं द्रष्टव्यम् ॥ (न्या.सि. 45-46)

**इन्द्रियनित्यत्वशङ्कानिरासः—**

'असद्वा इदमग्र आसीत् । तदाहुः, किं तदासीदिति । ऋषयो वाव ते अग्रे सदासीत् । तदाहुः, के ते ऋषयः ? इति । प्राणा वाव ऋषयः' इति जगदुत्पत्तेः प्राक् इन्द्रियाणां सद्भावः श्रूयते । प्राणशब्दे बहुवचनात् इन्द्रियाण्येवेति निश्चीयते । न चेयं श्रुतिः 'वायुश्चान्तरिक्षं चैतदमृतम्', 'सैषाऽनस्तमिता देवता यद्वायुः' इतिवत् चिरकालावस्थायित्वेन परिणेतुं शक्या, 'असद्वा इदमग्र आसीत्' इति कृत्स्नप्रपञ्चप्रलयवेलायामप्यवस्थितत्वश्रवणात् । उत्पत्तिवादिन्यस्तु जीवोत्पत्ति-वादिन्य इव नेतव्या इति चेन्न ;

वियदादिवदेव प्राणाश्च (इन्द्रियाणि) उत्पद्यन्ते । 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिषु प्राक्सृष्टेः एकत्वावधारणात्, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति इन्द्रियाणामुत्पत्तिश्रवणाच्च प्रागवस्थानासम्भवात् ॥ (श्री.भा 2-4-1)

**इन्द्रियपर्यायः**—देवः, हृषीकम्, प्राणः ।

प्राणशब्दस्य मुख्यार्थस्तु प्राणवायुविशेष एव । इन्द्रिये तु तदधीनव्यापार-

वत्त्वात् प्राणशब्दव्यवहारः अमुख्य एवेति बोध्यम् । अत एव 'तस्मिन्नेतस्मिन् अग्नौ देवाः श्रद्धां जुह्वति' इति व्याख्यावसरे देवाख्याः जीवस्य प्राणाः अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु निक्षिपन्ति इति (3-1-1) भाषितम् ।

अत्र व्यासार्यैः **प्राणाः**—मुख्यप्राणाः इन्द्रियाणि च । यद्वा प्राणशब्दः मुख्यप्राणपरः ; गमनस्य प्राणाधीनत्वात् इति व्याख्यातम् ॥

**इन्द्रियाणामणुत्वम्**—परिच्छिन्नत्वे सति उपलब्ध्यनर्हत्वम् ; न तु परमाणुपरिमाणत्वम् ।

'त एते सर्व एव समाः सर्वेऽनन्ताः' इत्यानन्त्यश्रवणाद्विभुत्वं प्राणानामिति प्राप्तेऽभिधीयते—'प्राणमनूत्क्रामन्तं सर्वे प्राणाः अनूत्क्रामन्ति' इत्युत्क्रान्त्यादिश्रवणात् परिमितत्वे सिद्धे सति उत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणवश्च प्राणाः । आनन्त्यश्रुतिस्तु 'अथ यो हैतान् अनन्तानुपास्ते' इत्युपासनश्रवणात् उपास्यप्राण-विशेषणभूतकार्यबाहुल्याभिप्राया । (श्री.भा. 2-4-6)

अणुत्वं नाम परिच्छिन्नत्वे सत्युपलब्ध्यर्हस्थूलताराहित्यमत्र विवक्षितम् ; न तु जीवात्मस्वरूपवदत्यन्ताल्पत्वम् । तत्र 'बालाग्रशतभागस्य' इत्यादिवाक्ये-नात्यन्ताल्पत्वस्योक्तत्वात् तथाऽभ्युपगमः ; अत्र तूक्तप्रकारम् । अणुत्वं परिच्छिन्नत्वे सत्यतिस्वच्छत्वम् । उत्क्रान्त्यादिः परिच्छिन्नत्वहेतुः । पार्श्वस्थैरनुपलभ्यमानत्वं स्वच्छत्वहेतुः । एवं विशिष्टमणुत्वं उपपादितं भवति । परिमाणावान्तरभेदे सत्यपि त्वगिन्द्रियस्य सूक्ष्म-शरीर व्यापीदृशमणुत्वमस्त्येव । 'त एते सर्व एव समाः' इति समत्वश्रुतिः कार्यकरत्वविषया । आनन्त्यश्रुतिनिर्वाहमाह—**आनन्त्येति** । कार्यबाहुल्य-मानन्त्यम् । कार्यबाहुल्यविशेषणविशिष्टतयोपासनार्थमानन्त्यकथनमित्यर्थः ॥ (श्रु·प्र.)

**इन्द्रियाणामणुत्वे अनुपपत्तिपरिहारः**—

इन्द्रियाणामणुत्वे दूरगतार्थप्रतीतिः कथं स्यादित्याशंक्याह—

'वृत्त्या दूरस्थधीःस्यात् भजनविधिपरेऽनन्ततोक्तिस्वकार्यैः ।
कन्दस्थानाच्च तत्तत्तनुषु विकृतिमद्द्रव्यभावात्पृथुत्वम्' ॥ (अ.सा.258)

'वृत्तिराप्यायनार्थैर्भूतैः' इत्यन्यत्रोक्तम् । वृत्तिः प्रसरणम्, तद्धि आप्यायकैर्भूतैः जायते ।

अयमर्थः—यद्यपि इन्द्रियाणामणुत्वम्, तेन स्वरूपविभुत्वाभावेऽपि आप्यायनार्थैर्भूतैः ब्रह्माण्डोदरवर्तिकृत्स्नवस्तुग्रहणानुरूपं विभुत्वं सङ्घटत इति । यथा चक्षुषो गोलकान्तस्थितत्वेऽपि तत्प्रकाशात् सर्वतो दिक्प्रसरादण्डोदरवर्तिवस्तुग्रहणं काणादानाम् ।

तर्हि इन्द्रियोपासनविधिपरे वाक्ये इन्द्रियाणामनन्ततोक्तिः कथमित्याशंक्याह—**स्वकार्यैरिति** । इन्द्रियकार्यैः इत्यर्थः । परिमितान्यपि हीन्द्रियाणि प्रतिबन्धकाभावेऽसंख्यातान् विषयान् गृण्हन्तीति प्रदीपप्रकाशादिवत् दृष्टमेव । ननु सर्वेन्द्रियकन्दभूते हृदय एव तत्तत्तनुषु इन्द्रियाणामवस्थाने कथं पृथुत्वमित्याशंक्याह—**कन्देति** । विकारिद्रव्यत्वात् सर्वतो दिक्प्रसरात्पृथुत्वं युज्यत इत्यर्थः । (चिं.म)

तदेतदुक्तं तत्त्वमुक्ताकलापे—(39)

सूक्ष्माण्येकादशाक्षाण्यपि न यदि कथं देहतो निष्क्रमादि
श्चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमोऽप्यस्तु मानम् ।
वृत्त्याऽक्ष्यादेर्दवीयः प्रमितिजनकता वृत्तिराप्यायनार्थैः
भूतैर्जातः प्रसर्पः श्रुतिमितमपि चानन्त्यमेषां स्वकार्यैः ॥ इति ॥

यद्येवम् इन्द्रियाणि देहान्तस्थानि तदा कथं चक्षुश्श्रोत्रयोः दूरस्थग्राहकत्वमित्यत्राह—**वृत्त्येति** । वृत्तिद्वारा सम्बन्धादित्यर्थः । ननु वृत्तिर्यदि स्वरूपं देहपरिछिन्नत्वान्न दूरस्थे वृत्तिः, धर्मोऽपि न धर्मिणमतिवर्ततेत्यत्राह—**वृत्तिरिति** । भूतैः सहेति वा चारैः पश्यन्तीतिवद्वा योज्यम् ।

यद्यप्यप्राप्यकारित्वं हैतुकगत्या हठात्कारेण वक्तुं शक्यम्; तथाऽपि 'दिवीव चक्षुराततम्' इत्याद्यागमिकव्यवहारस्वारस्यबाधाभावात् वृत्तिद्वारा प्राप्त्युक्तिः । नयनरश्मिगतितत्प्रतिघातादिकं च भाष्योक्तम् । ननु प्राणशब्दनिर्दिष्टानि इन्द्रियाणि प्रक्रम्य 'सर्व एवानन्ता' इति श्रुत्या सर्वेषामिन्द्रियाणां विभुत्वं ग्राह्यमित्यत्राह—**श्रुतिमितमिति** ।

यथोक्तं भाष्ये—'हृदयस्थानां चेन्द्रियाणां तत्तन्नाडीभेदैस्तत्तत्प्रदेशविशेषप्रसर्पात् तत्र तत्र कार्यकरत्वं चावधातव्यम् । अत्र 'सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतेः सङ्कोचकाभावात्, 'मनष्षष्ठानि' इत्यादेश्च न्यूनसंख्याव्यवच्छेदमात्रेणाप्युपपत्तेः, कर्मेन्द्रियाणां प्रतिशरीरमुत्पत्तिविनाशं व्यष्टिसमष्टिभावराहित्यं च वदन्तः प्रत्युक्ताः ॥ (स.सि)

**इन्द्रियाणां तन्मात्रेषु लयशङ्कापरिहारौ**—

['इन्द्रियाणि तन्मात्रेषु' इति श्रुत्या भौतिकत्वममीषां भाति इत्यत्राह—]

'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु ।
तन्मात्राणि भूतादौ लीयन्ते' ॥ (सु.उ. 2)

इन्द्रियाणाम् आकाशस्य च अहंकारकार्यत्वात् सेन्द्रियस्य स्वान्तर्गतेतरभूतचतुष्टयस्य आकाशस्य तत्र तत्र लयं वक्तुम्; आकाशस्य तन्मात्रावस्थापन्नस्यैवेन्द्रियसंसर्गमाह—**इन्द्रियाणि तन्मात्रेष्विति** । पूर्वमाकाशसंसृष्टानीत्यर्थः ।

एतदुक्तं भवति—इन्द्रियाप्यायकभूतानां सर्वेषाम् आकाशतापन्नत्वात् आकाशस्यैवेन्द्रियेषु संसर्ग आसीत् । पञ्चानामपि भूतानां शब्दतन्मात्रापन्नत्वात् इन्द्रियाणि शब्दतन्मात्रांशभेदेषु संसृष्टान्यासन्निति ।

यद्वा—अण्डान्तर्गतस्य भूतचतुष्टयस्य स्वस्वतन्मात्रलयक्रमेण आकाशतापत्तिः, आकाशस्येन्द्रियसंसर्गश्चोक्तौ । अथ तेनाकाशेन सह अण्डात् बहिरावरणत्वेनावस्थितानां भूतानां तन्मात्रावस्थापत्तिरूपं प्रळयम् इन्द्रियसंसर्गञ्चाह—इन्द्रियाणि तन्मात्रेष्विति । ब्रह्माण्डतदावरणरूपेण-अवस्थितानि पृथिव्यादीनि भूतानि स्वस्वकारणे प्रलीयमानानि तन्मात्रावस्थां क्रमेणापन्नानि भवन्ति । तेषु तन्मात्रेषु इन्द्रियवर्गः क्रमेण संसृष्टः इत्यर्थः । (श्रु.प्र.)

तन्मात्रेष्विन्द्रियाणां श्रुतिरिह न लयं वक्ति किं तु प्रवेशं
नो चेत्पृथ्व्यादिवाक्येष्विव हि लयपदं व्योम्नि चाक्षेषु च स्यात् ।
भूतैराप्यायितत्वात्क्वचिदुपचरिता भौतिकत्वोक्तिरेषा-
मन्नापतेजोमयत्वं श्रुतिरपि हि मनःप्राणवाचामुवाच ॥ (त.मु. 35)

इन्द्रियाणि तन्मात्रेष्विति श्रुत्या भौतिकत्वममीषां भातीत्यत्राह—**तन्मात्रेष्विति**। पूर्वापरपर्यायेष्विव आकाशेन्द्रियादिपर्याययोर्लयो न पठ्यते। न चात्रानुषङ्गः कार्यः; सति गत्यन्तरेऽध्याहारवत्तस्याप्ययोगात्। अन्यथा द्वितीयादिषु सर्वेषु पर्यायेष्वपि अनुषङ्गेण भाव्यम्; वैरूप्यायोगात्। इन्द्रियाणामाकाशप्रकृतित्वं च सर्वोपबृंहण-विरुद्धम्। अस्यां चोपनिषदि भूतादेराकाशम्-आकाशाद्वायुरित्यादिः सृष्टिक्रम उक्तः। षोडशविकारा इति श्रुतेश्चासामञ्जस्यं स्यात्। अतो वरमधिकरणत्वोक्तिमात्रानुसारा-दाकाशस्येन्द्रियेषु तेषां चाकाशारम्भकतन्मात्रेषु प्रवेशविशेषाभिधानमित्यभिप्रायेणाह—**किंतु प्रवेशमिति**।

अयं भावः—यद्यपि आकाशस्येन्द्रियैः प्रागपि संबन्धः तथाऽपि तत्तदिन्द्रिया-प्यायकभूतांशानां स्वकारणलयक्रमात् आकाशदशापन्नत्वात्तदानीमिन्द्रियेष्वाकाशस्यैव संसर्गः। अनन्तरमाकाशे च शब्दतन्मात्रावस्थे तानीन्द्रियाणि शब्दतन्मत्रसंसर्गीणि भवन्ति। अतस्तन्मात्रान्तराणामपि तदवस्थापत्त्या तत्तदंशभेदविवक्षया बहुवचनोपपत्तिः। अतः 'तन्मात्राणि भूतादौ लीयन्त' इत्यपि बहुवचनं गतार्थम्। (अत्रैवं व्याख्यातम्—इन्द्रियाप्यकभूतांशानां सर्वेषामाकाशतापन्नत्वादाकाशस्यैव इन्द्रियसंसर्ग आसीत्; पञ्चानामपि भूतानां शब्दतन्मात्रापन्नत्वादिन्द्रियाणि शब्दतन्मात्रांशभेदेषु संसृष्टान्या-सन्निति।) एवमनभ्युपगमे वाक्यवैरूप्यदोषं व्यनक्ति—**नो चेदिति**।

ननु श्रोत्रं नभो घ्राणमुक्तं पृथिव्या इत्यारभ्य वाय्वात्मकं स्पर्शनमामनन्ति इत्युच्यते; नभः श्रोत्रं च तन्मयम् इत्यादि च। अत आहङ्कारिकत्ववाक्यं परम्परया नेयमित्यत्राह—**भूतैरिति**। तदीदं व्यवस्थापितं वेदार्थसंग्रहे-भूतैस्त्वाप्यायनं महाभारत उच्यते इति। इममेव न्यायम् अन्नमयं हि सोम्य मन आपोमयः प्राणस्ते-जोमयी वाक् इत्यादिष्वपि योजयितुमाह—**अन्नापस्तेजोमयत्वमिति**। न खलु हैतुकैरपि मनसः पार्थिवत्वं कल्प्यते; वायुरूपस्य प्राणस्याप्यत्वम्; तस्मादाप्यायनपरत्वमेव तत्र वाच्यम्, एवमन्यत्रापि। 'अग्निर्वाग्भूत्वा मुखं प्राविशत्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविश'दित्यादिषु तत्तद्देवताधिष्ठाने तात्पर्यम्; 'अग्निं वागप्येति'

इत्यप्ययश्रुतिश्चाधिष्ठातृदेवतांशापक्रमणपरेत्यभाष्यत । ओषधीर्लोमानीत्यादिना अनपियाद्भिर्लोमादिभिस्सहपाठात् । एतेनाहंकारिकत्वं स्थापितम् ॥ (स.सि.)

## इन्द्रियाणां भौतिकत्वनिरासः—

देहादिवत् इन्द्रियाणामपि भौतिकत्वं वदतः प्रतिवक्ति—**नेत्रादेरिति** ।

'नेत्रादेर्दीपिकादेरिव नियमयुतं तैजसत्वादिसाध्ये
रूपादिग्राहकत्वं यदिकरणतया स्यादसाधारणत्वम् ।
तत्साहाय्यं स्वसिद्धं भवति गमकतामात्रमप्यञ्जनादा-
वक्षाहङ्कारिकत्वं श्रुतिपथनिपुणैर्घोषितं नैव बाध्यम् ' ॥ (त.मु. 34)

नियमयुतं सावधारणम्, रूपादिषु मध्ये रसाद्यग्राहकत्वेन विशेषितमित्यर्थः । चक्षुः तैजसम्, रसाद्यग्राहकत्वे सति रूपग्राहकद्रव्यत्वात्; दीपवदिति । एवं त्वगिन्द्रियं वायवीयं, स्पर्शादिषु मध्ये स्पर्शस्यैव ग्राहकद्रव्यत्वात्; अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकवायुवत् । रसनस्याप्यत्वे रसस्यैवेति दन्तान्तस्तोयदृष्टान्तः । घ्राणस्य पार्थिवत्वे चन्दनकुङ्कुमादिगन्धाभिव्यञ्जकनिम्बत्वगादिनिदर्शनम् । श्रौतस्य तु नभस्त्वे श्रोत्रं गुणावान्तरजात्या स्वगुणसजातीयगुणग्राहकं, बाह्येन्द्रियत्वात्; चक्षुरादिवदिति । शब्दो गुणावान्तरजात्या सजातीयगुणवतेन्द्रियेण गृह्यते, बहिरिन्द्रियव्यवस्थापकगुणत्वात्; रूपादिवत् । शब्दो भूतेन्द्रियग्राह्य इति वा । बहिरिन्द्रियव्यवस्थापकत्वादित्येव हेतुः । तथा श्रोत्रं भौतिकम्, बाह्येन्द्रियत्वात्; चक्षुरादिवत् । आकाश इन्द्रियारम्भकः, भूतत्वात्; भूतान्तरवदिति । शब्दोपलब्धिर्वा भूतेन्द्रियकरणिका, बाह्येन्द्रियव्यवस्थापकोपलब्धित्वात्; रूपोपलब्धिवत् । तत्राद्येषु चतुर्षु अनुमानेषु हेतुविकल्पमनूद्य दूषयति—**यदि करणतया** इत्यादिभिः । यस्मिन् सति कार्यं भवत्येव तत्करणम्, तच्च सन्निकर्षविशेषविशिष्टतयेन्द्रियाणाम् ।

ननु—उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ।
किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥

इति दीपादिषु साधकतमत्वं कश्चिद्ब्रूयात् । अतः सपक्षवृत्तेर्हेतोः कथमसाधारणत्वम्?

इत्थम् ; आलोकेन विनापि जन्तुभेदेषु चक्षुषो रूपादिग्राहकत्वं सिद्धम् । अन्धकारे च मनुष्यादीनां तत्त्वतोऽन्यथा वा । अत ईदृशं प्राधान्यमपेक्ष्य इन्द्रियेषु करणत्वं दीपादिषु सहकारित्वञ्च प्रख्यातमनुरुध्य विकल्पप्रवृत्तेः अविरोधः ।

'तस्माद्दार्थ्यं त्वसिद्धम्' इति कोऽप्यन्तरं दूषयति । करणभूतेन्द्रियापेक्षया तेषामेव दीपादिवत् सहकारित्वमनुपपन्नमित्यर्थः । दीपादीन्प्रति सहकारित्वात् नासिद्धिरिति चेत्तर्हि प्रमातृ-प्रमेययोरपि तथात्वात् तत्सिद्धिः स्यात् । तयोः सतोरपि कदाचित्कार्यं नास्तीति चेत्तावता करणत्वं माभूत् तत्सहकारित्वं तु सिद्धमेव ।

दीपे च सति भाव एवेति नियमो नास्ति । संप्रयोगविशेषसाहित्यात् स्यादिति चेत्तर्हि तयोरपि ततस्स्यादेवेति अनैकान्त्यम् । एतेन करणत्वादिविकल्पानादरेण रूपादिबोधकद्रव्यत्वमात्रं हेतुरित्यपि निरस्तम् । तद्व्यनक्ति—**भवतीत्यादिना।** आदिशब्देन प्रमात्रादिसङ्ग्रहः । अञ्जनस्य शक्ये प्रतिबन्धकनिवर्तकत्वमात्रमिति चेन्न ; अशक्ये गूढनिदर्शनादौ शक्त्याधानेन सहकरित्वदृष्टेः । शक्त्याधानं हि सहकारीति चेन्न ; दीपादावपि तथा क्लृप्तिप्रसङ्गात् । सत्तयैव हेतुत्वं तत्र दृष्टमिति चेदत्रापि तथाऽस्तु ; अविशेषात् । ये च तत्तदिन्द्रियदोषैरपि रूपादिधीरतीति मत्वा शरीरयोगे सत्येव साक्षात्प्रमितिसाधनमिति लक्षयन्ति । तन्मते तत्तद्दोषैरप्यनैकान्त्यम् । तेषां तैजसत्वानभ्युपगमात् । दन्तान्तस्तोयदृष्टान्तश्च अयुक्तः ; विषयसंस्कारकस्य व्यञ्जकत्वायोगात् ।

न हि ग्रस्यमानं किञ्चिदसंस्कृत्य दन्तान्तस्तोयस्य उपकारकत्वम् । तावता च रसव्यञ्जकत्वे रसगन्धाद्युद्भवहेतोरग्न्यादेरपि किं तन्न स्यात् ? वायुश्च वेगेनाभिघ्नन् सूक्ष्मान् सलिलकणान् अन्तश्शरीरं प्रवेशयति । शैत्यं तु तेषां त्वगिन्द्रियप्रवेशवैषम्यात् विशदमनुभूयते । तावता स्पर्शव्यञ्जकत्वे गन्धोपकारकस्य तस्य तद्व्यञ्जकत्वमपि किं नेष्यते ? तथा च घ्राणपार्थिवत्वानुमानं दुःस्थमिति ।

एवं चतुर्णां भौतिकत्वासिद्धौ तद्दृष्टान्तेन श्रोत्रभौतिकत्वानुमानान्यपि च्छिन्नमूलानि । आकाश इन्द्रियारम्भक इति चायुक्तम् । श्रोत्रस्य त्वन्मते

तदारब्धत्वाभावात । भूतत्वादिति च घटादिभिः अनैकान्तिकम् । किञ्चात्र लोकसिद्धनयनबुद्बुदादिपक्षीकारे रूपादिविशेषैस्तेषां पार्थिवत्वसिद्धेः कालात्ययापदेशः । अनुमानतस्तु इन्द्रियसिद्धिरशक्येति वक्ष्यते । सामान्यतो दृष्टादाधिष्ठानातिरिक्तेन्द्रियसिद्धावपि तदाहङ्कारिकत्वं श्रौतमबाध्यम् । इन्द्रियाण्यहङ्कारविशेषा इति हैरण्यगर्भोक्तिरपि तदाहङ्कारिकत्वानुगुणा ; अतः श्रुतिसिद्धपक्षीकारेऽपि बाध एव ।

प्रतिप्रयोगाश्च—बाह्येन्द्रियाण्यभौतिकानि, इन्द्रियत्वात् ; मनोवत् । प्रत्येकपक्षीकारेण वा चक्षुः अतैजसमित्यादि । तावेव हेतु-दृष्टान्तौ ; परस्परं वा घ्राणादयो दृष्टान्ताः । विपक्षे बाधकसदसद्भावश्च समः, यत्किञ्चिद्दृष्टान्तमात्रानुसारेण प्रसङ्गस्य सुलभत्वादिति । परोक्तानुमानानामागमबाधमभिप्रेत्याह—**अक्षाहङ्कारिकत्वमिति** । **श्रुतिपथनिपुणैः**—मनुपराशरपाराशर्यादिभिः । **घोषितम्**—बहुषु प्रदेशेषु स्पष्टोक्तम् । **नैव बाध्यम्**—अशक्तैरनुमानैः अन्यपरैश्च वाक्यैरिति शेषः । (स.सि.)

एतेन प्रमाणानुरोधेन आहङ्कारिकत्वं प्रसाध्य परोक्त भौतिकत्वसाधकानुमानानि दूषितानि ॥

**इन्द्रियाणामेव अपरोक्षसाधनता**—इन्द्रियस्यैव प्रत्यक्षजनकत्वं ; न तु शब्दस्य ॥

न च शब्द एव अविद्यानिवर्तकं प्रत्यक्षज्ञानं जनयति इति वक्तुं युक्तम् ; तस्य अनिन्द्रियत्वात् । ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्षसाधनानि । न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमननानिदिध्यासनविमुखीकृतबाह्यविषयस्य श्रवणमननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति; निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात् । (श्री.भा. 1–1–4)

ननु शब्देनाप्यपरोक्षज्ञानं जायते, 'दशमस्त्वमसी'ति वाक्येन दशमोऽहमित्यपरोक्षज्ञानोत्पत्तिदर्शनादिति । तन्न; उपदेशानन्तरं शीघ्रभाविप्रत्यक्षसामग्रीजन्येन ज्ञानेन पूर्वज्ञानस्य भेदाग्रहेणप्रत्यक्षत्वारोपात् । तदा हि उपदेशात्पूर्वभाविनवकपरिसंख्यान-

जनितसंस्कारवशेनाविलम्बिता ह्यपेक्षाबुद्धिर्जायते। यथा घटोऽयमित्युक्ते घटं पश्यतोऽपरोक्षप्रतीतिरिन्द्रियजन्या; न तु घटोऽयमितिवाक्यजन्या; वाक्यं तु आपरोक्ष्यनिमित्तचक्षुर्व्यापारहेतुः तथा दशमस्त्वमसीतिवाक्यं दशमोऽहमिति बुद्धिनिमित्तस्य पूर्ववासितापेक्षणीयवस्तुप्रतिसन्धानस्य हेतुः; नत्वपरोक्षावभासहेतुः; तत्तत्प्रतीति सामग्रीव्यवहितस्य वाक्यस्य तत्तत्सामग्रीत्वाभावात्।

विमतं प्रत्यक्षज्ञानं न वाक्यजन्यम्, प्रत्यक्षज्ञानत्वात् अनुपदिष्टवाक्यस्य दशमोऽहमिति प्रत्ययवत्। विमतं वाक्यं न प्रत्यक्षज्ञानजनकम्, वाक्यत्वात् सम्प्रतिपन्नवदिति एवं सामग्रीशैथ्र्येणान्यथासिद्ध्या परिहारो **वस्तुयाथात्म्यापरोक्ष्यनिमित्तप्रवृत्तिहेतुत्वेनेति** भाष्येणाभिप्रेतः।

न च वाक्यजन्येऽपि ज्ञाने विशेष्यभूताहमर्थप्रत्यक्षतामात्रेण विशिष्टानुप्रविष्टविशेषणांशस्यापि प्रत्यक्षतेति वाच्यम्। अहं समानाधिकृतशब्दोल्लिखितप्रतीतेरपरोक्षत्वनियमश्च नास्ति; सुखदुःखाद्यनुमितपुण्यपापस्य पुरुषस्य 'पुण्यकृदहम्' 'पापकृदहम्' इत्यादिप्रतीतेः पुण्यपापयोरापरोक्ष्यादर्शनात्। धर्मिप्रत्यक्षतामात्रेण धर्मप्रत्यक्षत्वे, 'लैङ्गिके पर्वतोऽग्निमान्' इति ज्ञाने अग्नेरपि प्रत्यक्षत्वप्रसंगः। तदेतदखिलं स्वविषयनियमातिक्रमादर्शनेन तदयोगादित्यत्राभिप्रेतम्॥ (श्रु.प्र.)

तदेतदुक्तं तत्त्वमुक्ताकलापे—(116)

उद्देश्यांशं त्वमाद्यं स्फुटमनुभवतां सम्यगध्यक्षवित्त्या
प्रत्यक्षत्वभ्रमोऽयं त्वमसि दशम इत्यादिवाक्यार्थबोधे।
शब्दात्प्रत्यक्षबोधे प्रसजति शिथिला तद्व्यवस्था ततोऽर्थे
साक्षात्कारं न शब्दो जनयति विमतस्सिद्धवच्छब्दभावात्॥ इति॥

प्रत्यक्षभ्रमस्य प्रत्यक्ष एव बाधक इति निर्बन्धोनेत्युक्तं तत्सद्भावेऽपि शब्दः प्रत्यक्षरूपबाधकधीजनक इति न शक्यं कल्पयितुम्; अन्यथा क्वचिदनुमानेऽपि तत्कॢप्तिः। न च कोद्रवबीजस्य स्वाभीष्टकलमाङ्कुर जनकत्वक्ॢप्त्या तत्सिद्धिः!

ननु दग्धवेत्रबीजस्य रम्भाङ्कुरारम्भकत्वं दृश्यते । यदि दृश्यते कस्तन्निषेधेत् ? अथ नेदं निदर्शनं. वाक्येष्वपि दशमस्त्वमसि, संवित् स्वप्रकाशा इत्यादिषु प्रत्यक्षधीजनकत्वं दृष्टमिति चेत् कथमेतत्? दशमोऽहमस्मि, मम संवित् स्वप्रकाशा इति श्रोतुरपरोक्षा धीरिति चेन्न ; सेयं वाक्यश्रवणानन्तरजन्या? तन्मूलस्वयंपरीक्षणजन्या वा ? आद्ये धर्मिप्रत्यक्षत्वेऽपि दशमत्वविशिष्टवेषो न प्रत्यक्षः, अन्यथा धर्मवांस्त्वमसीति केनचिद्दैवज्ञेनोक्ते तादृशोऽहमिति बुद्धेरप्यापरोक्ष्यं स्यात् ; धर्मस्यातीन्द्रियत्वान्न तथेति चेन्न ; अयं पर्वतः परभागे वह्निमानित्याद्युपदेशे प्रसङ्गात् ।

स्वतोऽपरोक्षार्थविषयतयाऽत्र तादृशो विशेष इति चेन्न ; नियामकाभावात् दशमत्वादिविशिष्टाकारेण स्वतोऽपरोक्षत्वासिद्धेश्च । तदिह वाक्यतो दशमत्वादिबोधे त्वमर्थस्य स्फुटप्रत्यक्षगृह्यमाणतया केषांचिद्दशमत्वादिविशिष्टाकारग्रहेऽपि प्रत्यक्षत्वभ्रान्तिमात्रमित्याह—**उद्देश्यांशमिति** । एतेन विगीतं वाक्यं स्वार्थापरोक्षधीजनकं स्वतोऽपरोक्षार्थविषयत्वात् दशमस्त्वमसीत्यादिवाक्यवदित्यनुमानमपि निरस्तम्, दृष्टान्ताद्ययोगात् ।

ननु घटं पश्यतः 'अयं घट' इति वाक्यप्रयोगेऽपि प्रत्यक्षधीर्जायत इति चेन्न, युगपत्प्रमाणद्वयेन प्रमितिद्वयोत्पत्त्ययोगात्, संभूयैकप्रमाणीभावस्यातिप्रसङ्गित्वादनभ्युपगमाच्च । क्रमे तु प्रत्यक्षज्ञानसमनन्तरभाविनि शाब्दज्ञाने प्रत्यक्षशिरस्के 'माषराशिप्रविष्टमषी 'न्यायेन तज्जातीयताभ्रमः। 'दशमस्त्व'मित्यादावपि कदाचिदेवमेव । प्रतिकूलतर्कमप्याह—**शब्दादिति** । ज्ञातकरणानां हि परोक्षधीजनकत्वव्यवस्थाशब्दप्रमाणस्याप्यन्यत्र व्याप्त्याऽङ्गीकृता ; तस्याः शैथिल्यं स्यात् । इष्टप्रसङ्गोऽयमिति चेन्न, तुल्यन्यायतयाऽन्यत्रापि तत्तन्नियतिविरुद्ध कार्यानुमान प्रसङ्गस्यानिष्टत्वात् । विपक्षे बाधकाद्विशेष इति चेन्न, शब्दजन्यप्रत्यक्षाभावेऽपि विरोधप्रसङ्गाभावात् ।

'तस्मै मृदितकषायाय तमसःपारं दर्शयति भगवान्सनत्कुमारः' इति उपदेशादपरोक्षधीःश्रूयत इति चेन्न, दृशेः प्रत्यक्षविशेषरूढत्वात् । अनुपपत्त्या साक्षात्कारसामान्यपरत्वं कल्प्यमिति चेत्, तर्हि विरुद्धक्लृप्तित्यागेन वैशद्यार्थत्वक्लृप्तिर्युक्ता ।

प्रतिप्रयोगमप्याह—**तत इति** । व्याप्तिबलादित्यर्थः । अर्थे—स्वप्रतिपाद्ये । एतेन स्वविषयसाक्षात्कारजनकतया बाधप्रसङ्गोऽपास्तः । अत्र तु विपक्षे बाधकः प्रदर्शित एवातिप्रसङ्गः ।

प्रत्यक्षज्ञानहेतुत्वं यत्त्वयाऽत्र प्रसाध्यते ।
निषेध्यमिदमस्माकं न नस्तच्छोधनं भरः ॥ (स. सि.)

इति शाब्दप्रत्यक्षभङ्गः ॥

**इन्द्रियात्मवादनिरासः**—इन्द्रस्यात्मनः लिङ्गमिन्द्रियं-करणेनकर्तृरनुमानात् तत्र, आत्मत्व--भ्रमनिरासः ।

'इन्द्रियमिद्रलिङ्गम् इन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमितिवा' इति (5-2-93) सूत्रेण इन्द्रलिङ्गमित्याद्यर्थे इन्द्रशब्दः घच्प्रत्ययान्ततयानिपातितः योगरूढः । इति शब्दात्—इन्द्रेण दुर्जयमित्यपि ।

सन्तुतर्हि—इन्द्रियाण्येवात्मा । न च तानीदन्तया प्रथन्ते ; येन देहव--दहङ्कारगोचराद्बहिष्क्रियेरन् । नापि तथोद्भूतरूपादिगुणानि स्थूलानि ; येन तत्प्रति-भास इवेन्द्रियगोचरत्वेऽहम्प्रत्ययस्य रूपावयवादिप्रतीतिः प्रसज्येत । तद्व्यापारफलं च तद्गामि युक्तं स्नानाध्ययनादिफलवत् । अत एव सत्यतपाः 'द्रष्टुश्चक्षुषः' इति ।

तन्न ; विकल्पासहत्वात् । तथा हि–किं प्रत्येकमिन्द्रियाणि चेतनानि, सम्भूय वा? यदि प्रत्येकम्, इन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसन्धानं न स्यात् । अस्ति च तत्—'यमहमद्राक्षं तमहं स्पृशामि' इति । अत एव न सम्भूयापि चेतनत्वम् । न हि पञ्चभिरिन्द्रियैः सम्भूयैकं वस्त्वनुभूयतेऽनुसन्धीयते वा । एकेन्द्रियविगमे च प्रायणप्रसङ्गश्च । इन्द्रियचैतन्ये च तत्तदिन्द्रियापाये तत्तदिन्द्रियार्थ-स्मरणमपि न भवेत् । न च तद्व्यापारफलतया तत्समवायित्वं ज्ञानस्य । शस्त्रादि-व्यापारजन्मनोऽपि पापादेः परसमवायित्वात् । अन्यथा च प्रष्टुर्मृत्युपपत्तिं शरणागत--परित्यागस्यनृशंसतां चालोच्य सत्यतपसस्तथा वचनम् ।

अस्तु तर्हि मन एव चेतनम् । तथा सति हि पूर्वोक्ता दोषाः परिहृता भवन्ति । तद्धि सर्वेन्द्रियाध्यक्षं प्रज्ञायते प्रतिज्ञायते च । उपपद्यते चेन्द्रियान्तरेण

प्रतिसन्धानम् ; दर्शनानुसन्धानाधारस्य मनस एकत्वात् तत्तदिन्द्रियापायेऽपि स्मरण-मप्युपपद्यत एव, मनसो नित्यत्वात् ।

तदपि न ; करणत्वाच्चक्षुरादिवत् । बाह्यान्तरसकलविषयसंवेदनकरणतया हि मनः प्रकल्प्यते । बाह्येन्द्रियेषु यथायथं निजविषयसन्निकर्षभागिष्वपि यतो न युगपदेव सर्वे विषयाः प्रतीयन्ते, अतोऽवगच्छामः—'अस्ति किंचिदपरमपि साधनम्, यत्साहायकविरहान्न सर्वे प्रकाशन्ते, कश्चिदेवैकः प्रतीयते' इति । तथा सुखादि-संवेदनान्यपि करणवन्ति क्रियात्वात्, संवेदनत्वाद्वा, रूपादिज्ञानवदिति । तदेवं ज्ञानकरणतयाऽवगतस्य मनसः कथमिव ज्ञाने कर्तृत्वम्? स्वातन्त्र्यलक्षणं हि तत् । तच्च स्वच्छन्दानुरोधेन साध्यसिद्ध्यनुगुणोपकरणसंपादनसामर्थ्यम् ; स्वसमवेतमेव वा गुणान्तरं तन्त्रीकृत्य प्रवृत्तिः । करणत्वं तु पराधिष्ठानाधीनव्यापारतारूपपारतन्त्र्य-नियतं साधकतमत्वमिति कथमिवैकत्र मनसि परस्परविरुद्धतदुभयधर्मसंबन्धं प्रतिपद्येमहि? अथ तदपि मनः करणान्तरेण स्मरणादिषु कर्तृभावमनुभवति, तथा सति संज्ञामात्रे विवादः । य एव हि चक्षुरादिभी रूपादीन् आन्तरकरणेन च सुखादींश्चेतयते, स एवात्मा । तस्मिन्नेव चेत् मनःसंज्ञा निवेश्यते, कामं निवेश्यताम् । न नः किंचिद्धीनम् । किन्तु तदा सर्वलौकिकव्यवहारो बाध्येतेत्यलमनेन ।

(आ.सि 41, 46)

ज्ञानमिन्द्रियधर्मः, इन्द्रियव्यापारफलत्वात् । यद्व्यापारफलं यत् तत्तन्निष्ठम् । यथा स्नानाध्ययनादिव्यापारफलं शौचाक्षरराशिग्रहणादिस्नात्रध्येतृसमवेतमिति प्रयोगो बोध्यः । इन्द्रियस्य व्यापारः अर्थसन्निकर्षार्थेन्द्रियप्रवृत्तिः, अर्थेनेन्द्रियस्य सन्निकर्ष एव वा । हेतौ द्रव्यभिन्नभावत्वे सतीति विशेषणं देयम् । तेन घट-तद्ध्वंसानुकूल-व्यापारवतो दण्डादेः घटवत्त्वाद्यभावेऽपि न क्षतिः । इन्द्रियात्मत्वे अनुमान-मुक्त्वाऽऽप्तवाक्यमपि संवादरूपं निर्दिशति—**अत एवेति** ।

इन्द्रियाणामात्मत्वं निरस्यति—**तन्नेति** । विकल्पासहत्वं नाम विकल्पधर्मिणः संभावितयावत्कोटिविकल्पने विकल्पितयावत्कोट्यन्यतमकोटिसम्बन्धस्याप्यनर्हस्वरूपत्वम्

क्षोदक्षमत्वाभात्र इति यावत्। प्रत्यक्षबाधाभावेऽपि यौक्तिकबाधोऽस्तीन्द्रियात्मत्व इति हार्दम्। प्रत्येकेन्द्रियचैतन्यपक्षे नानास्वामिक इव ग्राम एकस्मिन्नेव देहे नानाचेतनाधिष्ठाननित्यकलहादि प्रसज्यते इति दूषणं हृदिनिधाय दूषणान्तरमाह—**इन्द्रियान्तरेति**। इन्द्रियसंघातात्मत्वपक्षेऽपीदं साधारणम्। तदाह—**अत एवेति**। निरुक्तप्रतिसन्धानानुपपत्तेरेव। तामेवोपपादयति—**न हीति**। इन्द्रियसङ्घातो नानुभविता, नाप्यनुस्मर्ता। तथा हि संघातो यदि संयोगो बहुत्वसंख्या वा, तर्हि गुणत्वादेव न ज्ञातृत्वसम्भवः। यदि संयुक्तानां बहूनामेव संघातत्वेन विवक्षा, तदपि न बहूनामिन्द्रियाणां चाक्षुषाश्रयता स्पार्शनाश्रयता वा। तथा च द्रष्टुः स्प्रष्टुश्चान्यान्यत्वादुक्तप्रतिसन्धानानुपपत्तिरेवेति भावः।

इन्द्रियसंघातस्य आत्मत्वे दोषान्तरमाह—**एकेन्द्रियेति**। सङ्घातस्य तावतैव विनष्टत्वात् निरात्मकत्वेन देहस्य मरणप्रसक्तिरिति भावः। प्रत्येकसंघातपक्षद्वय-साधारणं दोषान्तरमाह—**इन्द्रियेति**। द्रष्टुश्चक्षुषो विनाशे मयेदं दृष्टमिति स्मृतेरनुप-पत्तिः। विद्यमानस्याद्रष्टृत्वात्। अन्यदृष्टस्यान्येन स्मृत्ययोगादिति भावः। इन्द्रियचैतन्ये बाधकान्युक्तानि। अथ तत्साधकमनुमानं दूषयति—**न चेति**। पापादेरित्यादिपदेन द्वैधीभावोऽपि ग्राह्यः। तयोः छेद्यगततया शस्त्रे समवेतत्वात् व्यभिचार इति भावः।

अत्र विपक्षे बाधकविरहात् अप्रयोजकत्वमपि बोध्यम्। अथ सत्यतपसो वचनं करणे कर्तृत्वोपचारेण प्रवृत्तमन्यपरं नेन्द्रियचैतन्ये प्रमाणमित्याह—**अन्यथा चेति**। स्वाश्रमप्रविष्टवनमृगान्वेषणप्रवृत्तव्याधकृतप्रश्नोत्तररूपं सत्यतपसो वचनम्—'द्रष्टुश्चक्षुषो नास्ति जिह्वा, इत्यादि। एतस्मिन्नर्थे श्लोकोऽयमनुगृहीतोऽस्मद्गुरुचरणैः—

'या पश्यति न सा ब्रूते या ब्रूते सा न पश्यति।
दृष्टिर्वक्ति कथं व्याध वाणी वा वीक्षते कथम्' ॥ इति।

[अनेन 'चैतन्यस्य इन्द्रिय वृत्तित्व' प्रतीतेः इन्द्रियस्यैवात्मत्वमितिशंकायां इदञ्च सत्यतपसो वाक्यम् अन्यपरमिति समाहितम्।]

अनेन कुत्र वराहः इति प्रष्टा व्याध इति गम्यते। अकथने अशनाया पीडितस्य व्याधस्य मरणप्रसङ्गः। कथने च आश्रमागत शरणागतवराहपरित्यागनिबन्धनं महत्पापं इति पर्यालोच्य एवं वक्रोक्तिः कृता महर्षिणा।

अथ मन आत्मत्वपक्षत्वमुपक्षिपति अस्तु तर्हीति। तद्धीति। मनो हि प्रधानं सर्वेन्द्रियप्रेरकं च गम्यते प्रमाणतो, व्यवह्रियते च तथेत्यर्थः। इन्द्रियात्मत्वपक्षोक्तानां स्मृतिप्रतिसन्धानानुपपत्तिनानात्मप्रसङ्गादिदोषाणां नात्र पक्षे प्रसङ्ग इत्याह उपपद्यते चेत्यादिवाक्यद्वयेन। (व्या.)

**इन्द्रियाधिकरणम्**— (2-4-7)

1. त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्। 2. भेदश्रुतेर्वैलक्षण्याच्च।
इति सूत्रद्वयात्मकम् इदमधिकरणम्।

अस्मिन्नधिकरणे सर्वेषां प्राणशब्दवाच्यत्वात् जीवोपकरणत्वाविशेषाच्च सर्वे प्राण इन्द्रियाणीत्याशंक्य, 'इन्द्रियाणि दशैकं च' इत्यादिषु मुख्यप्राणव्यतिरिक्तानामेव इन्द्रियत्वव्यपदेशात्, 'एतस्माज्जायते प्राणः' इत्यादिवाक्ये पृथक्निर्देशाच्च मुख्यप्राण-व्यतिरिक्तानि इन्द्रियाणि इत्युक्तम्।

प्राणाभिधानादुपकारसाम्यात्
ज्येष्ठोऽपि चायं स्फुटमिन्द्रियं स्यात्।
नैतत् 'दशे'ति व्यपदेशभावात्
प्राणो मनश्चेन्द्रियमित्यतश्च॥ (न्या. क. सं. 2-41)

**इन्द्रियारामः**—इन्द्रियभोगासक्तः।

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥ (गी. 3-16)

अघारम्भायैव यस्याऽऽयुः अघपरिणतं वा, उभयरूपं वा सोऽघायुः। अत एवेन्द्रियारामो भवति, नात्मारामः, इन्द्रियाण्येवास्योद्यानानि भवन्ति; अयज्ञशिष्टवर्धित-देहमनस्त्वेनोद्रिक्तरजस्तमस्कः आत्मावलोकनविमुखतया विषयभोगैकरतिर्भवति। (गी.भा.)

**इन्द्रियैकत्ववादभङ्ग—**

एकं तत्तत्प्रदेशप्रतिनियततया शक्तिभेदं प्रपन्नं
देहव्यापीन्द्रियं चेत्प्रथममिह भवेदागमेनैव बाधः ।
नो चेत्स्याद्देहभेदप्रतिनियततया सर्वजन्तोस्तदेकं
भेदाम्नानादक्लृप्तेरपि न च भजते देह एवेन्द्रियत्वम् ॥ (त.मु. 38)

नन्वेवं बाह्यकरणभेदोऽप्यपोहितुं शक्यः, मनोवदेकस्य वृत्तिभेदात्पृथक्कार्यव्यपदेशोपपत्तेः । आहुश्च बाह्यैकदेशिनः—एकैकदेहेष्वेकमेवेन्द्रियम् । प्रदेशभेदैस्तु रूपादिप्रकाशन शक्तिनियमः । षडायतनागमोऽपि तथैव व्यवस्थाप्यः, स्वरूपभेदप्रयोजनाभावात् । कल्प्यते शक्तिभेदश्चेच्छक्तिरेवेन्द्रियं भवेदिति चायुक्तम्, धर्मिकल्पनातो वरं हि धर्मकल्पनम् ! प्रदेशानामेव तत्तत्करणत्वोपपत्तौ प्रदेशिक्लृप्तिरनर्थिकेति चेन्न ; देहव्यापिनः स्पर्शस्योभयसंमतेः, तस्य च करतलप्रकोष्ठास्यनेत्रादिषु स्पर्शग्रहणशक्तिवैषम्यदृष्टेः । अतश्चैकस्यैव सर्वत्र देहे स्पर्शनत्वम्, तत्र तत्र चक्षुरादित्वं चेति । तदेतदाह—**एकमिति** ।

किमेकेन्द्रियस्य श्रुतस्य कल्पितस्य वा शक्तिभेदव्यवस्थापनमिति विकल्पमभिप्रेत्याद्यं दूषयति—**प्रथममिति** । बाधस्य दूषणान्तरादौद्धत्य सूचनाय प्राथम्योक्तिः । **आगमेनैव**—धर्मिग्राहकेणैवेत्यर्थः। गौरवदोषश्च क्लृप्तिपक्षे वक्तव्यः, नास्मत्पक्ष इति चाभिप्रेतम् । इन्द्रियक्लृप्तिः प्रागेव निरस्ता । अत्र तदेकत्वक्लृप्तावतिप्रसङ्गमाहनो चेदिति । यथैकमेवाकाशं तत्तत्पुरुषादृष्टोपार्जितकर्णशष्कुल्यवच्छेदभेदैः प्रतिपुरुषं व्यवस्थितोपकारकमिति वैशेषिकादिभिः कल्प्यते, तथा त्वयाप्येकमेवेन्द्रियं तत्तद्भोगायतनभेदनियतशक्तिकं सर्वोपकारकं कल्प्यमिति भावः । न चैवमस्त्विति वाच्यम् ; अपसिद्धान्तात् ।

ननु च नानादेहमध्येषु वसतः कथमेकत्वमिति चेत् ; चक्षुर्गोलकाद्यवच्छिन्नानामिन्द्रियप्रदेशभेदानां कथम् ? न कथञ्चिदिति चेत्तर्ह्यनेकेन्द्रियवादः । पुञ्जैकत्वमस्त्विति चेत् किमतः ? ग्राहकांशानां मिथो विभक्तत्वात् ।

" न च तत्ता तदन्यस्य न च तस्य ततोऽन्यता ।
सत्ताद्यैर्जैनवद्वाच्या सर्वमानविरोधतः ॥ "

स्पर्शनस्य पुञ्जस्य भागाश्चक्षुरादय इत्यप्यसत् ; नियामकाभावात् । अत्रावयवि-सामान्यसादृश्यापोहादिभिरैक्यकल्पने अपसिद्धान्तातिप्रसङ्गौ, देहातिरिक्तेन्द्रियकल्पनं चास्मिन्पक्षे अपार्थम् ।

न ह्यत्र दृष्टहानिरदृष्टकल्पना वा ; कुतस्तद्गौरवम् ? अतिरिक्तेन्द्रियकल्पनेऽपि देहावयवानां नियतोपकारकत्वमिष्यते । अस्तु तर्ह्ययमेव पक्ष इत्यत्राह— **भेदाम्नानादिति** । अयं भावः—भौतिकाद्देहात् इन्द्रियाणां सात्त्विकाहङ्कारोपादानकत्वेन भेदाम्नानात् क्लृप्तिप्रसङ्गाभावात् बाधाच्च मुधाऽत्र लघुपक्षोक्तिरिति । (स. सि.)

**इन्द्रियोत्पत्त्यधिकरणम्**—(2-4-1)

1. तथा प्राणाः । 2 गौण्यसम्भवात्तत्प्राक्श्रुतेश्च । 3. तत्पूर्वकत्वाद्वाचः । इति सूत्रत्रयात्मकमिदमधिकरणम् ।

अस्मिन्नधिकरणे 'असद्वा इदमग्र आसीत्' इत्यादिवाक्ये प्राणशब्दनिर्दिष्टाना-मिन्द्रियाणां प्रलयकालेऽप्यवस्थानप्रतीतेः इन्द्रियाणि नोत्पद्यन्त इत्याशंक्य, 'एतस्मा-ज्जायते' इत्यादिवाक्ये इन्द्रियाणामुत्पत्तिश्रवणात् । 'असद्वा' इत्यादिवाक्ये प्राणशब्दस्य परमात्मपरत्वाच्च इन्द्रियाणि उत्पद्यन्त इत्युक्तम् ।

न हि जननमिन्द्रियाणां प्राणा अग्रेऽभवन् इति श्रुत्या ।
नैवं प्राणस्तु परः प्रतिज्ञया गौणमेव बहुवचनम् ॥ (न्या.क.सं. 2-37)

**इन्धः**—परमात्मा ।

इन्धी दीप्तौ इत्यस्माद्धातोः कर्तर्यच् । निरतिशयदीप्तिमान् इत्यर्थः ।

"इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः । तं वा एतमिन्धँ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव ।" (बृ. उ 6-2-2)

योऽयं दक्षिणाक्षिस्थः पुरुषः स इन्धो नाम इन्ध इति प्रसिद्ध इत्यर्थः । एवं तमेतं पुरुषमिन्धं सन्तं इन्द्र इति परोक्षेण वदन्ति । देवा हि गोपनीयमर्थं

पर्यायोक्तेन वदन्ति ; न तु स्पष्टतया । 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' । इवशब्द एवार्थः । यस्माद्धि देवाः प्रत्यक्षेण ग्रहणे द्विषन्ति ; पर्यायोक्तग्रहणे प्रीतिमन्तो भवन्ति, अत इन्द्र इति वदन्तीत्यर्थः । "य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्" इति दक्षिणाक्षिस्थितस्य आदित्यान्तरवस्थितस्य च ऐक्यश्रवणात्, आदित्यान्तरस्थितस्य पुण्डरीकाक्षत्वात्, 'अन्तर उपपत्ते'रिति चक्षुषि स्थितत्वेनोपदिष्टस्य परब्रह्मत्वस्थापनात् "इन्द्रं निचिक्युः परमे व्योमन्" "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिषु परमपुरुषस्य इन्द्रशब्दवाच्यत्वप्रसिद्धेश्च नारायण एवात्र दक्षिणाक्षिस्थः पुरुष इति द्रष्टव्यम् । ज्योतिरधिकरणे व्यासार्यैरस्य नारायणत्वमुपपादितम् । (रं. भा.)

**इयदामननात्**—(ब्र. सू. (3-3-34)

(अक्षरध्यधिकरणेद्वितीयंसूत्रम्) अस्थूलत्वादिकं सर्वत्रानुसन्धेयमित्युक्तं ।

नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वात्, गुणानां च प्रधानानुवर्तित्वात् 'सर्वकर्मा सर्वगन्धः सर्वरसः' इत्यादेर्गुणजातस्य सर्वत्र प्राप्तौ प्रतिविद्यं व्यवस्थितस्यापि अव्यवस्थास्यादिति चेदत्राह—'इयदामननात्' इति ।

आमननम्—अभिमुख्येन मननम्, अनुचिन्तनम् । आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तम् ; यदस्थूलत्वादिविशेषितमानन्दादिकम् । येन गुणजातेन विना ब्रह्मस्वरूपस्य इतरव्यावृत्तस्यानुसन्धानं न सम्भवति ; तदेव सर्वत्रानुवर्तनीयम् । तच्च इयदेवेत्यर्थः । इतरेतु सर्वकर्मेत्यादयः प्रधानानुवर्तिनोपि चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिता इति न सर्वत्र प्राप्नुवन्ति ।

एतावद्गुणजातस्य सर्वविद्यासु सङ्ग्रहः ।
येनैव गुणजातेन विना न ग्रहणं विभोः ॥ (ब्र. प. मा.)

शङ्कराचार्यास्तु—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' ॥

इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति । तथा कठाः—

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ' ॥

इति । किमत्र विद्यैकत्वम्, उत विद्यानानात्वम्? इति संशयः । किं तावत् प्राप्तम्? विद्यानानात्वम् इति । कुतः? विशेषदर्शनात् ।

'द्वा सुपर्णा' इत्यत्र हि एकस्य भोक्तृत्वं दृश्यते, एकस्य चाभोक्तृत्वं दृश्यते । 'ऋतं पिबन्तौ' इत्यत्रोभयोरपि भोक्तृत्वमेव दृश्यते तद्वेद्यरूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते ब्रवीति विद्यैकत्वमिति । कुतः? यत उभयोरप्यनयोः मन्त्रयोः इयत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यरूपमभिन्नमामनन्ति । ननु दर्शितो रूपभेदः । नेत्युच्यते । उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतो नार्थान्तरम् । 'द्वा सुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्यो अभिचाकशीति' इत्यशनायाद्यतीतः परमात्मा प्रतिपाद्यते । वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' इति । 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबत्य-शनायाद्यतीतः परमात्मापि साहचर्यात् छत्रिन्यायेन पिबतीत्युपचर्यते ।

परमात्मप्रकरणं ह्येतत् 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्युपक्रमात् । तद्विषय एव चात्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' इति । 'गुहां प्रविष्टावात्मानौ हि' इत्यत्र चैतत्प्रपञ्चितम् । तस्मान्नास्ति वेद्यभेदस्तस्माच्च विद्यैकत्वम् । अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते तादात्म्यविवक्षयैव जीवोपादानं नार्थान्तरविवक्षया । न च परमात्मविद्यायां भेदाभेद विचारावतारोऽस्तीत्युक्तम् । तस्मात् प्रपञ्चार्थ एवैष योगः । तस्माच्चाधिकधर्मोप-संहार इति' एवमाहुः ।

नन्वयं गुहाधिकरणे निरस्त इति चेत् । सत्यं, किन्तु पिबत्पदस्य मुख्यार्थत्वाय स्वतः कल्पनया च पानकृत्याश्रयौ बुद्धिजीवौ पिबन्तौ ग्राह्यौ । सुपर्णौ तु जीवेश्वरावित्यधिकाशङ्कायां मन्त्रद्वयेपि द्विवचनशब्दसाम्यात् औत्पत्तिकद्वित्वविशिष्टतया तुल्यवस्तुद्वयप्रत्यभिज्ञानस्यबाधकाभावात् प्रकरणाद्यनुग्रहाच्च जीवानुवादेनासंसारिब्रह्मणि मन्त्रद्वयतात्पर्यमिति प्रपञ्चार्थमिदंसूत्रमिति भावः । (र. प्र.)

आनन्दतीर्थायास्तु —अत्राधिकरणे उपासनाधिकारिणां प्राणावसानत्वं समर्थ्यते। नामाद्यारभ्य प्राणान्तमुत्तरोत्तरमुत्तमत्वमुक्तम् । न प्राणात् किञ्चिद्भूय उक्तम् । तत्रापि पूर्ववत्स्यादिति न वाच्यम् । 'पाणोवाव सर्वेभ्योभूयान् न हि प्राणाद्भूयान् प्राणोह्येव भूयान् तस्माद्भूयान्नाम' इति कौण्टरव्यश्रुतेः ।

नामादीत्यादिपदेन—नाम-वाक्-मनः-सङ्कल्प-चित्त-ध्यान-विज्ञान-बल-अन्न-अप्-तेज-आकाश-स्मर-आशा गृह्यन्ते ।

नामादिशब्दाश्च —उषा-स्वाहा-पर्जन्य-मित्र-अग्नि-वरुण-विधु-प्रवह-अनिरुद्ध—आहङ्कारिकप्राण-इन्द्र-उषा-रुद्र-वाणीपराः ।

**प्राणान्तं**—मुख्यवायुपर्यन्तं उत्तरोत्तरोत्तमत्वमुक्तम् । अत्र प्राणादपि अधिकः स्यादितिशङ्कायामाह—

उपासनाधिकारिणामपि इयत्-इयत्त्वमेव प्राणावधित्वमेवेति भावप्रधानं सौत्रं प्रतिज्ञा वाक्यं संयोज्यम् । अधिकारिणामपि प्राणावधित्वमेवेति तदर्थः ' इत्याहुः ।

**इषीकातूलम्**—इषीकायाः मुञ्जान्तवर्ति तृणविशेषस्य तूलम् ।

तत् यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते, य एतदेवं विद्वानग्निहोत्रं जुहोति । (छां. उ. 5-24-3)

यथा इषीकायाः मुञ्जान्तर्वर्तितृणविशेषस्य तूलमग्नौ प्रक्षिप्तं सद्यो दह्यते एवं सर्वाणि पापानि एतादृशविद्यापूर्वकप्राणाग्निहोत्रानुष्ठानेन दग्धानि भवन्ति इत्यर्थः । ब्रह्मोपासनफलस्य सर्वपापप्रदाहस्य प्राणाग्निहोत्रे कीर्तनमंगिफलेन अङ्गस्य स्तुत्यर्थम् ।

(रं. भा.)

एतेन विद्यासामान्यफलभूतः सर्वपापदाह इति सूच्यते ।

2. नेत्रगोळकम् । (इषीकास्त्वक्षिकूटकम् इत्यमरः) 'ईष–गतिहिंसा दानेषु' 'ईषेः कित् ह्रस्वश्च' इति उणादिसूत्रेण ईकन्प्रत्ययः धातोः ह्रस्वश्च । ईषा-लांगल-कीलिका । सेव 'इवेप्रतिकृतौ' इत्यनेनकनिइत्वे ह्रस्वमध्या—ईषिका दीर्घादिरपि ॥

(अ. सु.)

**इषुवद्गच्छति सविता**—लौकिकन्यायविशेषः ।

अधिकजवेऽपि सवितरि 'इषुवद्गच्छति सविता' इति वचनं गतिमान्द्य-निवृत्तिपरम् ।

प्रकृते दहराधिकरणे अल्पपरिमाणावच्छिन्नदहराकाशवाच्यपरमात्मनः 'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इति दहराकाशस्य बाह्याकाशोपमेयत्वं न सम्भवति । 'ज्यायान् पृथिव्या, ज्यायानन्तरिक्षात्' इत्यादौ सर्वस्माज्ज्यायस्त्व-श्रवणात् ।

नैवम्; अनेनन्यायेन दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्रासाल्पत्वनिवृत्ति-परत्वादस्य वाक्यस्य इत्युक्तम् ।।

**इष्टः**—(स.ना. 309)

उदरेण धूर्तैर्मुख्यैरपि अविशेषेण जनयित्रीव वाञ्छित इति इष्टः । (वि.स.भा.)

'इषु इच्छायाम्' क्तप्रत्यये, उदितो वा इति क्त्वायामिड्विकल्पात्; 'यस्य विभाषा' इति निष्ठायां नेट्; कित्त्वान्न गुणः ष्टुत्वम् । (वि.स.निर्व)

इष्टोऽविशिष्टः कथितः सर्वरक्षणतत्परः । (वि.स.नि.)

**इष्टप्राप्त्यनिष्टनिवृत्ती**—अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिः ।

[अनिष्टनिवृत्तौ प्रार्थितायाम् इष्टप्राप्तिः न पृथक् अपेक्षणीया 'संपद्याविर्भावः'

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नियते व्यक्तिमसतः सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यंते न जन्यन्ते नित्या एवात्मनो हि ते' ॥

इत्यादिप्रमाणानुसारेण अनिष्टनिवृत्तिमात्रमेवालम्; इष्टप्राप्तिः पृथक् न प्रर्थनीया इति शङ्का समाधीयते । तद्यथा—]

मूलमन्त्रे जीवपरमात्मस्वरूपनिरूपणानन्तरंनमश्शब्देनानिष्टनिवृत्तिप्रार्थना, '*नारायणाय स्याम्*' इत्यनेन इष्टप्राप्तिरूपपुरुषार्थप्रार्थना चोच्यते इत्युक्तम् ।

अत्र चोद्यते—भावान्तराभावपक्षे सर्वानिष्टनिवृत्तेरेव इष्टप्राप्तिरूपत्वेन पुनरुक्तिस्स्यादेव, अत एव 'अविद्यानिवृत्तिरेव मोक्षः' इति च भाषितम् ; इति ।

अत्रोच्यते—

एकमेव स्वरूपेण परेण च निरूपितम् ।
इष्टप्राप्तिरनिष्टस्य निवृत्तिश्चेति कीर्त्यते ॥

इति रहस्यत्रयसारोक्तदिशा एकमेव प्रतियोगिपुरस्कारेण स्वरूपतश्च निरूपणस्य लोके दृष्टत्वात्, तथैवात्रापीति सप्रयोजनत्वात् न पौनरुक्त्यम् । एक एव वह्निः वह्नित्वेन तदभावाभावत्वेन च प्रतिपाद्यते हि ।

किं च संसारदशायाम् एकस्य प्रतिकूलस्य निवृत्तौ प्रतिकूलान्तरागमनम् अनुकूलान्तरप्राप्तिः अनुकूलप्रतिकूलोभयावस्थारहितोदासीनता वा क्वचित् दृश्यते खलु । अतः मुक्तौ सर्वानिष्टनिवृत्तेः एतादृशरूपता न सम्भवतीति प्रतिपादनेन वा सार्थक्यम् ।

अपि च मुक्तौ सर्वानिष्टनिवृत्तौ नैयायिकादिमतवत् आत्मनः पाषाणकल्पता नास्तीति द्योतनार्थं च इष्टप्राप्तिः पृथक् पर्यगणि ।

किं बहुना भगवन्निग्रहनिवृत्तेः जीवीयज्ञानविकासस्य च भेदात् अनिष्टनिवृत्तिः इष्टप्राप्तिश्च पृथगेव अभ्यर्थितेति पुनरुक्तिशंकाया एव नावकाशः । ज्ञानसंकोचादेः हेतुभूतभगवन्निग्रहादिनिवृत्तिः, निग्रहफलज्ञानसंकोचादिनिवृत्तिरूप ज्ञानविकास-कैङ्कर्यादिश्च भिन्न एवेति च बोध्यम् । (र.त्र.सा.भा. 3-207) विस्तरस्तु तत्रैव द्रष्टव्यः ।

अभावस्य अतिरिक्तत्वमते इष्टप्राप्तिः अनिष्टनिवृत्तिश्चेति दळद्वयस्यैव पुरुषार्थता । सिद्धान्ते तु भावान्तरमेव अभावः इति स्वीकारात् एकांश एव । तथापि पृथगुभयोः व्यवहारस्तु प्रतिपादितप्रकारेण सप्रयोजन एव ।

तदयं निष्कर्षः—परिपूर्णपरब्रह्मानुभवो मोक्ष इति निर्णयः । स हि अनिष्टनिवृत्तिरिष्टप्राप्तिश्चेति द्विदळः । भगवन्निग्रहनिवृत्तिरनिष्टनिवृत्तिः । इष्टप्राप्तिस्तु

स्वाभाविकज्ञानविकासलाभः । सोपिज्ञानसङ्कोचनिवृत्तिरिति यद्यप्युच्येत । तथापि तस्य यावत्कालमवस्थितिरूपा ज्ञानविकासपरम्परा भावरूपैवेतीष्टप्राप्तिपदेन व्यवह्रियते ।।

**इष्टापूर्ते**—श्रौतस्मार्तकर्मणी ।

[इष्टञ्चपूर्तञ्चेतिद्वन्द्वे पूर्वपददीर्घः]

"अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते" (छां. उ. 5–10–3)

इष्टं यागादि, पूर्तं खातादि । (रं. भा.)

अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ।
वापी-कूप-तटाकादि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ इति च स्मर्यते ॥



श्रीः

# शोधनिका

| पु.सं. | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 5 | अध्यात्मदि | अध्यात्मादि |
| 3 | 22 | अङप्रत्ययः | अङ्प्रत्ययः |
| 5 | 7 | ज्यायास्त्वात् | ज्यायस्त्वात् |
| 6 | 22 | असंज्ञादिः | भूसंज्ञादिः |
| 8 | 17 | श्रिविशिष्टः | श्रीविशिष्टः |
| 10 | 8 | द्धितीये | द्वितीये |
| 20 | 5 | तच्छिथिलयति | तच्छिथिलगति |
| 20 | 21 | विरल | विरला |
| 33 | 16 | अकृतावेव | आकृतावेव |
| 35 | 9 | कप्पितम् | कल्पितम् |
| 50 | 1 | मृत्तिण्डः | मृत्पिण्डः |
| 52 | 22 | प्रस्ययः | प्रत्ययः |
| 55 | 21 | शवागम | शैवागम |
| 68 | 15 | आचाय | आचार्य |
| 70 | 4 | श्रत्यनु | श्रुत्यनु |
| 70 | 18 | पर्त्यन्तः | पर्यन्तः |
| 72 | 4 | आचार्व | आचार्य |
| 77 | 6 | परामर्थिकं | पारमार्थिकं |
| 81 | 9 | उपसंसारे | उपसंहारे |
| 84 | 21 | श्रत्यन्त | श्रुत्यन्त |
| 87 | 7 | -नाभिज्ञाः | -नभिज्ञाः |
| 100 | 3 | दशितश्च | दर्शितश्च |
| 153 | 11 | परस्वे | परत्वे |
| 153 | 13 | वय्वादीनां | वाय्वादीनां |
| 153 | 16 | वाय्वादिना | वाय्वादीना |
| 153 | 20 | सप्रविध | सप्तविध |
| 155 | 4 | भिनिष्पत्ति | अभिनिष्पत्ति |
| 156 | 6 | नित्यमनं | नियमनं |
| 156 | 8 | **नाम्नोर्ग्रहण** | **नाम्नो ग्रहण** |
| 157 | 18 | पुरुपश्चैव | पुरुषश्चैव |
| 157 | 21 | उभावनादि | उभावनादी |
| 158 | 21 | यथा | यया |
| 178 | 22 | -त्वत्वादि | -त्वादि |
| 180 | 4 | विजित्र | विचित्र |
| 187 | 14 | हेतुमह | हेतुमाह |
| 192 | 10 | याभिविभूतिभिः | याभिर्विभूतिभिः |
| 195 | 2 | गङ्गश्शब्द | गङ्गाशब्द |
| 195 | 20 | अप्नोति | आप्नोति |
| 201 | 21 | श्रीयः | श्रियः |
| 202 | 8 | इत्यदिभिः | इत्यादिभिः |
| 203 | 6 | त्ममेव | त्वमेव |
| 211 | 6 | व्या. सि | न्या. सि |
| 213 | 20 | पारापेन | पापेन |
| 214 | 19 | साक्षाकृत्य | साक्षात्कृत्य |
| 217 | 23 | रवपुष्प | खपुष्प |
| 228 | 20 | किालिकं | कालिकं |

| पृ.सं. | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 232 | 3 | प्रामणिको | प्रामाणिको |
| 241 | 24 | अदि | आदि |
| 254 | 4 | दाया | दया |
| 264 | 14 | अत्मैवा | आत्मैवा |
| 273 | 14 | निरूपक मेति | निरूपक मिति |
| 274 | 24 | दा-त्मप | दा-त्माप |
| 276 | 8 | आविभूत | आविर्भूत |
| 276 | 10 | पात्म | पाप्म |
| 276 | 20 | आविभुत | आविर्भूत |
| 278 | 10 | तन्मयं | तन्व्यं |
| 278 | 14 | रक्षायात् | रक्षायाम् |
| 280 | 11 | श्रत | श्रुत |
| 280 | 17 | ग्राकता | ग्राहकता |
| 281 | 16 | त नुपा- | तानुपा- |
| 285 | 10 | सु | तु |
| 287 | 11 | जन्वात्मन: | नन्वात्मन: |
| 287 | 12 | एस | एष |
| 287 | 12 | आनखग्रे | आनखाग्रे |
| 287 | 13 | शब्ति: | शब्दित: |
| 291 | 2 | तदात्मवकत्मात् | तदात्मकत्वात् |
| 291 | 2 | दर्शन | दर्शनं |
| 223 | 20 | अदधातो: | आङ्पूर्वकाददधातो: |
| 304 | 4 | विर्वे | निर्वे |
| 304 | 11 | यो विशेषत: | विशेषत: |
| 304 | 18 | स्ययमेव | स्वयमेव |
| 305 | 22 | शुकल | शुक्ल |
| 306 | 9 | स्तिति | स्थिति |
| 307 | 10 | श्रति: | श्रुति: |
| 308 | 22 | सक्तहोम | सक्तुहोम |
| 319 | 17 | देव अवखस्तु | देरवस्तु |
| 343 | 6 | शरीरत्वश्रवणा | शारीरत्वश्रवणात् |
| 348 | 23 | मुक्त्ययस्था | मुक्त्यवस्था |
| 350 | 20 | मेवाच्चर | मेवोच्चार |
| 367 | 20 | वाणाय | वारणाय |
| 378 | 19 | प्रत्यवर्शेन | प्रत्यवमर्शेन |
| 381 | 2 | निमज्यति | निमज्जति |
| 383 | 13 | सर्वं मिततम् | सर्वं मिदं ततम् |
| 388 | 7 | स्वाराव्य | स्वाराज्य |
| 389 | 18 | प्रतिषध्य | प्रतिषिध्य |
| 391 | 17 | भूवि | भूमि |
| 392 | 10 | आलम्बम् | आलम्बनम् |
| 394 | 5 | पा. सा. | पा. सू. |
| 396 | 20 | लोष | लोप |
| 403 | 6 | धुवा | ध्रुवा |
| 408 | 4 | ज्ञनरूपं | ज्ञानरूपं |
| 411 | 2 | वक्तरभावे | वक्तुरभावे |
| 415 | 1 | र्भवित्रो | र्भवित्री |
| 420 | 8 | यतयाम | यातयाम |
| 422 | 5 | प्रर्वतका: | प्रवर्तका: |
| 424 | 16 | ज्ञानदतिरिक्त | ज्ञानादतिरिक्त |
| 426 | 14 | निदिर्शन | निदर्शन |
| 430 | 16 | विष्ण मैव | विष्णु मेव |
| 430 | 24 | इज्या | इज्य |
| 431 | 4 | योगख्यै: | योगाख्यै: |

| पृ.सं. | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 435 | 7 | प्राविशित् | प्राविशत् |
| 449 | 13 | 5-3-4 | पा.सू. 5-3-4 |
| 451 | 18 | परमश्त | परमत |
| 457 | 4 | प्रकृत | प्राकृत |
| 463 | 2 | अनपियाद्भिः | अनपियद्भिः |
| 465 | 2 | तेषा | तेषां |
| 465 | 3 | -दाधिष्ठाना | -दधिष्ठाना |
| 465 | 6 | मौतिकानि | भौतिकानि |
| 471 | 4 | तर्हति | तर्हीति |
| 472 | 16 | पज्ञ | पक्ष |
| 472 | 18 | शष्कूल्य | शष्कुल्य |
| 472 | 14 | भेव्यवस्था | भेदव्यवस्था |
| 473 | 8 | सात्त्का | सात्त्विका |
| 474 | 15 | अभिमुख्येन | आभिमुख्येन |
| 475 | 1 | परार्धे | परार्ध्ये |
| 476 | 1 | तीर्थाया | तीर्थीया |
| +77 | 24 | प्रर्थनीया | प्रार्थनीया |
| 478 | 9 | वह्निः | वन्हिः |
| 478 | 19 | षोध्यम् | शोध्यम् |

—o—